॥ श्री ॥

हरिदास संस्कृत ग्रन्थमाला
१३६

महाकवि-भट्टिविरचित

# भट्टिकाव्यम्

'चन्द्रकला' 'विद्योतिनी' संस्कृत-हिन्दीटीकोपेतम्

( प्रथमादि-पष्ठसर्गपर्यन्तम् )

व्याख्याता
साहित्यसुधाकर-काव्यतीर्थ—
पण्डित श्रीशेषराजशर्मा शास्त्री



चौखम्बा संस्कृत सीरीज आफिस, वाराणसी-१

१९८२

A AS SANS IT SE IES
136


# BHAṬṬIKĀVYAM

OF

MAHAKAVI BHATTI

Edited with the

*Chandrakala-Vidyotini Sanskrit-Hindi Commentaries*

( Cantos I–VI )

By

SRI SHESHARAJ SHARMA SHASTRI
*Prof Nepali Department, B H U*

CHOWKHAMBA SANSKRIT SERIES OFFICE
VARANASI–1
1982

# उपोद्घातः

गीर्वाणवाणीसाहित्यरसास्वादनप्रवणानां लब्धवर्णानां विचक्षणानामतिरोहितं मर्यादापुरुषोत्तमस्य लोकनायकाऽनुपमस्याऽनितरसाधारणादर्शसंरक्षणस्य भगवतो रामचन्द्रस्य चरितं व्याकरणोदाहरणं च लक्ष्यीकृत्य प्रणीतमिदं रावणवधाऽपराऽभिधानमनुपमानं भट्टिकाव्यं नाम ।

व्याकरणोदाहरणपरिपूर्णेऽप्यस्मिन् ग्रन्थे कथाऽविच्छेदो न दृश्यते, अतिकष्टत्वादिदोषाश्च बाहुल्येन न समुपलभ्यन्ते, प्रत्युत बहुषु स्थलेषु कवेः कमनीयकल्पनाकौशलेन प्रसादादिगुणगणेन स्वभावोक्त्याद्यलङ्कारेण च सहृदयहृदयावर्जनं सुतरां सम्भाव्यते ।

तत्राऽपि दशमसर्गात् त्रयोदशसर्गं यावत् सर्गचतुष्टयपर्यन्तं साहित्यलक्षणग्रन्थप्रतिपादितानां काव्योत्कर्षाऽऽधायकानामलङ्कारादीनां सविस्तरं प्रतिपादनेनाऽपरत्राऽपि अलङ्कारादीनां सद्भावो न घुणाऽक्षरन्यायेन, अपि तु कवेः कविकर्मनिर्वहणयोग्यतयैवेति विपश्चितां मतिपथे स्फुटं प्रतीयते ।

एवं द्वाविंशतिसर्गात्मकत्वादस्य ग्रन्थस्य महाकाव्यत्वं तत्कर्तुश्च महाकवित्वं प्रतिपाद्यते । समुपयुक्तस्याऽवकाशस्याभावेनाऽस्य काव्यस्य वैशिष्ट्यं प्रतिपादयितुं न पारितमतः समयान्तरे सविस्तरमालोचनं करिष्यामीति मामकीना प्रतिज्ञा ।

अथाऽय महाकविः कस्मिन्समये कतमं जनपदं स्वजननेनाऽलङ्कारेति सङ्गीतौ काव्यस्याऽस्य नाम्ना बहवो विद्वांसोऽनुमिन्वते कश्चिदपरोऽयं कविर्भट्टिनामाऽऽसीत् । महोपाध्यायो मल्लिनाथस्तस्मादपि प्राचीनतरो जयमङ्गलोऽन्ये च कतिपये व्याख्यातारः कवेर्नाम 'भट्टि' रित्येव व्यलिखन् । भट्टिकाव्यस्य व्याख्यात्रा भरतमल्लिकेन तु कवेरभिधानं 'भर्तृहरि'रिति व्यलेखि । एतन्मताऽनुसारिणश्च व्याख्यातारो वर्तन्ते । यदीदं स्यात्तर्हि कविरयं विक्रमभ्रातुर्भर्तृहरेरन्यः । काव्याऽवसाने कविना च स्वकीयः संस्तवः प्रकाशितस्तेनाऽवसीयते यत्कविरयं वलभीपुरवासी तथा श्रीधरसेनाख्यस्य कस्यचिद्राज्ञ आश्रितश्चाऽऽसीत् । तथा च परमपराक्रमस्य भूपालकुलचूडामणेर्विक्रमस्य भ्रातुर्भर्तृहरे राजान्तराश्रयणं न सङ्गच्छते । रमेशचन्द्रदत्ताख्येन सुप्रसिद्धेन पुरातत्त्ववेत्त्रा विपश्चिताऽनुमीयते--वलभीपुरनृपालानां समयं विक्रमस्य ५२७

तमाब्दादारभ्य ७७७ तमाब्दपर्यन्तमासीदिति । वलभीपुरमिद गुर्जरदेश-स्थमस्ति । अत्रत्या राजान आत्मन सूर्यवश्यान्कथयन्ति । सम्भाव्यतेऽत एव स्वाश्रयदातू राज्ञ प्रसिद्ध' पूर्वपुरुप श्रीरामचन्द्र कविना महता परिश्रमेण व्यवर्णि । 'भर्तृहरि'रित्यस्य नाम्नो 'भर्तृ' रूपाऽशस्याऽपभ्रशोऽय 'भट्टि'रिति केषाचिद्विदुपा परामर्श ।

भट्टिरय श्रीमद्भागवतस्य महापुराणस्य व्याख्यातु' श्रीधरस्वामिनः पुत्र इतीय किवदन्ती च श्रोत्रपथ समापतन्ती वरीवर्ति ।

इदमप्याकर्ण्यते कश्चिद्राजैक पण्डितमपृच्छत्—कि भवानेकवर्षाऽभ्यन्तरे मम पुत्र व्याकरणमध्यापयितु समर्थोऽस्तीति । ततस्तस्य 'प्रभवामी'ति कथनाऽनन्तर स राजा विनयपुर'सर त विद्वास स्वतनयाऽध्यापनाऽर्थ न्ययुङ्क्त । अध्यापनकाले गुरुशिष्यावन्तरा करिशावकस्यापतनेन तदैकवार्षिकोऽनध्याय सवृत्तस्तदा पण्डितः स्वकीयनिर्बन्धस्य नैष्फल्यसम्भावनया लक्षणाऽनुसारिकमेक काव्य प्रणिनाय, येन नियतसमये राजकुमारस्य व्याकरणप्रावीण्येन विदुप प्रतिज्ञापूरण राजतो यशःपुरस्काराऽवाप्तिश्चासीत् । अयमेव कविर्भट्टिर्नाम तत्प्रणीत काव्य च भट्टिकाव्यमित्येके ।

मया च परीक्षार्थिना छात्राणा समुपयोगाय जयमङ्गलमल्लिनाथ-भरतमल्लिकादीना प्राचीनटीकाकाराणा व्याख्यानाऽन्वयप्रयोगपरिवर्तन-व्याख्याव्युत्पत्तिभावाऽर्थभाषानुवादादीना विपयाणामुपयुक्तस्थलविशेष-सन्निवेशेन च प्रथमत' षष्ठसर्ग यावत् भट्टिकाव्यस्य चन्द्रकलाख्येय व्याख्या व्यलेखि । यदत्र मन्मतिमान्द्याच्छीघ्रतानिबन्धनादक्षरसयोजक-मूलकाद्वा दोषादशुद्धय सञ्जातास्तत्र गुणैकपक्षपातिनो विद्वास' ससूचनपुर'सर मर्पयेयुरसाधारणेन निजेनौदार्यप्रकर्षेणेति मदीयो विस्रम्भ' । अन्ते च सस्कृतसाहित्योद्धारबद्धपरिकरश्रेष्ठिवरगोलोकवासिहरिदासगुप्तात्मज-श्रीजयकृष्णदासगुप्तमहोदय ( यत्प्रार्थनयैवेय मदीया कृति' समुद्भूता ) शुभाशीराशिभिः समभिनन्द्य विरमामि बहुविस्तरादिति शम् । इत्यलम् ।

पाशुपतक्षेत्रम्
( नक्साल, नेपाल )
सवत् १९९८, कामदैकादशी ।

विनयाऽवनत —
—शेषराजशर्मा

# चिह्नसंकेत

| | | |
|---|---|---|
| द्वि० त० | — | द्वितीयातत्पुरुषः । |
| तृ० त० | — | तृतीयातत्पुरुषः । |
| च० त० | — | चतुर्थीतत्पुरुषः । |
| प० त० | — | पञ्चमीतत्पुरुषः । |
| ष० त० | — | षष्ठीतत्पुरुषः । |
| स० त० | — | सप्तमीतत्पुरुषः । |
| क० धा० | — | कर्मधारयः । |
| बहु० ब० व्री० | — | बहुव्रीहिः । |
| व्य० ब० | — | व्यधिकरणबहुव्रीहिः । |
| उपपद० | — | उपपदसमासः । |
| गति० | — | गतिसमासः । |
| प्रादि० | — | प्रादिसमासः । |
| नञ्० | — | नञ् समासः । |
| सुप्सुपा० | — | सुप्सुपासमासः । |
| रूपक० | — | रूपकसमासः । |

———

# संस्कृतकथासार

## प्रथम सर्ग

महाप्रतापो देवेन्द्रसमो विद्वान् इष्टापूतकर्मानुष्ठाता नीतिकुशलो दशरथो नाम भूपालो बभूव। सोऽमरावतीमहर्निशमतिरुचिरां विज्ञजनाऽध्यासितां सुन्दरभवनोद्यानसमलङ्कृतामयोध्यामध्यास्त। तस्य कौशल्या, कैकयी, सुमित्रा चेति तिस्रो राज्य आसन्। बहुकालपर्यन्तं तिसृष्वपि राज्ञीष्वनपत्यत्वान्महाराजेन दशरथेन पुत्रेष्टेरनुष्ठानार्थं विभाण्डकसुतऋषिवरऋष्यशृङ्गो वाराङ्गनाभिः स्वां पुरमानीत। स च ऋषिर्नृपाऽभिप्रायं विदित्वा विधिपूर्वकं यज्ञमनुष्ठितवान्। कर्मसमाप्तेरनन्तरं तिस्रोऽपि महिष्यो यज्ञशेषं पायसमभक्षयन्। तदनु ता राजपत्न्योऽन्तर्वत्न्यो बभूवु। नियतसमये कौशल्या रामं, कैकेयी भरतं, सुमित्रा लक्ष्मणं शत्रुघ्नं च असूत। विद्वद्वरिष्ठो वसिष्ठस्तेषां राजपुत्राणां जातकर्मारभ्योपनयनाऽन्तं संस्कारनिचयं क्रमतोऽकरोत्। ततो दशरथनन्दनास्ते रामचन्द्रादयः साऽङ्गवेदाऽध्ययनपूर्वकं धनुर्वेदमधिजगिरे। अनन्तरं यज्ञादिकर्मसु राक्षसैर्बहुशः प्रत्यूहव्यूहं समनुभूय गाधिसुतो महर्षिविश्वामित्रः कर्मपरिरक्षणाऽर्थं सलक्ष्मणं रामं याचितुं महाराजं दशरथमभ्यगात्। दशरथो मधुपर्कादिभिस्तं सम्भाव्याऽगमनकारणमपृच्छदनन्तरं तदाशयं ज्ञात्वा पुत्रविरहाऽसहिष्णुतया मुमोह। ततः सायुधयो रामलक्ष्मणयोर्विश्वामित्राऽनुगमनकाले वियोगव्यथिता अपि पुरतरुण्यो मङ्गलभङ्गभीता सत्यो मा रुदन्। तत्समये विप्रैराशीर्वचनानि प्रयुक्तानि, मंगलवाद्यानि वादितानि, दक्षिणो भुजः पुस्फोर, शुभशकुनाः शकुन्ताश्च वृक्षेषु चुकूजुः।

---

## द्वितीय सर्ग

अनुजेन लक्ष्मणेन सह विश्वामित्रमनुसरन् रामस्तस्याः पुर्या निर्यार्थं यत्र तत्र शारदीं लक्ष्मीमपश्यत्। कासारादीनां जलाशयानां विमलं जलं प्रफुल्लानि कमलानि च तन्मनो जहुः। जगदर्चनीयं रामं मुनिवराः पुष्पफलेनाऽऽर्चिषुः। अथ विश्वामित्रो रामं विजयां जयां च विद्यामध्यापिपत्। तथा तस्मै अमोघमस्त्रनिचयं च दत्तवान्। रामस्तस्मिन्नेवान्तरे हननोद्यतां ताडकाऽऽख्यां राक्षसीं निजघान। ततोऽतिथिसत्कारशीला वनवासिनो रामलक्ष्मणयोर्मधुपर्कादिभि

सत्कारमकुर्वन् प्रार्थयश्च हवीरक्षणम्। आरभन्त च ते रामरक्षकत्वे स्वीय यज्ञाऽनुष्ठानम्। ततो राक्षसा यज्ञनाशाऽर्थं समागतास्तत्र बहवो लक्ष्मणेन हता। सत्यापाऽनन्तर रामो मारीच तृणवत्सङ्ग्रामाद्दिरास्थत्। ततो विश्वामित्रेण राम प्रशसितो नीतश्च लक्ष्मणेन सह मैथिलयज्ञभूमिम्। रामो हरेन हरधनुरभाङ्क्षीत्। ततो जनकेना‍ऽऽहूतो राजा दशरथ पुत्रविक्रमश्रवणेन अतीवप्रीतमना सन् पुत्रविवाहसम्पादनार्थं चतुरङ्गबलसमन्वितो भूत्वा मिथिला समाययौ। ततश्चतुर्णामपि दशरथपुत्राणा मैथिलराजकुमारीभि सह महता समारोहेण विवाहसंस्कार समभवत्। रामो जनकतनया सीता समासाद्य अधिक शुशुभे। ततस्तेऽयोध्याप्रयाणोद्यता सन्त पथि धानुष्क परशुराममपश्यन्। जामदग्न्यो रामश्च दाशरथि राम स्वधनुष सज्याणत्वकरणार्थमुच्चैराहूतवान्। दशरथश्च स्वपुत्रनाशाऽऽशङ्कया परशुराम सरम्भाऽपनयाऽर्थं प्रार्थयत् अवज्ञातश्च तेन। राम परशुराम स्वविक्रमेणाऽपगतमद विधाय ससुख महगण चाऽयोध्यामगात्।

---

## तृतीयः सर्गः

विजितभूपसमाजो महाराजो दशरथो गुणगणाऽभिराम राम लोकप्रियं राजकार्यनिर्वाहक चाऽभिसमीक्ष्य 'सुत राज्येऽभिषेक्ष्ये' इत्याकारिकया घोषणया प्रकाशेन लोक आनन्दाऽभिवृद्धि चकार। ततो बहुविधेषु राज्याऽभिषेकोपकरणेषु सम्पादितेषु कैकेयी तमुत्सव द्रष्टुमशक्नुवाना सती मातामहावासं प्राप्तवन्त भरतमपृष्ट्वैव रामस्य वनप्रयाण वव्रार। तन्मतिपरिवर्तनाऽर्थं दशरथेन बहुश प्रलोभने कृतेऽपि कैकेयी स्वकीयनिबन्धतो न विरराम। तत सीतालक्ष्मणोपेतस्य रामस्य विवशेन राज्ञा दशरथेन सुमन्त्रसारथिना रथेन वनप्रयाण आदिष्टे सति प्रजामण्डलेषु शोकविकल कलकल समभवत। सर्वेऽपि प्रजाजना रामाऽनुगमने मति चक्रु। ततस्तान्सर्वानपि राम सान्त्वयामास। राम प्रजाजनाऽनुसरणभीत्या एकामेव रजनी अथित्वा प्रभातेऽलक्षितगतिमङ्गीकृत्याऽपासरत्। तेऽपि प्रजाजन, शोचन्त ससूत निवृत्ता। दशरथोऽपि रामेण विना सुमन्त्रमवलोक्य भृशशोकार्तो भूत्वा प्राणानपि अत्यजत्। महिष्योऽपि वैधव्यव्यथिता सत्य पोरस्ताट चुक्रुश। सचिवास्ता सान्त्वयित्वा राज्ञ शव तैले निक्षिप्य भरताऽऽनयनाऽर्थं दूतान् प्रास्थापयन्। भरतो मातामहावासे बहूनि दु शकुनानि विलोकयन्नासीत्, अतो नेकविधशङ्काकुलो भूत्वा सत्वरमयोध्या-

# संस्कृतकथासार

## प्रथम सर्ग

महाप्रतापो देवेन्द्रसखो विद्वान् इष्टापतक्रमाऽनुष्ठाता नीतिकुशलो दशरथो नाम भूपालो बभूव। सोऽमरावतीसदृशीमचिरविरा विज्ञजनाऽध्यासिता सुन्दरभवनोद्यानसमलङ्कृतामयोध्यामध्यास्त। तस्य कौशल्या, कैकेयी, सुमित्रा चेति तिस्रो राज्य आसन्। बहुकालपर्यन्त तिसृष्वपि राज्ञीष्वनपत्यत्वान्महाराजेन दशरथेन पुत्रेष्टेरनुष्ठानाऽर्थं विभाण्डकसुतऋषिवरऋष्यशृङ्गो वाराङ्गनाभि स्वा पुरमानीत। स च ऋषिर्नृपाऽभिप्राय विदित्वा विधिपूर्वक यज्ञमनुष्ठितवान्। कर्मसमाप्तेरनन्तर तिस्रोऽपि महिष्यो यज्ञशेष पायसमभक्षयन्। तदनु ता राजपत्न्योऽन्तर्वत्न्यो बभूवु। नियतसमये कौशल्या राम, कैकेयी-भरत, सुमित्रा लक्ष्मण शत्रुघ्न च असूत। विद्वद्वरिष्ठो वसिष्ठस्तेषा राजपुत्राणा जातकर्मारभ्योपनयनाऽन्त सस्कारनिचय क्रमतोऽकरोत्। ततो दशरथनन्दनास्ते रामचन्द्रादय साऽङ्गवेदाऽध्ययनपूर्वक धनुर्वेदमधिजगिरे। अनन्तर यज्ञादिकर्मसु राक्षसैर्बहुश प्रत्यूहव्यूह समनुभूय गाधिसुतो महर्षिविश्वामित्र कर्मपरिरक्षणाऽर्थ सलक्ष्मण राम याचितु महाराज दशरथमभ्यगात्। दशरथो मधुपर्कादिभिस्त सम्भाव्याऽऽगमनकारणमपृच्छदनन्तर तदाशय ज्ञात्वा पुत्रविरहाऽसहिष्णुतया मुमोह। तत सायुधयो रामलक्ष्मणयोर्विश्वामित्राऽनुगमनकाले वियोगव्यथिता अपि पुरतरुण्यो मङ्गलभङ्गभीता सत्यो मा रुदन्। तत्समये विप्रैराशीर्वचनानि प्रयुक्तानि, मगलवाद्यानि वादितानि, दक्षिणो भुज पुस्फोर, शुभशकुना शकुन्ताश्च वृक्षेषु चुकूजु।

---

## द्वितीय सर्ग

अनुजेन लक्ष्मणेन सह विश्वामित्रमनुसरन् रामस्तस्या पुर्या निर्याय यत्र तत्र शारदी लक्ष्मीमपश्यत्। कासारादीना जलाशयाना विमल जल प्रफुल्लानि कमलानि च तन्मनो जह्रु। जगदर्चनीय राम मुनिवरा पुष्पफलेनाऽऽर्चिषु। अथ विश्वामित्रो राम विजया जया च विद्यामध्यापिपत्। तथा तस्मै अमोघमस्त्रनिचय च दत्तवान्। रामस्तस्मिन्नेवान्तरे हननोद्यता ताडकाऽऽख्या राक्षसी निजघान। ततोऽतिथिसत्कारशीला वनवासिनो रामलक्ष्मणयोर्मधुपर्कादिभि

मागात। आगमनाऽनन्तर क्षणादेव सकलमपि वृत्तान्त ज्ञात्वा भरतो मातर कैकयी-मुच्चैरुपालभ्य शोकसागरे चाऽविरत न्यमाङ्क्षीत। सचिवास्त सान्त्वयित्वा तेनैव राज्ञ सकलमपि आर्ध्वदेहिक सस्कारमकारयन् श्राद्धमसमाप्त्यन तत भरतोऽभिषेक त्यक्त्वा राम प्रत्यानिनीषु सन सपौरो भूत्वा वन प्रायात्। ततो भरताद्यस्त-मसायास्तीर सम्प्राप्य विश्रामोत्तर यमुनाया स्नातु चलिता मार्गे भारद्वाजस्य योगबलोपपन्नया विभूत्या सम्पन्नमतिथिसत्कार समनुभूय ते चित्रकूटाद्रौ रामेण सह सङ्गताश्च। रामोऽपि भरतात्पितुर्मरण श्रुत्वा शोकाऽऽक्रान्तमानसोऽभवत्, चिर रुदित्वा नदी गत्वा पित्रे जलाञ्जलिमदात्। बहुश प्रार्थनासु कृतास्वपि रामप्रत्यानयने भरतोऽसफल सञ्जात, अनन्तर रामादेशेन रामपादुकाद्वय गृहीत्वा सपौर सन् अयोध्या प्रतिनिवृत्तश्च।

---

## चतुर्थ सर्ग

सपौरे भरते निवृत्ते रामो दण्डकारण्य सम्प्राप। ततो महारण्यभ्रमणसमये विराधाऽऽख्यो राक्षसो राममहरत। रामलक्ष्मणाभ्या स हतश्च। ततस्ते शरभङ्गाश्रम गतवन्त। शरभङ्गश्च रामाय सुतीक्ष्णमुनेराश्रम कथयित्वा तस्य पुरोऽग्नौ स्वकीय वपुर्जुहवाञ्चक्रे। राम सुतीक्ष्णाश्रमसन्निधौ पर्णशाला निर्माय कञ्चित्काल यावत्तस्यामुवास, अरक्षच्च बहुविधेभ्यस्त्रासहेतुभ्यो मुनीन्। एकदा पर्णशाला स्थितो राम शूर्पणखया नाम राक्षस्या विलोकित। मायया वरनारीवेषधारिण्या तया सपत्नीकत्वेन रामोऽवज्ञातो लक्ष्मण प्रार्थितश्च। रामप्रशसकेन लक्ष्मणेन प्रत्याख्याता सा राम प्रार्थयाञ्चक्रे। रामेणाऽपि निराकृता सा लक्ष्मणमगमत्। ततो लक्ष्मणेन छिन्ननासिका सा बहुश सन्तर्ज्य दण्डकारण्यवासिनोर्भ्रात्रो खरदूषणयोरग्रे विललाप। चतुर्दशसाहस्रबलौ तौ च खरदूषणौ शूर्पणखा समाश्वास्य बहुविधायुधधारिणौ भूत्वा दाशरथिनिग्रहाऽर्थं ससैन्य निर्ययतु। ततस्तौ दाशरथी बहून् राक्षसान् त्रिमूर्द्धाख्य राक्षस च अहताम्।

## पञ्चमः सर्गः

रामलक्ष्मणयोः खरदूषणाभ्यां तुमुलः सङ्ग्रामः समजनि। किञ्चित्क्षणाऽनन्तरमेव ससैन्यौ तौ राक्षसौ दाशरथिभ्यां हतौ। ततोऽसहाया शूर्पणखा पारेसमुद्रं लङ्कायां वसन्तं रावणं जगाम। सा शूर्पणखा रावणाय दाशरथिकर्तृकं राक्षसक्षयमाख्याय चारदुर्बलत्वाद्रावणस्याऽनयं प्रतिपादितवती, कथितवती च रामपराक्रमं सीतायाः अनवद्यं सौन्दर्यं च। ततो रावणस्तां समाश्वास्य स्वविक्रममवर्णयत प्रतिज्ञातवांश्च रामनिग्रहम्। तदनु स साहाय्यप्राप्त्यर्थं समुद्रसमीपवासिनं मारीचं गत्वा तं वृत्तान्तमशिश्रवत्। मारीचश्च रामनिग्रहाद्रावणं निवारयितुमलोकसामान्यं रामपराक्रममकथयत्। रावणः कुपितो भूत्वा मारीचसूचितं रामविक्रमं दूषयित्वा मारीचं निरभर्त्सयत्। ततो मारीचो रावणत्रासात् रामलक्ष्मणयोर्दूरप्राप्त्यै हेमरत्नमयं मृगरूपं दधार। रामश्च मृगाऽजिनधारणाभिलाषिण्या सीतया प्रेरितः सुदूरं मृगमनुससार। मायामृगो मारीचश्च लक्ष्मणस्यापि सीतारक्षकत्वं निवारयितुं हा लक्ष्मणे'त्युच्चैश्चक्रन्द। मारीचप्रतारिता सीता लक्ष्मणेन मुहुर्मुहुर्विबोधितोऽपि रामाऽनिष्टमाशङ्क्य रामाऽन्तिकं गन्तुं लक्ष्मणं प्रेरितवती। तस्मिन्नेवाऽन्तरे रावणो भिक्षुरूपं धृत्वा सीतासविधं समाजगाम 'काऽसि त्वमि'तिसीतामप्राक्षीत्प्रशसितवांश्च तदीयं सौन्दर्यम्। सीता च स्ववस्तत्वप्रदानप्रसङ्गतो रामविक्रममगासीत्। ततो रामपराक्रमश्रवणाऽसहनो दशाननः आत्मपरिचयप्रदानपूर्वकं निजशौर्यं वर्णितवान्प्रार्थयच्च सीताम्। यदा सीता रावणप्रार्थनायां प्रतिकूलवर्तिनी सञ्जाता तदा रावणेन धृतभयङ्करशरीरेण सता बाहुपपीटमाश्लिष्य आकाशं नीता। अस्मिन्नेवाऽन्तरे सीतासरक्षणेच्छुना गृध्रराजेन जटायुषा परुषभाषणपूर्वकं रावणश्चञ्च्वा नखैश्च प्रहृतः, तद्रथश्च बभञ्जे। ततो रावणो जटायुषमाकृष्य तत्पक्षौ अच्छिनत् सीतामादाय स्वपुरं चाऽगात्।

---

## षष्ठः सर्गः

कामार्तो रावणः सीतानिराकृतः सन् सीतारक्षार्थं रक्षांसि आदिश्य रामवृत्तपरिज्ञानाऽर्थमात्मीयाञ्जनान् नियुक्तवान्।

रामोऽपि मारीचं हत्वाऽऽगमनसमये बहुभिर्दुःशकुनैः सीतायाः अनिष्टमाशङ्कितवान्। अस्मिन्नेवाऽन्तरे स तत्र समायातल्लक्ष्मणाद्यथावद्वृत्तान्तमुपलभ्य भृशं विह्वलः सञ्जातः। पर्णशालायां यदा रामः सीतां नाऽवालोकयत्तदा उन्मत्त-

न्यायो भूत्वा यत्र तत्र पर्यट्य भृश विललाप । स सीतावियोगेन अतीवाऽऽकुलोऽन्यर्थमश्रूणि विमुञ्चन्नपि स्वीयनित्यकर्माऽनुष्ठान नाऽमुञ्चत् । राम सीताया अन्वेषणाऽर्थं लक्ष्मणेन सह पर्वतसमीपमगमत्तत्र शोणित, पतित कवच साऽश्व चूर्णित रथ, छिन्नपक्ष गृध्र च विलोक्य नानाविधा कल्पना कृत्वा अतीव मुमोह, त सीताहन्तारमुत्प्रेक्षमाण सन् हन्तुमभ्यधावत च ।

स च गृध्रो जटायू राम सकलमपि वृत्तात श्रावयित्वा उपरत । दाशरथी जटायुषो दाहोदकदानानि कर्माणि कृत्वा शोकाऽऽकुलावभूताम् । तत कवन्धाऽऽख्येन दीर्घबाहुना राक्षसा गृहीतौ तौ खड्गाभ्या तद्भुजापातनमकार्ष्टाम् । स च राक्षसो दिव्यरूप समजनि । तदा रामेण पृष्ट स 'अह श्रीनामकस्याऽसुरस्य पुत्रोऽस्मि । मुने शापात् ईदृश सवृत्त' इति स्ववृत्तान्तमभिधाय 'सीता रावणेन लङ्काया नीता । ऋष्यमूके स्वाऽग्रजेन भ्रात्रा बलीयसा वालिना भृश निपीडित सुग्रीवो नाम वानरराजोऽस्ति । तेन सहाऽन्योन्योपकारस्य साधयित्री मैत्री भवता कार्या । तत्साहाय्येनैव भवतो निखिलमपि अभीष्ट सेत्स्यति' इति कथनोत्तर भास्करप्रभ स राक्षसस्तमामन्त्र्य दिवमगात् ।

ततस्तौ भ्रातरौ बहु विधा व्यथामनुभूय शबर्याख्याया कस्याश्चित्तापस्या आश्रम जग्मतु । सा च मधुपर्कादिना पूजासाधनेन राघवयोरतिथिसत्कार सम्पाद्य 'सुग्रीवो भवता सह सत्वर सख्य करिष्यति, भवाश्च द्रुत मैथिलीं विलोकयिष्यती' त्यभिधाय अन्तर्हिता ।

ततो राघवौ अलिपिकाऽऽदिभि पक्षिभि शोभित पम्पासरो व्यालोकयताम् । रामस्तत्र रमणीयपदार्थनिश्चयदर्शनेन सञ्जातया सीतास्मृत्याऽतिवेल शोकाकुलो भूत्वा परिदेवयामास ।

अनन्तरमुभावपि तावृष्यमूकमगच्छताम् । तत्र वालिशङ्कित सुग्रीवस्तौ वालिगुप्तचरौ मत्वा सपरिजनो मलयपर्वतमगमत् । तद्वृत्तान्तज्ञानाय सुग्रीवप्रेरितो हनूमाश्च विश्वासयोग्य भिक्षुवेष स्वीकृत्य रामाऽन्तिकमागच्छत् । 'कौ युवाम्' इति तत्प्रश्ने राम आत्मीय सर्व वृत्तान्त जगाद । ततो हनूमान् वालिपरिचयपुर सरम् 'अह तेन वालिना निराकृतस्याऽन्त साहाय्यमिच्छत वानरराजस्य सुग्रीवस्य दूतोऽस्मि । भवान् सुग्रीवमैत्र्या अखिलमप्यभीष्टमासादयिष्यतीति अभिधाय राम पृष्ठमारोप्य मलयमनयत् ।

सुग्रीवोऽपि राम दृष्ट्वा वालिभयान्मुक्त सञ्जात । ततस्तौ अग्नि साक्षीकृत्याऽन्योन्यहितसम्पादनाऽर्थं मैत्रीं चक्रतु । सुग्रीवो विधातु श्रासवरस्य वालिनोऽतुल बल समूच्य रामविक्रम प्राशसत् ।

रामश्च सुग्रीवप्रत्ययाऽर्थमेकेनैव बाणेन सप्त आकाशस्पृशस्तरून्बिभेद । ततः सुग्रीवो गताऽऽशङ्को भूत्वा वालिनिलयं ययौ । रामो युध्यन्तौ तावुभावपि तुल्यरूपौ दृष्ट्वा बाणान्मोक्तुं न शशाक । तदनु वालिपीडितः सुग्रीवः स्वाश्रमं प्रत्यावृत्तः, रामेण मालाऽलङ्कृतो भूयोऽपि वाल्यन्तिकं गतश्च । अत्र सुग्रीवेण सह युध्यन्वाली रामेण बाणेन विद्धो भुवि पतितश्च । ततो वाल्यनुयायिनो वानराः समन्तात् पलायन्त । शूरम्मन्यो वाली छद्मवधात् राममुपालब्ध । ततो रामः 'त्वं स्वभ्रातृदारापहर्ता पातकी असि' इति निर्भर्त्स्य युक्तिपूर्णैर्वचनैस्तदाक्षेपं परिहृतवान् । रामवाक्यं श्रुत्वा वाली लज्जापूर्णमानसो भूत्वा राममनुनीतवान्, रामे प्रियपुत्रमङ्गदं निक्षिप्य सुग्रीवेण सह सान्त्वपूर्वं व्याहृत्य तस्मै तद्दत्तलब्धां हिरण्मयीं मालां राज्यादिकं च समर्प्य ममार ।

सुग्रीवो भ्रातुरौर्ध्वदेहिकं कर्म कृत्वा हनूमदादिभिः स्तूयमानः सन् वर्षतः समासन्नत्वेन रामाऽऽज्ञया किष्किन्धां प्रविष्टः ।

# हिन्दी कथासार

## प्रथम सर्ग

महाप्रतापी, इन्द्रके मित्र, विद्वान् इष्ट और पूर्त कर्मोंके अनुष्ठान करनेवाले नीतिकुशल दशरथ नामके राजा हुए। वे अमरावती के सदृश, अतिसुन्दर, विद्वानोंकी वासभूमि और सुन्दर भवनों तथा उद्यानोंसे अलंकृत अयोध्याजी मे रहते थे। उनकी कौशल्या, कैकेयी और सुमित्रा नामकी तीन रानियाँ थी। बहुत समय तक तीनों महारानियोंमे सन्तान न होने से महाराज दशरथ पुत्रेष्टि करने के लिए विभाण्डक ऋषिके पुत्र ऋषिश्रेष्ठ ऋष्यशृङ्गको वेश्याओं के द्वारा अपने शहर मे लिवालाये। उन्होंने भी राजाके अभिप्रायको जानकर विधिपूर्वक यज्ञका अनुष्ठान किया। कर्म समाप्त होनेपर तीनों महारानियोंने यज्ञशेष पायस (खीर) को खाया। तदनन्तर वे गर्भिणी हो गयीं। नियतसमयमें कौशल्याने रामको, कैकेयीने भरतको, सुमित्रा ने लक्ष्मण और शत्रुघ्न को पैदा किया। विद्वानों में श्रेष्ठ वशिष्ठ जी ने उन राजकुमारों के जातकर्मसे आरम्भ कर उपनयनपर्यन्त

मस्कारो को क्रमसे किया। तव दशरथ के पुत्र रामचन्द्र आदिने अङ्गो के साथ वेदो का अध्ययन करके धनुर्वेदका अभ्यास किया। उसके बाद यज्ञ आदि कर्मोमे राक्षसोसे कई बार विघ्नो का अनुभव करके गाधिके पुत्र महर्षि विश्वामित्र यज्ञ-कर्मकी रक्षा के लिए लक्ष्मणसे युक्त रामचन्द्रजीको मॉगनेको महाराज दशरथके पास गये। दशरथने मधुपर्क आदिसे उनका स्वागत कर आगमनका कारण पूछा और ऋषिका अभिप्राय जानकर पुत्र विरहकी असहिष्णुतासे उनको मोह हुआ। तदनन्तर विश्वामित्रकी सूचनासे और आश्वासनवाक्यसे भी राजा ने पुत्रोका अनु-सरण करना स्वीकार कर लिया। अस्त्रयुक्त राम और लक्ष्मणके विश्वामित्रके अनुगमन करनेके समयमे वियोगसे पीडित होती हुई भी शहरकी युवतियाँ मङ्गलभङ्ग होनेके भय से नहीं रोयी। उस समय ब्राह्मणोने आशीर्वादके प्रति-पादक वाक्यो को कहा, मङ्गलवाद्य बजाये गये, दक्षिण बाहु फडक उठा और शुभशकुन करनेवाले पक्षियोने वृक्षोपर शब्द किया।

---

## द्वितीय सर्ग

भाई लक्ष्मणके साथ विश्वामित्रका अनुसरण करते हुए रामचन्द्रजीने अयोध्या से निकलकर यत्र तत्र शरत्की शोभा देखी। तालाव आदि जलाशयोके निर्मल जल और विकसित कमलोने भी उनके मन को हर लिया। जगत्पूजनीय रामचन्द्रजी का श्रेष्ठ मुनियोने फूलो और फलो से सत्कार किया। अनन्तर विश्वामित्रजीने रामचन्द्रजीको विजया और जया नामकी विद्या पढायी, उसी प्रकारसे अमोघ अस्त्रोको भी दे दिया। रामचन्द्रजीने उस बीचमे ही मारनेके लिए उद्यत ताडका नामकी राक्षसीको मार डाला। तब अतिथियोका सत्कार करनेवाले वनवासियोने राम और लक्ष्मण का मधुपर्क आदिसे सत्कार किया और यज्ञके हवनीय पदार्थो-की रक्षाके लिए प्रार्थना भी की। उन्होने रामचन्द्रजीके रक्षकत्वमे अपने यज्ञका अनुष्ठान भी किया। अनन्तर बहुतेरे राक्षस यज्ञनाशके लिए आये और वहाँ पर वे लक्ष्मणजीसे मारे गए। परस्पर भाषणके अनन्तर रामचन्द्रजीने मारीचको सग्रामभूमिसे तृणके सदृश बहुत दूर फेंक दिया। तब विश्वामित्रजी रामकी प्रशसाकर लक्ष्मणके साथ उनको मिथिलाके महाराजजनककी यज्ञभूमिमे ले गये। रामचन्द्रजीने हँसते हुए महादेवजीके धनुको तोड डाला। तब जनकसे बुलाये गये महाराज दशरथ पुत्रका पराक्रम सुनकर अत्यन्त

प्रसन्नचित्त होते हुए पुत्रोंके विवाहको सम्पादन करनेके लिए चतुरङ्गिणी (हाथी, घोडे, रथ और पैदल) सेनासे युक्त होकर मिथिलाको आये। अनन्तर दशरथके चारो पुत्रोंका मिथिलाकी चार राजकुमारियोंके साथ बडे समारोहमें विवाहसंस्कार हो गया। रामचन्द्रजी जनकपुत्री सीताको पाकर अधिक शोभित हुए। तब अयोध्या को जाते हुए उन लोगोंने मार्गमें धनुधारी परशुरामजीको देखा। परशुरामजीने रामचन्द्रजीको अपने धनुषपर बाण चढाने के लिए ऊँचे स्वरसे ललकारा। दशरथने अपने पुत्रके नाशकी आशङ्कासे क्रोध न करनेके लिए परशुरामसे प्रार्थना की, परन्तु उन्होंने दशरथकी अवज्ञा की। रामचन्द्रजी अपने पराक्रम से पशुराम के मद को मिटाकर सुखपूर्वक स्वजन समूह के साथ अयोध्या को आ पहुँचे।

---

## तृतीय सर्ग

राजसमाजको जीतनेवाले महाराज दशरथने गुणसमूहसे अभिराम रामचन्द्रजीको लोकप्रिय तथा राजकार्यका निर्वाहक देखकर 'मैं पुत्रको राज्यमें अभिषेक करूँगा' ऐसी घोषणाको प्रकाशित कर लोकमें आनन्दकी वृद्धि की, तब राज्याऽभिषेककी अनेक सामग्रियोंके सम्पादित किये जाने पर कैकेयीने उस उत्सवको देखनेके लिए असमर्थ होकर मातामह (नाना) के नगरमें रहते हुए भरतको पूछे बिना रामको वनयात्राका वर माँगा। अपनी बुद्धिका परिवर्तन करनेके लिए दशरथसे अनेक बार प्रलोभन दिये जानेपर भी कैकेयी अपने हठसे विरत न हुई। तब विवश होकर राजा दशरथके सीता और लक्ष्मणसे युक्त रामचन्द्रजीको सुमन्त्रके सारथित्वमें रथमें चढकर वनयात्रा करनेका आदेश देनेपर शोकसे विकल प्रजामण्डलोंमें कोलाहल होने लगा। सभी प्रजाजन रामके अनुगमनका विचार करने लगे। उन सबोंको रामने सान्त्वना दी। वे प्रजाओंके अनुसरणकी भीतिसे एक ही रात सोकर प्रातःकालमें अज्ञात गतिको स्वीकार कर दूर चले गये, प्रजाएँ भी शोक करती हुई सारथिके साथ लौटीं। दशरथने भी रामके बिना सुमन्त्रको देखकर अतिशय शोकसे पीडित होकर प्राणत्याग किया, तब रानियाँ वैधव्य से पीडित होती हुई छाती पीटकर रोने लगीं, मन्त्रियोंने उन्हे सान्त्वना (दिलासा) देकर राजा के शवको तैलमें डालकर भरतको लिवानेके लिए दूतोंको भेजा। भरतजी ननिहालमें अनेक अपशकुन देख रहे थे इसलिए अनेक शङ्काओंसे आकुल होकर शीघ्र वे अयोध्यामें आये और आनेके बाद क्षणभरमें ही सब वृत्तान्त जानकर उन्होंने माता कैकेयीको पर्याप्त उपालम्भ

मस्कारो को क्रमसे किया। तव दशरथ के पुत्र रामचन्द्र आदिने अङ्गो के साथ वेदो का अध्ययन करके धनुर्वेदका अभ्यास किया। उसके बाद यज्ञ आदि कर्मोंमें राक्षसोसे कई बार विघ्नो का अनुभव करके गाधिके पुत्र महर्षि विश्वामित्र यज्ञ-कर्मकी रक्षा के लिए लक्ष्मणसे युक्त रामचन्द्रजीको माँगनेको महाराज दशरथके पास गये। दशरथने मधुपर्क आदिसे उनका स्वागत कर आगमनका कारण पूछा और ऋषिका अभिप्राय जानकर पुत्र विरहकी असहिष्णुतासे उनको मोह हुआ। तदनन्तर विश्वामित्रकी सूचनासे और आश्वासनवाक्यसे भी राजा ने पुत्रोका अनुसरण करना स्वीकार कर लिया। अस्त्रयुक्त राम और लक्ष्मणके विश्वामित्रके अनुगमन करनेके समयमे वियोगसे पीडित होती हुई भी शहरकी युवतियाँ मङ्गलभङ्ग होनेके भय से नही रोयीं। उस समय ब्राह्मणोने आशीर्वादके प्रतिपादक वाक्यो को कहा, मङ्गलवाद्य वजाये गये, दक्षिण बाहु फडक उठा और शुभशकुन करनेवाले पक्षियोने वृक्षोपर शब्द किया।

---

## द्वितीय सर्ग

भाई लक्ष्मणके साथ विश्वामित्रका अनुसरण करते हुए रामचन्द्रजीने अयोध्या से निकलकर यत्र तत्र शरत्की शोभा देखी। तालाब आदि जलाशयोके निर्मल जल और विकसित कमलोने भी उनके मन को हर लिया। जगत्पूजनीय रामचन्द्रजी का श्रेष्ठ मुनियोने फूलो और फलो से सत्कार किया। अनन्तर विश्वामित्रजीने रामचन्द्रजीको विजया और जया ी विद्या पढायी, उसी प्रकारसे अमोघ अस्त्रोको भी दे दिया। रामचन्द्रजीने उस बीचमे ही मारनेके लिए उद्यत ताडका नामकी राक्षसीको मार डाला। तब अतिथियोका सत्कार करनेवाले वनवासियोने राम और लक्ष्मण का मधुपर्क आदिसे सत्कार किया और यज्ञके हवनीय पदार्थोकी रक्षाके लिए प्रार्थना भी की। उन्होने रामचन्द्रजीके रक्षकत्वमे अपने यज्ञका अनुष्ठान भी किया। अनन्तर बहुतेरे राक्षस यज्ञनाशके लिए आये और वहाँ पर वे लक्ष्मणजीसे मारे गए। परस्पर भाषणके अनन्तर रामचन्द्रजीने मारीचको सग्रामभूमिसे तृणके सदृश बहुत दूर फेंक दिया। तब विश्वामित्रजी रामकी प्र लक्ष्मणके साथ उनको मिथिलाके महाराजजनककी यज्ञभूमिमे ले गये। रामचन्द्रजीने हँसते हुए महादेवजीके धनुको तोड डाला। तब जनकसे बुलाये गये महाराज दशरथ पुत्रका पराक्रम सुनकर अत्यन्त

प्रसन्नचित्त होते हुए पुत्रोंके विवाहको सम्पादन करनेके लिए चतुरङ्गिणी (हाथी, घोड़े, रथ और पैदल) सेनासे युक्त होकर मिथिलाको आये। अनन्तर दशरथके चारों पुत्रोंका मिथिलाकी चार राजकुमारियोंके साथ बड़े समारोहसे विवाहसंस्कार हो गया। रामचन्द्रजी जनकपुत्री सीताको पाकर अधिक शोभित हुए। तब अयोध्या को जाते हुए उन लोगोंने मार्गमें धनुर्धारी परशुरामजीको देखा। परशुरामजीने रामचन्द्रजीको अपने धनुषपर वाण चढ़ाने के लिए ऊँचे स्वरसे ललकारा। दशरथने अपने पुत्रके नाशकी आशङ्कासे क्रोध न करनेके लिए परशुरामसे प्रार्थना की, परन्तु उन्होंने दशरथकी अवज्ञा की। रामचन्द्रजी अपने पराक्रम से पशुराम के मद को मिटाकर सुखपूर्वक स्वजन समूह के साथ अयोध्या को आ पहुँचे।

---

## तृतीय सर्ग

राजसमाजको जीतनेवाले महाराज दशरथने गुणसमूहसे अभिराम रामचन्द्रजीको लोकप्रिय तथा राजकार्यका निर्वाहक देखकर 'मैं पुत्रको राज्यमें अभिषेक करूँगा' ऐसी घोषणाको प्रकाशित कर लोकमें आनन्दकी वृद्धि की, तब राज्याऽभिषेककी अनेक सामग्रियोंके सम्पादित किये जाने पर कैकेयीने उस उत्सवको देखनेके लिए असमर्थ होकर मातामह (नाना) के नगरमें रहते हुए भरतको पूछे विना रामको वनयात्राका वर माँगा। अपनी बुद्धिका परिवर्तन करनेके लिए दशरथसे अनेक बार प्रलोभन दिये जानेपर भी कैकेयी अपने हठसे विरत न हुई। तब विवश होकर राजा दशरथके सीता और लक्ष्मणसे युक्त रामचन्द्रजीको सुमन्त्रके सारथित्वमें रथमें चढ़कर वनयात्रा करनेका आदेश देनेपर शोकसे विकल प्रजामण्डलोंमें कोलाहल होने लगा। सभी प्रजाजन रामके अनुगमनका विचार करने लगे। उन सबोंको रामने सान्त्वना दी। वे प्रजाओंके अनुसरणकी भीतिसे एक ही रात सोकर प्रातःकालमें अज्ञात गतिको स्वीकार कर दूर चले गये, प्रजाएँ भी शोक करती हुई सारथिके साथ लौटीं। दशरथने भी रामके विना सुमन्त्रको देखकर अतिशय शोकसे पीडित होकर प्राणत्याग किया, तब रानियाँ वैधव्य से पीडित होती हुई छाती पीटकर रोने लगीं, मन्त्रियोंने उन्हे सान्त्वना (दिलासा) देकर राजा के शवको तैलमें डालकर भरतको लिवानेके लिए दूतोंको भेजा। भरतजी ननिहालमें अनेक अपशकुन देख रहे थे इसलिए अनेक शङ्काओंसे आकुल होकर शीघ्र वे अयोध्यामें आये और आनेके बाद क्षणभरमें ही सब वृत्तान्त जानकर उन्होंने माता कैकेयीको पर्याप्त उपालम्भ

(उलहना) दिया और वे शोकसमुद्रमें निरन्तर डूबने लगे। मन्त्रियोंने सान्त्वना देकर उन्हींसे राजाका सम्पूर्ण आन्त्यदहिक संस्कार कराया। श्राद्ध समाप्तिके अनन्तर भरतजी अभिषेकको छोड़कर रामको लौटानेकी इच्छा कर पुरवासियोंको साथ लेकर वन चले गये। तब भरत आदि तमसा नदीके तटको प्राप्त कर विश्रामके अनन्तर यमुनामें स्नान करने चले, मार्गमें भरद्वाज ऋषिके योगबलसे प्राप्त ऐश्वर्यसे सम्पन्न अतिथिसत्कार का अनुभव कर चित्रकूट पर्वतमें जाकर रामचन्द्रके साथ सङ्गत हुए। रामचन्द्रजीने भी भरतसे पिताका मरण सुनकर शोकमें आक्रान्त चित्तवाले होकर बहुत समयपर्यन्त रोकर नदीमें जाकर पिताजीको जलाञ्जलि दी। बहुत बार प्रार्थना करनेपर भी रामचन्द्रजीको लौटाने में भरत असफल हो गये, अनन्तर रामचन्द्रजीकी आज्ञासे उनकी दो खड़ाउओं को लेकर वे पौरोंके साथ अयोध्या लौटे।

## चतुर्थ सर्ग

पुरवासियोंके साथ भरतके लौटनेपर रामचन्द्रजी दण्डकाऽरण्य पहुंचे। तब महावनमें भ्रमणके समयमें विराध नामके राक्षसने रामचन्द्रजीका हरण किया और आखिरकार वह राम और लक्ष्मणसे मारा भी गया। अनन्तर वे शरभङ्गके आश्रममें चले गये। शरभङ्गने भी रामचन्द्रजीको सुतीक्ष्ण मुनिका आश्रम बतलाकर उनके सामने अग्निमें अपने शरीरका हवन किया। रामचन्द्रजी सुतीक्ष्णके आश्रमके समीप पर्णशाला बनाकर कुछ काल तक वहाँपर रहे और उन्होंने अनेक प्रकारके त्रासके कारणोंसे मुनियोंकी रक्षा की। एक दिन पर्ण-शालामें विद्यमान रामचन्द्रजीको शूर्पणखा नामकी राक्षसीने देखा। मायासे श्रेष्ठ नारीके वेशको धारण करनेवाली उसने सीताजीके होनेके कारण रामचन्द्र जीकी अवज्ञा की और लक्ष्मणसे प्रणय-प्रार्थना की। रामचन्द्रके प्रशंसक लक्ष्मण के प्रत्याख्यान करनेपर शूर्पणखाने रामसे प्रार्थना की। रामचन्द्रजीसे भी निरा-कृत होकर वह लक्ष्मणके पास चली गयी। तब लक्ष्मणजीके द्वारा नाक काटे जानेपर उसने अनेक बार तर्जन करके दण्डकारण्यमें रहनेवाले खर और दूषण नामके भाइयोंके आगे विलाप किया। चौदह हजार सैनिकोंसे युक्त उन दोनोंने शूर्पणखाको आश्वासन देकर अनेक प्रकारके अस्त्रोंको लेकर राम और लक्ष्मण को दण्ड देनेके लिए सेनाओंके साथ प्रस्थान किया। तब राम और लक्ष्मणने बहुतेरे राक्षसोंको और त्रिमूर्ध नामके राक्षसको भी मार डाला।

॥ श्री ॥

# भट्टिकाव्यम्

## 'चन्द्रकला' 'विद्योतिनी' व्याख्याद्वयोपेतम्



## अथ प्रथमः सर्गः

वन्दारुवृन्दारकवन्द्यमानं, सौन्दर्यसर्वस्वमहानिधानम् ।
भक्ताऽनुरक्त्याऽऽत्तमनोज्ञवेषं, तं केशवं नित्यमहं नतोऽस्मि ॥
यदीयया सहृदयया मया धीर्जनुर्विवेको हृदयालुता च ।
सम प्रबोधेन सुखं गृहीतास्तं तातपादं प्रणमामि भक्त्या ॥
प्रभो ! दयालो ! पितृदेवकेमां कृतिं भवत्पादयुगेऽर्पयामि ।
स एव भावत्कप्रियात्मजोऽहं शम्प्रदो मे विभवोऽयमेव ॥

अथ तत्र भवान् महाविद्वान् वैचक्षण्यचणो, महावैयाकरण साहित्यधुरन्धरो भट्टिनामा कृतिवरो लक्ष्य लक्षणं चैकत्र प्रदर्शयितुं मर्यादापुरुषोत्तमस्य भगवतः श्रीरामचन्द्रस्य चरित्रात्मकं महाकाव्यं प्रणिनाय । तस्य च महाकाव्यस्य मङ्गलमय भगवच्चरित्रात्मकत्वात् मङ्गलस्य स्वतः सिद्धत्वेन मङ्गलाचरणान्तरमपि महाकविना न कृतम् । यद्वा अकारस्य वासुदेववाचकत्वात् अभूदितिपदस्य सत्तावचनत्वाच्च 'देवतावाचकाः शब्दा ये च भद्रादिवाचकाः । ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा ॥' इत्यभियुक्तोक्तेरत्र जगणाश्रयो दोषोऽपि परिहृतो भवति । अभूदित्यादिना तन्महाकाव्यमारभते—

अभून्नृपो विबुधसखः परन्तपः श्रुतान्वितो दशरथ इत्युदाहृतः ।
गुणैर्वरं भुवनहितच्छलेन यं सनातनः पितरमुपागमत् स्वयम् ॥ १ ॥

अन्वयः—विबुधसखः परन्तपः श्रुतान्वितः दशरथ इति उदाहृतः नृपः अभूत् । सनातनः भुवनहितच्छलेन गुणैः वरं यं पितरं स्वयम् उपागमत् ।

प्रयोगपरिवर्तनम्—विबुधसखेन परन्तपेन श्रुतान्वितेन 'दशरथ' इति उदाहृतेन नृपेण अभावि । सनातनेन भुवनहितच्छलेन गुणैः वरः यः पिता स्वयम् उपागमि (अनन्तरं लाघवार्थं समासेन प्रयोगपरिवर्तनं भविष्यतीत्यवधेयम्) ।

कमलासन ।' इति चाऽमर । कुशलस्य भाव कौशलम् , 'हायनाऽन्तयुवादिभ्योऽण्' इति युवादिपठितत्वादण् 'तद्धितेष्वचामादे' इत्यादिवृद्धिश्च । पद्मासनस्य कौशल पद्मासनकौशल, तस्य । अत्र षष्ठीसमासस्य 'पूरणगुणसुहितार्थसदव्ययतव्य-समानाऽधिकरणेन' इति न प्रतिषेध , तत्र गुणेन निषेधोऽनित्य 'सञ्ज्ञाप्रमाणत्वादि'-त्यादिनिर्देशात् । ऊर्ध्वस्फुरद्रत्नगभस्तिभि = ऊर्ध्वं स्फुरन्त ऊर्ध्वस्फुरन्त , सुप्सुपा समास । रत्नाना गभस्तय रत्नगभस्तय ( ष० त० ), 'किरणोस्रमयूखाऽशुगभस्ति घृणिरश्मय ।' इत्यमर । ऊर्ध्वस्फुरन्तश्च ते रत्नगभस्तय ऊर्ध्वस्फुरद्रत्नगभस्तय , तै । 'विशेषण विशेष्येण बहुलम्' इति समास , तस्य च 'तत्पुरुष समानाऽधिकरण कर्मधारय' इति कर्मधारयसञ्ज्ञा । पुरम् , 'पू स्त्री पुरीनगर्यौ वा पत्तन पुट भेदनम् ।' इत्यमर ।

भावाऽर्थ —सृष्टिकुशलस्य ब्रह्मनैपुणस्य रचितपदार्थेषु सीमेव या अयोध्या हास्यभूतै उपरिप्रसरद्रत्नकिरणै अमरावती तिरस्कृत्येव स्थिताऽस्ति, ता स राजा अध्यास्त ( ब्रह्माऽपि अयोध्याऽधिकसृष्टौ न समर्थ इति भाव ) ।

भाषाऽर्थ —सृष्टिमे कुशल ब्रह्माजीकी निपुणताकी रचित पदार्थोंमे सीमा ( हद ) की तरह जो अयोध्यापुरी ऊपर फैली हुई ( हास्यभूत ) रत्नोंकी किरणोंसे इन्द्रकी पुरी अमरावतीको मानो तिरस्कार करके रही हुई है, उसमें महाराज दशरथ रहते थे ॥ ६ ॥

सद्रत्नमुक्ताफलवज्रभाञ्जि विचित्रधातूनि सकाननानि ।
स्त्रीभिर्युतान्यप्सरसामिवौघैर्मेरो शिरासीव गृहाणि यस्याम् ॥ ७ ॥

अन्वय —यस्या सद्रत्नमुक्ताफलवज्रभाञ्जि विचित्रधातूनि सकाननानि अप्सरसाम् ओघैरिव स्त्रीभिर्युतानि गृहाणि मेरो शिरासि इव (आसन् , तामध्यास्त) ।

प्रयोगप०—यस्या सद्रत्नमुक्ताफलवज्रभाग्भि विचित्रधातुभि सकाननै युतै गृहै शिरोभिरिव अभूयत ।

व्याख्या—यस्याम् = अयोध्यायाम् , सद्रत्नमुक्ताफलवज्रभाञ्जि = सुन्दरमणि-मौक्तिकहीरकयुक्तानि (मुक्ताफलवज्रयो रत्नाऽन्तर्भावेऽपि प्राधान्यद्योतनार्थमुक्ति गोबलीवर्दन्यायाद्वा), विचित्रधातूनि=विविधमन शिलादिधातुयुतानि, सकाननानि= उद्यानसहितानि, अप्सरसा = स्वर्वेश्यानाम् (उर्वश्यादिकानामित्यर्थ ), ओघैरिव= समूहैरिव, स्त्रीभि =नारीभि (अप्सर सदृशीभिर्नारीभिरित्यर्थ ), युतानि=युक्तानि, गृहाणि = वेश्मानि, मेरो = सुमेरपर्वतस्य, शिरासि इव = शृङ्गाणि इव ( आसन् , राजा ताम् अध्यास्त ) ।

व्युत्पत्ति —सद्रत्नमुक्ताफलवज्रभाञ्जि = मुक्ता फलानि इव मुक्ताफलानि 'उप मित व्याघ्रादिभि सामान्याऽप्रयोगे इति समास । रत्नानि च मुक्ताफलानि च

शतुर्वसु इति वसु । अभिरेमे = अभिपूर्वकात् 'रमु क्रीडायाम्' इति धातोर्लिट् । 'अत एकहल्मध्येऽनादेशादेर्लिटि' इत्येत्वाऽभ्यासलोपौ ।

भावार्थ —दशरथ धर्मयुक्तासु कामार्थयश साधनशीलासु लोकपूजितासु कौसल्याकैकेयीसुमित्राख्यासु तिसृषु पत्नीषु ऋग्यजु सामाख्यासु तिसृषु विद्यासु बुध इव विजहार ।

भाषाऽर्थ —दशरथने धर्मयुक्त, काम, अर्थ और यज्ञ करनेवाली, लोकमें पूजित, समयमें विवाहित कौशल्या, कैकेयी और सुमित्रा नामकी तीन उत्तम पत्नियोंमें ऋग्वेद, यजुर्वेद और सामवेद इन तीन विद्याओंमें विद्वान्की तरह विहार किया ॥

तस्य राज्ञ पुत्रा नैवासन् । ऋष्यश्रृङ्गनामा ऋपि पुत्रेष्टि जानातीति पुरोहिता द्वसिष्ठादाकर्ण्य राज्ञा वाराङ्गनाभिर्मुनिरानायित इति कथयितुमाह—

पुत्रीयता तेन वराङ्गनाभिरानायि विद्वान् क्रतुषु क्रियावान् ।
विपक्त्रिमज्ञानगतिर्मनस्वी मान्यो मुनि स्वां पुरमृष्यश्रृङ्ग ॥ १० ॥

अन्वय —पुत्रीयता तेन वराऽङ्गनाभि विद्वान् क्रतुषु क्रियावान् विपक्त्रिम ज्ञानगति मनस्वी मान्य ऋष्यश्रृङ्ग मुनि स्वां पुरम् आनायि ।

प्रयोगप०—पुत्रीयन् स वराऽङ्गनाभि विद्वांस क्रियावन्तम् ऋष्यश्रृङ्ग मुनि स्वां पुरम् आनीनयत् ।

व्याख्या—पुत्रीयता = पुत्रकामेन, तेन = राज्ञा, वराऽङ्गनाभि = श्रेष्ठस्त्रीभि ( प्रयोज्यकर्त्रीभि ), विद्वान् = विपश्चित् , क्रतुषु = पुत्रेष्ट्यादियज्ञेषु, क्रियावान् = प्रशस्तक्रिय , विपक्त्रिमज्ञानगति = परिपक्वज्ञानमार्ग । मनस्वी = प्रशस्तमना , मान्य = माननीय ( मानाऽर्ह इत्यर्थ ), ऋष्यश्रृङ्ग = ऋष्यश्रृङ्गनामक , मुनि = मननशील , स्वाम्=स्वकीयाम् ( आत्मन इत्यर्थ ), पुरम् = नगरीम् ( अयोध्याम् इत्यर्थ ), आनायि=आनायित ।

व्युत्पत्ति —पुत्रीयता=आत्मन पुत्रमिच्छतीति पुत्रीयन् , तेन, 'सुप आत्मन क्यच्' इति क्यच् । 'क्यचि च' इतीत्व, तत लट शत्रादेश । वराऽङ्गनाभि = प्रशस्तानि अङ्गानि ( हस्तपादादीनि ) यासां ता अङ्गना , 'अङ्गात्कल्याणे' इति नप्रत्यय , तत 'अजाद्यतष्टाप्' इति टाप् । वराश्च ता अङ्गना वराङ्गना , ताभि ( क० धा० ), वरत्व चाऽत्र सौन्दर्योपेतत्व बोध्य न तु निरवद्यत्वम् । क्रियावान् = प्रशस्ता क्रिया यस्य स क्रियावान् , 'तदस्यास्त्यस्मिन्निति मतुप्' इति प्रशंसाया मतुप् । विपक्त्रिमज्ञानगति =विपाकेन निर्वृत्ता विपक्त्रिमा, विउपसर्गपूर्वकात् 'डुपचष् पाके' इति धातो 'ड्वित क्त्रि' इति क्त्रिप्रत्यय , तत 'क्त्रेर्मम्नित्यम्' इति मप् । ज्ञानस्य गति ज्ञानगति (ष० त०) । विपक्त्रिमा ज्ञानगतिर्यस्य स (बहु०) ।

मनस्वी=प्रशस्तं मनोऽस्ति यस्य स, 'अस्मायामेधास्रजो विनि' इति प्रशंसायां विनिः 'सौ च' इति सौ दीर्घत्वम्। मान्य ='अर्हे कृत्यतृचश्च' इति ण्यत्। ऋष्यशृङ्गः=ऋष्यस्य (मृगविशेषस्य) इव शृङ्गं यस्य स ऋष्यशृङ्गः (व्यधिकरण बहुव्रीहिः)। आनायि=आङुपसर्गपूर्वकात् ण्यन्तात् 'णीञ् प्रापणे' इति द्विकर्मका ल्लुङि 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्।' इति वचनात्प्रधानकर्मणि लुङि चिण्वृद्ध्यायादेशौ।

भावार्थः—पुत्रेच्छुना दशरथेन सुन्दरस्त्रीभिः विद्वान् क्रियावान् ऋष्यशृङ्गाख्यो विभाण्डकसुतो मुनिः स्वां पुरीम् आनायि।

भाषार्थः—पुत्रकी इच्छा करनेवाले दशरथ विद्वान्, यज्ञोंमें क्रियावान्, परिपक्वज्ञानमार्गसे युक्त, मनस्वी और मान्य ऋष्यशृङ्ग मुनिको सुन्दर स्त्रियोंके द्वारा अपनी पुरी अयोध्यामें लिवा लाये ॥ १० ॥

ऐहिष्ट तं कारयितुं कृताऽऽत्मा क्रतुं नृपः पुत्रफलं मुनीन्द्रम्।
ज्ञाताऽऽशयस्तस्य ततो व्यतानीत् स कर्मठः कर्म सुताऽनुबन्धम् ॥ ११ ॥

अन्वयः—कृताऽऽत्मा नृपः तं मुनीन्द्रं पुत्रफलं क्रतुं कारयितुम् ऐहिष्ट ततः ज्ञाताऽऽशयः स कर्मठः तस्य सुताऽनुबन्धं कर्म व्यतानीत्।

प्रयोगप०—कृतात्मना नृपेण स मुनीन्द्रः क्रतुं कारयितुम् ऐहि ततः ज्ञाताशयेन तेन कर्मठेन तस्य सुताऽनुबन्धं कर्म व्यतानि।

व्याख्या—कृताऽऽत्मा=विहितयत्नः (पुत्रार्थमित्यर्थः) यद्वा वशीकृताऽऽत्मा, नृपः=राजा, तं=पूर्वोक्तं, मुनीन्द्रं=तापसश्रेष्ठं (ऋष्यशृङ्गमित्यर्थः), पुत्रफलं=तनयार्थं, क्रतुं=यज्ञं (पुत्रेष्टिमित्यर्थः), कारयितुं=सम्पादयितुं, ऐहिष्ट=ईहितवान्, ततः=अनन्तरं, ज्ञाताऽऽशयः=विदिताभिप्रायः, सः=पूर्वोक्तः, कर्मठः=कर्मशूरः (यज्ञक्रियासम्पादनकुशल इत्यर्थः), तस्य=राज्ञः, सुतानुबन्धं=पुत्राऽनुबन्धं, कर्म=क्रियां (पुत्रेष्टिमित्यर्थः), व्यतानीत्=प्रारब्धवान्।

व्युत्पत्तिः—कृताऽऽत्मा=कृतः आत्मा येन सः (बहु०), 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च' इत्यमरः। मुनीन्द्रः=मुनिषु इन्द्रो मुनीन्द्रः, तम् (स० त०)। 'ह्रक्रोरन्यतरस्याम्' इति कर्मत्वम्। पुत्रफलं=पुत्रः (फलं कार्यम्) यस्य स पुत्रफलः तम् (बहु०), 'आत्मजस्तनयः सूनुः सुतः पुत्रः' इत्यमरः। ऐहिष्ट='ईह चेष्टायाम्' इति धातोर्लुङ्। ज्ञाताऽऽशयः=ज्ञातः आशयो येन सः (बहु०), 'अभिप्रायश्छन्द आशयः' इत्यमरः। कर्मठः=कर्मणि घटते इति कर्मठः, कर्मणि घटोऽठच्' इत्यठच्, 'कर्मशूरस्तु कर्मठः' इत्यमरः। सुताऽनुबन्धं=सुतान् अनुबध्नातीति सुताऽनुबन्धं तत्, 'कर्मण्यण्' इत्यण् 'सुताऽनुबन्धी' इति पाठान्

शतुर्वसु इति वसु । अभिरेमे = अभिपूर्वकात् 'रमु क्रीडायाम्' इति धातोर्लिट् । 'अत एकहल्मध्येऽनादेशादेर्लिटि' इत्येत्वाऽभ्यासलोपौ ।

भावार्थ —दशरथ धर्मयुक्तासु कामार्थयशःसाधनशीलासु लोकपूजितासु कौसल्याकैकेयीसुमित्राख्यासु तिसृषु पत्नीषु ऋग्यजुःसामाख्यासु तिसृषु विद्यासु बुध इव विजहार ।

भाषाऽर्थ —दशरथने धर्मयुक्त, काम, अर्थ और यज्ञ करनेवाली, लोकमें पूजित, समयमें विवाहित कौशल्या, कैकेयी और सुमित्रा नामकी तीन उत्तम पत्नियोंमें ऋग्वेद, यजुर्वेद और सामवेद इन तीन विद्याओंमें विद्वान्की तरह विहार किया ॥

तस्य राज्ञ पुत्रा नैवासन् । ऋष्यशृङ्गनामा ऋषि पुत्रेष्टि जानातीति पुरोहिता द्वसिष्ठादाकर्ण्य राज्ञा वाराङ्गनाभिर्मुनिरानायित इति कथयितुमाह—

पुत्रीयता तेन वराङ्गनाभिरानायि विद्वान् क्रतुषु क्रियावान् ।
विपक्त्रिमज्ञानगतिर्मनस्वी मान्यो मुनि स्वां पुरमृष्यशृङ्ग ॥ १० ॥

अन्वय —पुत्रीयता तेन वराऽङ्गनाभि विद्वान् क्रतुषु क्रियावान् विपक्त्रिम ज्ञानगति मनस्वी मान्य ऋष्यशृङ्ग मुनि स्वां पुरम् आनायि ।

प्रयोगप०—पुत्रीयन् स वराऽङ्गनाभि विद्वांसं क्रियावन्तम् ऋष्यशृङ्ग मुनि स्वां पुरम् आनीनयत् ।

व्याख्या—पुत्रीयता = पुत्रकामेन, तेन = राज्ञा, वराऽङ्गनाभि = श्रेष्ठस्त्रीभि ( प्रयोज्यकर्त्रीभि ), विद्वान् = विपश्चित् क्रतुषु = पुत्रेष्ट्यादियज्ञेषु, क्रियावान् = प्रशस्तक्रिय , विपक्त्रिमज्ञानगति = परिपक्वज्ञानमार्ग । मनस्वी = प्रशस्तमना , मान्य = माननीय ( मानाऽर्ह इत्यर्थ ), ऋष्यशृङ्ग = ऋष्यशृङ्गनामक , मुनि = मननशील , स्वाम्=स्वकीयाम् ( आत्मन इत्यर्थ ), पुरम् = नगरीम् ( अयोध्याम् इत्यर्थ ), आनायि=आनायित ।

व्युत्पत्ति —पुत्रीयता=आत्मन पुत्रमिच्छतीति पुत्रीयन्, तेन, 'सुप आत्मन क्यच्' इति क्यच । 'क्यचि च' इतीत्त्वं, ततो लट शत्रादेश । वराऽङ्गनाभि = प्रशस्तानि अङ्गानि ( हस्तपादादीनि ) यासां ता अङ्गना, 'अङ्गात्कल्याणे' इति न प्रत्यय , तत 'अजाद्यतष्टाप्' इति टाप् । वराश्च ता अङ्गना वराङ्गना, ताभि ( क० धा० ), वरत्वं चाऽत्र सौन्दर्योपेतत्वं बोध्यं न तु निरवद्यत्वम् । क्रियावान् = प्रशस्ता क्रिया यस्य स क्रियावान्, 'तदस्यास्त्यस्मिन्निति मतुप्' इति प्रशस्याया मतुप् । विपक्त्रिमज्ञानगति =विपाकेन निर्वृत्ता विपक्त्रिमा, विउपसर्गपूर्वकात् 'डुपचष् पाके' इति धातो 'ड्वित क्त्रि' इति क्त्रिप्रत्यय , तत 'क्त्रेर्मम्नित्यम्' इति मप् । ज्ञानस्य गति ज्ञानगति (ष० त०) । विपक्त्रिमा ज्ञानगतिर्यस्य स (बहु०) ।

मनस्वी=प्रशस्त मनोऽस्ति यस्य स, 'अस्मायामेधास्रजो विनि' इति प्रशस्तार्था विनि 'सौ च' इति सौ दीर्घत्वम्। मान्य ='अर्ह कृत्यतृचश्च' इति ण्यत्। ऋष्यशृङ्ग =ऋष्यस्य (मृगविशेषस्य) इव शृङ्ग यस्य स ऋष्यशृङ्ग (व्यधिकरण बहुव्रीहि)। आनायि=आङुपसर्गपूर्वकात् ण्यन्तात् 'णीञ् प्रापणे' इति द्विकर्मका ल्लुङि 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् ।' इति वचनात्प्रधानकर्मणि लुङि चिण्वृद्धयायादेशौ।

भावार्थ —पुत्रेच्छुना दशरथेन सुन्दरस्त्रीभि विद्वान् क्रियावान् ऋष्यशृङ्गाख्यो विभाण्डकसुतो मुनि स्वा पुरीम् आनायि।

भाषार्थ —पुत्रकी इच्छा करनेवाले दशरथ विद्वान्, यज्ञोंमे क्रियावान्, परिपक्वज्ञानमार्गसे युक्त, मनस्वी और मान्य ऋष्यशृङ्ग मुनिको सुन्दर स्त्रियोंके द्वारा अपनी पुरी अयोध्यामे लिवा लाये ॥ १० ॥

ऐहिष्ट त कारयितु कृताऽऽत्मा क्रतु नृप पुत्रफल मुनीन्द्रम्।
ज्ञाताऽऽशयस्तस्य ततो व्यतानीत् स कर्मठ कर्म सुताऽनुबन्धम् ॥ ११ ॥

अन्वय —कृताऽऽत्मा नृप त मुनीन्द्र पुत्रफल क्रतु कारयितुम् ऐहिष्ट तत ज्ञाताऽऽशय स कर्मठ तस्य सुताऽनुबन्ध कर्म व्यतानीत्।

प्रयोगप०—कृतात्मना नृपेण त मुनीन्द्र क्रतु कारयितुम् ऐहि तत ज्ञाताशयेन तेन कर्मठेन तस्य सुताऽनुबन्ध कर्म व्यतानि।

व्याख्या—कृताऽऽत्मा=विहितयत्न (पुत्रार्थमित्यर्थ) यद्वा वशीकृताऽऽत्मा, नृप =राजा, त =पूर्वोक्त, मुनीन्द्र=तापसश्रेष्ठ (ऋष्यशृङ्गमित्यर्थ), पुत्रफल=तनयार्थं, क्रतु=यज्ञ (पुत्रेष्टिमित्यर्थ), कारयितु=सम्पादयितुम्, ऐहिष्ट=ईहितवान्, तत =अनन्तर, ज्ञाताऽऽशय =विदिताभिप्राय, स पूर्वोक्त, कर्मठ=कर्मशूर (यज्ञक्रियासम्पादनकुशल इत्यर्थ), तस्य=राज्ञ, सुतानुबन्ध=पुत्राऽनुबन्ध, कर्म=क्रिया (पुत्रेष्टिमित्यर्थ), व्यतानीत्=विस्तृतवान्।

व्युत्पत्ति —कृताऽऽत्मा=कृत आत्मा येन स (बहु०), 'आत्मा यत्नो धृतिर्बुद्धि स्वभावो ब्रह्म वर्ष्म च' इत्यमर। मुनीन्द्र=मुनिषु इन्द्रो मुनीन्द्र, तम् (स० त०)। 'हृक्रोरन्यतरस्याम्' इति कर्मत्वम्। पुत्रफल=पुत्र (फल कार्यम्) यस्य स पुत्रफल, तम् (बहु०), 'आत्मजस्तनय सूनु सुत पुत्र' इत्यमर। ऐहिष्ट='ईह चेष्टायाम्' इति धातोर्लुङ्। ज्ञाताऽऽशय =ज्ञात आशयो येन स (बहु०), 'अभिप्रायश्छन्द आशय' इत्यमर। कर्मठ=कर्मणि घटत इति कर्मठ, कर्मणि घटोऽठच्' इत्यठच्। 'कर्मशूरस्तु कर्मठ' इत्यमर। सुताऽनुबन्ध=सुतान् अनु बध्नातीति सुताऽनुबन्ध तत्, 'कर्मण्यण्' इत्यण् 'सुताऽनुबन्धी हि ...

रम्। तत्र सुतान् अनुबध्नातीति तच्छील सुतानुबन्धि, तत् 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनि। व्यतानीत्-विपूर्वकात् 'तनु विस्तारे' इति धातोर्लुङि 'इट ईटि' इति सलोप। 'अतो हलादेर्लघो' इति विकल्पवृद्धि।

भावार्थ—पुत्रार्थं कृतप्रयत्नः स राजा ऋष्यश्रृङ्गेण पुत्रेष्टिं कारयितुमैच्छत्। ततो विदितभूपाशय ऋष्यश्रृङ्गस्तस्य पुत्रेष्टिं प्रारब्धवान्।

भावार्थ—यत्न करनेवाले राजा ने ऋष्यश्रृंगसे पुत्रेष्टि करानेकी इच्छा की, तब राजाके अभिप्रायको जाननेवाले ऋष्यश्रृंगने पुत्रेष्टिका आरम्भ किया॥ ११॥

रक्षांसि वेदीं परितो निरास्थदङ्गान्ययाक्षीदभितः प्रधानम्।
शेषाण्यहौषीत् सुतसम्पदे च, वरं वरेण्यो नृपतेरमार्गीत्॥ १२॥

अन्वय—वरेण्य (स) वेदीं परितः रक्षांसि निरास्थत्, प्रधानम् अभितः अङ्गानि अयाक्षीत्, शेषाणि अहौषीत्, नृपतेः सुतसम्पदे वरं च अमार्गीत्।

प्रयोगप०—वरेण्येन वेदीं परितः रक्षांसि निरासिषत, प्रधानम् अभितः अङ्गानि अयाजिषत,शेषाणि अहाविषत(वा अहोषत) नृपतेः सुतसम्पदे वरश्च अमार्गि।

व्याख्या—वरेण्य=श्रेष्ठ (स=मुनि ऋष्यश्रृङ्ग इत्यर्थ) वेदीं परितः=वेदेः समन्तात्, रक्षांसि=राक्षसान्, निरास्थत्=निरस्तवान्, प्रधानम् अभितः=प्रधानयागस्योभयतः (प्रागूर्ध्वं चेत्यर्थ), अङ्गानि=अन्यानि (प्रयाजादीनि) उदीच्यानि च (अनुयाजादीनि च), अयाक्षीत्=इष्टवान्, शेषाणि=अवशिष्टानि (अङ्गापेक्षया अवशिष्टानि प्रधानहवींषि), अहौषीत्=हुतवान्, नृपतेः=राज्ञः सुतसम्पदे=पुत्रलाभाय वरं च=अभीष्टं च (हे देवा! सुता भवन्त्वित्याकारकम्), अमार्गीत्=मार्गितवान्।

व्युत्पत्ति—वेदी—'कृदिकारादक्तिनः' इति ङीप्। 'परितः' इति पदेन योगे 'अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि' इति द्वितीया। परितः अभितः= 'पर्यभिभ्यां च' इति सर्वोभयार्थे तसिल्प्रत्ययः, तद्योगे द्वितीया च। निरास्थत्= निरुपसर्गपूर्वकात् 'असु क्षेपणे' इति धातोर्लुङ्, 'अस्यतिवक्तिख्यातिभ्योऽङ्' इति च्लेरङ्, 'अस्यतेस्थुक्' इति थुक्। अयाक्षीत्=यजेर्लुङि सिचि वृद्धिः। व्रश्चादिना षत्वं 'षढोः कः सि' इति कत्वे 'इण्कोः' इत्यधिकृत्य 'आदेशप्रत्यययोः' इति षत्वम्। कर्तुः (ऋष्यश्रृङ्गस्य) क्रियाफलाऽभावात् तङभावः। अहौषीत्—'हु दानाऽदनयोः' इति धातोर्लुङि सिचि वृद्धिः। नृपतेः=नृणां पतिः नृपतिः (ष० त०), तस्य 'पुरुषाः पूरुषा नरः' इति 'ईश्वरः पतिरीशिता' इति चाऽमरः। सुतसम्पदे—सुतानां सम्पत् सुतसम्पत् (ष० त०), तस्यै। अमार्गीत्—'मार्ग याचनाऽन्वेषणयोः' इति धातोर्लुङि 'इट ईटि' इति सकारलोपः।

भावार्थ—ऋष्यश्रृङ्गो वेद्याः समन्ताद्विघ्नकारकान् राक्षसान् निरस्तवान्,

प्रधानयागस्य प्रागूर्ध्वं च प्रयाजानुयाजादीन्यङ्गानि इष्टवान्, प्रधानहवींषि हुतवान्, नृपते पुत्रलाभार्थं वरं च अयाचत ।

भाषाऽर्थ—ऋष्यश्रृङ्गने वेदिके चारों तरफसे राक्षसोंको हटाया, प्रधान यज्ञके दोनों ओर प्रयाज और अनुयाज आदि अङ्गयागका अनुष्ठान किया तथा अवशिष्ट प्रधान हवियोंका हवन किया एवम् राजाके पुत्रलाभके लिए देवताओंसे वर माँगा ॥ १२ ॥

निष्ठां गते दत्त्रिमसभ्यतोषे विहित्रिमे कर्मणि राजपत्न्यः ।
प्राशुर्हुतोच्छिष्टमुदारवश्यास्तिस्रः प्रसोतुं चतुरः सुपुत्रान् ॥ १३ ॥

अन्वयः—दत्त्रिमसभ्यतोषे विहित्रिमे कर्मणि निष्ठां गते ( सति ) उदारवश्याः तिस्रः राजपत्न्यः चतुरः सुपुत्रान् प्रसोतुं हुतोच्छिष्टं प्राशुः

प्रयोगप०—उदारवश्याभिः राजपत्नीभिर्हुतोच्छिष्टं प्राशे ।

व्याख्या—दत्त्रिमसभ्यतोषे दानकृतसदस्यपरितोषे, विहित्रिमे = विधिनिर्वृत्ते ( विहित इत्यर्थः ), कर्मणि = पुत्रेष्टिकर्मणि, निष्ठां=समाप्तिं, गते = प्राप्ते ( सति ) उदारवश्याः महाकुलप्रसूताः, तिस्रः = त्रिसङ्ख्याकाः, राजपत्न्यः = राजमहिष्यः (कौसल्याकैकेयीसुमित्रा इत्यर्थः), चतुरः = चतुःसङ्ख्यकान्, सुपुत्रान् = सुन्दरसुतान् ( रामभरतलक्ष्मणशत्रुघ्नानित्यर्थः ), प्रसोतुम्=प्रसवितुम् (जनयितुम्), हुतोच्छिष्टं= हुतशेषं हविः, प्राशुः = भक्षयामासुः ।

व्युत्पत्तिः—दत्त्रिमसभ्यतोषे = दानेन निर्वृत्तः दत्त्रिमः, 'डुदाञ् दाने' इति धातोः 'ड्वितः क्त्रिः' इति क्त्रिप्रत्ययः, तदन्तात् 'क्त्रेर्मम्नित्यम्' इति मप् ततो 'दो दद् घोः' इति ददादेशः । सभायां साधवः सभ्याः, 'सभाया यः' इति यप्रत्ययः, 'सभासदः सभास्तारा सभ्याः सामाजिकाश्च ते ।' इत्यमरः । सभ्यानां तोषः सभ्यतोषः ( ष० त० ), दत्त्रिमः सभ्यतोषः यस्मिन् तत् दत्त्रिमसभ्यतोषं, तस्मिन् ('कर्मणि' इत्यस्य विशेषणम् ) । विहित्रिमे=विपूर्वकात् 'डुधाञ् धारणपोषणयोः' इति धातोः पूर्ववत् क्त्रिमप् च । उदारवश्याः=उदारश्चाऽसौ वंशः उदारवंशः (क० धा०), तस्मिन् साध्व्यः उदारवश्याः, अत्र 'दिगादिभ्यो यत्' इत्यत्र तदन्तविधिनिषेधात् 'तत्र साधुः' इति यत् । 'उदारो दातृमहतोः' इत्यमरः । राजपत्न्यः—राज्ञः पत्न्यो राजपत्न्यः ( ष० त० )। सुपुत्रान्=शोभनाः पुत्राः सुपुत्राः, तान् 'कुगतिप्रादयः' इति समासः । प्रसोतुं-'षूङ् प्राणिगर्भविमोचने' इति धातोः 'समानकर्तृकेषु तुमुन्' इति तुमुन्, 'स्वरतिसूतिसूयतिधूञूदितो वा' इति विकल्पादिडभावः । हुतोच्छिष्टं= हुतस्य उच्छिष्टं हुतोच्छिष्टं ( ष० त० ), तत् 'अत्र दिव्यपुरुषोपनीतत्वात्तस्य होमान्तरप्राप्तत्वात् हुतशिष्टत्वोपचारः' इति मल्लिनाथः । प्राशुः=प्रपूर्वकात् 'अश भोजने' इति धातोर्लिट् 'अत आदेः' इत्यभ्यासदीर्घः ।

भावार्थ —ब्राह्मणपरितोषके यज्ञकर्मणि समाप्ते सति तिस्र राजपत्न्य ( कौसल्या, कैकेयी सुमित्रा च ) चतुर पुत्रानुत्पादयितु हविर्भक्षयामासु ।

भावार्थ —विधिपूर्वक अनुष्ठित यज्ञकर्मकी समाप्ति और साथ साथ दानसे सद्य ब्राह्मणोंके सन्तुष्ट होने पर महाकुलोत्पन्न महारानी कौसल्या, कैकेयी और सुमित्राने चार पुत्रोंको पैदा करनेके लिए हुतशेष हवि खाया ॥ १३ ।

कौसल्ययाऽसावि सुखेन राम , प्राक्कैकयीतो भरतस्ततोऽभूत् ।
प्रासोष्ट शत्रुघ्नमुदारचेष्टमेका सुमित्रा सह लक्ष्मणेन ॥१४॥

अन्वय —प्राक् कौसल्यया राम सुखेन असावि, तत केकयीत भरत अभूत्, एका सुमित्रा लक्ष्मणेन सह उदारचेष्ट शत्रुघ्न प्रासोष्ट ।

प्रयोगप०— कौसल्या रामम् असविष्ट ( वा असोष्ट ), भरतेन अभावि, एकया सुमित्रया उदारचेष्ट शत्रुघ्न प्रासावि ।

व्याख्या—प्राक् = प्रथम, कौसल्यया = कोसलराजपुत्र्या, राम = रामचन्द्र, सुखेन = अक्लेशेन, असावि = प्रसूत , तत = अनन्तर, केकयीत = केकयराजपुत्र्या, भरत = भरताऽऽख्य पुत्र , अभूत् = जात , एका = एकका, सुमित्रा = सुमित्राऽऽख्या राजपत्नी, लक्ष्मणेन सह = तन्नाम्ना पुत्रेण समम् , उदारचेष्टम् = महापराक्रम, शत्रुघ्न = शत्रुघ्नाऽभिधान पुत्र, प्रासोष्ट = प्रसूतवती ।

व्युत्पत्ति —कौसल्या = कोसलस्य राज्ञोऽपत्य स्त्री कौसल्या, तया । 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' इति ञ्यङ् , तत 'यङश्चाप्' इति चाप् । राम = रमन्ते योगिन अस्मिन्निति राम , 'रमु क्रीडायाम्' इति धातो 'हलश्च' इत्यधिकरणे घञ्, 'अत उपधाया ' इत्युपधावृद्धिश्च । असावि—षूङ कर्मणि लुङि चिणि रूपम् । तत = तस्मादिति तत , पञ्चम्यर्थे तसि । केकयीत = केकयान् आचष्टे ( जन्मभूमित्वेन ) इति केकयी, णिच् । तदन्तात् 'अच इ ' इति औणादिक इप्र यय , णिलोप , 'कृदिकारादक्तिन ' इति ङीप् । केकय्या इति केकयीत , 'अपादाने चाहीयरुहो ' इति तसि । यदा केकयस्याऽपत्य स्त्रीति विग्रह , तदा 'जनपदशब्दात्क्षत्रियादञ्' इति अञ् । 'केकयमित्रयुप्रलयाना यादेरिय ' इतीयादेश । 'टिड्ढाणञ्' इत्यादिना ङीप तत कैकेयीति रूपम् । लक्ष्मणेन—'सह' पदेन योगे 'सहयुक्तेऽप्रधाने' इति तृतीया । अत्र लक्ष्मणस्य क्रियापदेन सह सम्बन्धाऽभावादप्रधानत्वात् शत्रुघ्नाऽपेक्षया न कनीयस्त्व शङ्क्यम् । 'पित्रा सहागत पुत्र ' इत्यत्रेव शब्दक्रमाऽनुरोधेन पुत्राऽपेक्षया पितुरिव लक्ष्मणस्याऽपि शत्रुघ्नाऽपेक्षया ज्यायस्त्वमेव वेद्यम् । उदारचेष्टम् = उदारा चेष्टा यस्य स उदारचेष्टस्तम् ( बहु० ) । शत्रुघ्न = शत्रून् हन्तीति शत्रुघ्न , तम् । 'कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम्' इति कप्रत्यय । प्रासोष्ट = सूते कर्त्तरि लुङ् , विकल्पेनेङभाव ।

भावार्थः—कौसल्या रामं, कैकयी भरतं, सुमित्रा च लक्ष्मणशत्रुघ्नौ यमौ प्रसूतवती।

भाषार्थ—पहले कौसल्याने रामको, कैकयीने भरतको और सुमित्राने लक्ष्मण और शत्रुघ्नको पैदा किया ॥ १४ ॥

आर्चीद् द्विजातीन्परमार्थविन्दानुदेजयान्भूतगणान्न्यषेधीत्।
विद्वानुपानेष्ट च तान् स्वकाले यतिर्वशिष्ठो यमिनां वरिष्ठः ॥ १५ ॥

अन्वयः—यमिनां वरिष्ठः विद्वान् यतिः वशिष्ठः परमार्थविन्दान् द्विजातीन् आर्चीत्, उदेजयान् भूतगणान् न्यषेधीत्, स्वकाले तान् उपानेष्ट च।

वाच्यप०—वरिष्ठेन विदुषा यतिना वशिष्ठेन परमार्थविन्दा द्विजातय आर्च्यन्त, उदेजया भूतगणा न्यषेधिषत, ते उपानायिषत (उपानेषत वा)।

व्याख्या—यमिनां = योगिनां, वरिष्ठः = श्रेष्ठः, विद्वान् = विविज्ञः, यतिः = जितेन्द्रियः, वशिष्ठः = तन्नामकः पुरोहितः, परमार्थविन्दान् = तत्त्वज्ञानकामयुक्तान्, द्विजातीन् = ब्राह्मणान्, आर्चीत् = पूजयामास। उदेजयान् = उद्वेजकान् (भयङ्करानित्यर्थः) भूतगणान् = बालग्रहादिग्रहान्, न्यषेधीत् = उत्सादितवान् (मन्त्रैरिति शेषः)। स्वकाले = आत्मसमये (यज्ञोपनयनकाले इत्यर्थः। गर्भादेकादशे वर्षे इति यावत्), तान् = राजकुमारान् (रामादीनित्यर्थः), उपानेष्ट च = उपनीतवांश्च।

व्युत्पत्तिः—यमिनाम् = यमाः सन्ति येषां ते यमिनः, तेषाम्। यमाश्च 'अहिंसासत्यास्तेयब्रह्मचर्याऽपरिग्रहा यमाः' इति पातञ्जलयोगदर्शनसूत्राद्वगन्तव्याः। 'अत इनिठनौ' इतीनिप्रत्ययः। वरिष्ठः = अतिशयेन उरुः वरिष्ठः, 'अतिशायने तमबिष्ठनौ' इति इष्ठन्प्रत्ययः, ततः 'प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः' इति वरादेशः। यतिः = ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते। इत्यमरः। वशिष्ठः = वशोऽस्ति येषां ते वशिनः (इनिप्रत्ययः)। वशिषु (जितेन्द्रियेषु) तिष्ठतीति वशिष्ठः, 'सुपि स्थः' इत्यत्र योगविभागात्कप्रत्ययः। परमार्थविन्दान् = परमश्चासौ अर्थः परमार्थः (क० धा०)। विन्दन्तीति विन्दाः, 'विद्लृ लाभे' इति धातोः 'अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च' इति शः, 'शे मुचादीनाम्' इति नुम्। परमार्थस्य विन्दाः परमार्थविन्दास्तान् कर्मणि षष्ठी, तस्याः 'कृद्योगे च षष्ठी समस्यत इति वाच्यम्' इति समासः। द्विजातीन् = द्वे (जन्मसंस्कारप्राप्ते) जाती येषां ते द्विजातयः, तान् (बहु०)। आर्चीत् = 'अर्च पूजायाम्' इति धातोर्लुङि 'इट ईटि' इति सकारलोपः। उदेजयान् = उद्वेजयन्तीति उदेजयास्तान्, पूर्वसूत्रेणैव उत्पूर्वकात् 'एजृ कम्पने' इ धातोः शप्रत्ययः। भूतगणान् = भूतानां गणाः भूतगणास्तान् (ष० त०)। न्यषेधीत्

* भ० प्र० सा०

निपूर्वकात् 'षिध गत्याम्' इति धातोर्लुङि 'नेटि' इति हलन्तलक्षणवृद्धिनिषेधः । स्वकाले=स्वस्य कालः स्वकालस्तस्मिन्, तदुक्तम्—'गर्भाऽष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् । गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ॥' इति । उपानेष्ट= उपपूर्वकात् 'णीञ् प्रापणे' इति धातोर्लुङि 'सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः' इत्याचार्यकरणे आत्मनेपदम् ।

भावार्थ—पुरोहितो महर्षिर्वशिष्टः तत्त्वज्ञानिनो ब्राह्मणान् पूजयामास, भयङ्करान् बालग्रहादीन् मन्त्रैरपसारयामास, उपनयनकाले तान् रामादीन् उपनीतवांश्च ।

भाषार्थ—विद्वान् वशिष्ठ ऋषिने तत्त्वज्ञानी ब्राह्मणोंकी पूजा की, भयङ्कर बालग्रह आदिको मन्त्रोंसे हटाया एवम् उचित कालमें राजपुत्रोंका उपनयन भी कराया ॥ १५ ॥

वेदोऽङ्गवांस्तैरखिलोऽध्यगायि, शस्त्राण्युपायंसत जित्वराणि ।
ते भिन्नवृत्तीन्यपि मानसानि समं जनानां गुणिनोऽध्यवात्सुः ॥१६॥

अन्वय—तैः अखिलः अङ्गवान् वेदः अध्यगायि, जित्वराणि शस्त्राणि उपायंसत । गुणिनः ते भिन्नवृत्तीनि अपि जनानां मानसानि समम् अध्यवात्सुः ।

प्रयोगप०—ते अखिलम् अङ्गवन्तं वेदम् अध्यगीषत ( अध्यैषत वा ), शस्त्राणि उपायंसत, गुणिभिस्तैः मानसानि अध्यवात्सिषत ।

व्याख्या—तैः=रामादिभिः कुमारैः, अखिलः=सम्पूर्णः, अङ्गवान्=साङ्गः, वेदः= श्रुतिः ( ऋगादिरित्यर्थः ), अध्यगायि=अधीतः । जित्वराणि=जयशीलानि, शस्त्राणि=आयुधानि ( धनुरादीनि इत्यर्थः ), उपायंसत=स्वीकृतानि । गुणिनः गुणसम्पन्नाः, ते=रामादयः, भिन्नवृत्तीनि अपि=भिन्नरुचीनि अपि, जनानां= लोकानां, मानसानि=चित्तानि, समम्=तुल्यरूपम्, अध्यवात्सुः=अध्युषितवन्तः ।

व्युत्पत्ति—अङ्गवान्=अङ्गानि सन्ति यस्मिन् सः ( मतुप् ), वेदाऽङ्गानि च षट्, तानि यथा-'शिक्षा व्याकरणं छन्दो निरुक्तं ज्यौतिषं तथा । कल्पश्चेति षडङ्गानि वेदस्याहुर्मनीषिणः ॥' इति । अध्यगायि=अधिपूर्वात् 'इङ् अध्ययने' इति धातोः कर्मणि लुङि 'विभाषा लुङ्लृङोः' इति गाङादेशः । चिण्, युक् तलुक् च । जित्वराणि='जि जये' इति धातोः 'इण्नशजिसर्तिभ्यः क्वरप्' इति क्वरप् 'ह्रस्वस्य पिति कृति तुक्' इति तुगागमः । उपायंसत=उपपूर्वकात् 'यम उपरमे' इति धातोः कर्मणि लुङ् । 'उपाद्यमः स्वीकरणे' इत्यात्मनेपदम् । 'आत्मनेपदेष्वनतः' इत्यदादेशः । 'हन सिच्' इति ज्ञापकादनुनासिकलोपाभावः । भिन्नवृत्तीनि=भिन्ना वृत्तिः येषां तानि भिन्नवृत्तीनि, तानि ( ब० व्री० ) । मानसानि=मनांसि एव मानसानि, तानि ( स्वार्थेऽप्रकृत्यर्थे ) अण्, 'अध्यवात्सुः' इति पदेन योगे 'उपान्वध्याङ्-

वम' इत्यधिकरणस्य कर्मत्वम्। अध्यवात्सु=अधिपूर्वात् 'वस निवासे' इति धातो लुङ्। सिचि 'वदव्रजहलन्तस्याऽचः' इति वृद्धिः, 'सः स्यार्धधातुके' इति सस्य तः, 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुसादेशः।

भावार्थः—रामादिभिः समस्तः साङ्गो वेदोऽधीतः, शस्त्रविद्याऽभ्यस्ता। गुणिनस्ते भिन्नरुचिष्वपि जनानां मानसेषु निवासं चक्रुः।

भाषार्थ—राजकुमारोंने अङ्गपूर्वक सब वेदोंका अध्ययन किया, शस्त्रविद्या सीखी और मनुष्योंके भिन्न रुचिवाले हृदयोंमें स्थान पा लिया ॥ १६ ॥

ततोऽभ्यगाद् गाधिसुतः, क्षितीन्द्रं रक्षोभिरभ्याहतकर्मवृत्तिः।
रामं वरीतुं परिरक्षणार्थं राजाऽऽर्जिहत्तं मधुपर्कपाणिः ॥ १७ ॥

अन्वयः—ततः गाधिसुतः रक्षोभिः अभ्याहतकर्मवृत्तिः (सन्) परिरक्षणार्थं रामं वरीतुं क्षितीन्द्रम् अभ्यगात्। राजा मधुपर्कपाणिः (सन्) तम् आर्जिहत्।

प्रयोगप०—गाधिसुतेन अभ्याहतकर्मवृत्तिना क्षितीन्द्रः अभ्यगायि, राज्ञा मधुपर्कपाणिना सः आर्हि।

व्याख्या—ततः=अनन्तरं, गाधिसुतः=विश्वामित्रः, रक्षोभिः=राक्षसैः, अभ्याहतकर्मवृत्तिः=अभिहतयागादिप्रवृत्तिः (सन्), परिरक्षणार्थं=यज्ञरक्षणार्थं, रामं=दशरथज्येष्ठपुत्रं, वरीतुं=स्वीकर्तुं, क्षितीन्द्रं=राजानम् (दशरथमित्यर्थः), अभ्यगात्=अभिगतवान्। राजा=दशरथः, मधुपर्कपाणिः=दधिमधुघृतयुक्तपाणिः (सन्), तं=विश्वामित्रम्, आर्जिहत्=अपूजयत्।

व्युत्पत्तिः—गाधिसुतः=गाधेः सुतो गाधिसुतः (ष० त०)। रक्षोभिः= 'यातुधानः पुण्यजनो नैर्ऋतो यातुरक्षसी।' इत्यमरः। अभ्याहतकर्मवृत्तिः=कर्मणो वृत्तिः कर्मवृत्तिः (ष० त०), अभ्याहता कर्मवृत्तिर्यस्य सः (बहु०)। परिरक्षणार्थं= परिरक्षणाय इदमिति परिरक्षणार्थम्, तत् यथा तथा (क्रियाविशेषणम्)। 'अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्' इति चतुर्थीतत्पुरुषः। वरीतुं='वृञ् वरणे' इति धातोस्तुमुन्, 'वृतो वा' इति इटो दीर्घत्वम्। क्षितीन्द्रं=क्षितेरिन्द्रः क्षितीन्द्रस्तम् (ष० त०), 'क्षोणिर्ज्या काश्यपी क्षितिः।' इत्यमरः। अभ्यगात्= 'इण् गतौ' इति धातोर्लुङ्, 'इणो गा लुङि' इति इणो गादेशः। मधुपर्कपाणिः= दधिमधुघृतानि एकीकृतानि 'मधुपर्कः' इत्युच्यते, 'दधि मधु घृतमिति त्रिवृत्' इति पारस्करगृह्यसूत्रम्। मधुपर्कः पाणौ यस्य सः (व्य० अधि० बहु०)। आर्जिहत्='अर्ह पूजायाम्' इति चौरादिकधातोर्लुङ्। 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इति चङ्, णिलोपः, 'द्विर्वचनेऽचि' इति स्थानिवद्भावात् 'अजादेर्द्वितीयस्य' इति हिशब्दो द्विरुच्यते। रेफस्य 'न न्द्राः संयोगादयः' इति द्वित्वप्रतिषेधः

सुखम् , आट वृद्धिश्च। मधुपर्कपूजनीयाश्च—'षडर्घ्या भवन्त्याचार्य ऋत्विग्वैवाह्यो राजा प्रिय स्नातक' इति पारस्करगृह्यसूत्रेण ज्ञेया ।

भावार्थ—ततो विश्वामित्रो राक्षसै यज्ञकर्मसु प्रतिबन्धमनुभूय यज्ञरक्षणार्थं राम प्रार्थयितु दशरथमभ्यगात् , राजाऽपि मधुपर्केण त पूजयामास।

भावार्थ—तब महर्षि विश्वामित्र यज्ञोंमे राक्षसोंसे विघ्न होनेपर यज्ञरक्षाके लिए रामको मांगनेके लिए महाराज दशरथके पास आये, दशरथ ने भी मधुपर्क-( दही, शहद और घी ) से उनकी पूजा की ॥ १७ ॥

ऐषी पुनर्जन्मजयाय यत्त्व रूपादिबोधान्न्यवृतच्च यत्ते।
तत्त्वान्यबुद्धा प्रतनूनि येन ध्यान नृपस्तच्छिवमित्यवादीत् ॥ १८ ॥

अन्वय—त्व पुनर्जन्मजयाय यत् ( ध्यानम् ) ऐषी, ते यच्च ( ध्यानम् ) रूपादिबोधात् न्यवृतत्। ( त्वम् ) येन ( ध्यानेन ) प्रतनूनि तत्त्वानि अबुद्धा, तत् ध्यान शिवम् ? इति नृप अवादीत्।

प्रयोगप०—त्वया यत् ध्यानम् ऐषि, येन ( ध्यानेन ) न्यवर्ति, त्वया तत्त्वानि अबोधिषत, तेन ध्यानेन शिवेन ( भूयते ) ? इति नृपेण ( स ) अवादि।

व्याख्या—त्व—भवान् , पुनर्जन्मजयाय = अपुनरावृत्तये, यत् = ध्यानम् , ऐषी = आकाङ्क्षितवानसि, ते = तव, यच्च = ध्यान, रूपादिबोधात् = रूपादिविषयज्ञानात् , न्यवृतत् = निवृत्तम् , ( त्वम् ) येन = ध्यानेन, प्रतनूनि = अतिसूक्ष्माणि, तत्त्वानि = प्रकृतिपुरुषादिपञ्चविंशतितत्त्वानि, अबुद्धा = अज्ञासी , तत् = पूर्वोक्त, ध्यानम् = ईश्वर चिन्तन, शिवम् = अक्षतम् ? इति = इत्थ, नृप , = राजा, अवादीत् = अकथयत्।

व्युत्पत्ति—पुनर्जन्मजयाय = पुनर्जन्मनो जय पुनर्जन्मजय ( ष० त० ), तस्मै। ऐषी = 'इष गतौ' इतिधातोर्लुङ , ये गत्यर्थास्ते ज्ञानार्था । रूपादिबोधात् = रूपम् आदिर्येषा ते रूपादयो विषया ( बहु० ), तेषा बोधस्तस्मात् ( ष० त० )। न्यवृतत् = निपूर्वात् 'वृतु वर्तने' इति धातोर्लुङ् । द्युतादित्वात् 'द्युद्भ्यो लुङि' इति परस्मैपदम् , च्लेरङ् च। प्रतनूनि = प्रकर्षेण तनूनि प्रतनूनि ( सुप्सुपा समास ), 'स्तोकाऽल्पक्षुल्लका श्लक्ष्ण सूक्ष्म दभ्र कृश तनु' इत्यमर । अबुद्धा = 'बुध अवगमने' इति धातोर्लुङ् । थासि, 'लिङ्सिचावात्मनेपदेषु' इति सिच किर्त्वाच्च लघूपधगुण । 'झलो झलि' इति सिजलोप , 'झषस्तथोर्धोऽध ' इति धत्वम् । अवादीत् = 'वद व्यक्तायां वाचि' इति धातो लुङ्। 'वदव्रजहलन्तस्याऽच ' इति सिचि वृद्धि ।

भावार्थ—कच्चिदपुनरावृत्तये यद्ध्यान काङ्क्षितवान् , यच्च भवद्ध्यानं रूपादि विषय-ज्ञानान्निवृत्त, येन ध्यानेन भवान् प्रकृतिपुरुषादीनि तत्त्वानि ज्ञातवानसि , तद्ध्यानमक्षतमस्ति कच्चिदिति राजा विश्वामित्रमपाक्षीत्।

भाषाऽर्थ —'आपने पुनर्जन्म हटानेके लिए जिस ध्यान की इच्छा की थी, आपका जो ध्यान रूप आदि विषयोंके ज्ञानसे निवृत्त हुआ था, आप जिस ध्यानसे अत्यन्त सूक्ष्म प्रकृति पुरुष आदि तत्त्वोंको जान गये हैं, वह ध्यान तो निर्विघ्नमें है ?' राजाने विश्वामित्रसे ऐसा प्रश्न किया ॥ १८ ॥

आख्यन्मुनिस्तस्य शिवं समाधेर्विघ्नन्ति रक्षांसि वने क्रतूंश्च ।
तानि द्विषद्वीर्यनिराकरिष्णुस्तृणेढु रामः सह लक्ष्मणेन ॥ १९ ॥

अन्वयः—मुनिस्तस्य समाधेः शिवमाख्यत् । 'वने रक्षांसि क्रतून् विघ्नन्ति,—द्विषद्वीर्यनिराकरिष्णुः रामः लक्ष्मणेन सह तानि तृणेढु' । ( इति च आख्यत् ) ।

प्रयोगप०—मुनिना शिवमाख्यायि । 'रक्षोभिः क्रतवो विहन्यन्ते, द्विषद्वीर्य-निराकरिष्णुना रामेण तानि तृह्यन्ताम्' ( इति च आख्यायि ) ।

व्याख्या—मुनिः=ऋषिः ( विश्वामित्र इत्यर्थः ) । तस्य=राज्ञः, समाधेः=ध्यानस्य, शिवं=कल्याणम्, आख्यत्=आख्यातवान् । 'वने=अरण्ये, रक्षांसि=राक्षसाः, क्रतून्=यज्ञान, विघ्नन्ति=प्रतिबध्नन्ति, द्विषद्वीर्यनिराकरिष्णुः=वैरिवि-क्रमनिराकरणशीलः, रामः=स्वज्येष्ठपुत्रः, लक्ष्मणेन सह=स्वतृतीयपुत्रेण समं, तानि=रक्षांसि, तृणेढु=छिनत्तु' ( इति च आख्यत् ) ।

व्युत्पत्तिः—शिवं='श्वः श्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम् ।' इत्यमरः । आख्यत्='ख्या प्रकथने' इति धातोर्लुङ्, 'अस्यतिवक्तिख्यातिभ्योऽङ्' इति च्लेरङादेशः । 'आतो लोप इटि च' इत्याकारलोपः । विघ्नन्ति=विपूर्वात् 'हन् हिंसागत्योः' इति धातोर्लट् । 'गमहनजनखनघसां लोपः क्ङित्यनङि' इति उप-धालोपः । 'हो हन्तेर्ञ्णिन्नेषु' इति कुत्वम् । द्विषद्वीर्यनिराकरिष्णुः=द्विषतां वीर्यं ( पराक्रमः ) द्विषद्वीर्यम् ( ष० त० ) । निराकरणशीलः निराकरिष्णुः, 'अलङ्कृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच्' इति इष्णुच् । द्विषद्वीर्यस्य निराकरिष्णुः द्विषद्वीर्यनिराकरिष्णुः ( शेषे षष्ठी, ततः समासः ) । तृणेढु='तृह हिंसायाम्' इति धातोर्लोटि । 'एरुः' इति उत्वम् । 'रुधादिभ्यः श्नम्' इति श्नम्, 'तृणह इम्' इति इमागमः, गुणः, 'हो ढः' इति ढत्वम्, ष्टुत्वं 'ढो ढे लोपः' इति ढलोपश्च ।

भावाऽर्थः—विश्वामित्रो राज्ञे ध्यानस्य अप्रतिबन्धमकथयत्, 'परन्तु वने राक्षसा यज्ञे विघ्नमाचरन्ति, अतः रामो लक्ष्मणेन सह तान् निराकरोतु' इति चाऽब्रवीत् ।

भाषाऽर्थ —विश्वामित्रने दशरथको ध्यानकी कुशलता कहनेके साथ-'वनमें राक्षसलोग यज्ञोंमें विघ्न करते हैं, अतः शत्रुपराक्रमको नाश करनेवाले रामचन्द्रजी लक्ष्मणके साथ वहां जाकर उनको मारें' यह भी कहा ॥ १९ ॥

स शुश्रुवांस्तद्वचनं मुमोह राजाऽसहिष्णुः सुतविप्रयोगम् ।
अहंयुनाऽथ क्षितिपः शुभंयुरूचे वचस्तापसकुञ्जरेण ॥ २० ॥

अन्वय —सुतविप्रयोगम् असहिष्णुः स राजा तद्वचनं शुश्रुवान् ( सन् ) मुमोह । अथ अहंयुना तापसकुञ्जरेण शुभंयुः क्षितिपो वचः ऊचे ।

प्रयोगप०—सुतविप्रयोगम् असहिष्णुना तेन राज्ञा तद्वचनं शुश्रुषा ( सता ) मुमुहे, अहंयुस्तापसकुञ्जरः शुभंयुं क्षितिपं वचः उवाच ।

व्याख्या—सुतविप्रयोगं=पुत्रविरहम्, असहिष्णुः=असहनशीलः, सः=पूर्वोक्तः, राजा=दशरथः, तद्वचनं=विश्वामित्रभाषितं ( मया सह सलक्ष्मणो रामो राक्षसविनाशाय वनं प्रेष्यतामित्याकारकम् ), शुश्रुवान्=श्रुतवान् ( सन् ), मुमोह= मोहं गतः । अथ=अनन्तरम्, अहंयुना=अहङ्कारयुक्तेन, तापसकुञ्जरेण=तपस्विश्रेष्ठेन (विश्वामित्रेण इत्यर्थः), शुभंयुः=शुभाऽन्वितः, क्षितिपः=राजा, वचः=वाचम् ऊचे=उक्तः ॥ २० ॥

व्युत्पत्ति—सुतवियोगं=सुतेन विप्रयोगः सुतविप्रयोगः, तम्, 'कर्तृकरणे कृता बहुलम्' इति समासः, 'न लोकाऽव्ययनिष्ठाखलर्थतृनाम्' इति षष्ठीनिषेधात् कर्मणि द्वितीया । असहिष्णुः='षह मर्षणे' इति धातोः 'अलङ्कृञ्नि०' इत्यादिना इष्णुच्, ततः न सहिष्णुः असहिष्णुः ( नञ् ) । तद्वचनं=तस्य वचनं तद्वचनं तत् ( ष० त० ) । शुश्रुवान्='श्रु श्रवणे' इति धातोः 'भाषायां सदवसश्रुवः' इति लिटः क्वसुरादेशः । मुमोह='मुह वैचित्ये' इति धातोर्लिट् । अहंयुना=अहमस्याऽस्तीति अहंयुस्तेन, अहमिति माऽन्तम् ( विभक्तिप्रतिरूपकम् ) अव्ययं, तस्मात् 'अहंशुभमोर्युस्' इति युस् 'अहङ्कारवानहंयुः' इत्यमरः । तापसकुञ्जरेण=तापसश्चाऽसौ कुञ्जरः तापसकुञ्जरः, तेन, 'वृन्दारकनागकुञ्जरैः पूज्यमानम्' इति समासः । शुभंयुः=शुभमस्याऽस्तीति शुभंयुः, शुभमिति मान्तमव्ययम्, तस्मात् पूर्ववत् युस्, 'शुभंयुस्तु शुभान्वितः' इत्यमरः । क्षितिपः=क्षितिं पातीति क्षितिपः, 'पा रक्षणे' इति धातोः कः । ऊचे='ब्रूञ् व्यक्तायां वाचि' इति धातोर्दुहादित्वादप्रधाने कर्मणि लिट्, सम्प्रसारणं च । 'अहंयुनाथ' इति पाठान्तरम्, अत्र अहंयूनां=क्षत्रियाणां नाथ इति बोध्यम् ।

भावार्थः—पुत्रविरहाऽसहनशीलो दशरथ ऋषिवचः श्रुत्वा मोहं गतः अनन्तरं तेजस्वी विश्वामित्रो राजानमुवाच ।

भाषार्थ—पुत्रविरह सहनेमें असमर्थ राजाको ऋषिवचन सुननेपर मोह हुआ, तब अहङ्कारयुक्त श्रेष्ठ तपस्वी विश्वमित्रने राजासे कहा ॥ २० ॥

मया त्वमाप्थाः शरणं भयेषु वयं त्वयाऽऽप्याप्स्महि धर्मवृद्धयै ।

क्षात्रं द्विजत्वं च परस्परार्थं शङ्कां कृथा मा, प्रहिणु स्वसूनुम् ॥ २१ ॥

अन्वय —( हे राजन् ! ) भयेषु धर्मेषु धर्मवृद्ध्यै मया त्वं शरणम् आप्था, त्वया अपि वयं धर्मवृद्ध्यै शरणम् आप्स्महि । क्षात्रं द्विजत्वं च परस्परार्थम् । शङ्कां मा कृथा, स्वसूनुं प्रहिणु ।

प्रयोगप०—अहं त्वां शरणम् आपम् । त्वमपि अस्मान् शरणम् आप । क्षात्रेण द्विजत्वेन च परस्परार्थेन ( भूयते ) । शङ्का मा कारि । स्वसूनुः प्रहीयताम् ।

व्याख्या—( हे राजन् ! ) भयेषु = भीतिषु, धर्मवृद्ध्यै = पुण्योपचयाय, मया = ऋषिणा, त्वं = भवान्, शरणम् = रक्षिता ( सन् ), आप्थाः = प्राप्तोऽसि । त्वया अपि = भवता अपि, वयम् = ऋषय, धर्मवृद्ध्यै = पुण्योपचयाय, शरणं = रक्षितारं, आप्स्महि = प्राप्ता स्म ( अहमपि प्राप्त इत्यर्थ ) । क्षात्रं = क्षत्रतेज, द्विजत्वं च = ब्रह्मतेजश्च, परस्परार्थम् = अन्योन्योपकारार्थम् ( भवतीति शेष ) । शङ्का = सन्देहम् ( अनयोरप्रेषणमित्यर्थ ), मा कृथा = मा कुरु । स्वसूनुम् = आत्मपुत्रं ( राममित्यर्थं ) प्रहिणु = प्रेषय ।

व्युत्पत्ति —धर्मवृद्ध्यै = धर्मस्य वृद्धिर्धर्मवृद्धि, तस्यै ( ष० त० ) । शरण = 'शरणं गृहरक्षित्रो ' इत्यमर । आप्था = 'आप्लृ व्याप्तौ' इति धातो कर्मणि लुङ् । सिज्लोप । वयम् = 'अस्मदो द्वयोश्च' इत्येकत्वे बहुवचनम् । आप्स्महि = पूर्ववल्लुङ्, सिचो लोपाऽभाव मकारस्य अझल्त्वात् । क्षात्रं = क्षत्रस्येदं क्षात्रम्, 'तस्येदम्' इत्यण् 'तद्धितेष्वचामादे ' इत्यादिवृद्धिश्च । द्विजत्वं = द्विजस्य भावो द्विजत्वम्, 'तस्य भावस्त्वतलौ' इति त्वप्रत्यय । 'त्वाऽन्तं क्लीबम्' इति लिङ्गाऽनुशासनम् । परस्परार्थं = परस्परायेदम् ( च० त० ) । तदुक्तम् = 'नाऽब्रह्म क्षत्रमृध्नोति नाऽक्षत्रं ब्रह्म वर्द्धते । ब्रह्मक्षत्रं च सम्पृक्तमिह चाऽमुत्र वर्द्धते ॥' इति मनु । मा कृथा = 'डुकृञ् करणे' इति धातो 'माङि लुङ्' इति लुङ् 'न माङ्योगे' इत्यडभाव । 'उश्च' इति किर्त्वाद् गुणाऽभाव । 'ह्रस्वादङ्गात्' इति सिचो लोप । स्वसूनु = स्वस्य सूनु स्वसूनुस्तम् ( ष० त० ) । प्रहिणु = 'हि गतौ वृद्धौ च' इति धातो प्रार्थनायां लोट् । 'स्वादिभ्य श्नु ' । इति श्नु । अपित्त्वात् ङित्वम्, गुणाऽभाव । 'उतश्च प्रत्ययादसंयोगपूर्वात्' इति हेर्लुक् । 'हिनुमीना' इति णत्वम् ।

भावार्थ —हे राजन् ! यज्ञादिविघ्नेषु वयं त्वां वेन गच्छाम', त्वमपि तथैवाऽस्मान् गच्छसि, क्षत्रतेजो ब्रह्मतेजश्च परस्परोपकारार्थमस्ति, शङ्का मा कुरु मया सह रामं प्रेषय ।

भाषार्थ —हे राजन् ! यज्ञ आदि कर्मोमें विघ्न पडनेपर धर्मवृद्धिके लिए हम तुम्हारे शरणमें जाते हैं, उसी तरह तुम भी हमारे शरणमें आते हो । क्षत्रियतेज

क्रुध्यन्कुलं धक्ष्यति विप्रवह्निर्यास्यन्सुतस्तप्स्यति मां समन्युम् ।
इत्थं नृपः पूर्वमवालुलोचे, ततोऽनुजज्ञे गमनं सुतस्य ॥ २३ ॥

अन्वयः—विप्रवह्निः क्रुध्यन् कुलं धक्ष्यति, यास्यन् सुतः समन्युं मां तप्स्यति इत्थं नृपः पूर्वम् अवालुलोचे । ततः ( तेन ) सुतस्य गमनम् अनुजज्ञे ।

प्रयोगान्त०—विप्रवह्निना क्रुध्यता कुलं धक्ष्यते, यास्यता सुतेन समन्युरहं तप्स्ये, नृपेण अवालुलोचे, ( स ) गमनम् अनुजज्ञौ ।

व्याख्या—विप्रवह्निः = ब्राह्मणाऽनलः, क्रुध्यन् = कुप्यन् ( क्रोधं कुर्वन् ), कुलं = वंशं, धक्ष्यति = भस्मीकरिष्यति । यास्यन् = गमिष्यन् , सुतः = पुत्रः ( राम इत्यर्थः ), समन्युं = सशोकं, मां = दशरथं, तप्स्यति = तापयिष्यति । इत्थम् = एवंप्रकारं, नृपः = राजा, पूर्वं = प्रथमम् , अवालुलोचे = आलोचितवान् । ततः = तेन, सुतस्य = पुत्रस्य, गमनं = गतिं , अनुजज्ञे = अनुज्ञातम् ( कुलदाहाऽपेक्षया आत्मदाह एव वरमिति निश्चयादिति भावः ) ।

व्युत्पत्तिः—विप्रवह्निः = विप्र एव वह्निः , विप्रवह्निः , 'मयूरव्यंसकादयश्च' इति रूपकसमासः, क्रुध्यन् = 'क्रुध क्रोधे' इति धातोः शतृप्रत्ययः । धक्ष्यति = 'दह भस्मीकरणे' इति धातोर्लृट् । 'दादेर्धातोर्घः' इति घः । भष्भावः, षत्वं, गकारस्य ककारः । यास्यन् = 'या प्रापणे' इति धातोर्लृट् , शतृप्रत्ययश्च । समन्युं = मन्युना सहितः समन्युः, तम् , 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः, 'वोपसर्जनस्य' इति सहस्य सभावः । 'मन्युशोकौ तु शुक् स्त्रियाम्' इत्यमरः । इत्थम् = अनेन प्रकारेण इति इत्थम् , 'इदमस्थमुः' इति थमुप्रत्ययः । अवालुलोचे = अवात् पूर्वात् 'लोचृ दर्शने' इति धातोर्लिट् । ततः = तेन ( सार्वविभक्तिकस्तसिः ) । अनुजज्ञे = अनुपूर्वात् 'ज्ञा अवबोधने' इति धातोः कर्मणि लिट् , कर्तृवाच्ये 'अनुपसर्गाज्ज्ञः' इत्यनेन आत्मनेपदस्य अप्राप्तेः ।

भावार्थः—ऋषिः प्रत्याख्यानकुपितः सन् कुलनाशं करिष्यति रामो गमिष्यन् मां तापयिष्यति, अतः कुलनाशात् आत्मतापो वरमिति विचार्य राज्ञा पुत्रगमनमनुज्ञातम् ।

भाषाऽर्थः—'ब्राह्मणरूप अग्नि क्रुद्ध होकर कुलका दाह करेगी और राम जाते हुए मुझको शोकसन्तप्त करेंगे' राजाने पहले ऐसा विचार किया, अनन्तर कुलनाशकी अपेक्षा आत्मसन्तापको ही अच्छा समझकर पुत्रकी वनयात्रा स्वीकार कर ली ॥२३॥

आशीर्भिरभ्यर्च्य मुनिः क्षितीन्द्रं प्रीतः प्रतस्थे मुनिराश्रमाय ।
तं पृष्ठतः प्रष्ठमियाय नम्रो हिंस्रेषु धीराऽऽस्थधनुः कुमारः ॥ २४ ॥

अन्वयः—मुनिः प्रीतः आशीर्भिः क्षितीन्द्रम् अभ्यर्च्य आश्रमाय प्रतस्थे, नम्रः हिंस्रेषु धीराऽऽस्थधनुः कुमारः प्रष्ठं तं पृष्ठतः इयाय ।

प्रयोगप०—मुनिना प्रीतेन प्रतस्थे, नम्रेण हिंस्रेषुदीप्राऽऽस्त्रधनुषा कुमारेण प्रष्ठः स ईये ।

व्याख्या—मुनि = ऋषि ( विश्वामित्र ), प्रीत = प्रसन्न ( सन् ), आशीर्भि = आशीर्वादैः, क्षितीन्द्र = राजानम् ( दशरथम् ), अभ्यर्च्य = पूजयित्वा, ( सत्कृत्येत्यर्थः ), आश्रमाय = आश्रमं गन्तु, प्रतस्थे = प्रस्थितः नम्र = प्रणत ( पितरमिति शेषः ), हिंस्रेषुदीप्ताऽऽस्त्रधनु = घातुकबाणप्रज्वलिताऽमोघचाप, ( 'हिंस्रेषु दीप्राऽस्त्रधरः' इति पाठे हिंस्रेषु = घातुकेषु राक्षसादिषु विषये, दीप्राऽस्त्रधरः = प्रदीप्ताऽऽयुधधरः इत्यर्थः ), कुमार = राम ( सलक्ष्मण इति शेषः ), प्रष्ठम् = अग्रगामिनं, त = विश्वामित्रं, ईये = पश्चात्, इयाय = जगाम ।

व्युत्पत्ति —क्षितीन्द्र = क्षितेरिन्द्र, क्षितीन्द्र, तम् ( ष० त० ) । आश्रमाय = 'क्रियार्थोपपदस्य च कर्मणि स्थानिन' इति चतुर्थी । प्रतस्थे = 'समवप्रविभ्यः स्थ' इत्यात्मनेपदम् । हिंस्रेषुदीप्राऽऽस्त्रधनु = हिंसनशीला हिंस्रा 'नमिकम्पिस्म्यजसकमहिंसदीपो र' इति रप्रत्यय । एव नमनशील नम्र दीपनशील दीप्र इत्यत्राऽपि । 'णम प्रह्वत्वे शब्दे' 'दीपी दीप्तौ' इति धातो रप्रत्यय हिंस्राश्च ते इषवो हिंस्रेषव ( क० धा० ), तैर्दीप्त हिंस्रेषुदीप्त ( तृ० त० ), तत् आप्त ( अविसंवादि ) च धनुर्यस्य स हिंस्रेषुदीप्राऽऽस्त्रधनु ( ब० व्री० ) । समासाऽन्तविधेरनित्यत्वात् 'धनुषश्च' इत्यनङ् न भवति । 'अथाऽस्त्रियाम् । धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम् ।' इत्यमर । 'दीप्रास्त्रधर' इति पाठे धरतीति धर 'धृञ् धारणे' इति धातो पचाद्यच् । दीप्राणि च तानि अस्त्राणि दीप्राऽस्त्राणि (क० धा०), तेषां धर ( ष० त० ) । प्रष्ठ = प्रतिष्ठते अग्र इति प्रष्ठ, तम्, 'आतश्चोपसर्गे' इति कर्तरि क । 'प्रष्ठोऽग्रगामिनि' इति ष । इयाय = इणो लिटि णलि वृद्ध्यायादेशौ 'अभ्यासस्याऽसवर्णे' इतीयङ् ।

भावाऽर्थ —ऋषि प्रसन्नो भूत्वा आशीर्वादैः राजान सम्भाव्य धनुर्धरेण रामेण सह आश्रमाऽर्थं प्रस्थित ।

भाषाऽर्थ —ऋषिने प्रसन्न हो राजाको आशीर्वाद देकर आश्रमकी ओर प्रस्थान किया। धनुर्धारी रामचन्द्रने पिताजीको नमस्कारकर ऋषिका अनुसरण किया ॥ २४ ॥

प्रयास्यत पुण्यवनाय जिष्णो रामस्य रोचिष्णुमुखस्य धृष्णु ।
त्रैमातुर कृत्स्नजिताऽस्त्रशास्त्र सध्र्यङ्रत श्रेयसि लक्ष्मणोऽभूत् ॥२५॥

अन्वय —धृष्णु कृत्स्नजिताऽस्त्रशास्त्र श्रेयसि रत त्रैमातुर लक्ष्मण पुण्यवनाय प्रयास्यत जिष्णो रोचिष्णुमुखस्य रामस्य सध्र्यङ् अभूत् ।

प्रयोगप०—धृष्णुना कृत्स्नजिताऽस्त्रशस्त्रेण रतेन त्रैमातुरेण लक्ष्मणेन रामस्य सध्रीचा अभावि।

व्याख्या—धृष्णु = प्रगल्भ, कृत्स्नजिताऽस्त्रशस्त्र = समग्राऽधिगताऽस्त्रशस्त्र, श्रेयसि = कल्याणे, रत = तत्पर, त्रैमातुर = मातृत्रयपुत्र (कौसल्याकैकेय्योस्तद्दत्तपायसोद्भवत्वेन सुमित्राया गर्भोत्पन्नत्वेनेत्यर्थः), लक्ष्मण = भरताऽनुज, पुण्यवनाय = तपोवनाय, प्रयास्यत = गमिष्यत जिष्णो = जयशीलस्य, रोचिष्णुमुखस्य = रोचमानाननस्य, रामस्य = रामचन्द्रस्य, सध्र्यङ् = सहचर, अभूत् = अभवत्।

व्युत्पत्ति—धृष्णु = धृष्णोतीति धृष्णु, 'ञिधृषा प्रागल्भ्ये' इति धातो 'त्रसिगृधिधृषिक्षिपे क्नु' इति क्नु। कृत्स्नजिताऽस्त्रशस्त्र = 'कृत्स्न (यथा तथा) जितानि (अधिगतानि) इति कृत्स्नजितानि, (सुप्सुपा समास)। अस्त्राणि च शस्त्राणि च अस्त्रशस्त्राणि (द्वन्द्व)। तत्र अस्यते इति अस्त्रम् (क्षेपणीयम्आयुध शरादि), 'असु क्षेपणे' इति धातो औणादिक ष्ट्रन्। शस्यते अनेनेति शस्त्रम् (खड्गादि), 'शसु हिंसायाम्' इति धातो 'दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे' इति ष्ट्रन्। कृत्स्नजितानि अस्त्रशस्त्राणि येन स कृत्स्नजिताऽस्त्रशस्त्र (बहु०)। त्रैमातुर = तिसृणां मातॄणामपत्यं पुमान् त्रैमातुर, 'तद्धिताऽर्थोत्तरपदसमाहारे च' इति तद्धितार्थे समास। 'मातुरुत्संख्यासम्भद्रपूर्वाया' इत्यण् उत्वं च। पुण्यवनाय = पुण्यं च तद्वनं पुण्यवनं, तस्मै (क० धा०), 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि' इति कर्मणि चतुर्थी। प्रयास्यत = याधातो 'लृटः सद्वा' इति लृट शत्रादेश। जिष्णो = जयशीलो जिष्णुस्तस्य, 'जि जये' इति धातो 'ग्लाजिस्थश्च ग्स्नु' इति ग्स्नु। 'जेता जिष्णुश्च जित्वर' इत्यमर। रोचिष्णुमुखस्य = रोचनशील रोचिष्णु (इष्णुच्), तत् मुखं यस्य स रोचिष्णुमुखस्तस्य (ब० व्री०) सध्र्यङ् = सहाऽञ्चतीति सध्र्यङ्, 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च' इति क्विन्, कुत्वं सहस्य सध्र्यादेशश्च।

भावाऽर्थ—शत्रुनाशप्रगल्भ अधिगतसर्वायुध कल्याणरतो लक्ष्मणश्च तपोवनगमनोन्मुखस्य जयशीलस्य रामस्य सहायोऽभूत्।

भाषाऽर्थ—प्रगल्भ, सम्पूर्ण अस्त्र शस्त्रोंको लिये हुऐ, कल्याणतत्पर, तीनों माताओंके पुत्र लक्ष्मण भी तपोवनको जाते हुए, जयशील और उज्ज्वल मुखवाले रामचन्द्रजीके सहचर हुए ॥ २५ ॥

इषुमति रघुसिंहे दन्दशूकाञ्जिघांसौ
धनुररिभिरसह्यं मुष्टिपीडं दधाने।
व्रजति पुरतरुण्यो बद्धचित्राऽङ्गुलित्रे
कथमपि गुरुशोकामा रुदन्माङ्गलिक्य ॥ २६ ॥

अन्वय—दन्दशूकान् जिघांसौ इषुमति अरिभिः असह्यं धनुः मुष्टिपीडं दधाने बद्धचित्राऽङ्गुलित्रे रघुसिंहे व्रजति गुरुशोकाः पुरतरुण्यः माङ्गलिक्यः (सत्यः) कथमपि मा रुदन्।

प्रयोगप०— गुरुशोकाभिः पुरतरुणीभिः माङ्गलिकीभिः, (सतीभिः) कथमपि मा रोदि।

व्याख्या—दन्दशूकान् = हिंस्रान् (राक्षसादीनित्यर्थः), जिघांसौ = हननेच्छौ, इषुमति=प्रशस्तबाणयुक्ते, अरिभिः = शत्रुभिः, असह्यम् = असहनीयं, धनुः =कार्मुकं, मुष्टिपीडं = मुष्टिना पीडयित्वा (यथा तथा), दधाने=धारयति (सति), बद्धचित्राऽङ्गुलित्रे = नद्धविचित्राऽङ्गुलीत्राणे, रघुसिंहे = रघुश्रेष्ठे (रामे इत्यर्थः) व्रजति=तपोवनं गच्छति (सति), गुरुशोकाः =दुर्वहशुचः, पुरतरुण्यः =नगरयुवतयः, माङ्गलिक्यः =मङ्गलप्रयोजनाः (सत्यः), कथमपि=महता यत्नेन, मा रुदन् = अश्रूणि नो मुमुचुः,(अन्तः सशोका अपि अमङ्गलभयात् पुरतरुण्यः साऽश्रुनेत्रा नो बभूवुरित्यर्थः)।

व्युत्पत्तिः—दन्दशूकान्=गर्हितं दशन्तीति दन्दशूकाः, तान्, 'यजजपदशां यङः' इति दशेर्यङन्तादूकप्रत्ययः, 'न लोकाऽव्ययनिष्ठाखलर्थतृनाम्' इति षष्ठीप्रतिषेधात्कर्मणि द्वितीया। जिघांसौ =हन्तुमिच्छुः जिघांसुः, तस्मिन्, हन सन्नन्तात् 'सनाशंसभिक्ष उः' इत्युः प्रत्ययः। 'अज्झनगमां सनि' इति दीर्घः। इषुमति=प्रशस्ता इषवः सन्ति यस्मिन् स इषुमान्, तस्मिन्, 'तदस्याऽस्त्यस्मिन्निति मतुप्' इति मतुप्। असह्य—सोढुं शक्यः सह्यः, 'शकिसहोश्च' इति यत्। न सह्यम् असह्यं तत् (नञ०)। मुष्टिपीडं=मुष्ट्या मुष्टिना वा पीडा यस्मिन् कर्मणि तद् यथा तथा मुष्टिपीडं (बहु०), बद्धचित्राऽङ्गुलित्रे = अङ्गुलिं त्रायते इति अङ्गुलित्रम् (कप्रत्ययः)। बद्धं चित्रमङ्गुलित्रं येन स बद्धचित्राऽङ्गुलित्रः, तस्मिन् (ब० व्रीं०)। रघुसिंहे=रघुषु (लक्षणया रघुवंश्येषु नृपेषु) सिंहो रघुसिंहः, तस्मिन् (स० त०)। व्रजति=व्रजतीति व्रजन्, तस्मिन्, 'व्रज गतौ' इति धातोः 'लटः शतृशानचावप्रथमासमानाऽधिकरणे' इति लटः शत्रादेशः। गुरुशोकाः =गुरुः शोको यासां ताः गुरुशोकाः (ब० व्री०) पुरतरुण्यः = पुरस्य तरुण्यः (ष० त०), 'तरुणी युवतिः समे' इत्यमरः। माङ्गलिक्यः =मङ्गलं प्रयोजनमासां ताः माङ्गलिक्यः, 'प्रयोजनम्' इति ठक् 'टिड्ढाणञ्०' इत्यादिना ङीप्। मा रुदन्='रुदिर् अश्रुविमोचने' इति धातोः 'इरितो वा' इति च्लेरङ्, अडभावश्च। मालिनी वृत्तम् 'ननमयययुतेयं मालिनी भोगिलोकैः' इति लक्षणम्।

भावार्थ—राक्षसानां वधार्थं शत्रुभिर्दुःसहं धनुः मुष्टिपीडं धारयति परिहितविचित्राऽङ्गुलित्राणे रामचन्द्रे तपोवनं प्रस्थिते सति नगरयुवतयः तद्वियोगेन गुरुशोकाः सत्योऽपि मङ्गलभङ्गभीतेरेव अश्रुपातं न्यवारयन्।

भाषाऽर्थ—राक्षसोंको मारनेके लिए शत्रुओंसे दुःसह धनुको विचित्र अद्भुत बाणके साथ लेकर रामचन्द्रजीके जाते समय उनके वियोगसे अत्यन्त शोकयुक्त होकर शहरकी युवतियोंने मङ्गलभङ्गकी आशङ्कासे बड़े मुश्किलसे आँसुओंको रोका ॥

अथ जगदुरनीचैराशिषस्तस्य विप्रा-
स्तुमुलकलनिनादं तूर्यमाजघ्नुरन्ये ।
अभिमतफलशंसी चारु पुस्फोर बाहु-
स्तरुषु चुकुवुरुच्चैः पक्षिणश्चाऽनुकूलाः ॥ २७ ॥

अन्वय—अथ विप्राः तस्य आशिषः अनीचैः जगदुः, अन्ये तुमुलकलनिनादं तूर्यम् आजघ्नुः, अभिमतफलशंसी बाहुः चारु पुस्फोर, तरुषु अनुकूलाः पक्षिणश्च उच्चैः चुकुवुः ।

प्रयोगप०—विप्रैः तस्य आशिषः अनीचैः जगदिरे, अन्यैः तुमुलकलनिनादं तूर्यम् आजघ्ने, अभिमतफलशंसिना बाहुना पुस्फुरे, अनुकूलैः पक्षिभिश्च चुकुवे ।

व्याख्या—अथ=अनन्तरं, विप्राः=ब्राह्मणाः, तस्य=रामस्य, आशिषः=आशीर्वादान्, अनीचैः=उच्चस्वरं (क्रि० वि०) जगदुः=गदितवन्तः । अन्ये=वादकाः, तुमुलकलनिनादं=बृहन्मधुरशब्दं, तूर्यं=वाद्यम्, आजघ्नुः=ताडितवन्तः । अभिमतफलशंसी=इष्टाऽर्थसिद्धिसूचकः, बाहुः=भुजः (दक्षिण इति शेषः), चारु=साधु (क्रि० वि०), पुस्फोर=स्फुरितवान् । तरुषु=वृक्षेषु, अनुकूलाः=अनुगुणाः, पक्षिणश्च=पतत्रिणश्च, उच्चैः=तारं, चुकुवुः=कूजितवन्तः ॥ २७ ॥

व्युत्पत्ति—अनीचैः=न नीचैः अनीचैः (नञ्०), जगदुः='गद व्यक्तायां वाचि' इति धातोर्लिट् । तुमुलकलनिनादं=तुमुलः कलः निनादो यस्मिन्कर्मणि तद् यथा तथा (बहु०, क्रि० वि०) । आजघ्नुः=आङ्पूर्वाद्धन्धातोर्लिट्, 'आङो यमहनः' इत्यात्मनेपदं न भवति 'अकर्मकाच्च' इति सूत्रस्य अनुवृत्तेः । अभिमतफलशंसी=अभिमतं च तत् फलमभिमतफलम् (क० धा०), तत् शंसतीति तच्छीलः, 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः । 'सौ च' इति दीर्घः । बाहुः='भुजबाहू प्रवेष्टो दोः' इत्यमरः । पुस्फोर='स्फुर सञ्चलने' इति धातोर्लिट्, 'शर्पूर्वाः खयः' इत्यभ्यासे पकारः शिष्यते । पक्षिणः=पक्षौ स्तः येषां ते पक्षिणः, 'अत इनिठनौ' इतीनिः । चुकुवुः='कु शब्दे' इति धातोर्लिट् । अत्र लिटः कित्त्वाद् गुणाऽभावात् उवङ् । मालिनी वृत्तम्, लक्षणं तु पूर्ववत् ।

भावाऽर्थ—ततो ब्राह्मणास्तारस्वरेण राममाशीर्भिः समभावयन्, वादकाः बृहन्मधुरशब्दं यथा तथा वाद्यं ताडितवन्तः, इष्टाऽर्थसिद्धिसूचको दक्षिणो बाहुश्च स्फुरितवान्, वृक्षेषु अनुकूलाः पक्षिणश्च उच्चस्वरेण कूजितवन्तः ।

भाषाऽर्थ —तब ब्राह्मणोंने उच्चस्वरसे रामचन्द्रको आशीर्वाद दिया, बाजेवालोंने गम्भीर और मधुर शब्दवाले बाजोंको बजाया, अभीष्ट फलकी सूचना करनेवाला दक्षिण बाहु भी अच्छी तरहसे फड़क उठा और वृक्षोंपर अनुकूल पक्षियोंने भी ऊँचे स्वरसे शब्द किया ॥ २७ ॥

इति श्रीभट्टिकाव्ये व्याख्याद्वयोपेते रामसम्भवो नाम प्रथमः सर्गः ।

---

## अथ द्वितीयः सर्गः

वनस्पतीनां सरसां नदीनां तेजस्विनां कान्तिभृतां दिशां च ।
निर्याय तस्याः स पुरः समन्ताच्छ्रियं दधानां शरदं ददर्श ॥ १ ॥

अन्वय —स तस्याः पुरः निर्याय समन्तात् वनस्पतीनां सरसां नदीनां तेजस्विनां कान्तिभृतां दिशां च श्रियं दधानां शरदं ददर्श ।

प्रयोगप०—तेन श्रियं दधाना शरद् ददृशे ।

व्याख्या—स = रामः, तस्याः = पूर्वोक्तायाः, पुरः = नगर्याः ( अयोध्याया इत्यर्थः ), निर्याय = निर्गत्य, समन्तात् = सर्वतः, वनस्पतीनां = वृक्षाणां, सरसां = कासाराणां, नदीनां=सरितां (गङ्गादीनाम), तेजस्विनां=चन्द्रतारादीनाम् (अथवा मेघाऽपायात् भास्वराणाम् इति सर्वविशेषणम् ) कान्तिभृतां = समुज्ज्वलानाम् (इद पदमपि सर्वविशेषणम् ), दिशां च=ककुभां च, श्रियं= शोभां, दधानां = धारयन्तीं, शरदं=शरदृतुं ददर्श=अपश्यत् ।

व्युत्पत्ति —पुरः = 'पूः स्त्री पुरीनगर्यौ वा पत्तनं पुटभेदनम् ।' इत्यमरः, निर्याय = याते समासे क्त्वः 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति ल्यबादेशः । वनस्पतीनां='पारस्करप्रभृतीनि च संज्ञायाम्' इति सुट्, अत्र 'तैरपुष्पाद्वनस्पतिः' इति लक्षणलक्षितो वनस्पतिर्न गृह्यते । तेजस्विनां = प्रशस्तं तेजोऽस्ति येषां ते तेजस्विनः 'अस्मायामेधास्रजो विनिः' इति विनिप्रत्ययः । तेजस्विनश्च तेजस्वीनि च तेजस्विन्यश्च तेजस्वीनि, तेषां, 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' इति नपुंसकैकशेषः । कान्तिभृतां=कान्तिं बिभ्रतीति कान्तिभृतस्तेषाम् , क्विप् । ददर्श= 'दृशिर् प्रेक्षणे' इति धातोर्लिट् ।

भावाऽर्थ —रामोऽयोध्याया निर्गत्य फलपरिपूर्णैर्वृक्षैः कमलयुक्तैः सरोभिः विमलजलाभिर्नदीभिः उज्ज्वलैश्चन्द्रतारादिभिर्निर्मलाभिर्दिग्भिश्च शोभमानां शरदं विलोकयामास ।

भाषाऽर्थ —रामचन्द्रजी अयोध्यासे निकलकर चारों तरफ ... तालाब,

नदियाँ, चन्द्र और तारा आदि तथा निर्मल दिशाओंकी शोभाको धारण करती हुई शरद् ऋतुको देखा ॥ १ ॥

अथ सप्तभिः श्लोकैः शरदं वर्णयति—

तरङ्गसङ्गाच्चपलैः पलाशैर्ज्वालाश्रियं साऽतिशयां दधन्ति ।
सधूमदीप्ताऽग्निरुचीनि रेजुस्ताम्रोत्पलान्याकुलषट्पदानि ॥ २ ॥

अन्वयः—तरङ्गसङ्गात् चपलैः पलाशैः साऽतिशयां ज्वालाश्रियं दधन्ति आकुलषट्पदानि ( अत एव ) सधूमदीप्ताऽग्निरुचीनि ताम्रोत्पलानि रेजुः ।

प्रयोगप०—दधद्भिः आकुलषट्पदैः सधूमदीप्ताऽग्निरुचिभिः ताम्रोत्पलैः रेजे ।

व्याख्या—तरङ्गसङ्गात् = ऊर्मिसम्पर्कात् , चपलैः = चञ्चलैः , पलाशैः = पत्रैः , साऽतिशयां = साऽधिकां, ज्वालाश्रियं = शिखाशोभां, दधन्ति = धारयन्ति, आकुलषट्पदानि = चञ्चलभ्रमराणि, ( अत एव ) सधूमदीप्ताऽग्निरुचीनि = धूमिलज्वलितवह्निकान्तीनि, ताम्रोत्पलानि = रक्तकमलानि, रेजुः = शुशुभिरे ( चपलपलाशानामग्निज्वालातुल्यत्वात् षट्पदानां च धूमतुल्यत्वात् सधूमदीप्ताऽग्निरुचीनि इत्युक्तम् ) ।

व्युत्पत्तिः—तरङ्गसङ्गात् = तरङ्गाणां सङ्गः तरङ्गसङ्गस्तस्मात् ( ष० त० ) 'विभाषा गुणेऽस्त्रियाम्' इति हेतौ पञ्चमी । 'भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिः' इत्यमरः । पलाशैः='हेतौ' इति तृतीया । साऽतिशयाम्=अतिशयेन सहिता साऽतिशया, ताम् ( बहु० ) । 'सातिशयम्' इति मल्लिनाथसम्मतः पाठस्तन्मते अतिशयेन सहितं यथा स्यात् तथा इति क्रियाविशेषणम् । ज्वालाश्रियं=ज्वालायाः श्रीर्ज्वालाश्रीः, ताम् ( ष० त० ) । दधन्ति='डुधाञ् धारणपोषणयोः' इति धातोः शतृप्रत्ययः 'वा नपुंसकस्य' इति विकल्पान्नुमागमः । आकुलषट्पदानि=षट् पदानि येषां ते षट्पदाः ( बहु० ) । आकुलाः षट्पदाः येषु तानि ( बहु० ) । सधूमदीप्ताग्निरुचीनि=धूमेन सहितः सधूमः ( बहु० ) । दीप्तश्चाऽसौ अग्निः दीप्ताऽग्निः ( क० धा० ), सधूमश्चाऽसौ दीप्ताऽग्निः सधूमदीप्ताऽग्निः ( क० धा० ) तस्य इव रुचिर्येषां तानि सधूमदीप्ताऽग्निरुचीनि (बहु०) । ताम्रोत्पलानि = ताम्राणि च तानि उत्पलानि ( क० धा० ) । रेजुः ='राजृ दीप्तौ' इति धातोर्लिट् 'फणां च सप्तानाम्' इत्येत्वाऽभ्यासलोपौ ।

भावार्थः—जलतरङ्गसम्पर्कात् चञ्चलपत्रैः अग्निशिखासदृशानि चञ्चलभ्रमरयुक्तानि अत एव धूमितप्रज्वलितवह्निकान्तीनि रक्तकमलानि शुशुभिरे ।

भाषार्थ—जलतरङ्गोंके सम्पर्कसे चञ्चल पत्रोंसे आगकी ज्वालाओंके सदृश, चञ्चल भ्रमरोंसे युक्त अतएव धूमयुक्त प्रज्वलित आगकी नाईं कान्तिवाले रक्तकमल शोभित हुए ॥ २ ॥

भाषाऽर्थ —तब ब्राह्मणोंने उच्चस्वरसे रामचन्द्रको आशीर्वाद दिया, बाजेवालोंने गम्भीर और मधुर शब्दवाले बाजोंको बजाया, अभीष्ट फलकी सूचना करनेवाला दक्षिण बाहु भी अच्छी तरहसे फड़क उठा और वृक्षोंपर अनुकूल पक्षियोंने भी ऊंचे स्वरसे शब्द किया ॥ २७ ॥

इति श्रीभट्टिकाव्ये व्याख्याद्वयोपेते रामसम्भवो नाम प्रथम सर्ग ।

---

## अथ द्वितीयः सर्गः

वनस्पतीना सरसा नदीना तेजस्विना कान्तिभृता दिशा च ।
निर्याय तस्या स पुर समन्ताच्छ्रिय दधाना शरद ददर्श ॥ १ ॥

अन्वय —स तस्या पुर निर्याय समन्तात् वनस्पतीना सरसा नदीना तेजस्विना कान्तिभृता दिशा च श्रिय दधाना शरद ददर्श।

प्रयोगप०—तेन श्रिय दधाना शरद् ददृशे ।

व्याख्या—स = राम, तस्या = पूर्वोक्ताया, पुर = नगर्या ( अयोध्याया इत्यर्थ ), निर्याय = निर्गत्य, समन्तात् = सर्वत , वनस्पतीना = वृक्षाणा, सरसा = कासाराणां, नदीनां=सरिता (गङ्गादीनाम), तेजस्विना=चन्द्रतारादीनाम् (अथवा मेघाऽपायात् भास्वराणाम् इति सर्वविशेषणम् ) कान्तिभृता = समुज्ज्वलानाम् (इद पदमपि सर्वविशेषणम् ), दिशां च=ककुभा च, श्रिय= शोभा, दधाना = धारयन्तीं, शरद=शरदृतुं दर्दर्श=अपश्यत् ।

व्युत्पत्ति —पुर ='पू स्त्री पुरीनगर्यौ वा पत्तन पुटभेदनम् ।' इत्यमर, निर्याय=याते समासे क्त्व 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति ल्यबादेश । वनस्पतीना='पारस्करप्रभृतीनि च सज्ञायाम्' इति सुट् , अत्र 'तैरपुष्पाद्वनस्पति' इति लक्षणलक्षितो वनस्पतिर्न गृह्यते । तेजस्विना = प्रशस्त तेजोऽस्ति येषा ते तेजस्विन 'अस्मायामेधास्रजो विनि' इति विनिप्रत्यय । तेजस्विनश्च तेजस्वीनि च तेजस्विन्यश्च तेजस्वीनि, तेषां, 'नपुसकमनपुसकेनैकवच्चास्यान्यतरस्याम्' इति नपुसकैकशेष । कान्तिभृता=कान्ति बिभ्रतीति कान्तिभृतस्तेषाम् , क्विप्। ददर्श= 'दृशिर् प्रेक्षणे' इति धातोर्लिट् ।

भावाऽर्थ —रामोऽयोध्याया निर्गत्य फलपरिपूरितैर्वृक्षै कमलयुक्तै सरोभि विमलजलाभिर्नदीभि उज्ज्वलैश्चन्द्रतारादिभिर्निर्मलाभिर्दिग्भिश्च शोभमाना शरद विलोकयामास ।

भाषाऽर्थ —रामचन्द्रजी अयोध्यासे निकलकर चारों तरफ वृक्ष,

नदियां, चन्द्र और तारा आदि तथा निर्मल दिशाओंकी शोभाको धारण करती हुई शरद् ऋतुको देखा ॥ १ ॥

अथ सप्तभिः श्लोकैः शरदं वर्णयति—

तरङ्गसङ्गाच्चपलैः पलाशैर्ज्वालाश्रियं साऽतिशयां दधन्ति ।
सधूमदीप्ताऽग्निरुचीनि रेजुस्ताम्रोत्पलान्याकुलषट्पदानि ॥ २ ॥

अन्वयः—तरङ्गसङ्गात् चपलैः पलाशैः साऽतिशयां ज्वालाश्रियं दधन्ति आकुलषट्पदानि ( अत एव ) सधूमदीप्ताऽग्निरुचीनि ताम्रोत्पलानि रेजुः ।

प्रयोगप०—दधद्भिः आकुलषट्पदैः सधूमदीप्ताऽग्निरुचिभिः ताम्रोत्पलैः रेजे ।

व्याख्या—तरङ्गसङ्गात् = ऊर्मिसम्पर्कात्, चपलैः = चञ्चलैः, पलाशैः = पत्रैः, साऽतिशयां = साऽधिकां, ज्वालाश्रियं = शिखाशोभां, दधन्ति = धारयन्ति, आकुलषट्पदानि = चञ्चलभ्रमराणि, ( अत एव ) सधूमदीप्ताऽग्निरुचीनि = धूमिलज्वलितवह्निकान्तीनि, ताम्रोत्पलानि = रक्तकमलानि, रेजुः = शुशुभिरे ( चपलपलाशानामग्निज्वालातुल्यत्वात् षट्पदानां च धूमतुल्यत्वात् सधूमदीप्ताऽग्निरुचीनि इत्युक्तम् ) ।

व्युत्पत्तिः—तरङ्गसङ्गात् = तरङ्गाणां सङ्गः तरङ्गसङ्गस्तस्मात् ( ष० त० ) 'विभाषा गुणेऽस्त्रियाम्' इति हेतौ पञ्चमी । 'भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिः' इत्यमरः । पलाशैः = 'हेतौ' इति तृतीया । साऽतिशयाम् = अतिशयेन सहिता साऽतिशया, ताम् ( बहु० ) । 'साऽतिशयम्' इति मल्लिनाथसम्मतः पाठस्तन्मते अतिशयेन सहितं यथा तथा इति क्रियाविशेषणम् । ज्वालाश्रियं = ज्वालाया श्रीर्ज्वालाश्रीः, ताम् ( ष० त० ) । दधन्ति = 'डुधाञ् धारणपोषणयोः' इति धातोः शतृप्रत्ययः 'वा नपुंसकस्य' इति विकल्पान्नुमागमः । आकुलषट्पदानि = षट् पदानि येषां ते षट्पदाः ( बहु० ) । आकुलाः षट्पदाः येषु तानि ( बहु० ) । सधूमदीप्ताग्निरुचीनि = धूमेन सहितः सधूमः ( बहु० ) । दीप्तश्चाऽसौ अग्निः दीप्ताऽग्निः ( क० धा० ), सधूमश्चाऽसौ दीप्ताऽग्निः सधूमदीप्ताऽग्निः ( क० धा० ) तस्य इव रुचिर्येषां तानि सधूमदीप्ताऽग्निरुचीनि ( बहु० ) । ताम्रोत्पलानि = ताम्राणि च तानि उत्पलानि ( क० धा० ) । रेजुः = 'राजृ दीप्तौ' इति धातोर्लिट् 'फणां च सप्तानाम्' इत्येत्वाऽभ्यासलोपौ ।

भावार्थः—जलतरङ्गसम्पर्कात् चञ्चलपत्रैः अग्निशिखासदृशानि चञ्चलभ्रमरयुक्तानि अत एव धूमितप्रज्वलितवह्निकान्तीनि रक्तकमलानि शुशुभिरे ।

भावार्थः—जलतरङ्गोंके सम्पर्कसे चञ्चल पत्तोंसे आगकी ज्वालाओंके सदृश, चञ्चल भ्रमरोंसे युक्त अतएव धूमयुक्त प्रज्वलित आगकी नाईं कान्तिवाले रक्तकमल शोभित हुए ॥ २ ॥

विम्बागतैस्तीरवनैः समृद्धिं निजां विलोक्याऽपहृतां पयोभिः ।
कूलानि साऽमर्षतयेव तेनुः सरोजलक्ष्मीं स्थलपद्महासैः ॥ ३ ॥

अन्वय—कूलानि निजां समृद्धिं पयोभिः विम्बागतैः तीरवनैः अपहृतां विलोक्य साऽमर्षतया इव स्थलपद्महासैः सरोजलक्ष्मीं तेनुः ।

प्रयोगप०—कूलैः सरोजलक्ष्मीस्तेने ।

व्याख्या—कूलानि=तटानि, निजां=स्वीयां, समृद्धिं=वनलक्ष्मीं, पयोभिः= जलैः (कर्तृभूतैः) विम्बागतैः=प्रतिविम्बसङ्क्रान्तैः, तीरवनैः=तटवृक्षसमूहैः (करणभूतैः), अपहृतां=चोरितां, विलोक्य=दृष्ट्वा, साऽमर्षतया इव=क्रोधादिव, स्थलपद्महासैः=तटस्थलकमलविकासैः, सरोजलक्ष्मीं=कमलशोभां, तेनुः=विस्तारयामासुः ।

व्युत्पत्ति—कूलानि='कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु ।' इत्यमरः । विम्बागतैः=विम्बेन आगतानि, विम्बागतानि, तैः (तृ० त०) । तीरवनैः=तीरेषु वनानि तीरवनानि तैः (स० त०) । साऽमर्षतया अमर्षेण सहितानि सामर्षाणि (व० व्री०), तेषां भावः सामर्षता, तया 'तस्य भावस्त्वतलौ' इति तल् प्रत्ययः, 'तलन्तं स्त्रियाम्' इति लिङ्गाऽनुशासनात् तलन्तात् 'अजाद्यतष्टाप्' इति टाप् । स्थलपद्महासैः=स्थलस्य पद्मानि स्थलपद्मानि (ष० त०), तेषां हासाः स्थलपद्महासास्तैः (ष० त०) । सरोजलक्ष्मीं=सरोजानां लक्ष्मीः सरोजलक्ष्मीस्ताम् (ष० त०) । तेनुः='तनु विस्तारे' इति धातोर्लिट्, 'अत एकहल्मध्येऽनादेशादेर्लिटि' इत्येत्वाऽभ्यासलोपौ ।

भावार्थ—जलैः प्रतिविम्बच्छलेन स्वकीयवनशोभा अपहृतेति तटैः क्रोधात् स्थलकमलविकासाऽपदेशेन जलशोभाऽपहरणं कृतम् इत्युत्प्रेक्षाऽर्थः । पराहृतश्रीकाणां तदीयश्रीहरणं युक्तमिति भावः ।

भाषाऽर्थ—प्रतिविम्बके छलसे, जलोंसे अपनी वनशोभाको अपहृत होते देखकर तटोंने मानों क्रोधसे स्थलकमलके विकासके बहानेसे कमलशोभा का अपहरण किया ।

निशातुषारैर्नयनाऽम्बुकल्पैः पत्राऽन्तपर्यागलदच्छबिन्दुः ।
उपारुरोदेव नदत्पतङ्गः कुमुद्वतीं तीरतरुर्दिनादौ ॥ ४ ॥

अन्वय—दिनादौ नयनाऽम्बुकल्पैः निशातुषारैः पत्राऽन्तपर्यागलदच्छबिन्दुः नदत्पतङ्गः तीरतरुः कुमुद्वतीम् उपारुरोद इव ।

प्रयोगप०— पत्राऽन्तपर्यागलदच्छबिन्दुना नदत्पतङ्गेन तीरतरुणा कुमुद्वती उपारुरुदे इव ।

व्याख्या—दिनादौ=प्रभाते, नयनाऽम्बुकल्पैः=अश्रुतुल्यैः (नयनाऽम्बुवत्पत्रेषु स्थितत्वात्), निशातुषारैः=रात्रिहिमैः, पत्राऽन्तपर्यागलदच्छबिन्दुः=पत्र

अग्रस्रवन्निर्मलपृषत, नदत्पतङ्ग = कूजद्विहङ्ग, तीरतरु = तटवृक्ष, कुमुद्वतीं = कुमुदिनी प्रति, उपाररोद इव = रुदितवान् इव ( हन्त ! चन्द्रवियोगात्त्वमित्थमू- तासि निश्रीका इति साक्रन्दमश्रूण्यमुञ्चदिव )।

व्युत्पत्ति—दिनादौ = दिनस्य आदिर्दिनादिस्तस्मिन् ( ष० त० )। नयनाऽम्बुकल्पै = नयनयोरम्बूनि नयनाऽम्बूनि ( ष० त० )। ईषदसमाप्तानि नयनाऽम्बूनि नयनाऽम्बुकल्पास्तै, 'ईषदसमाप्तौ कल्पब्देश्यदेशीयर' इति कल्पप्प्रत्यय। निशातुषारै = निशायास्तुषारा निशातुषारास्तैं ( ष० त० )। पत्राऽन्तपर्यागलदच्छबिन्दु = पत्राणामन्ता पत्रान्ता ( ष० त० )। 'पत्र पलाश छदन दल पर्ण छद पुमान्' इत्यमर। पत्राऽन्तेभ्य पर्यागलन्त पत्राऽन्तपर्यागलन्त 'पञ्चमी भयेन' इति योगविभागात् 'सुप्सुपा' इति वा समास। पत्राऽन्तपर्यागलन्त अच्छा बिन्दवो यस्य स पत्राऽन्तपर्यागलदच्छबिन्दु ( ब० व्री० )। नदत्पतङ्ग = नदन्त पतङ्गा यस्मिन् स ( ब० व्री० )। तीरतरु = तीरस्य तरु ( ष० त० )। कुमुद्वतीं = कुमुदानि सन्ति यस्यां सा कुमुद्वती, ताम् 'कुमुदनडवेतसेभ्यो ड्मतुप्' इति ड्मतुप्, 'झय' इति वत्वम्, 'उगितश्च' इति ङीप्। अत्र 'रुदिर् अश्रुविमोचने' इति धातोरकर्मकत्वेऽपि कुमुद्वतीपदस्य 'गम्यमानोद्देशक्रियाऽपेक्षया कर्मत्वम्। गम्यमान क्रियाऽपेक्षया कारकोत्पत्तेरिष्टत्वात्' इति मल्लिनाथ। 'रोदनक्रियया आक्रन्दनविशिष्टया कुमुद्वत्या ईप्सिततमत्वात् रुदि सकर्मक।' इति जयमङ्गल। 'उपसर्गयोगात् रुदि सकर्मक' इति त्वन्ये।

भावार्थ—प्रातःकाले अश्रुतुल्यै रात्रिहिमै नेत्रस्रवत्पत्राग्रस्रवन्निर्मलबिन्दु कूजत्पक्षी तटतरु चन्द्रवियुक्ता कुमुदिनीं 'हन्त ! त्वमित्थं निश्रीका सञ्जाते'ति आक्रन्दन् अश्रूणि मुञ्चन्निव अवर्तत।

भाषार्थ—प्रातःकाल आंसुओंके तुल्य ओसोंसे जिसके पत्तोंके अग्रभागसे निर्मल पानी की बूंदे गिरती हैं एवम् जिसपर बैठकर पक्षी शब्द करते हैं ऐसा तीरका वृक्ष कुमुदिनी 'हाय ! पतिके वियोगसे तू इस तरह शोभाहीन हो गई है' ऐसा कहकर मानों आंसू गिरा रहा है ॥ ४ ॥

वनानि तोयानि च नेत्रकल्पैः पुष्पैः सरोजैश्च निलीनभृङ्गैः ।
परस्परां विस्मयवन्ति लक्ष्मीमालोकयाञ्चक्रुरिवादरेण ॥ ५ ॥

अन्वय—वनानि तोयानि च निलीनभृङ्गैः नेत्रकल्पैः पुष्पैः सरोजैश्च परस्परां लक्ष्मीं विस्मयवन्ति ( सन्ति ) आदरेण आलोकयाञ्चक्रुरिव।

प्रयोगप०—वनैस्तोयैश्च परस्परा लक्ष्मीर्विस्मयवद्भिः ( सद्भिः ) आदरेण आलोकयाञ्चक्रे इव।

अग्रवच्छिर्मलपृषत, नदत्पतङ्ग = कूजद्विहङ्ग, तीरतरु = तटवृक्ष, कुमुद्वतीं = कुमुदिनी प्रति, उपारुरोद इव = रुदितवान् इव ( हन्त! चन्द्रवियोगात्त्वमित्थमभूताऽसि निःश्रीका इति साक्रन्दमश्रूण्यमुञ्चदिव )।

व्युत्पत्ति—दिनादौ = दिनस्य आदिर्दिनादिस्तस्मिन् (ष० त०)। नयनाऽम्बुकल्पै = नयनयोरम्बूनि नयनाऽम्बूनि (ष० त०)। ईषदसमाप्तानि नयनाऽम्बूनि नयनाऽम्बुकल्पास्तै, 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' इति कल्पप्प्रत्ययः। निशातुषारैः = निशायास्तुषारा निशातुषारास्तैः (ष० त०)। पत्राऽन्तपर्यागलदच्छबिन्दु = पत्राणामन्ता पत्रान्ता (ष० त०)। 'पत्र पलाशं छदनं दलं पर्णं छदः पुमान्' इत्यमरः। पत्राऽन्तेभ्यः पर्यागलन्त पत्राऽन्तपर्यागलन्तः 'पञ्चमी भयेन' इति योगविभागात् 'सुप्सुपा' इति वा समासः। पत्राऽन्तपर्यागलन्तः अच्छाः बिन्दवो यस्य स पत्राऽन्तपर्यागलदच्छबिन्दुः (ब० व्री०)। नदत्पतङ्ग = नदन्तः पतङ्गा यस्मिन् सः (ब० व्री०)। तीरतरु = तीरस्य तरुः (ष० त०)। कुमुद्वतीं = कुमुदानि सन्ति यस्यां सा कुमुद्वती, ताम् 'कुमुदनडवेतसेभ्यो ड्मतुप्' इति ड्मतुप्, 'झयः' इति वत्वम्, 'उगितश्च' इति ङीप्। अत्र 'रुदिर् अश्रुविमोचने' इति धातोरकर्मकत्वेऽपि कुमुद्वतीपदस्य 'गम्यमानोद्देशक्रियाऽपेक्षया कर्मत्वम्। गम्यमानक्रियाऽपेक्षया कारकोत्पत्तेरिष्टत्वात्' इति मल्लिनाथः। 'रोदनक्रियया आक्रन्दनविशिष्टया कुमुद्वत्या ईप्सिततमत्वात् रुदिः सकर्मकः।' इति जयमङ्गलः। 'उपसर्गयोगात् रुदिः सकर्मकः' इति त्वन्ये।

भावार्थ—प्रातःकाले अश्रुतुल्यैः रात्रिहिमैः नेत्रसदृशपत्राग्रस्रवन्निर्मलबिन्दुः कूजत्पक्षी तटतरुः चन्द्रवियुक्तां कुमुदिनीं 'हन्त! त्वमित्थं निःश्रीका सञ्जाते'ति आक्रन्दन् अश्रूणि मुञ्चन्निव अवर्तत।

भाषार्थ—प्रातःकाल आँसुओंके तुल्य ओसोंसे जिसके पत्तोंके अग्रभागसे निर्मल पानी की बूँदे गिरती है एवम् जिसपर बैठकर पक्षी शब्द करते हैं ऐसा तीरका वृक्ष कुमुदिनी 'हाय! पतिके वियोगसे तू इस तरह शोभाहीन हो गई है' ऐसा कहकर मानों आँसू गिरा रहा है ॥ ४ ॥

वनानि तोयानि च नेत्रकल्पैः पुष्पैः सरोजैश्च निलीनभृङ्गैः।
परस्परां विस्मयवन्ति लक्ष्मीमालोकयाञ्चक्रुरिवादरेण ॥ ५ ॥

अन्वय—वनानि तोयानि च निलीनभृङ्गैः नेत्रकल्पैः पुष्पैः सरोजैश्च परस्परां लक्ष्मीं विस्मयवन्ति (सन्ति) आदरेण आलोकयाञ्चक्रुरिव।

प्रयोगप०—वनैस्तोयैश्च परस्परा लक्ष्मीर्विस्मयवद्भिः (सद्भिः) आदरेण आलोकयाञ्चक्रे इव।

व्याख्या—वनानि = काननानि, तोयानि च = जलानि च, निलीनभृङ्गैः = स्थितभ्रमरैः ( कनीनिकायमानभृङ्गैरिति भावः ), नेत्रकल्पैः = नयनतुल्यैः, पुष्पैः = कुसुमैः, सरोजैश्च = कमलैश्च, परस्पराम् = अन्योन्याम्, लक्ष्मीं = शोभाम्, वि - वन्ति=आश्चर्ययुक्तानि (सन्ति), आदरेण=आस्थया, आलोकयाञ्चक्रुरिव = ददृशुरिव।

व्युत्पत्तिः—निलीनभृङ्गैः = निलीना भृङ्गा येषु तानि निलीनभृङ्गाणि, तैः ( ब० व्री० )। नेत्रकल्पैः =ईषदसमाप्तानि नेत्राणि नेत्रकल्पानि, तैः (कल्पप्प्रत्ययः)। ( पदद्वयमपि पुष्पसरोजविशेषणम् )। पुष्पैः = 'स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम्।' इत्यमरः। सरोजैः = सरसि जातानि सरोजानि, तैः, 'सप्तम्यां जनेर्डः' इति डप्रत्ययः। परस्पराम् = 'कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये समासवच्च बहुलम्' इति द्विरुक्तिः। विस्मयवन्ति = विस्मयोऽस्ति येषां तानि ( मतुप् )। अत्रोत्प्रेक्षा तुल्ययोगितया उपमया यथासंख्येन च उत्थापितेति सङ्करः।

भावार्थः—वनानि जलानि च कनीनिकायमानभ्रमरैः नेत्रसदृशैः पुष्पैः कमलैश्च अन्योन्यशोभां सविस्मयमास्थया ददृशुरिव।

भाषार्थ—वन और जल भौंरोंसे युक्त तथा नेत्रसदृश पुष्प और कमलोंसे एक दूसरेकी शोभा आश्चर्यपूर्वक मानों आदरसे देख रहे थे॥ ५॥

प्रभातवाताहतिकम्पिताकृतिः कुमुद्वतीरेणुपिशङ्गविग्रहम्।
निरास भृङ्गं कुपितेव पद्मिनी न मानिनी संसहतेऽन्यसङ्गमम्॥ ६॥

अन्वयः—प्रभातवाताहतिकम्पिताकृतिः पद्मिनी कुपिता इव कुमुद्वतीरेणुपिशङ्गविग्रहं भृङ्गं निरास, ( तथा हि ) मानिनी अन्यसङ्गमं न संसहते।

प्रयोगप०—प्रभातवाताऽऽहतिकम्पिताकृत्या पद्मिन्या कुपितयेव कुमुद्वतीरेणुपिशङ्गविग्रहो भृङ्गो निरासे, मानिन्या अन्यसङ्गमो न संसह्यते।

व्याख्या—प्रभातवाताहतिकम्पिताकृतिः = विभातवाय्वाघातचालिताकारा, पद्मिनी = कमलिनी, कुपिता इव = क्रुद्धा इव ( खण्डिता नायिकेवेति भावः। खण्डितालक्षणं यथा —'पार्श्वमेति प्रियो यस्या अन्यसम्भोगचिह्नितः। सा खण्डितेति कथिता धीरैरीर्ष्याकषायिता॥' इति )। कुमुद्वतीरेणुपिशङ्गविग्रहं = कुमुदिनीपरागपिशङ्गशरीरं, भृङ्गं = भ्रमरं, निरास = निरस्तवती, ( तथा हि ) मानिनी = मानवती स्त्री, अन्यसङ्गमं पत्युर्नायिकान्तरसंसर्गं न संसहते = न क्षमते।

व्युत्पत्तिः—प्रभातवाताहतिकम्पिताऽऽकृतिः = प्रभातस्य वातः प्र - (ष० त०), 'नभस्वद्वातपवनपवमानप्रभञ्जनाः।' इत्यमरः। प्रभातवातस्य आहतिः प्रभातवाताहतिः (ष० त०)। कम्पिता आकृतिर्यस्याः सा कम्पिताकृतिः (ब० व्री०

प्रभातवाताहत्या कम्पिताऽऽकृति प्रभातवाताऽऽहतिकम्पिताऽऽकृति (तृ० त०)। पद्मिनी = पद्मानि सन्ति यस्याः सा, इनिप्रत्यय, तदन्तात् 'ऋन्नेभ्यो ङीप्' इति ङीप्। तीरेणुपिशङ्गविग्रहम् = कुमुद्वत्या रेणव कुमुद्वतीरेणव (ष० त०)। पिशङ्ग विग्रह यस्य स पिशङ्गविग्रह (बहु०)। कुमुद्वतीरेणुभि पिशङ्गविग्रह॰ कुमुद्वतीरेणुपिशङ्गविग्रहस्तम् (तृ० त०)। निरास=निरुपसर्गपूर्वकात् 'असु क्षेपणे' इति धातोर्लिट्। मानिनी-प्रशस्त मान अस्ति यस्या सा (इनिस्तदन्तान्ङीप् च) अन्यसङ्गमम्=अन्यस्या सङ्गम अन्यसङ्गमस्तम् (ष० त०), 'सर्वनाम्नो वृत्तिमात्रे पुवद्भाव' इति पूर्वपदस्य पुवद्भावः। 'न मानिनीश सहतेऽन्यसङ्गमम्' इति पाठे अन्यस्या॰ सङ्गमो यस्य स अन्यसङ्गमस्तम् (ब० व्री०), ईश = पतिमित्यर्थो बोध्य। सामान्येन विशेषसमर्थनात् अर्थान्तरन्यास। तल्लक्षण यथा—'सामान्य वा विशेषेण विशेषस्तेन वा यदि। कार्यं च कारणेनेद् कार्येण च समर्थ्यते। साध॰ र्म्येणेतरेणाऽर्थान्तरन्यासोऽष्टधा तत ॥' इति वशस्थवृत्त, तल्लक्षण यथा—'जतौ तु वशस्थमुदीरित जरौ।' इति।

भावार्थ—प्रभातकालिकवायुससर्गेण कम्पिताकारा पद्मिनी खण्डिता नायिकेव कुमुद्वतीपरागसस्पृष्टशरीर भृग निरास, यत अभिमानिनी नायिका स्वप्रियस्य नायिकान्तरसम्पर्क न मर्षति।

भाषाऽर्थ—प्रात कालकी हवासे कम्पित आकारवाली कमलिनी खण्डिता नायिकाकी तरह मानों कुपित होकर कुमुद्वतीके परागसे रञ्जित शरीरवाले भौरेको हटाती है, क्योंकि अभिमानिनी स्त्री अपने प्रियका दूसरी नायिकासे सम्पर्कको सहन नहीं करती है ॥ ६ ॥

दत्तावधान मधुलेहिगीतौ प्रशान्तचेष्ट हरिण जिघासु।
आकर्णयन्नुत्सुकहसनादाल्लक्ष्ये समाधि न दधे मृगावित् ॥ ७ ॥

अन्वय—मधुलेहिगीतौ दत्ताऽवधान प्रशान्तचेष्ट हरिण जिघासु मृगावित् उत्सुकहसनादान् आकर्णयन् लक्ष्ये समाधि न दधे।

प्रयोगप०— हरिण जिघासुना मृगाविधा उत्सुकहसनादान् आकर्णयता (सता) लक्ष्ये समाधिर्न दधे।

व्याख्या—मधुलेहिगीतौ = भ्रमरगाने, दत्ताऽवधान = दत्तचित्त (हरिणानां गानप्रियत्वादिति भाव), प्रशान्तचेष्ट = पलायनादिचेष्टारहित, हरिण = मृगं, जिघासु = हन्तुमिच्छु, मृगावित् = व्याध, उत्सुकहसनादान् = उत्कण्ठितहसशब्दान्, आकर्णयन् = शृण्वन् (तदासक्तचित्तत्वादिति भाव), लक्ष्ये = शरव्ये (मृगरूपे इत्यर्थ), समाधिम् = एकाग्रता, न दधे = न अधारयत् (अपूर्वो भावो भावान्तरं प्रतिबध्नातीति भाव)।

व्याख्या—वनानि = काननानि, तोयानि च = जलानि च, निलीनभृङ्गैः = स्थितभ्रमरैः ( कनीनिकायमानभृङ्गैरिति भाव ), नेत्रकल्पैः = नयनतुल्यैः, पुष्पैः = कुसुमैः, सरोजैश्च = कमलैश्च, परस्परम् = अन्योन्या, लक्ष्मीं = शोभा, विस्मयवन्ति=आश्चर्ययुक्तानि (सन्ति), आदरेण=आस्थया, आलोकयाञ्चक्रुरिव = ददृशुरिव ।

व्युत्पत्ति —निलीनभृङ्गैः = निलीना भृङ्गा येषु तानि निलीनभृङ्गाणि, तैः ( ब० व्री० )। नेत्रकल्पैः =ईषदसमाप्तानि नेत्राणि नेत्रकल्पानि, तैः (कल्पप्प्रत्यय )। ( पदद्वयमपि पुष्पसरोजविशेषणम् )। पुष्पैः = 'स्त्रिय सुमनस पुष्प प्रसून कुसुमं सुमम् ।' इत्यमर । सरोजैः = सरसि जातानि सरोजानि, तैः, 'सप्तम्या जनेर्ड' इति डप्रत्यय । परस्परा = 'कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये समासवच्च बहुलम्' इति द्विरुक्ति । विस्मयवन्ति = विस्मयोऽस्ति येषा तानि ( मतुप् )। अत्रोत्प्रेक्षा तुल्ययोगितया उपमया यथासंख्येन च उत्थापितेति सङ्कर ।

भावाऽर्थ —वनानि जलानि च कनीनिकायमानभ्रमरैः नेत्रसदृशैः पुष्पैः कमलैश्च अन्योन्यशोभा सविस्मयमास्थया ददृशुरिव।

भाषाऽर्थ —वन और जल भौंरोंसे युक्त तथा नेत्रसदृश पुष्प और कमलोंसे एक दूसरेकी शोभा आश्चर्यपूर्वक मानों आदरसे देख रहे थे ॥ ५ ॥

प्रभातवाताहतिकम्पिताकृति कुमुद्वतीरेणुपिशङ्गविग्रहम् ।
निरास भृङ्गं कुपितेव पद्मिनी न मानिनी संसहतेऽन्यसङ्गमम् ॥ ६ ॥

अन्वय —प्रभातवाताहतिकम्पिताकृति पद्मिनी कुपिता इव कुमुद्वतीरेणुपिशङ्गविग्रह भृङ्ग निरास, ( तथा हि ) मानिनी अन्यसङ्गम न ससहते ।

प्रयोगप०—प्रभातवाताऽऽहतिकम्पिताकृत्या पद्मिन्या कुपितयेव कुमुद्वतीरेणुपिशङ्गविग्रहो भृङ्गो निरासे, मानिन्या अन्यसङ्गमो न संसह्यते ।

व्याख्या—प्रभातवाताहतिकम्पिताकृति = विभातवाय्वाघातचालिताकारा, पद्मिनी = कमलिनी, कुपिता इव = क्रुद्धा इव ( खण्डिता नायिकेवेति भाव । खण्डितालक्षण यथा —'पार्श्वमेति प्रियो यस्य अन्यसम्भोगचिह्नित । सा खण्डितेति कथिता धीरैरीर्ष्याकषायिता ॥' इति )। कुमुद्वतीरेणुपिशङ्गविग्रह = कुमुदिनीपरागपिशङ्गशरीर, भृङ्ग = भ्रमर, निरास = निरस्तवती, ( तथा हि ) मानिनी= मानवती स्त्री, अन्यसंगम पत्युर्नायिकान्तरसंसर्गं न संसहते = न क्षमते ।

व्युत्पत्ति —प्रभातवाताहतिकम्पिताऽऽकृति = प्रभातस्य वात प्र . (ष० त०), 'नभस्वद्वातपवनपवमानप्रभञ्जना ।' इत्यमर । प्रभातवातस्य आहति प्रभातवाताहति (ष० त०)। कम्पिता आकृतिर्यस्या सा कम्पिताकृति (ब० व्री०)।

वाताहत्या कम्पिताऽऽकृतिः प्रभातवाताऽऽहतिकम्पिताऽऽकृतिः (तृ० त०)। पद्मिनी=पद्मानि सन्ति यस्याः सा, इनिप्रत्ययः, तदन्तात् 'ऋन्नेभ्यो ङीप्' इति ङीप्। तीरेणुपिशङ्गविग्रहम्=कुमुद्वत्या रेणवः कुमुद्वतीरेणवः (ष० त०)। पिशङ्गः विग्रहः यस्य स पिशङ्गविग्रहः (बहु०)। कुमुद्वतीरेणुभिः पिशङ्गविग्रहः कुमुद्वतीरेणुपिशङ्गविग्रहस्तम् (तृ० त०)। निरास=निरुपसर्गपूर्वकात् 'असु क्षेपणे' इति धातोर्लिट्। मानिनी-प्रशस्तः मानः अस्ति यस्याः सा (इनिस्तदन्तान्ङीप् च) अन्यसङ्गमम्=अन्यस्याः सङ्गमः अन्यसङ्गमस्तम् (ष० त०), 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति पूर्वपदस्य पुं । 'न मानिनीशः सहतेऽन्यसङ्गमम्' इति पाठे अन्यस्याः सङ्गमो यस्य स अन्यसङ्गमस्तम् (ब० व्री०), ईशः=पतिमित्यर्थो बोध्यः। सामान्येन विशेषसमर्थनात् अर्थान्तरन्यासः। तल्लक्षणं यथा—'सामान्यं वा विशेषेण विशेषस्तेन वा यदि। कार्यं च कारणेनेदं कार्येण च समर्थ्यते। साधर्म्येणेतरेणाऽर्थान्तरन्यासोऽष्टधा ततः॥' इति वशस्थवृत्तं, तल्लक्षणं यथा—'जतौ तु वशस्थमुदीरितं जरौ।' इति।

भावार्थः—प्रभातकालिकवायुसंसर्गेण कम्पिताकारा पद्मिनी खण्डिता नायिकेव कुमुद्वतीपरागसंसृष्टशरीरं भृङ्गं निरास, यतः अभिमानिनी नायिका स्वप्रियस्य नायिकान्तरसम्पर्कं न मर्षति।

भाषाऽर्थ—प्रातःकालकी हवासे कम्पित आकारवाली कमलिनी खण्डिता नायिकाकी तरह मानों कुपित होकर कुमुद्वतीके परागसे रञ्जित शरीरवाले भौंरेको हटाती है, क्योंकि अभिमानिनी स्त्री अपने प्रियका दूसरी नायिकासे सम्पर्कको सहन नहीं करती है॥ ६॥

दत्तावधानं मधुलेहिगीतौ प्रशान्तचेष्टं हरिणं जिघांसुः।
आकर्णयन्नुत्सुकहंसनादाँल्लक्ष्ये समाधिं न दधे मृगावित्॥ ७॥

अन्वयः—मधुलेहिगीतौ दत्ताऽवधानं प्रशान्तचेष्टं हरिणं जिघांसुः मृगावित् उत्सुकहंसनादान् आकर्णयन् लक्ष्ये समाधिं न दधे।

प्रयोगप०— हरिणं जिघांसुना मृगाविधा उत्सुकहंसनादान् आकर्णयता (सता) लक्ष्ये समाधिर्न दधे।

व्याख्या—मधुलेहिगीतौ=भ्रमरगाने, दत्ताऽवधानं=दत्तचित्तं (हरिणानां गानप्रियत्वादिति भावः), प्रशान्तचेष्टं=पलायनादिचेष्टारहितं, हरिणं=मृगं, जिघांसुः=हन्तुमिच्छुः, मृगावित्=व्याधः, उत्सुकहंसनादान्=उत्कण्ठितहंसशब्दान्, आकर्णयन्=शृण्वन् (तदासक्तचित्तत्वादिति भावः), लक्ष्ये=शरव्ये (मृगरूपे इत्यर्थः), समाधिम्=एकाग्रतां, न दधे=न अधारयत् (अपूर्वो भावो भावान्तरं प्रतिबध्नातीति भावः)।

व्युत्पत्ति —मधुलेहिगीतौ=मधु लिहन्तीति तच्छीला मधुलेहिन, मधुपदपूर्वकात् 'लिह आस्वादने' इति धातोर्णिनि । 'मधुलेहगीतौ' इति पाठान्तरे-लिहन्तीति लेहा, 'पचाद्यच्' मधुनो लेहा मधुलेहा ( ष० त० ), मधु लिहन्तीति मधुलेहा, 'कर्मण्यण्' इत्यण वा। मधुलेहिना गीति मधुलेहिगीति, तस्याम् ( ष० त० ) । दत्ताऽवधान=दत्तमवधान येन स दत्ताऽवधानस्तम् ( बहु० ), 'अवधान समाधान प्रणिधान तथैव च ।' इति कोष । प्रशान्तचेष्ट=प्रशान्ता चेष्टा यस्य स प्रशान्तचेष्टस्तम् ( बहु० ) । हरिण='मृगे कुरङ्गवातायुहरिणाऽजिनयोनय ।' इत्यमर । जिघासु=हन्तुमिच्छु जिघासु, सन्नन्तात् हन्धातो 'सनाशसभिक्ष उ' इत्युप्रत्यय । मृगावित्=मृगान् विध्यतीति मृगावित्, 'व्यध ताडने' इति धातो क्विप, 'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीना ङिति च' इति सम्प्रसारण, 'नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ' इति पूर्वस्य दीर्घ । उत्सुकहसनादान्=उत्सुकाश्च ते हसा उत्सुकहसा ( क० धा० ), तेषा नादा उत्सुकहसनादानास्तान् (ष० त०) । आकर्णयन्='लक्षणहेत्वो क्रियाया' इति शतृप्रत्यय । वर्त्तमानकालस्य भूतेनाऽभिसम्बध्यमानत्वेऽपि 'धातुसम्बन्धे प्रत्यया' इति साधुत्वम् । अत्र जिघासादिसामग्रीसत्त्वेऽपि लक्ष्यसमाधिरूपकार्यस्य हसनादाकर्णनेन अनुत्पत्ते उक्तनिमित्ता विशेषोक्तिरलङ्कार । 'सति हेतौ फलाऽभावो विशेषोक्तिस्तथा द्विधा ।' इति तल्लक्षणम् ।

भावाऽर्थ —भ्रमरगाने दत्तचित्त निश्चेष्ट मृग हन्तुमिच्छु व्याध उत्कण्ठित हसशब्दान् शृण्वन् ( तदासक्तचित्तत्वेन ) मृगरूपे शरव्ये एकाग्रता नाऽधारयत् ।

भाषाऽर्थ —भ्रमरों के गीतमें दत्तचित्त अतएव निश्चेष्ट अतएव मृगको मारनेकी इच्छा करनेवाले व्याध ( बहेलिया ) ने उत्कण्ठित हसोंके शब्दोंको सुनकर मृगरूप निशानेमें एकाग्रता नहीं की ॥ ७ ॥

गिरेर्नितम्बे मरुता विभिन्न तोयाऽवशेषेण हिमाभमभ्रम् ।
सरिन्मुखाऽभ्युच्चयमादधान शैलाऽधिपस्याऽनुचकार लक्ष्मीम् ॥ ८ ॥

अन्वय —गिरे नितम्बे मरुता विभिन्न तोयाऽवशेषेण हिमाभ सरिन्मुखाऽभ्युच्चयम् आदधानम् अभ्र शैलाऽधिपस्य लक्ष्मीम् अनुचकार ।

प्रयोगप०—विभिन्नेन हिमाभेन सरिन्मुखाऽभ्युच्चयमादधानेन अभ्रेण शैलाऽधिपलक्ष्मीरनुचक्रे ।

व्याख्या—गिरे =पर्वतस्य, नितम्बे=कटके ( मध्यभागे इत्यर्थ ), मरुता=वायुना, विभिन्न=विस्तारित, तोयाऽवशेषेण=जलाऽवशेषेण ( अल्पजलाऽवशिष्टत्वेन ), हिमाभ=तुषारप्रभ, सरिन्मुखाऽभ्युच्चयम्=नदीप्रवाहवृद्धिम्, आदधान=कुर्वाणम् ( प्राक्क्षण एव वृष्ट्या कृतोच्चयमित्यर्थ ), अभ्र=मेघ, शैलाऽधिपस्य=

पर्वतेश्वरस्य ( हिमालयस्येत्यर्थ ), लक्ष्मीं = शोभाम् अनुचकार = अनुकृतवत्, हिमालयसदृशीं शोभा प्रापेति भाव )।

व्युत्पत्ति —नितम्बे = 'कटकोऽस्त्री नितम्बोऽद्रे' इत्यमर । तोयाऽवशेषेण = तोयानामवशेषस्तोयाऽवशेषस्तेन ( ष० त० ), 'हेतौ' इति तृतीया । हिमाऽऽभं = हिमस्येव आभा यस्य-तत् ( बहु० ) सरिन्मुखाऽभ्युच्चय = सरिता मुखानि सरिन्मुखानि ( ष० त० ), सरिन्मुखेषु अभ्युच्चय सरिन्मुखाऽभ्युच्चयस्तम् (स० त०)। शैलाऽधिपस्य = शैलानाम् अधिप शैलाऽधिपस्तस्य ( ष० त० )।

भावाऽर्थ —पर्वतमध्यभागे वायुना विस्तारितोऽल्पजलाऽवशिष्टत्वेन हिमसदृशो नदीप्रवाहवृद्धिं कुर्वाण मेघो हिमालयशोभा विडम्बयामास ।

भाषाऽर्थ —पर्वतके मध्यभागमे वायुसे विस्तारित, थोड़ा जल बाकी रहनेसे बर्फकी तरह और नदीप्रवाह बढ़ानेवाले मेघने हिमालय पर्वत को शोभाका अनुकरण ( नकल ) किया ॥ ८ ॥

गर्जन् हरि साऽम्भसि शैलकुञ्जे प्रतिध्वनीनात्मकृतान्निशम्य ।
क्रम बबन्ध क्रमितु सकोप प्रतर्कयन्नन्यमृगेन्द्रनादान् ॥ ९ ॥

अन्वय —हरि साऽम्भसि शैलकुञ्जे गर्जन् आत्मकृतान् प्रतिध्वनीन् निशम्य अन्यमृगेन्द्रनादान् प्रतर्कयन् सकोप ( सन् ) क्रमितु क्रम बबन्ध ।

प्रयोगप०—हरिणा गर्जता प्रतर्कयता सकोपेन (सता) क्रमितु क्रमो बबन्धे ।

व्याख्या—हरि = सिंह, साऽम्भसि = सजले, शैलकुञ्जे = पर्वतनिकुञ्जे, गर्जन् = शब्द कुर्वन्, आत्मकृतान् = स्वगर्जनोत्पन्नान्, प्रतिध्वनीन् = प्रतिशब्दान्, निशम्य = श्रुत्वा, अन्यमृगेन्द्रनादान् = प्रतिसिंहगर्जितानि, प्रतर्कयन् = मन्यमान, सकोप = क्रुद्ध ( सन् ) क्रमितुम् = उत्पतितु क्रम = पादन्यास, बबन्ध = चकार ।

व्युत्पत्ति —हरि = 'सिंहो मृगेन्द्र पञ्चाऽऽस्यो हर्यक्ष केसरी हरि ।' इत्यमर । साऽम्भसि = अम्भसा सहित साऽम्भा, तस्मिन् ( बहु० )। शैलकुञ्जे = शैलस्य कुञ्ज शैलकुञ्ज, तस्मिन् ( ष० त० ), 'निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे ।' इत्यमर । आत्मकृतान् = आत्मना कृता आत्मकृतास्तान् ( तृ० त० )। अन्यमृगेन्द्रनादान् = मृगेषु इन्द्रो मृगेन्द्र (स० त०), अन्यश्चासौ मृगेन्द्र अन्यमृगेन्द्र, ( क० धा० ), तस्य नादा अन्यमृगेन्द्रनादास्तान् ( ष० त० )। सकोप = कोपेन सहित सकोप (बहु०)। अत्र स्वप्रतिध्वनिषु सादृश्यात् प्रतिसिंहगर्जनभ्रान्तेर्भ्रान्तिमदलङ्कार । 'साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान्प्रतिभोत्थित ।' इति साहित्यदर्पण ।

भावाऽर्थ —सिंहो जलयुक्ते पर्वतनिकुञ्जे गर्जन् स्वगर्जनप्रतिध्वनीन् श्रुत्वा प्रतिसिंहशब्दान् मन्यमान क्रुद्ध सन् आक्रमितु तत्परोऽभूत् ।

भाषार्थ—सिंह जलयुक्त पर्वतनिकुञ्जमें गर्जन करता हुआ गर्जनकी प्रतिध्वनियोंको 'ये दूसरे सिंहके शब्द हैं' ऐसा विचारता हुआ क्रुद्ध होकर आक्रमणके लिए तैयार हुआ ॥ ९ ॥

**अदृक्षताऽम्भांसि नवोत्पलानि रुतानि चाऽश्रोषत षट्पदानाम् ।**
**आघ्रायि वान् गन्धवहः सुगन्धस्तेनाऽरविन्दव्यतिषङ्गवांश्च ॥ १० ॥**

अन्वय—तेन नवोत्पलानि अम्भांसि अदृक्षत, षट्पदानां रुतानि अश्रोषत, वान् अरविन्दव्यतिषङ्गवान् सुगन्धो गन्धवहः आघ्रायि च ।

प्रयोगप०—स नवोत्पलानि अम्भांसि अदर्शत् ( अद्राक्षीद्वा ), रुतानि अश्रौषीत्, वान्तम् अरविन्दव्यतिषङ्गवन्तं सुगन्धं गन्धवहम् आघ्रात् ( आघ्रासीद्वा ) ।

व्याख्या—तेन=रामेण, नवोत्पलानि=नूतनकमलयुक्तानि, अम्भांसि—जलानि, अदृक्षत=दृष्टानि । षट्पदानां=भ्रमराणां, रुतानि=झङ्काराः, अश्रोषत=श्रुतानि । वान्=मन्दं गच्छन्, अरविन्दव्यतिषङ्गवान्=कमलसम्पर्कयुतः, सुगन्धः=शोभनगन्धः, गन्धवहः=वायुः, आघ्रायि च=घ्रातश्च ( एवं सर्वतः लाभात् श्रमसम्भावना नासीदिति भावः ) ।

व्युत्पत्ति—नवोत्पलानि=नवानि उत्पलानि येषु तानि ( बहु० ) । अम्भांसि='अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशम्बरम् ।' इत्यमरः । कर्मत्वेऽपि 'अदृक्षत' इति तिङन्तपदेन उक्तत्वात्प्रथमा । अदृक्षत=दृशेः कर्मणि लुङि चिण्वदिङभावपक्षे 'शल इगुपधादनिटः क्सः' इति प्राप्तस्य क्सादेशस्य 'न दृशः' इति निषेधः । हलन्तत्वात् 'लिङ्सिचावात्मनेपदेषु' इति कित्त्वान्न गुणः । षट्पदानां=षट् पदानि येषां ते षट्पदास्तेषाम् ( बहु० ), 'द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः' इत्यमरः । अश्रोषत='श्रु श्रवणे' इति धातोः कर्मणि लुङ् । वान्=वातीति वान्, 'वा गतिगन्धनयोः' इति धातोः शतृप्रत्ययः । अरविन्दव्यतिषङ्गवान्=अरविन्दानां व्यतिषङ्गः अरविन्दव्यतिषङ्गः ( ष० त० ), स अस्याऽस्तीति ( मतुप् ) । सुगन्धः=शोभनः गन्धः यस्य सः (बहु०) । 'गन्धस्येदुत्पूतिसुसुरभिभ्यः' इति इकारो न भवति, गन्धस्येत्त्वे तदेकान्तग्रहणात् । गन्धवहः=वहतीति वहः, पचाद्यच् । गन्धस्य वहो गन्धवहः (ष० त० ) । आघ्रायि='घ्रा गन्धोपादाने' इति धातोः कर्मणि लुङ्, चिणि युक् ।

भावार्थ—रामो नवकमलशोभिताञ्जलाशयानपश्यत्, भ्रमरझङ्कारानश्रौषीत, मन्दगतिं कमलसम्पर्कसुरभिं वायुमाघ्राच्च ।

भाषार्थ—रामचन्द्रने नये कमलोंसे शोभित जलाशयोंको देखा, भ्रमरोंके शब्दोंको सुना और मन्द मन्द चलते हुए तथा कमलके सम्पर्कसे खुशबूदार वायुका आघ्राण भी किया ॥ १० ॥

लताऽनुपात कुसुमान्यगृह्णात् स नद्यवस्कन्दमुपास्पृशच्च ।
कुतूहलाच्चारुशिलोपवेशं काकुत्स्थ ईषत्स्मयमान आस्त ॥ ११ ॥

अन्वय—स काकुत्स्थ कुतूहलात् ईषत् स्मयमानो लताऽनुपात कुसुमानि अगृह्णात्, नद्यवस्कन्दम् उपास्पृशत्, चारुशिलोपवेशम् आस्त च।

प्रयोगप०—तेन काकुत्स्थेन स्मयमानेन कुसुमानि अगृह्यन्त, उपास्पृश्यत, आस्यत च।

व्याख्या—स = पूर्वोक्त, काकुत्स्थ = रामचन्द्र, कुतूहलात् = कौतुकात्, ईषत् = मन्द, स्मयमान = हसन्, लताऽनुपात = लता लताम् अनुपात्य आसाद्य वा लतामनुपात्य अनुपात्य, कुसुमानि = पुष्पाणि, अगृह्णात् = गृहीतवान्। नद्यव स्कन्द=नदीं नदी गत्वा वा नदीं गत्वा गत्वा, उपास्पृशत् = आचामत् ( आचमन कृतवानित्यर्थ )। चारुशिलोपवेश = सुन्दरशिला सुन्दरशिलामुपविश्य वा सुन्दरशिलामुपविश्य उपविश्य, आस्त = आसितवान् ( विश्राम कृतवानित्यर्थ )।

व्युत्पत्ति—काकुत्स्थ =ककुदि (महोक्षरूपस्येन्द्रस्येत्यर्थ) तिष्ठतीति काकुत्स्थ (कप्रत्यय), तस्याऽपत्य पुमान् काकुत्स्थ, 'तस्याऽपत्यम्' इत्यण्, 'तद्धितेष्वचामादे' इत्यादिवृद्धिश्च। स्मयमान = स्मयते इति स्मयमान, 'स्मिङ् ईषद्धसने' इति धातो शानच्, 'आने मुक्' इति मुगागमश्च। अत्र ईषत्पदस्य धात्वर्थाऽन्तःपातित्वेऽपि पुनर्ग्रहण गुरुजनसकाशे विनयाऽतिशयोपेतमन्दहास्यद्योतनाऽर्थम्। लताऽनुपात = लता लतामनुपात्य ( आसाद्य ) लतामनुपात्याऽनुपात्य वा। नद्यवस्कन्द = नदीं नदीमवस्कन्द्य ( गत्वा ) नदीमवस्कन्द्य अवस्कन्द्य वा। चारुशिलोपवेश = चारुश्चाऽसौ शिला चारुशिला ( क० धा० )। चारुशिला चारुशिलामुपविश्य चारुशिलामुपविश्य उपविश्य वा, त्रिष्वपि 'विशिपतिपदिस्कन्दां व्याप्यमानाऽऽसेव्यमानयो' इति द्वितीयाऽन्ते उपपदे णमुल्। 'उपपदमतिङ्' इति समास। 'कृन्मेजन्त' इत्यव्ययत्वम्। अगृह्णात् = 'ग्रह उपादाने' इति धातो लङि श्नाप्रत्यय सम्प्रसारण च। उपास्पृशत् = 'स्पृश संस्पर्शने' इति धातोर्लङ्। 'उपस्पर्शस्त्वाचमनम्' इत्यमर। आस्त = 'आस उपवेशने' इति धातोर्लङ्। 'अकर्मकधातुभिर्योगे देश कालो भावो गन्तव्योऽध्वा च कर्मसञ्ज्ञक इति वाच्यम्' इति सकर्मकत्वम्।

भावाऽर्थ—राम कौतुकात् मन्दहास्य कुर्वन् लता लतामासाद्य पुष्पावचाय मकरोत्, नदीं नदीं गत्वा आचचाम तथा च चारुशिला चारुशिलामुपाविशच्च।

भाषाऽर्थ—रामचन्द्रजीने कौतुकसे कुछ हँसकर लतामें पहुँच पहुँचकर फूलोंको तोड़ा, नदीमें जा जाकर आचमन किया और सुन्दर पत्थर पर बैठ बैठकर विश्राम भी किया ॥ ११ ॥

तिग्माऽशुरश्मिच्छुरिताऽन्यदूरात् प्राञ्चि प्रभाते सलिलान्यपश्यत् ।
गभस्तिधाराभिरिव द्रुतानि तेजांसि भानोर्भुवि सम्भृतानि ॥ १२ ॥

अन्वय —(स) प्रभाते अदूरात् प्राञ्चि तिग्माऽशुरश्मिच्छुरितानि सलिलानि गभस्तिधाराभि द्रुतानि (सन्ति) भुवि सम्भृतानि भानो तेजांसि इव अपश्यत् ।

प्रयोगप०—(तेन) प्राञ्चि तिग्माशुरश्मिच्छुरितानि सलिलानि द्रुतानि सम्भृतानि तेजांसीव अदृश्यन्त ।

व्याख्या—( स = राम ) प्रभाते = प्रातःकाले, अदूरात् = समीपे, प्राञ्चि = प्राच्यानि (पूर्वदिग्भवानि), तिग्माऽशुरश्मिच्छुरितानि=सूर्यकिरणरञ्जितानि, सलिलानि = जलानि, गभस्तिधाराभि = किरणपरम्पराभि, द्रुतानि = क्षरितानि (सन्ति), भुवि = पृथिव्या, सम्भृतानि = सञ्चितानि, भानो = सूर्यस्य, तेजांसि इव = दीप्ती इव, अपश्यत् = ददर्श ।

व्युत्पत्ति —अदूरात = न दूरमदूर तस्मात् ( नञ्० स० ), 'दूराऽन्तिकाऽर्थेभ्यो द्वितीया च' इत्यत्र चात् पञ्चमी ( तृतीया च ), 'सप्तम्यधिकरणे च' इत्यत्राऽपि चात दूराऽन्तिकार्थेभ्य सप्तम्यपि । तिग्माशुरश्मिच्छुरितानि = तिग्मा अंशव यस्य स तिग्मांशु ( बहु० ), 'तिग्म तीक्ष्ण खर तद्वत्' इत्यमर । तिग्मांशो ( सूर्यस्य ) रश्मय तिग्माऽशुरश्मय ( ष० त० ), तैश्छुरितानि तिग्माशुरश्मिच्छुरितानि ( तृ० त० ), तानि (कर्म, सलिलविशेषणम्), गभस्तिधाराभि = गभस्तीना धारा॰ गभस्तिधारास्ताभि ( ष० त० ), 'किरणोस्रमयूखाऽशुगभस्तिघृणिरश्मय ।' इत्यमर । अपश्यत्=दृशेर्लङि 'पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदा पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदा' इति पश्यादेश । अत्रोत्प्रेक्षाऽलङ्कार तल्लक्षण यथा— 'भवत्सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना ।' इति ।

भावाऽर्थ —राम प्रात निकटे पूर्वदिग्भवानि सूर्यकिरणरञ्जितानि जलानि किरणपरम्पराभि क्षरितानि पृथिव्या सञ्चितानि सूर्यतेजांसि इव अपश्यत् ।

भाषाऽर्थ —रामचन्द्रजीने प्रातःकालमें निकट ही पूर्वदिशामें विद्यमान, सूर्यकिरणोंसे रञ्जित जलोंको किरणसमूहोंसे विगलित होकर पृथिवीपर सञ्चित सूर्यकी दीप्तियोंके सदृश विचार किया ॥ १२ ॥

दिव्यापिनीर्लोचनलोभनीया मृजान्वया स्नेहमिव स्रवन्ती ।
ऋज्वायता सस्यविशेषपङ्क्तीस्तुतोष पश्यन्वितृणाऽन्तराला ॥ १३ ॥

अन्वय —( स ) दिव्यापिनी लोचनलोभनीया मृजान्वया स्नेह स्रवन्तीरिव ऋज्वायता वितृणाऽन्तराला सस्यविशेषपङ्क्ती पश्यन् तुतोष ।

प्रयोगप०—( तेन ) सस्यविशेषपङ्क्ती पश्यता तुतुषे ।

व्याख्या—दिग्व्यापिनी = दिगन्तविस्तीर्णा, लोचनलोभनीया = नेत्रप्रलोभिका, मृजाऽन्वया = शुद्ध्यन्विता ( स्वच्छा इत्यर्थः ), स्नेहं=चिक्कणतां, स्रवन्तीः इव = क्षरन्तीः इव, ऋज्वायता = सरलदीर्घा, वितृणाऽन्तराला = उत्पाटिताऽन्तस्तृणा, सस्यविशेषपङ्क्ती = शाल्यादिसस्यराजीः पश्यन् = अवलोकयन्, तुतोष = तुष्टवान् ।

व्युत्पत्तिः—दिग्व्यापिनी = दिशो व्याप्नुवन्तीति तच्छीलाः दिग्व्यापिन्यस्ताः ( णिनिस्तदन्तान्ङीप् च ) । लोचनलोभनीया = लोभयन्तीति लोभनीया, 'लुभ विमोहने' इति धातोः 'कृत्यल्युटो बहुलम्' इति वचनात् कर्तरि अनीयर् । लोचनानां लोभनीया लोचनलोभनीयास्ताः ( ष० त० ), सस्यविशेषपङ्क्तिविशेषणम् । मृजाऽन्वया = मार्जनं मृजा, शुद्धिः 'मृजू शौचाऽलङ्करणयोः' इति धातोः 'षिद्भिदादिभ्योऽङ्' इत्यङ् । मृजया अन्वयः ( अनुगमः ) यासां, ताः मृजाऽन्वयाः, ताः ( बहु० ) । स्रवन्तीरिव=अत्रोत्प्रेक्षा अलङ्कारः, लक्षणं प्रागुक्तम् । ऋज्वायता =ऋजवश्च ता आयताः ऋज्वायतास्ताः ( क० धा० ) 'ऋजावजिह्मप्रगुणौ' इत्यमरः । वितृणान्तराला = विगतानि तृणानि येभ्यस्तानि वितृणानि 'प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः' इति बहुव्रीहिः उत्तरपदलोपश्च । वितृणानि अन्तरालानि यासां ताः वितृणाऽन्तरालास्ताः ( बहु० ) सस्यविशेषपङ्क्ती =सस्यानां विशेषाः सस्यविशेषाः ( ष० त० ), तेषां पङ्क्तयः सस्यविशेषपङ्क्तयस्ताः ( ष० त० ) । अत्र स्वभावोक्तिरलङ्कारः, तल्लक्षणं यथा—'स्वभावोक्तिर्दुरूहाऽर्थस्वक्रियारूपवर्णनम् ।' इति साहित्यदर्पणे ।

भावार्थः—रामचन्द्रः अतिविस्तीर्णाः दृष्टिमधुराः स्वच्छाः स्निग्धाः सरलदीर्घाः उत्खाताऽन्तस्तृणाः शाल्यादिसस्यपङ्क्तीर्विलोकयन्नतुष्यत् ।

भाषाऽर्थ—रामचन्द्रजी दिशाओंमें फैली हुई, नेत्रोंको लुभानेवाली, स्वच्छ, स्निग्ध, सरल और दीर्घ तथा भीतर तृणोंसे रहित शालि आदि अनाजोंकी पङ्क्तियों को देखकर सन्तुष्ट हुए ॥ १३ ॥

वियोगदुःखाऽनुभवाऽनभिज्ञैः काले नृपाऽशं विहितं ददद्भिः ।
अहार्यशोभारहितैरमायैरैक्षिष्ट पुम्भिः प्रचितान्स गोष्ठान् ॥१४॥

अन्वयः—सः वियोगदुःखाऽनुभवाऽनभिज्ञैः, विहितं नृपाऽशं काले ददद्भिः आहार्यशोभारहितैः अमायैः पुम्भिः प्रचितान् गोष्ठान् ऐक्षिष्ट ।

प्रयोगप०—तेन प्रचिताः गोष्ठाः ऐक्षिषत ।

व्याख्या—स =राम , वियोगदुःखाऽनुभवाऽनभिज्ञैः =विरहबाधाऽनुभूतिरहितैः विहित=धर्मशास्त्रनिर्दिष्ट, नृपाऽश राजदेय कर, काले=निर्दिष्टसमये, ददद्भिः = यच्छद्भिः , आहार्यशोभारहितैः = कटकाद्यलङ्कारसम्पाद्यकान्तिशून्यैः , अमायैः =अकपटैः , पुम्भिः =पुरुषैः ( गोपैरित्यर्थः ), प्रचितान्=व्याप्तान् , गोष्ठान् = गोनिवासान् ( व्रजानित्यर्थः ), ऐक्षिष्ट=अप्राक्षीत् ।

व्युत्पत्ति —वियोगदुःखाऽनुभवाऽनभिज्ञैः = वियोगेन (हेतुना) दुःख वियोगदुःखम् ( तृ० त० ), तस्य अनुभव वियोगदुःखाऽनुभव ( ष० त० ) न अभिज्ञा अनभिज्ञा ( नञ् ) । वियोगदुःखाऽनुभवे अनभिज्ञा वियोगदुःखानुभवाऽनभिज्ञास्तैः ( स० त० ) । विहित=विपूर्वकधाधातोः 'निष्ठा' इति क्तप्रत्यय , 'दधातेर्हि ' इति ह्यादेश । नृपाऽश=नृपस्य अशो नृपाऽशस्तम् ( ष० त० ) । ददद्भिः =ददतीति ददत तैः 'डुदाञ् दाने' इति धातोः शतृप्रत्यय , 'उभे अभ्यस्तम्' इति अभ्यस्तसज्ञत्वात् 'नाऽभ्यस्ताच्छतु ' इति नुमभाव । आहार्यशोभारहितैः =आहर्तुं योग्या आहार्या ( आहरणीया, कटकादिभिरिति शेष ), 'ऋहलोर्ण्यत्' इति ण्यत् । आहार्या चाऽसौ शोभा आहार्यशोभा ( क० धा० ), 'पुवत्कर्मधारयजातीयदेशीयेषु' इति पूर्वपदस्य पुवद्भाव ।आहार्यशोभया रहिता आहार्यशोभारहितास्तैः (तृ०त०)। अमायैः =अविद्यमाना माया तेषा ते अमायास्तैः , 'नञोऽस्त्यर्थाना वाच्यो वा चोत्तरपदलोप' इति नञ्बहुव्रीहि । गोष्ठान्=गावस्तिष्ठन्त्यत्रेति गोष्ठा गोनिवासास्तान् , 'सुपि स्थ' इति कप्रत्यय , यद्वा 'घञर्थे कविधानम्' इति कप्रत्यय । 'अम्बाऽम्बगोभूमिसव्यापाद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपरमेबर्हिर्दिव्यग्निभ्य स्थ ' इति षत्वम् । विशेष्य ( निवास ) लिङ्गविवक्षया पुँल्लिङ्गनिर्देश । 'गोष्ठ गोस्थानकम्' इत्यमरश्लोके तु विशेष्यभूतस्थानलिङ्गविवक्षया नपुसकत्वम् । ऐक्षिष्ट='ईक्ष दर्शने' इति धातोर्लुङ् ।

भावाऽर्थ —राम अननुभूतविरहदुःखैः शास्त्रनिर्दिष्ट राजदेय करम् उचितावसरे ददद्भिः कटकाद्यलङ्कारसम्पाद्यशोभारहितैः निश्छलैः पुरुषैर्व्याप्तानि गोष्ठानि ददर्श ।

भाषाऽर्थ —रामने वियोगदुःखके अनुभवमें अनभिज्ञ, धर्मशास्त्रनिर्दिष्ट राजदेय करको उचित अवसरमें देनेवाले, कुण्डल आदि कृत्रिम अलङ्कारोंकी शोभासे रहित तथा कपटशून्य ऐसे पुरुषों ( गोपों ) से व्याप्त गोष्ठों को देखा ॥ १४ ॥

स्त्रीभूषण चेष्टितमप्रगल्भ चारूण्यवक्राण्यपि वीक्षितानि ।
ऋजूश्च विश्वासकृत स्वभावान् गोपाङ्गनाना मुमुदे विलोक्य ॥१५॥

अन्वय —( स ) गोपाङ्गनाना स्त्रीभूषणम् अप्रगल्भम् चेष्टितम् अवक्राणि अपि चारूणि वीक्षितानि, विश्वासकृत ऋजून् स्वभावाश्च विलोक्य मुमुदे ।

प्रयोगप०—( तेन ) ···· मुमुदे।

व्याख्या—( राम ) गोपाऽङ्गनानाम=आभीरसुन्दरीणा, स्त्रीभूषण=नार्यलङ्कारभूतम्, अप्रगल्भम्=अधृष्ट, चेष्टित=व्यापारम्, अवक्राणि अपि=अकुटिलानि अपि ( कटाक्षादिरहितान्यपि इत्यर्थ ) चारूणि=सुन्दराणि, वीक्षितानि=विलोकितानि, विश्वासकृत =विश्वासजनकान्, ऋजून्=सरलान्, स्वभावाश्च=शीलानि च, विलोक्य=दृष्ट्वा, मुमुदे=हृष्टवान्।

व्युत्पत्ति—गोपाऽङ्गनानाम्=गोपानाम् अङ्गना गोपाऽङ्गनास्ताम् ( ष० त० ), 'गोपे गोपालगोसङ्ख्यगोधुगाभीरवल्लवा ।' इत्यमर । स्त्रीभूषण=स्त्रीणा भूषणं स्त्रीभूषण, तत् ( ष० त० ) । अप्रगल्भम्=न प्रगल्भम् अप्रगल्भ, तत् ( नञ्० ) । अवक्राणि=न वक्राणि अवक्राणि, तानि ( नञ्० ) । विश्वासकृत =विश्वास कुर्वन्तीति विश्वासकृतस्तान्, क्विप् प्रत्यय, 'ह्रस्वस्य पिति कृति तुक्' इति तुगागमश्च । 'ऋजूंश्च विश्वासकृत स भावान्' इति मल्लिनाथसम्मत पाठ । तन्मते—स =राम, =स्वभावानयमेवाऽर्थ । मुमुदे='मुद हर्षे' इति धातोर्लिट् । 'असयोगाल्लिट् कित्' इति कित्वाद् गुणा । ،

भावार्थ—रामो गोपीनां स्त्रीभूषणं सलज्ज चेष्टित, कटाक्षरहितान्यपि सुन्दराण्यवलोकितानि, विश्वासोत्पादकान् सरलस्वभावाश्च दृष्ट्वा प्रसन्नोऽभूत्।

भाषाऽर्थ—रामचन्द्र गोपियोंकी स्त्रीजनोचित भूषणभूत सलज्ज चेष्टा, कटाक्ष-रहित होकर भी सुन्दर दृष्टि-निक्षेप और विश्वासको उत्पन्न करनेवाले सुन्दर शीलोंको देखकर प्रसन्न हुए ॥ १५ ॥

विवृत्तपार्श्व रुचिराऽङ्गहार समुद्वहच्चारुनितम्बरम्यम् ।
आमन्द्रमन्थध्वनिदत्तताल गोपाऽङ्गनानृत्यमनन्दयत्तम् ॥ १६ ॥

अन्वय—विवृत्तपार्श्वं रुचिराङ्गहार समुद्वहच्चारुनितम्बरम्यम् आमन्द्रमन्थध्वनिदत्तताल गोपाङ्गनानृत्य तम् अनन्दयत्।

प्रयोगप०—विवृत्तपार्श्वेन रुचिराङ्गहारेण समुद्वहच्चारुनितम्बरम्येण आमन्द्रमन्थध्वनिदत्ततालेन गोपाऽङ्गनानृत्येन सोऽनन्द्यत ।

व्याख्या—विवृत्तपार्श्वं = तिर्यग्वलितपार्श्वं, रुचिराऽङ्गहार = सुन्दराऽङ्गविक्षेपं, समुद्वहच्चारुनितम्बरम्य=प्रचलद्रुचिरनितम्बसुन्दरम्, आमन्द्रमन्थध्वनिदत्ततालम्=ईषद्गम्भीरमन्थनशब्दार्पितकालक्रियामान, गोपाऽङ्गनानृत्य = वल्लवसुन्दरीलास्यं, तम्=रामम्, अनन्दयत्=आह्लादयाञ्चकार।

व्युत्पत्ति—विवृत्तपार्श्वं=विवृत्ते पार्श्वे यस्मिंस्तत् विवृत्तपार्श्वं ( बहु० ) । रुचि-

राऽङ्गहार=रुचिर अङ्गहार यस्मिंस्तत् ( बहु० ), 'अङ्गहारोऽङ्गविक्षेप' इत्यमर । समुद्वहच्चारुनितम्बरम्य=चारुश्चाऽसौ नितम्बश्चारुनितम्ब ( क० धा० )। समुद्वहश्चाऽसौ चारुनितम्ब समुद्वहच्चारुनितम्ब ( क० धा० ) तेन रम्यम् ( तृ० त० )। आमन्द्रमन्थध्वनिदत्ततालम्=ईषन्मन्द्र आमन्द्र 'कुगतिप्रादय' इति समास । मन्थस्य ध्वनि मन्थध्वनि ( ष० त० ) । आमन्द्रश्चासौ मन्थध्वनि आमन्द्रमन्थध्वनि ( क० धा० ) । दत्तस्तालो यस्मिंस्तत् दत्तताल ( बहु० ), 'ताल कालक्रियामानम्' इत्यमर । आमन्द्रमन्थध्वनिना दत्ततालम् ( तृ० त० ) गोपाऽङ्गनानृत्य=गोपानामङ्गना गोपाऽङ्गना ( ष० त० ) तासां नृत्यम् ( ष० त० )। अनन्दयत्=णिच्प्रत्ययान्तस्य 'टुनदि समृद्धौ' इति धातोर्लङि रूपम् । अत्र गात्रकर्मणि नृत्यत्वारोपाद्रूपकाऽलङ्कार । तल्लक्षण 'रूपक रूपितारोपाद्विषये निरपह्नवे ।' इति साहित्यदर्पणे । तच्च रूपक स्वभावोक्तिसङ्कीर्णम् ।

भावार्थ —गोपीना दधिमन्थनाऽवसरे तिर्यक्चलितपार्श्व सुन्दराङ्गविक्षेपयुक्त प्रचलता चारुनितम्बेन रुचिरम् ईषद्गम्भीरमन्थध्वनिना दत्तताल शरीरसञ्चलन नृत्यमिव ( नृत्यमपि पूर्वोक्तरूप भवति ) रामचन्द्रमाह्लादयाञ्चकार ।

भाषाऽर्थ —दही मथनेके समयमे दोनों पार्श्वोंके तिरछे चलनेसे सुन्दर अङ्गविक्षेपसे, सुन्दर नितम्बके हिलनेसे और कुछ गम्भीर मन्थनध्वनिरूप तालसे गोपियों के ( ग्वालिनोंके ) अङ्गसञ्चालनने नृत्यकी तरह रामचन्द्रको आनन्दित किया॥१६॥

**वैचित्रमुच्चै प्लवमानमारात कुतूहल त्रस्नु ततान तस्य ।**
**मेघाऽत्ययोपात्तवलोपशोभ कदम्बक वातमज मृगाणाम् ॥ १७ ॥**

अन्वय —विचित्रम् आरात् उच्चै प्लवमान त्रस्नु मेघाऽत्ययोपात्तवनोपशोभ वातमज मृगाणा कदम्बक तस्य कुतूहल ।

प्रयोगप०—विचित्रेण प्लवमानेन त्रस्नुना मेघाऽत्ययोपात्तवनोपशोभेन वातमजेन मृगाणा कदम्बकेन तस्य कुतूहल तेने ।

व्याख्या—विचित्र=चित्ररूपम् , आरात्=दूरात् , उच्चै =उन्नत, प्लवमान=वल्गत् , त्रस्नु=भयशील, मेघाऽत्ययोपात्तवनोपशोभ=शरदागमेन कानन सौन्दर्यं च प्राप्तवत् , वातमज=वाताऽभिगामि, मृगाणा=हरिणाना, कदम्बक=समूह , तस्य=रामस्य, कुतूहल=कौतुक ततान=वितस्तार ।

व्युत्पत्ति —विचित्र=विशेषेण चित्र विचित्र, सुप्सुपा समास । आरात्='आराद् दूरसमीपयो' इत्यमर । प्लवमान=प्लवते इति प्लवमानम् , 'प्लुङ् गतौ' इति धातो शानच् । त्रस्नु=त्रसनशीलमिति त्रस्नु 'त्रसी उद्वेगे' इति धातो 'त्रसिगृधिधृक्षिक्षिपे क्नु' इति क्नुप्रत्यय । मेघाऽत्ययोपात्तवनोपशोभं=मे त्ययो मेघात्यय.

( ष० त० ), तेन उपात्ते मेघात्ययोपात्ते ( तृ० त० )। वनं च उपशोभा च वनोपशोभे, 'चार्थे द्वन्द्वः'। मेघात्ययोपात्ते वनोपशोभे येन तत् ( ब० व्री० )। वातमजः=वातमजतीति वातमजः, 'वातशुनीतिलशर्द्धेष्वजधेट्तुदजहातिभ्यः खश उपसङ्ख्यानम्' इति वातोपपदादजेः खश्। 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमः। कदम्बकः='स्त्रियां तु संहतिर्वृन्दं निकुरम्बं कदम्बकम्।' इत्यमरः। स्वभावोक्तिरलङ्कारः।

भावार्थः—चित्ररूपो दूरात् उदग्रं वल्गन् अधीरः शरदागमेन प्राप्तकाननसौन्दर्यः वाताऽभि[illegible] मृगसमूहः [illegible] उत्सुकतां विस्तारितवान्।

भाषार्थ—चित्ररूपवाले, दूरसे ऊपर उछलते हुए, डरपोक, शरद् ऋतुके आनेसे वन और सौन्दर्यको पानेवाले और वायुके अभिमुख दौड़नेवाले मृगसमूहने रामकी उत्सुकता बढ़ाई ॥ १७ ॥

सिताऽरविन्दप्रचयेषु लीनाः [illegible] फेनेषु च सैकतेषु।
कुन्दाऽवदाताः कलहंसमालाः प्रतीयिरे श्रोत्रसुखैर्निनादैः ॥ १८ ॥

अन्वयः—सिताऽरविन्दप्रचयेषु संसक्तफेनेषु सैकतेषु च लीनाः कुन्दाऽवदाताः कलहंसमालाः श्रोत्रसुखैः निनादैः प्रतीयिरे।

प्रयोगप०—( रामः ) लीनाः कुन्दाऽवदाताः कलहंसमालाः प्रतीयाय।

व्याख्या—सिताऽरविन्दप्रचयेषु=पुण्डरीकसमूहेषु, [illegible] फेनेषु=लग्नडिण्डीरेषु, सैकतेषु च=सिकतामयस्थानेषु च, लीनाः=गुप्ताः, कुन्दाऽवदाताः=माघ्यपुष्पधवलाः, कलहंसमालाः=कादम्बपङ्क्तयः, श्रोत्रसुखैः=कर्णानन्दजनकैः, निनादैः=शब्दैः, प्रतीयिरे=प्रतीताः ( ज्ञाताः )।

व्युत्पत्तिः—सिताऽरविन्दप्रचयेषु=सितानि च तानि अरविन्दानि सिताऽरविन्दानि, ( क० धा० ) 'पुण्डरीकं सिताम्भोजम्' इत्यमरः। सिताऽरविन्दानां [illegible]: सिताऽरविन्द[illegible]स्तेषु ( ष० त० )। [illegible] फेनेषु=संसक्ताः फेना येषु तानि संसक्तफेनानि, तेषु ( बहु० )। 'डिण्डीरोऽब्धिकफः फेनः' इत्यमरः। सैकतेषु=सिकताः सन्ति येषां तानि सैकतानि, तेषु 'देशे लुबिलचौ च', इति चकारादण्। कुन्दाऽवदाताः=कुन्दानि इव अवदाताः [illegible]ऽवदाताः, 'उपमानानि सामान्यवचनैः' इति समासः। कलहंसमालाः=कलहंसानां मालाः ( ष० त० ), 'प्रतीयिरे' इति तिङा उक्तत्वादुक्ते कर्मणि [illegible]। 'कादम्बः कलहंसः स्यात्' इत्यमरः। श्रोत्रसुखैः=श्रोत्रयोः सुखाः श्रोत्रसुखास्तैः ( ष० त० )। निनादैः=ज्ञानरूपक्रियासिद्धौ प्रकृष्टोपकारकत्वात् 'साधकतमं करणम्' इति करणसंज्ञा, 'कर्तृकरणयोस्तृतीया' इति तृतीया। प्रतीयिरे=प्रतिपूर्वादिणः कर्मणि लिट्। 'इणो यण्' इति यण् 'द्विर्वचनेऽचि' इति यणः स्थानिवद्भावात् द्विर्वचने 'दीर्घ इणः किति' इत्यभ्यासदीर्घः।

भावार्थः—पुण्डरीकषण्डेषु लग्नफेनेषु सिकतामयतटेषु च गुप्ता माघ्यपुष्पधवला कादम्बपङ्क्तिः कर्णानन्दोत्पादकैः शब्दैर्ज्ञाता ।

भाषार्थ—रामचन्द्रजीने श्वेत कमलोंमें और फेनयुक्त सिक तटोंमें भी छिपे हुए कुन्दपुष्पके तुल्य सफेद कादम्ब हंसोंको कानमें सुख देनेवाले उनके शब्दोंसे जाना ॥ १८ ॥

न तज्जलं यन्न सुचारुपङ्कजं न पङ्कजं तद् यदलीनषट्पदम् ।
न षट्पदोऽसौ न जुगुञ्ज यः कलं न गुञ्जितं तन्न जहार यन्मनः ॥ १९ ॥

अन्वयः—तत् जलं न, यत् सुचारुपङ्कजं न, तत् पङ्कजं न, यत् अलीनषट्पदम्, असौ षट्पदो न, यः कलं न जुगुञ्ज, तत् गुञ्जितं न, यत् मनो न जहार ।

प्रयोगः०—तेन जलेन न, येन सुचारुपङ्कजेन न (बभूवे), तेन पङ्कजेन न, येन अलीनषट्पदेन (बभूवे), अमुना षट्पदेन न, येन कलं न जुगुञ्जे, तेन गुञ्जितेन न, येन मनो न जह्रे ।

व्याख्या—तत्=तथाभूतं जलम्=अम्बु, (तदाधारः कासारादिरित्यर्थः)। न, यत् सुचारुपङ्कजं न=सुन्दरकमलयुक्तं न । तत्=तथाभूतं, पङ्कजं न=कमलं न, यत् अलीनषट्पदम्=अस्थितभ्रमरम् । असौ षट्पदो न=अयं भ्रमरो न, यः, कलम्=अव्यक्तमधुरं, न जुगुञ्ज=न गुञ्जितवान् । तत्=तथाविधं, गुञ्जितं न = गुञ्जनं न, यत् मनः=चित्तं, न जहार=न अहरत् ।

व्युत्पत्तिः—सुचारुपङ्कजम्=अत्यन्तं चारु सुचारु (प्रादिसमासः)। सुचारु पङ्कजं यस्मिंस्तत् (बहु०)। पङ्कजम्=पङ्के जायते इति पङ्कजं, 'सप्तम्यां जनेर्डः' इति डप्रत्ययः । अलीनषट्पदम्=न लीना अलीनाः (नञ्०), षट्पदानि येषां ते षट्पदाः (बहु०)। अलीनाः षट्पदा यस्मिंस्तत् (बहु०) जुगुञ्ज='गुजि अव्यक्ते शब्दे' इति धातोर्लिट् । 'इदितो नुम् धातोः' इति नुम् । मनः = 'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः ।' इत्यमरः । अत्र पूर्वं पूर्वं विशेष्यं प्रति उत्तरोत्तरस्य अपोहकत्वेन विशेषणोक्तेरेकावल्यलङ्कारः, 'पूर्वं पूर्वं प्रति विशेषणत्वेन परं परम् । स्थाप्यतेऽपोह्यते वा चेत् स्यात्तदैकावली द्विधा ॥' इति तल्लक्षणम् ।

भावार्थः—शरदि कासारः सुन्दरकमलयुक्तः, कमलं लीनभ्रमरं, भ्रमरः कलगुञ्जनोपेतः, गुञ्जितं च मनोहारि बभूव ।

भाषार्थ—शरद्में वह तालाब नहीं था जहाँपर सुन्दर कमल नहीं था, वह कमल नहीं था जहाँपर भौंरा नहीं रहता था, वह भौंरा नहीं था जो अव्यक्त मधुर ध्वनि (झङ्कार) नहीं करे और वह झङ्कार नहीं था जो मनका हरण नहीं करे ॥ १९ ॥

त यायजूका सह भिक्षुमुख्यैस्तप कृशा शान्त्युदकुम्भहस्ताः ।
यायावरा पुष्पफलेन चाऽन्ये प्रानर्चुरर्च्या जगदर्चनीयम् ॥ २० ॥

अन्वय —तप कृशा यायजूका शान्त्युदकुम्भहस्ता भिक्षुमुख्यै सह जगदर्चनीय त प्रानर्चु , अर्च्या अन्ये यायावराश्च पुष्पफलेन प्रानर्चु ।

प्रयोगप०—तप कृशै यायजूकै शान्त्युदकुम्भहस्तै अर्च्यै अन्यै ... रैश्च जगदर्चनीय स प्रानर्चे ।

व्याख्या—तप कृशा = नियमाचरणदुर्बला , यायजूका = अतियजनशीला , शान्त्युदकुम्भहस्ता = शान्तिजलघटपाणय (सन्त) भिक्षुमुख्यै सह = परिव्राजकवर्यै समं, जगदर्चनीय = लोकपूज्य, त = रामचन्द्र, प्रानर्चु = प्रकर्षेण पूजयामासु , अर्च्या = पूज्या , अन्ये = अपरे, यायावरा = एकत्राऽनियतस्थाना (मुनिविशेषा), पुष्पफलेन = कुसुमप्रसवेन, प्रानर्चु = प्रकर्षेण पूजयामासु ।

व्युत्पत्ति —तप कृशा = तपसा कृशा ( तृ० त० )। यायजूका = अत्यर्थं यजनशीला यायजूका यङन्तात् यजे 'यजजपदशा यङ' इत्यूकप्रत्यय । शान्त्युदकुम्भहस्ता = उदकस्य कुम्भ उदकुम्भ ( ष० त० ) 'एकहलादौ पूरयितव्येऽन्यतरस्याम्' इत्युदकस्योदादेश । शान्त्यर्थं उदकुम्भ शान्त्युदकुम्भ , 'शाकपार्थिवादीनां सिद्धय उत्तरपदलोपस्योपसङ्ख्यानम्' इति मध्यमपदलोपी समास , शान्त्युदकुम्भो हस्ते येषा ते शान्त्युदकुम्भहस्ता ( बहु० )। 'सप्तमीविशेषणे बहुव्रीहौ' इति हस्तपदस्य पूर्वप्रयोगे प्राप्ते 'वाहिताग्न्यादिषु' इति परप्रयोग । यद्वा 'प्रहरणार्थेभ्य. परे निष्ठासप्तम्यौ' इति परप्रयोग , शान्त्युदकुम्भस्त्वहितनिवारणसाधर्म्यात् लक्षणया प्रहरणम् । भिक्षुमुख्यै = भिक्षुषु मुख्या भिक्षुमुख्यास्तै , 'यतश्च निर्द्धारणम्' इति सप्तमी, तत समास , सहयोगे 'सहयुक्तेऽप्रधाने' इति तृतीया । 'भिक्षु परिव्राट् कर्मन्दी' इत्यमर । जगदर्चनीयम् = अर्चितु योग्य अर्चनीय , 'अर्हे कृत्यतृचश्च' इत्यनीयर् । जगता जगद्भिर्वा अर्चनीय जगदर्चनीयस्तम् , 'कृत्याना कर्तरि वा' इति षष्ठी पक्षे तृतीया वा, तत समास । प्रानर्चु = 'अर्च पूजायाम्' इति धातोर्लिट् । 'अत आदे' इति दीर्घत्वम् , 'तस्मान्नुड् द्विहल' इति नुट् । अर्च्या = अर्चितु योग्या अर्च्या , 'ऋहलोर्ण्यत्' इति ण्यत् । यायावरा = भृश यान्तीति यायावरा , यङन्तात् याते 'यश्च यङ' इति वरच् , यङ्लुक् च । पुष्पफलेन = पुष्पाणि च फलानि च पुष्पफल, तेन, 'जातिरप्राणिनाम्' इति बहुप्रकृतिकद्वन्द्वैकवद्भाव ( समाहारद्वन्द्व )।

भावार्थ —तपोदुर्बला यज्ञशीला शान्तिजलघट गृहीत्वा भिक्षुवर्यै सह रामं पूजयामासु , पूज्या अन्ये यायावराश्च ... राम सत्कृतवन्त ।

भावार्थ—तपस्यासे दुर्बल यज्ञशील ऋषियोंने हाथमें शान्तिजलसे पूर्ण घड़ा लेकर श्रेष्ठ परिव्राजकोंके साथ जगत्के पूजनीय रामचन्द्रजी की पूजा की और अन्य यायावरों ( एक जगह एक रातसे ज्यादा नहीं रहनेवालों ) ने भी फूलों और फलोंसे रामचन्द्रजीका सत्कार किया ॥ २० ॥

विद्यामथैनं विजयां जयां च रक्षोगणं क्षिप्नुमविक्षतात्मा ।
अध्यापिपद् गाधिसुतो यथावन्निघातयिष्यन्युधि यातुधानान् ॥२१॥

अन्वय—अथ अविक्षतात्मा गाधिसुत युधि यातुधानान् निघातयिष्यन् रक्षोगणं क्षिप्नुं विजयां जयां च विद्याम् एनं यथावत् अध्यापिपत् ।

प्रयोगप०—अविक्षताऽऽत्मना गाधिसुतेन यातुधानान् निघातयिष्यता क्षिप्नु विद्याम् एष अध्यापि ।

व्याख्या—अथ = अनन्तरम् , अविक्षतात्मा = रागाद्यनुपहतचित्त , गाधिसुत = विश्वामित्र युधि = सङ्ग्रामे, यातुधानान् = राक्षसान् , निघातयिष्यन् = मारयिष्यन् , रक्षोगणं = राक्षससमूह, क्षिप्नु=निराकरिष्णु, विजया=विजयानाम्नीं, जयां च=जयानामिकां च, विद्यां = मन्त्रविशेषम् , एनं = रामचन्द्र, यथावत् = यथाविधि, अध्यापिपत् = पाठितवान् ( ग्राहितवानित्यर्थ ) ।

व्युत्पत्ति—अविक्षताऽऽत्मा = न विक्षत अविक्षत ( नञ्० ), अविक्षत आत्मा यस्य स ( बहु० ) । गाधिसुत =गाधे सुत गाधिसुत ( ष० त० ) । यातुधानान्= 'यातुधान पुण्यजनो नैर्ऋतो यातुरक्षसी ।' इत्यमर । निघातयिष्यन् = निघातयिष्यतीति निघातयिष्यन् , हेतुमण्णिजन्तात् हन्तेर्लृट 'लृट सद्वा' इति शत्रादेश । रक्षोगण=रक्षसा गणो रक्षोगणस्तम् ( ष० त० ) । क्षिप्नु=क्षिपतीति तच्छील क्षिप्नु , त 'क्षिप प्रेरणे' इति धातो 'त्रसिगृधि०' इत्यादिना क्नु । 'निराकरिष्णु क्षिप्नु स्यात्' इत्यमर । विद्या=विदन्ति अनयेति विद्या, ता, 'विद ज्ञाने' इति धातो 'सञ्ज्ञाया समजनिषदनिपतमनविदषुञ्शीङ्भृञिण ' इति क्यप् । एनं= 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माऽकर्मकाणामणि कर्ता स णौ' इति कर्मत्वम् , 'द्वितीयाटौस्स्वेन ' इत्येन । यथावत्=यथा अर्हतीति 'तदर्हम्' इति वति । अध्यापिपत् = अधिपूर्वात् 'इङ् अध्ययने' इति धातो हेतुमण्णिचि लुङ् । 'णौ च सन्चङो ' इति गाङभावपक्षे 'क्रीङ्जीनां णौ' इत्यात्व पुगादिविधयश्च ।

भावार्थ—ततो विश्वामित्र सङ्ग्रामे राक्षसान्मारयिष्यन् राक्षसविनाशिकां जयां विजयां च विद्यां रामं विधिपूर्वकं पाठयामास ॥ २१ ॥

भावार्थ—तब राग आदिसे अदूषित चित्तवाले विश्वामित्र [illegible] सङ्ग्राममें [illegible]सोंको मारनेके लिए जया

आयोधने स्थायुकमस्त्रजातममोघमभ्यर्णमहाऽऽहवाय।
ददौ वधाय क्षणदाचराणां तस्मै मुनिः श्रेयसि जागरूकः ॥ २२ ॥

अन्वयः—श्रेयसि जागरूको मुनिः अभ्यर्णमहाहवाय तस्मै क्षणदाचराणां वधाय आयोधने स्थायुकम् अमोघम् अस्त्रजातं ददौ।

प्रयोगप०—जागरूकेण मुनिना स्थायुकममोघमस्त्रजातं ददे।

व्याख्या—श्रेयसि = रामकल्याणे, जागरूकः = प्रबुद्धः, मुनिः = ऋषिः, अभ्यर्णमहाहवाय = निकटमहायुद्धाय, तस्मै = रामचन्द्राय, क्षणदाचराणां = निशाचराणां (राक्षसानाम्), वधाय = हननाय, आयोधने = युद्धे, स्थायुकं = स्थितिशीलम्, अमोघम् = अनिष्फलम् (सफलमित्यर्थः), [अस्त्रजा]तम् = अस्त्रसमूहं, ददौ = दत्तवान् (उपदिदेश इत्यर्थः)।

व्युत्पत्तिः—जागरूकः = जागरणशीलो जागरूकः, 'जागृ निद्राक्षये' इति धातोः 'जागरूकः' इत्यूकः। अभ्यर्णमहाहवाय = अभिपूर्वात् 'अर्द गतौ याचने च' इति धातोः कर्तरि क्तः। 'अभेश्चाऽविदूर्ये' इतीडभावः 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' इति नत्वम्। 'रषाभ्यां नो णः समानपदे' इति णत्वम्। आहूयन्ते अस्मिन्निति आहवः, आङ् पूर्वात् 'ह्वेञ् स्पर्धायां शब्दे च' इति धातोः 'आङि युद्धे' इत्यप् सम्प्रसारणं च। महाँश्चाऽसौ आहवः, महाहवः 'सन्महत्परमोत्कृष्टाः पूज्यमानैः' इति समासः 'आन्महतः समानाऽधिकरणजातीययोः' इति महत आत्वम्। अभ्यर्णो महाहवो यस्य सः, अभ्यर्णमहाहवस्तस्मै (बहु०)। क्षणदाचराणां=क्षणदायां चरन्तीति क्षणदाचरास्तेषाम्, 'चरेष्टः' इति टप्रत्ययः 'कर्तृकर्मणोः कृति' इति कर्मणि षष्ठी। आयोधने='युद्धमायोधनं जन्यम्' इत्यमरः। स्थायुकं=स्थातुं शीलमस्य तत् स्थायुकं, तत्, 'ष्ठा गतिनिवृत्तौ' इति धातोः 'लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ्' इत्युकञ्। 'आतो युक् चिण्कृतोः' इति युगागमः। अमोघं = न मोघममोघं, तत् (नञ०)। अस्त्रजातम् = अस्त्राणां जातमस्त्रजातं तत् (ष० त०)। ददौ = दाधातोर्लिटि णल् 'आत औ णलः' इत्यौकारादेशः।

भावार्थः—रामहितसम्पादनतत्परो मुनिर्निकटमहायुद्धाय रामाय राक्षसवधाय युद्धे स्थितिशीलं सफलमस्त्रसमूहं दत्तवान्।

भाषाऽर्थ—रामके कल्याणमें सावधान ऋषिने निकटकालमें महायुद्धके लिए तत्पर रामचन्द्रको राक्षसोंके नाशके लिए स्थितिशील अव्यर्थ अस्त्रसमूह दिया ॥२२॥

तं विप्रदर्शं कृतघातयत्ना यान्तं वने रात्रिचरी डुढौके।
जिघांसुवेदं धृतभासुराऽस्त्रस्तां ताडकाऽऽख्यां निजघान रामः ॥ २३ ॥

ऽभिभूतसमुच्चरच्चारुपतत्त्रिशिञ्जम् = उच्चतरवेदपाठतिरोहितोच्चस्सुन्दरपक्षिशब्दं, तपोवनं = तपस्याकाननम्, आलुलोके = ददर्श।

व्युत्पत्ति—अथ='मङ्गलाऽनन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः। हुतधूमकेतुशिखाञ्जनस्निग्धसमृद्धशाखम्=धूमः केतुः (ध्वजः) यस्य सः धूमकेतुः = अग्नि (बहु०)। हुतश्चासौ धूमकेतुः हुतधूमकेतुः (कर्म०), तस्य शिखाः (ज्वालाः) हुतधूमकेतुशिखाः (ष० त०)। तासाम् अञ्जनानि (तदुत्थकज्जलानि) हुतधूमकेतुशिखाञ्जनानि (ष० त०)। तैः स्निग्धाः हुतधूमकेतुशिखाऽञ्जनस्निग्धाः (तृ० त०), ताः समृद्धाः शाखाः यस्य तत् हुतधूमकेतुशिखाञ्जनस्निग्धसमृद्धशाखम्, तत् (बहु०)। प्राऽध्ययनाऽभिभूतसमुच्चरच्चारुपतत्त्रिशिञ्जम्=प्रकृष्टमध्ययनं प्राध्ययनं (प्रादिसमास), तेन अभिभूता प्राध्ययनाऽभिभूता (तृ० त०)। शिञ्जनं शिञ्जा, 'शिजि अव्यक्ते शब्दे' इति धातोः 'गुरोश्च हलः' इत्यप्रत्ययः। पतन्तः त्रायन्ते इति पतत्त्राणि (पक्षाः), 'आतोऽनुपसर्गे कः' इति कः। पतत्त्राणि सन्ति येषां ते पतत्त्रिणः, 'अत इनिठनौ' इतीनिप्रत्ययः। पतत्त्रिणां शिञ्जा पतत्त्रिशिञ्जा (ष० त०)। प्राऽध्ययनाऽभिभूता समुच्चरन्ती चार्वी पतत्त्रिशिञ्जा यस्मिंस्तत् प्राध्ययनाऽभिभूतसमुच्चरच्चारुपतत्त्रिशिञ्जं (बहु०), तत्। तपोवनं=तपसो वनं तपोवनं, तत् (ष० त०)। आलुलोके='लोकृ दर्शने' इति धातोः कर्तरि लिट्, तङ् अभ्यासह्रस्वश्च।

भावाऽर्थः—ताडकावधाऽनन्तरं रामः तर्पिताऽग्निज्वालोत्थितकज्जलैः चिक्कण पुष्पफलसमृद्धविटपयुक्तम् उच्चतरवेदपाठेन तिरोहितोच्चस्सुन्दरपक्षिशब्दं तपोवनमपश्यत्।

भाषाऽर्थ—तब रामचन्द्रने हवन किये गये अग्निकी ज्वालाओंसे बने हुए कज्जलोंसे चिकने और फल-फूलोंसे समृद्ध शाखाओंसे युक्त तथा जहाँपर वेदपाठकी उच्चतर ध्वनिसे पक्षियों का सुन्दर शब्द दब गया है ऐसे तपोवनको देखा ॥२४॥

क्षुद्रान्न जक्षुर्हरिणान्मृगेन्द्रा विसस्रसे पक्षिगणैः समन्तात्।
नन्नम्यमाना फलदित्सयेव चकाशिरे तत्र लता विलोलाः ॥ २५ ॥

अन्वय—तत्र मृगेन्द्राः क्षुद्रान् हरिणान् न जक्षुः। समन्तात् पक्षिगणैः विसस्रसे। विलोलाः लताः फलदित्सयेव नन्नम्यमानाः चकाशिरे।

प्रयोगप०—मृगेन्द्रैः क्षुद्राः हरिणाः न जक्षिरे। पक्षिगणाः विसस्रंसुः विलोलाभिर्लताभिः नन्नम्यमानाभिश्चकाशे।

व्याख्या—तत्र=तस्मिन् (तपोवने इत्यर्थः), मृगेन्द्राः=सिंहाः, क्षुद्रान्=दुर्बलान्, हरिणान्=मृगान् (हरिणपदं पशूपलक्षणं, पशूनित्यर्थः), न जक्षुः=न

अन्वय —विप्रदर्शं कृतघातयत्ना रात्रिचरी वने यान्तं तं ढुढौके । राम ताड-काऽऽख्यां तां जिघांसुवेदं धृतभासुराऽस्त्र ( सन् ) निजघान ।

प्रयोगप०—विप्रदर्शं कृतघातयत्नया रात्रिचर्या वने यान् स ढुढौके, रामेण धृत भासुराऽस्त्रेण ( सता ) सा निजघ्ने ।

व्याख्या—विप्रदर्शं=सर्वान् ब्राह्मणान् दृष्ट्वा, कृतघातयत्ना=विहितहिंसो-द्योगा, रात्रिचरी=राक्षसी ( ताडकेत्यर्थः ), वने=अटव्यां, यान्तं=गच्छन्तं, तं= रामं, ढुढौके=प्राप्तवती । राम =रामचन्द्र , ताडकाऽऽख्यां=ताडकानाम्नीं, तां= राक्षसीं, जिघांसुवेदं=जिघांसु ( हननेच्छुम् ) विदित्वा (ज्ञात्वा), धृतभासुराऽस्त्र= गृहीतदीप्तशस्त्र ( सन् ), निजघान=निहतवान् ( तामिति शेषः ।

व्युत्पत्ति —विप्रदर्शं=सर्वान् विप्रान् दृष्ट्वा इति विप्रदर्शं, 'कर्मणि दृशिविदोः साकल्ये' इति णमुल् ( तदन्तमव्ययम् ) । कृतघातयत्ना=घातस्य यत्नो घातयत्नः ( ष० त० ) कृतो घातयत्नो यया सा ( बहु० ) । रात्रिचरी=रात्रौ चरतीति टप्रत्य-यो ङीप् च, 'उपपदमतिङ्' इत्युपपदसमास । वने='अटव्यरण्यं विपिनं गहनं काननं वनम् ।' इत्यमर । ढुढौके=ढौकेर्गत्यर्थाल्लिट् । ताडकाख्यां=ताडका आख्या यस्या सा ताडकाऽऽख्या, ताम् ( बहु० ) । जिघांसुवेद=हन्तुमिच्छुर्जिघांसु (सन्प्र-त्यय ) । साकल्येन जिघांसु विदित्वा जिघांसुवेदम् ( पूर्ववत् णमुल् ) । अत्र ताड-काया एकत्वेऽपि तदवयवेषु जिघांसुत्वसम्भवात् साकल्योक्ति । धृतभासुराऽस्त्र=धृतं भासुरम् अस्त्रं येन स ( बहु० ) ।

भावाऽर्थ —ब्राह्मणान् दृष्ट्वा कृतहिंसोद्योगा राक्षसी वने गच्छन्तं रामं प्राप । रामस्ताडकाख्यां तां वधेच्छुं ज्ञात्वा गृहीतदीप्ताऽस्त्र सन् तां जघान ।

भाषाऽर्थ —ब्राह्मणोंको देखकर मारनेका प्रयत्न करनेवाली ताडका नामकी राक्षसीने वनमें जाते हुए रामको पा लिया । रामने भी उसको मारनेके लिए जानकर उज्ज्वल अस्त्रोंको लेकर मारा ॥ २३ ॥

अथाऽऽलुलोके हुतधूमकेतुशिखाऽञ्जनस्निग्धसमृद्धशाखम् ।
तपोवनं प्राध्ययनाऽभिभूतसमुच्चरच्चारुपतत्त्रिशिञ्जम् ॥ २४ ॥

अन्वय —अथ ( राम ) हुतधूमकेतुशिखाऽञ्जनस्निग्धसमृद्धशाखं प्राध्ययनाऽ-भिभूतसमुच्चरच्चारुपतत्त्रिशिञ्जं तपोवनम् आलुलोके ।

प्रयोगप०—( रामेण ) तपोवनम् आलुलोके ।

व्याख्या—अथ=ताडकावधाऽनन्तर ( राम =रामचन्द्र ), हुतधूमकेतुशि-खाऽञ्जनस्निग्धसमृद्धशाख=तर्पिताऽग्निज्वालाकज्जलचिक्कणप्रवृद्धविटप, प्राऽध्ययना-

पुत्रौ च, मधुपर्कमिश्रम् = दधिमधुघृतसहितम्, आसनादि = विष्टरादि, प्रत्यग्रहीष्टाम् = प्रतिगृहीतवन्तौ।

व्युत्पत्ति—आतिथ्यनिष्णा = अतिथ्यर्थम्, 'आतिथ्यम्, 'अतिथेर्ण्यः' इति ण्यप्रत्यय। निष्णान्तीति निष्णा 'आतश्चोपसर्गे' इति क, 'निनदीभ्यां स्नातेः कौशले' इति षत्वम्। आतिथ्ये निष्णा आतिथ्यनिष्णा (स० त०)। वनवासिमुख्या = वने वसन्तीति तच्छीला वनवासिन, 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनि (उपपदसमास)। 'शयवासवासिष्वकालात्' इति विकल्पविधानात् लुक्। वनवासिषु मुख्या वनवासिमुख्या (स० त०)। विष्टरपाद्यमाल्यै = विस्तीर्यते इति विष्टर, विपूर्वात् 'स्तृञ् आच्छादने' इति धातो 'ऋदोरप्' इत्यप्, 'वृक्षाऽऽसनयोर्विष्टर' इति षत्वम्। पादाऽर्थमुदकं पाद्य, 'पादाऽर्घाभ्यां च' इति यत्, 'पाद्य पादाय वारिणि' इत्यमर। माला एव माल्यानि, 'चतुर्वर्णादीनां स्वाऽर्थे उपसङ्ख्यानम्' इति स्वाऽर्थे (प्रकृत्यर्थे) ष्यञ्। विष्टरश्च पाद्य च माल्य च विष्टरपाद्यमाल्यानि, तै (द्वन्द्व)। क्षितिपालपुत्रौ = क्षितिं पालयतीति क्षितिपाल, णिजन्तात् 'पा रक्षणे' इति धातो अण् (उपपद०)। क्षितिपालस्य पुत्रौ (ष० त०)। अपूपुजन् = स्वार्थिकण्यन्तस्य पूजेश्चङि उपधाह्रस्व 'दीर्घो लघो' इत्यभ्यासस्य दीर्घ। मधुपर्कमिश्र = मधुपर्केण मिश्र मधुपर्कमिश्र, तत् (तृ० त०)। आसनाऽऽदि = आसनम् आदिर्यस्य तत् आसनाऽऽदि, तत् (बहु०)। प्रत्यग्रहीष्टाम् = प्रतिपूर्वात् 'ग्रह उपादाने' इति धातोर्लुङि तसस्तामादेश। 'ग्रहोऽलिटि दीर्घ' इति दीर्घ, षत्वष्टुत्वे।

भावाऽर्थ—अतिथिसत्कारकुशला ऋषय आसनपाद्यादकमाल्यै रामलक्ष्मणौ पूजयामासु। रामलक्ष्मणौ च मधुपर्कयुक्तमासनादि स्वीकृतवन्तौ।

भाषाऽर्थ—अतिथिसत्कारमें कुशल ऋषियोंने आसन, पाद्य और मालासे राम और लक्ष्मणकी पूजा की, उन्होंने भी मधुपर्कसहित आसन आदिको स्वीकार किया॥

'दैत्याऽभिभूतस्य युवामवोढं मग्नस्य दोर्भिर्भुवनस्य भारम्।
हवींषि सम्प्रत्यपि रक्षतं' तौ तपोधनैरित्थमभाषिषाताम्॥ २७॥

अन्वय—'(हे दाशरथी!) युवां दैत्याऽभिभूतस्य मग्नस्य भुवनस्य भारं दोर्भिः अवोढं, सम्प्रति हवींषि रक्षतम्' इत्थं तौ तपोधनैः अभाषिषाताम्।

प्रयोगप०—'युवाभ्यां भुवनस्य भार ऊढाहि, सम्प्रत्यपि हवींषि रक्ष्यन्ताम्' इत्थं तौ तपोधना अभाषिषत।

व्याख्या—'(हे दाशरथी = हे रामलक्ष्मणौ!) युवां, दैत्याऽभिभूतस्य = असुरपीडितस्य, मग्नस्य = नष्टप्रायस्य, भुवनस्य = लोकस्य, भारं = दुःखधुरं,

अभक्षयन् । समन्तात्=सर्वत, पक्षिगणै = विहङ्गमकुलै, विशश्वसे = विश्वस्तम् ( विश्वासपूर्वक पक्षिणो विचेरुरित्यर्थ )। विलोला = चञ्चला, लता = वल्लर्य, फलदित्सया इव = फलदानेच्छया इव, नम्यमाना = फलभरेण भृश नमन्त्य ( सत्य ), चकाशिरे = शुशुभिरे ।

व्युत्पत्ति —तत्र = तस्मिन्निति तत्र, 'सप्तम्यास्त्रल्' इति त्रल् । मृगेन्द्रा = मृगेषु इन्द्रा मृगेन्द्रा (स० त०) 'सिंहो मृगेन्द्र पञ्चास्य ' इत्यमर । जक्षु ='अद भक्षणे' इति धातोर्लिट् । 'लिट्यन्यतरस्याम्' इत्यदेर्घस्लादेश, 'गमहनजनखन-घसां लोप क्ङित्यनङि' इत्युपधालोप । 'शासिवसिघसीनां च' इति षत्वम् । पक्षिगणै = पक्षिणां गणा पक्षिगणास्तै (ष० त० )। विशश्वसे = 'श्वस प्राणने' इति धातोर्भावे लिट् । विलोला =विशेषेण लोला विलोला, 'सुप्सुपा' समास । लता = 'वल्ली तु व्रततिर्लता' इत्यमर । फलदित्सया = दातुमिच्छा दित्सा । दाधातो सन्, 'सनि मीमाघुरभलभशकपतपदामच इस्' इति इस्, 'अत्र लोपोऽभ्यासस्य' इति अभ्यासलोपश्च । 'स स्यार्धधातुके' इति सस्य त । 'अप्रत्ययात्' इति अप्रत्यय, ततष्टाप् । फलानां दित्सा फलदित्सा, तया । कर्मणि षष्ठी, तत 'कृद्योगा च षष्ठी समस्यत इति वाच्यम्' इति समास । नम्यमाना ='णम प्रह्वत्वे शब्दे' इति धातो र्यङि 'नुगतोऽनुनासिकान्तस्य' इति नुक् । तत शानच्, मुगागमश्च । चकाशिरे= 'काशृ दीप्तौ' इति धातोर्लिट् ।

भावार्थ —तस्मिंस्तपोवने सिंहा दुर्बलान् मृगान् न भक्षितवन्त । पक्षिगणा सर्वत विश्रब्धमुषितवन्त फलभाराऽवनता लताश्च शुशुभिरे ।

भाषार्थ —उस तपोवनमें सिंह दुर्बल मृगोंको नहीं खाते थे । पक्षिगण सर्वत्र विश्वासपूर्वक रहते थे । चञ्चल लतायें मानों फल देनेकी इच्छासे बहुत ही अवनत हो कर रहती थीं ॥ २५ ॥

अपूपुजन्विष्टरपाद्यमाल्यैरातिथ्यनिष्णा वनवासिमुख्या ।
प्रत्यग्रहीष्टा मधुपर्कमिश्र तावासनाऽऽदि क्षितिपालपुत्रौ ॥ २६ ॥

अन्वय —आतिथ्यनिष्णा वनवासिमुख्या विष्टरपाद्यमाल्यै तौ क्षितिपालपुत्रौ अपूपुजन् । तौ क्षितिपालपुत्रौ च मधुपर्कमिश्रम् आसनादि प्रत्यग्रहीष्टाम् ।

प्रयोगप०—आतिथ्यनिष्णैर्वनवासिमुख्यै ( तौ ) अपूजिषाताम् । ताभ्यां क्षितिपालपुत्राभ्यां च मधुपर्कमिश्रम् आसनादि प्रत्यग्राहि ।

व्याख्या—आतिथ्यनिष्णा =अतिथिसत्कारकुशला, वनवासिमुख्या = महर्षय, विष्टरपाद्यमाल्यै =आसनपादाऽर्थजलमालाभि, ( तौ = पूर्वोक्तौ ), क्षितिपालपुत्रौ = राजपुत्रौ, रामलक्ष्मणौ इत्यर्थ, अपूपुजन् = पूजयामासु, तौ, क्षितिपाल-

पुत्रौ च, मधुपर्कमिश्रम् = दधिमधुघृतसहितम्, आसनादि = विष्टरादि, प्रत्यग्रही-षाताम् = प्रतिगृहीतवन्तौ।

व्युत्पत्ति—आतिथ्यनिष्णा = अतिथ्यर्थम्, 'आतिथ्यम्, 'अतिथेर्ञ्यः' इति ञ्यप्रत्यय। निष्णान्तीति निष्णा 'आतश्चोपसर्गे' इति क, 'निनदीभ्यां स्नातेः कौशले' इति षत्वम्। आतिथ्ये निष्णा आतिथ्यनिष्णा (स० त०)। वन वासिमुख्या = वने वसन्तीति तच्छीला वनवासिन, 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनि (उपपदसमास)। 'शयवासवासिष्वकालात्' इति विकल्पविधानात् लुक्। वनवासिषु मुख्या वनवासिमुख्या (स० त०)। विष्टरपाद्यमाल्यै = विस्तीर्यते इति विष्टर, विपूर्वात् 'स्तॄञ आच्छादने' इति धातो 'ॠदोरप्' इत्यप्, 'वृक्षाऽऽसनयोर्विष्टर' इति षत्वम्। पादाऽर्थमुदक पाद्य, 'पादाऽर्घाभ्यां च' इति यत्, 'पाद्य पादाय वारिणि' इत्यमर। माला एव माल्यानि, 'चतुर्वर्णादीनां स्वाऽर्थे उपसंख्यानम्' इति स्वाऽर्थे (प्रकृत्यर्थे) ष्यञ्। विष्टरश्च पाद्य च माल्य च विष्टरपाद्यमाल्यानि, तै (द्वन्द्व)। क्षितिपालपुत्रौ = क्षितिं पालयतीति क्षितिपाल, णिजन्तात् 'पा रक्षणे' इति धातो अण् (उपपद०)। क्षितिपालस्य पुत्रौ (ष० त०)। अपूपुजन्=स्वार्थिकण्यन्तस्य पूजेर्लुङि उपधाह्रस्व 'दीर्घो लघो' इत्यभ्या-सस्य दीर्घ। मधुपर्कमिश्र = मधुपर्केण मिश्र मधुपर्कमिश्र, तत् (तृ० त०)। आस नाऽऽदि = आसनम् आदिर्यस्य तत् आसनाऽऽदि, तत् (बहु०)। प्रत्यग्रहीषाताम् = प्रतिपूर्वात् 'ग्रह उपादाने' इति धातोर्लुङि तमस्तामादेश। 'ग्रहोऽलिटि दीर्घ' इति दीर्घ, षत्वष्टुत्वे।

भावाऽर्थ—अतिथिसत्कारकुशला ऋषय आसनपाद्योदकमाल्यै रामलक्ष्मणौ पूजयामासु। रामलक्ष्मणौ च मधुपर्कयुक्तमासनादि स्वीकृतवन्तौ।

भाषाऽर्थ—अतिथिसत्कारमें कुशल ऋषियोंने आसन, पाद्य और मालासे राम और लक्ष्मणकी पूजाकी, उन्होंने भी मधुपर्कसहित आसन आदिको स्वीकार किया॥

'दैत्याऽभिभूतस्य युवामबोढं मग्नस्य दोर्भिर्भुवनस्य भारम्।
हवींषि सम्प्रत्यपि रक्षतं' तौ तपोधनैरित्थमभाषिषाताम्॥ २७॥

अन्वय—'(हे दाशरथी!) युवां दैत्याऽऽभिभूतस्य मग्नस्य भुवनस्य भार दोर्भि अबोढ, सम्प्रति हवींषि रक्षतम्' इत्थं तौ तपोधनै अभाषिषाताम्।

प्रयोगप०—'युवाभ्या भुवनस्य भार ऊढाहि, सम्प्रत्यपि हवींषि रक्ष्यन्ताम्' इत्थं तौ तपोधना अभाषिषत।

व्याख्या—'(हे दाशरथी = हे रामलक्ष्मणौ!) युवां, दैत्याऽभिभूतस्य = असुरपीडितस्य, मग्नस्य = नष्टप्रायस्य, भुवनस्य = लोकस्य, भार = रक्षणभार,

दोर्भि = बाहुभि , अवोढं = धृतवन्तौ ( बाहुबलेन युगान्तरेषु युवाभ्यां दैत्यवधः कृत इति भाव )। सम्प्रति अपि = अधुनाऽपि, हवींषि = हव्यानि ( पशुपुरोडाशादीनि इत्यर्थ ), रक्षत = पालयतम् ।' इत्थम् = अनेन प्रकारेण, तौ = रामलक्ष्मणौ, तपोधनै = ऋषिभि , अभाषिषाताम् = भाषितौ ।

व्युत्पत्ति —दैत्याऽभिभूतस्य = दितेरपत्यानि पुमांसो दैत्या , 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्य ' इति ण्यप्रत्यय । दैत्यैरभिभूत (पीडितम्) दैत्याऽभिभूत तस्य (तृ० त०)। भुवनस्य='अथो जगती लोको विष्टप भुवन जगत् ।' इत्यमर । दोर्भि = 'भुजबाहू प्रवेष्टो दो ' इत्यमर । अवोढ = 'वह प्रापणे' इति धातो लुङि थसस्तम् , 'सहिवहोरोदवर्णस्य' इत्योत्वे घत्वादिकार्यम् । रक्षत = रक्षे प्रार्थनायां लोटि थसस्तमादेश । इत्थम्=अनेन प्रकारेण इति 'इदमस्थमु ' इति थमु । तपोधनै = तप एव धन येषां ते तपोधनास्तै ( बहु० )। अभाषिषाताम् = 'भाष व्यक्तायां वाचि' इति धातो कर्मणि लुङि, सिचि, इडागम ।

भावाऽर्थ —'हे दाशरथी ! युवां प्रागपि दैत्यपीडित लोकमरक्षतम् , अतोऽधुनाऽपि हवींषि रक्षतम्' इति ऋषय रामलक्ष्मणौ अकथयन् ।

भाषाऽर्थ —'हे राम लक्ष्मण ! तुम दोनोंने पहले भी दैत्यपीडित नष्टप्राय लोकके संरक्षणका भार अपने हाथोंसे ढोया था, अत अब भी हविकी रक्षा करो' तपस्वियोंने राम और लक्ष्मणको ऐसा कहा ॥ २७ ॥

तान् प्रत्यवादीदथ राघवोऽपि 'यथेप्सित प्रस्तुत कर्म धर्म्यम् ।
तपोमरुद्भिर्भवतां शराऽग्नि सन्धुक्ष्यतां नोऽरिसमिन्धनेषु' ॥ २८ ॥

अन्वय —अथ राघव अपि तान् प्रत्यवादीत् '( हे तपोधना ! ) धर्म्यं कर्म यथेप्सित प्रस्तुत, भवतां तपोमरुद्भि न शराऽग्नि अरिसमिन्धनेषु सन्धुक्ष्यताम् ।'

प्रयोगप०—राघवेणाऽपि ते प्रत्यवादिषत, '( युष्माभि ) कर्म प्रस्तूयताम् । भवतां तपोमरुत न शराऽग्नि सन्धुक्षन्ताम्' ।

व्याख्या—अथ = अनन्तर, राघवोऽपि = रामचन्द्रोऽपि, तान् = ऋषीन् , प्रत्यवादीत् = प्रत्युवाच, ( हे तपोधना ! ) धर्म्यं = धर्मादनपेत, कर्म = यज्ञक्रिया, यथेप्सित = यथेष्ट, प्रस्तुत = आरभ्यताम् । भवतां = युष्माक, तपोमरुद्भि = तपश्चर्यावायुभि , न = अस्माक, शराऽग्नि = बाणाऽनल , अरिसमिन्धनेषु = शत्रुकाष्ठेषु, सन्धुक्ष्यताम् = सन्दीप्यताम् ।

व्युत्पत्ति —राघव = रघोरपत्य पुमान् , 'तस्याऽपत्यम्' इत्यण् । प्रत्यवादीत् = प्रतिपूर्वात् 'वद व्यक्तायां वाचि' इति धातो 'वदव्रजहलन्तस्याऽच ' इति वृद्धि , 'इट ईटि' इति सलोप । धर्म्यं=धर्मादनपेत धर्म्यं, तत् , 'धर्मपथ्यर्थन्यायादनपेते'

इति पद्म्। यथेप्सितम् = आप्नोतेः सन्नन्तात् कर्मणि क्तः, 'आपज्ञप्यृधामीत्' इतीत्-अभ्यासलोपश्च। ईप्सितमनतिक्रम्य यथेप्सितम्। 'अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाऽभावाऽत्ययाऽसम्प्रतिशब्दप्रादुर्भावपश्चाद्यथाऽऽनुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्याऽन्तवचनेषु' इति पदार्थाऽनतिवृत्तिरूपे यथाऽर्थे अव्ययीभावः। प्रस्तुत = प्रपूर्वं 'ष्टुञ् स्तुतौ' इति धातुः प्रारम्भे वर्तते, तस्मात् लोटि थस्य तः। तपोमरुद्भिः = तपांसि एव मरुतः तपोमरुतः, तैः, 'मयूरव्यंसकादयश्च' इति रूपकसमासः, मयूरव्यंसकादिराकृतिगणः। नः = 'अस्मदो द्वयोश्च' इति बहुवचनम्, 'बहुवचनस्य वस्नसौ' इत्यस्मच्छब्दस्य नसादेशः। शराऽग्निः = शर एव अग्निः (रूपक०), 'कलम्बमार्गणशराः' इत्यमरः। अरिसमिन्धनेषु = समीचीनानि इन्धनानि समिन्धनानि (प्रादिसमासः), 'काष्ठं दार्विन्धनं त्वेधः' इत्यमरः। अरय एव समिन्धनानि अरिसमिन्धनानि, तेषु (रूपक०)। सन्धुक्ष्यताम् = 'धुक्ष सन्दीपने' इति धातोः कर्मणि लोट्, 'धुक्षिष्यते' इति मल्लिनाथसम्मतः पाठः। धुक्षिष्यते = सन्दीपिष्यते इत्यर्थे कर्मणि लृट्। रूपकाऽलङ्कारः।

भावार्थः—ततो रामचन्द्रस्तान्प्रत्यब्रवीत्—'हे मुनयः! यज्ञमारभध्वं, युष्माकं तपोवातैर्नः शराग्निः शत्रुकाष्ठेषु सन्दीप्यताम्'।

भाषाऽर्थ—तब रामचन्द्र ने भी ऋषियों से कहा—'आप लोग धर्म कार्य का आरम्भ करें, आप लोगों के तपस्यारूपी वायु से हमारा बाणरूप अग्नि शत्रुरूप काष्ठों में प्रज्वलित हो उठे॥ २८॥

प्रतुष्टुवुः कर्म ततः प्रक्लृप्तैस्ते यज्ञियैर्द्रव्यगणैर्यथावत्।
दक्षिण्यदिष्टं कृतमार्त्विजीनैस्तद्यातुधानैश्चिचिते प्रसर्पत्॥ २९॥

अन्वयः—ततः ते प्रक्लृप्तैः यज्ञियैः द्रव्यगणैः यथावत् कर्म प्रतुष्टुवुः। दक्षिण्यदिष्टम् आर्त्विजीनैः कृतं प्रसर्पत् तत् यातुधानैः चिचिते।

प्रयोगप०—तैः कर्म प्रतुष्टुवे। तत् (कर्म) यातुधानाः चिचितुः।

व्याख्या—ततः = रामवाक्याऽनन्तरं, ते = मुनयः, प्रक्लृप्तैः = सम्पन्नैः, यज्ञियैः = यज्ञकर्माऽर्हैः, द्रव्यगणैः = पदार्थसमूहैः (पशुसोमादिभिरित्यर्थः), यथावत् = विधिपूर्वकं, कर्म = यज्ञकर्म, प्रतुष्टुवुः = प्रारेभिरे। दक्षिण्यदिष्टं = दक्षिणाऽर्होपदिष्टम्, आर्त्विजीनैः = ऋत्विक्कर्माऽर्हैः, कृतम् = अनुष्ठितम्, प्रसर्पत् = प्रवर्तमानं, तत् = यज्ञकर्म, यातुधानैः = राक्षसैः, चिचिते = ज्ञातम्।

व्युत्पत्तिः—ततः = तस्मादिति ततः, 'पञ्चम्यास्तसिल्' इति तसिल्। प्रक्लृप्तैः = प्रकर्षेण क्लृप्ताः प्रक्लृप्तास्तैः (सुप्सुपा०)। 'कृपू सामर्थ्ये' इति धातोः क्तः, 'कृपो रो लः' इति रेफस्य लत्वम्। यज्ञियैः = यज्ञमर्हन्तीति यज्ञियास्तैः, 'यज्ञर्त्विग्भ्यां

घञर्थो' इति, 'यज्ञर्त्विग्भ्यां तत्कर्मार्हतीत्युपसंख्यानम्' इत्यनेन तत्कर्माऽर्हतीत्यर्थे घप्रत्ययः, 'आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्' इति घस्य इय । द्रव्यगणै = द्रव्याणां गणा द्रव्यगणास्तैः ( ष० त० )। प्रतुष्टुवुः = स्तौतेर्लिट । दक्षिण्यदिष्टं= दक्षिणामर्हन्तीति दक्षिण्या, 'कडङ्करदक्षिणाच्छ च' इति चकाराद्यत्प्रत्ययः । 'दक्षिणीयो दक्षिणाऽर्हस्तत्र दक्षिण्य इत्यपि' इत्यमरः । दक्षिण्यैर्दिष्टम् ( तृ० त० )। आर्त्विजीनैः=ऋत्विक्कर्म अर्हन्तीति आर्त्विजीनाः, तैः 'यज्ञत्विग्भ्याम्' इत्यादिना खञ्, 'आयनेयी' इत्यादिना खस्येन, आदिवृद्धिः । प्रसर्पत्=प्रसर्पतीति प्रसर्पत्, 'सृप्लृ गतौ' इति धातोर्लट शत्रादेशः । चिचिते='चिती संज्ञाने' इति धातोः कर्मणि लिट।

भावार्थ—रामवचनानन्तरं मुनयो यज्ञमारब्धवन्तः । दक्षिणार्होपदिष्टं कर्म ऋत्विग्भिरनुष्ठितम् । राक्षसाश्च तत्कर्म विविदुः ।

भाषार्थ—तब ऋषियोंने उचित सामग्रियोंसे विधिपूर्वक यज्ञका आरम्भ किया, दक्षिणा पानेवाले ब्राह्मणोंके कहनेके अनुसार ऋत्विक् ब्राह्मणोंने अनुष्ठान किया, राक्षसोंको भी उस कामका पता लगा ॥ २९ ॥

आविद्धरूक्षोर्ध्वशिरस्यवालैः शिरालजङ्घैर्गिरिकूटदघ्नैः ।
ततः क्षपाटैः पृथुपिङ्गलाऽक्षैः खं प्रावृषेण्यैरिव चाऽऽनशेऽब्दैः ॥ ३० ॥

अन्वय—ततः आविद्धरूक्षोर्ध्वशिरस्यवालैः शिरालजघैः गिरिकूटदघ्नैः पृथुपिङ्गलाऽक्षैः क्षपाटैः प्रावृषेण्यैः अब्दैः इव खम् आनशे च।

प्रयोगप०—आविद्धरूक्षोर्ध्वशिरस्यवाला शिरालजङ्घा गिरिकूटदघ्ना पृथुपिङ्गलाक्षा क्षपाटा प्रावृषेण्या अब्दा इव खम् आनशिरे च ।

व्याख्या—ततः =ज्ञानानन्तरम्, आविद्धरूक्षोर्ध्वशिरस्यवालैः =पर्वविद्धलकर्कशस्तब्धकेशैः, शिरालजघैः =शिरायुक्तप्रसृतैः, गिरिकूटदघ्नैः =पर्वतशिखरप्रमाणैः, पृथुपिङ्गलाऽक्षैः =विस्तीर्णपिङ्गनेत्रैः, क्षपाटैः =निशाचरैः (राक्षसैः), प्रावृषेण्यैः = वर्षाभवैः, ( महद्भिः श्यामैश्चेति भावः ), अब्दैः इव=मेघैः इव, खम्=आकाशम्, आनशे च=व्याप्तं च ।

व्युत्पत्ति—आविद्धरूक्षोर्ध्वशिरस्यवालैः =समन्तात् विद्धाः आविद्धाः ( प्रादिसमासः )। शिरसि भवाः शिरस्याः, 'शरीराऽवयवाद्यत्' इति यत्, शिरस्याश्च ते वालाः शिरस्यवालाः ( क० धा० ), 'चिकुरः कुन्तलो वालः कचः केशः शिरोरुहः ।' इत्यमरः । आविद्धाः रूक्षाः ऊर्ध्वाः ( स्तब्धाः ) शिरस्यवालाः येषां ते आविद्धरूक्षोर्ध्वशिरस्यवालाः, तैः ( बहु० ) । शिरालजङ्घैः =शिराः सन्ति यासां ताः शिरालाः, 'प्राणिस्थादातो लजन्यतरस्याम्' इति लच् । शिराला जङ्घा येषां ते शिरालजङ्घाः, तैः ( बहु० ). गिरिकूटदघ्नैः =गिरेः कूटः गिरिकूटः ( ष० त० ), 'कूटोऽस्त्री शिखरं

शृङ्गम्' इत्यमरः। गिरिकूटा प्रमाणमेषां ते गिरिकूटदध्नाः, तैः 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' इति दध्नच्। पृथुपिङ्गलाऽक्षैः = पृथूनि पिङ्गलानि अक्षीणि येषां ते पृथुपिङ्गलाऽक्षास्तैः ( बहु० ), 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाऽङ्गात्षच्' इति समासान्तः षच्। अपाटैः = अटन्तीति अटाः, 'अट गतौ' इति धातोः पचाद्यच्। अपासु अटाः इति अपाटाः, तैः, 'सप्तमी शौण्डैः' इत्यत्र 'सप्तमी'ति योगविभागात् समासः। प्रावृषेण्यैः = प्रावृषि भवाः प्रावृषेण्यास्तैः, 'प्रावृष एण्यः' इति एण्यप्रत्ययः। अब्दैः = अपो ददतीति अब्दास्तैः, 'आतोऽनुपसर्गे कः' इति कप्रत्ययः, आनशे='अशू व्याप्तौ सङ्घाते च' इति धातोः कर्मणि लिट्। 'अत आदेः' इत्यभ्यासदीर्घः। 'अश्नोतेश्च' इति नुट्। च = चकारः पूर्वश्लोकोक्तज्ञानसमुच्चयार्थः।

भावार्थः—तत सर्वपिङ्गलकठोरस्तब्धकेशयुक्ता शिरालजङ्घोपेता पर्वतशिखरप्रमाणा विस्तीर्णपिङ्गलनेत्रा राक्षसा वार्षिकमेघा इव आकाशं व्याप्नुवन्त।

भावार्थः—तब अत्यन्त पिङ्गल, रूखे और खडे केशोंसे युक्त, शिराव्याप्त जङ्घावाले, पर्वतशिखरके तुल्य ऊँचे, विस्तीर्ण और पिङ्गल नेत्रोंसे युक्त राक्षसोंने वर्षामें होनेवाले मेघोंकी तरह आकाशको व्याप्त किया ॥ ३० ॥

अधिज्यचापः स्थिरबाहुमुष्टिरुदञ्चिताऽक्षोऽञ्चितदक्षिणोरुः।
ताँल्लक्ष्मणः सन्नतवामजङ्घो जघान शुद्धेषुरमन्दकर्षी ॥ ३१ ॥

अन्वयः—अधिज्यचापः स्थिरबाहुमुष्टिः उदञ्चिताऽक्षः अञ्चितदक्षिणोरुः सन्नतवामजङ्घः शुद्धेषुः अमन्दकर्षी लक्ष्मणः तान् जघान।

प्रयोगः०—अधिज्यचापेन स्थिरबाहुमुष्टिना उदञ्चिताऽक्षेण अञ्चितदक्षिणोरुणा सन्नतवामजङ्घेन शुद्धेषुणा अमन्दकर्षिणा लक्ष्मणेन ते जघ्निरे।

व्याख्या—अधिज्यचापः = समौर्वीककार्मुकः, स्थिरबाहुमुष्टिः = निश्चलभुजमुष्टिः, उदञ्चिताऽक्षः = ऊर्ध्वप्रसारितनेत्रः, ( आकाशस्थापितदृष्टिरित्यर्थः ), अञ्चितदक्षिणोरुः = किञ्चित्कुञ्चितवामेतरसक्थिः, सन्नतवामजङ्घः = सम्यङ्नतदक्षिणेतरप्रसृतः, शुद्धेषुः = निर्दोषबाणः, अमन्दकर्षी = अत्यन्तकर्षी ( कर्णाऽन्ताऽकृष्टचापः इत्यर्थः ), लक्ष्मणः = रामाऽनुजः, तान् = राक्षसान्, जघान = हतवान्।

व्युत्पत्तिः—अधिज्यचापः = ज्यामधिगतः, अधिज्यः 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः, 'मौर्वी ज्या शिञ्जिनी गुणः' इत्यमरः। अधिज्यः चापः यस्य सः ( बहु० ), स्थिरबाहुमुष्टिः = बाहुश्च मुष्टिश्च बाहुमुष्टि, 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' इति समाहारद्वन्द्वः। स्थिरः बाहुमुष्टिः यस्य सः ( बहु० ), अनेन अमोघाऽस्त्र इति ध्वनिः। उदञ्चिताऽक्षः = ऊर्ध्वम् अञ्चिते, उदञ्चिते, सुप्सुपा समासः। उदञ्चिते अक्षिणी यस्य सः ( बहु० ), समासाऽन्तः षच्। अञ्चितदक्षिणोरुः = दक्षिण-

ञ्चोऽसौ ऊरुर्दक्षिणोरुः (क० धा०)। अञ्चित दक्षिणोरुर्यस्य स (बहु०)। सन्नक-वामजङ्घ = सम्यङ् नता सन्नता (प्रादि०)। वामा चाऽसौ जङ्घा वामजङ्घा (क० धा०)। सन्नता वामजघा यस्य स (बहु०), विहितप्रत्यालीढ इत्यर्थः। शुद्धेषु= शुद्धा (स्वरूपतो लोहतो वा निर्दोषा) इषव यस्य स (बहु०)। असन्दकर्षी= असन्द कर्षतीति तच्छील, 'कृष विलेखने' इति धातोर्णिनि।

भावार्थ —अधिगुणचापो दृढभुजमुष्टिराकाशप्रेरितदृष्टि किञ्चित्कुञ्चितदक्षिणोरु समवनतवामजघो निर्दोषबाणोऽत्यन्तकर्षी लक्ष्मणो राक्षसान् जघान।

भाषार्थ —दृढ बाहु और मुष्टिसे युक्त लक्ष्मणजीने आकाशकी तरफ देखकर दक्षिण ऊरुको कुछ सङ्कुचित और बाईं जाँघको कुछ झुकाकर धनुमें ज्या चढ़ाकर खूब खींचकर निर्दोष बाणोंसे राक्षसोंको मारा ॥ ३१ ॥

गाधेयदिष्टं विरसं रसन्तं रामोऽपि मायाचणमस्त्रचुञ्चु ।
स्थास्नुं रणे स्मेरमुखो जगाद मारीचमुच्चैर्वचनं महार्थम् ॥ ३२ ॥

अन्वय —अस्त्रचुञ्चु रामोऽपि स्मेरमुख (सन्) गाधेयदिष्टं विरसं रसन्तं मायाचणं रणे स्थास्नु मारीचं महाऽर्थं वचनम् उच्चैः जगाद।

प्रयोगप०—अस्त्रचुञ्चुना रामेणाऽपि स्मेरमुखेन (सता) गाधेयदिष्टो विरसं रसन् मायाचणो रणे स्थास्नुर्मारीचो महाऽर्थं वचनं जगदे।

व्याख्या—अस्त्रचुञ्चु =शस्त्रप्रसिद्ध, राम अपि=रामचन्द्र अपि, स्मेरमुख = स्मिताऽऽनन (सन्), गाधेयदिष्ट = विश्वामित्रप्रदर्शितम्, विरस =नीरस (कर्ण कठोरमित्यर्थ। (क्रि० वि०), रसन्त = गर्जन्त मायाचण = प्रख्यातमायाविन, रणे= युद्धे, स्थास्नु=स्थायिन, मारीच = मारीचाख्य राक्षसम् (ताडकापुत्रम्), महाऽर्थम् = अर्थभूयिष्ठ, वचन=वाक्यम्, उच्चै =तारम् (क्रि० वि०), जगाद=उवाच।

व्युत्पत्ति —अस्त्रचुञ्चु = अस्त्रैर्वित्त अस्त्रचुञ्चु, 'तेन वित्तश्चुञ्चुप्चणपौ' इति चुञ्चुप्प्रत्यय। स्मेरमुख =स्मेर मुख यस्य स (बहु०)। गाधेयदिष्ट= गाधेरपत्य पुमान् गाधेय (विश्वामित्र), 'द्व्यच' इत्यनुवर्त्तमाने 'इतश्चानिञ' इति ढक्, 'आयनेयी' इत्यादिना ढस्य एय्। गाधेयेन दिष्टो गाधेयदिष्टस्तम् (तृ० त०) विरस=विगत रस यस्मात् तत् यथा तथा (बहु०), मायाचण=मायया वित्त मायाचणस्त, 'तेने'त्यादिना चणप्प्रत्यय। स्थास्नु='ग्लाजिस्थश्च ग्स्नु' इति ग्स्नु, 'स्थास्नु स्थिरतर स्थेयान्' इत्यमर। महाऽर्थ=महान् अर्थो यस्य तत् महार्थ, तत् (बहु०), जगाद=दुहाद्यौ ब्रूधातो समानार्थकत्वात् गदधातोर्द्विकर्मकत्वम्।

भावार्थ —अस्त्रप्रसिद्धो रामोऽपि मन्दहास्य कृत्वा विश्वामित्रप्रदर्शित परुष-गर्जनं कुर्वन्तम् अतिशयमायाविन सग्रामे स्थायिन मारीचम् अर्थभूयिष्ठ वचनं तारस्वरेण अकथयत्।

भाषाऽर्थ—अत्यप्रसिद्ध रामचन्द्रजीने भी मन्द हास्य कर विश्वामित्रसे निर्दिष्ट, कठोर गर्जन करनेवाले, मायासे प्रसिद्ध और रणमें स्थिर होनेवाले मारीचनामक राक्षसको ऊँचे स्वरसे विशिष्ट अर्थपूर्ण वचन कहा ॥ ३२ ॥

आत्मम्भरिस्त्वं पिशितैर्नराणां फलेग्रहीन् हंसि वनस्पतीनाम् ।
शौवस्तिकत्वं विभवा न येषां व्रजन्ति तेषां दयसे न कस्मात् ॥३३॥

अन्वय—( हे पापिष्ठ ! ) नराणां पिशितैः आत्मम्भरिः त्वं वनस्पतीनां फलेग्रहीन् हंसि, येषां विभवाः शौवस्तिकत्वं न व्रजन्ति तेषां कस्मात् न दयसे ? ।

प्रयोगप०—आत्मम्भरिणा त्वया फलेग्रहयो हन्यन्ते, येषां विभवैः शौवस्तिकत्वं न व्रज्यते, तेषां कस्मात् ( त्वया ) न दय्यते ? ।

व्याख्या—( हे पापिष्ठ ! ) नराणां=मनुष्याणां, पिशितैः=मांसैः, आत्मम्भरिः= कुक्षिम्भरिः ( उदरपूरकः ), त्वं=मारीच, वनस्पतीनां=वृक्षाणां, फलेग्रहीन्=फल-ग्राहिणः (फलमात्राहारान् मुनीनित्यर्थः)। हंसि=मारयसि येषां=मुनीनां विभवाः= सम्पदः शौवस्तिकत्वं=श्वोदिनस्थायित्वं, न व्रजन्ति=न गच्छन्ति ( श्वो न भवि-तार इत्यर्थः, सद्यः प्रक्षालकत्वादिति भावः ), तेषां=मुनीनाम् ( अश्वस्तनिकवृत्तीना-मित्यर्थः ), कस्मात्=हेतोः, न दयसे=न रक्षसि (किमिति तान् न अनुकम्पसे इत्यर्थः)।

व्युत्पत्ति—पिशितैः='पिशितं तरसं मांसं पललं क्रव्यमामिषम् ।' इत्यमरः । आत्मम्भरिः=आत्मानं बिभर्तीति आत्मम्भरिः, 'फलेग्रहिरात्मम्भरिश्च' इति निपा-तितः । 'उभौ त्वात्मम्भरिः कुक्षिम्भरिः स्वोदरपूरके।' इत्यमरः । फलेग्रहीन्= फलानि गृह्णन्तीति फलेग्रहयः, तान्, पूर्वसूत्रेण निपातितः । फलेग्रहिपदं व्याकरणे कोषे च योगरूढ्या फलसम्बन्धिवृक्षवाचकं परमत्र योगवृत्त्या फलग्राहकमुनिवाच-कम् । हंसि=हन्तेर्लटि शपो लुक् सिप् । शौवस्तिकत्वं=श्वो ( दिनान्तरे ) भवाः शौवस्तिकाः, 'श्वसस्तुट् च' इति ठञि तुडागमश्च । 'ठस्येकः' इति ठस्येकः । 'द्वारा-दीनां च' इति इजागमः शौवस्तिकानां भावः शौवस्तिकत्वं, तत्, 'तस्य भावस्त्व-तलौ' त्वप्रत्ययः । 'त्वाऽन्तं क्लीबम्' इति लिङ्गाऽनुशासनात्तदन्तस्य नपुंसक-लिङ्गत्वम् । 'कुशूलधान्यको वा स्यात्कुम्भीधान्यक एव वा । स्यदैहिको वाऽपि भवे-दश्वस्तनिक एव वा ॥' इत्यत्रोत्तरोत्तरोत्कर्षप्रतीतेर्विभवानामशौवस्तिकत्वं प्रशस्यतः इति भावः । तेषाम्=दययोगे, 'अधीगर्थदयेशां कर्मणि' इति कर्मणि षष्ठी । दयसे= 'दय दानगतिरक्षणहिंसादानेषु' इति धातोर्लट् ।

भाषाऽर्थ—हे पापिष्ठ ! मनुष्यमांसैरुदरं रक्षस्त्वं कन्दमूलाहारेण वर्तमानान् मुनीन् मारयसि, ये मुनयोऽश्वस्तनिकवृत्तयः सन्ति किमिति तांश्चाऽनुकम्पसे ।

भावार्थ—हे पापिष्ठ ! नरमांससे पेट भरनेवाला तू, वृक्षोंके फलसे प्राणधारण करनेवाले मुनियोंको मारता है, जो कि कल (आगामी दिन) के लिए भी कुछ सञ्चय नहीं करते हैं, ऐसे मुनियों पर तू क्यों नहीं कृपा करता है ? ॥ ३३ ॥

अथ मारीचो रामं प्रत्याह—

अद्मो द्विजान्देवयजीन्निहन्म कुर्मः पुरं प्रेतनराऽधिवासम् ।
धर्मो ह्ययं दाशरथे ! निजो नो नैवाऽध्यकारिष्महि वेदवृत्ते ॥ ३४ ॥

अन्वयः—हे दाशरथे ! द्विजान् अद्मः, देवयजीन् निहन्म, पुरं प्रेतनराऽधिवासं कुर्मः, अयं नो निजो धर्मो हि, वेदवृत्ते न अध्यकारिष्महि एव ।

प्रयोगप०—( अस्माभिः ) द्विजा अद्यन्ते, देवयजयो निहन्यन्ते, पुरं प्रेतनराऽधिवासः क्रियते, अनेन नो निजेन धर्मेण हि ( भूयते ), वेदवृत्ते न अध्यकार्षीत् एव ( ब्रह्माऽस्मानिति शेषः ) ।

व्याख्या—हे दाशरथे = हे राम !, द्विजान् = ब्राह्मणान्, अद्मः = भक्षयामः ( वयमिति शेषः ) । देवयजीन् = सुरयाजकान्, निहन्म = नाशयामः । पुरं = नगरं प्रेतनराऽधिवासं = मृतमनुष्याऽवस्थानं, कुर्मः = सम्पादयामः (सर्वानस्मत्पुरं नीत्वा मारयाम इत्यर्थः ) । अयं = परद्रोहः, नः = अस्माकं, निजः = स्वः, नित्यो वा, धर्मः = आचारः । हि = निश्चयेन, वेदवृत्ते = वेदोक्ताऽनुष्ठाने, न अध्यकारिष्महि एव = न अधिकृता एव ।

व्युत्पत्तिः—दाशरथे = दशरथस्याऽपत्यं पुमान् दाशरथिस्तत्सम्बुद्धौ, 'अत इञ्' इति इञ्प्रत्ययः । अद्मः = अदेर्लटि मसि शपो लुक् । देवयजीन् = देवान् यजन्तीति देवयजयस्तान्, यजेरौणादिक इप्रत्ययः ( उपपदसमासः ) । 'निहन्म' इति पदेन योगे 'जासिनिप्रहणनाटक्राथपिषां हिंसायाम्' इत्यत्र सङ्घातविगृहीतविपर्यस्तग्रहणात् षष्ठी प्राप्ताऽपि न भवति, कर्मणः शेषत्वेन अविवक्षितत्वात् । निहन्म = निपूर्वाद्धन्तेर्लटि मसि शपो लुक् । प्रेतनराऽधिवासं=प्रेताश्च ते नराः प्रेतनराः (क० धा०), तेषामधिवासः प्रेतनराऽधिवासस्तम् ( ष० त० ) । निजः='निजं आत्मीयनित्ययोः' इति विश्वः । हि = 'हि हेतावधारणे' इत्यमरः । वेदवृत्ते = वेदविहितं वृत्तं वेदवृत्तं, तस्मिन् ( मध्यमपदलोपी समासः ) । अध्यकारिष्महि=अधिपूर्वात् कृधातोः कर्मणि लुङि 'स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च' इति चिण्वदिट् ।

भावार्थः—मारीच उवाच—हे राम ! वयं ब्राह्मणान्भक्षयामः, देवपूजकान् मारयामः, नगरं मृतमनुष्याऽवस्थानं कुर्मः, परद्रोहोऽस्माकं नित्यो धर्मः । वेदविहिताचारे वयं ( राक्षसाः ) न अधिकृता एव ।

भावार्थ—मारीचने भी जवाब दिया 'हे राम ! हम ब्राह्मणों को खाते हैं,

देवपूजकोंको मारते है और   को मरे हुए मनुष्योंका वासस्थान बनाते हैं, यह हमलोगोंका नित्य धर्म है, हमलोग वैदिक धर्मके अनुष्ठानमें अधिकृत नहीं हैं ( नहीं लिये गये हैं ) ॥ ३४ ॥

रामः पुनस्त प्रत्याह—

धर्मोऽस्ति सत्य तव राक्षसाऽयमन्यो व्यतिस्ते तु ममाऽपि धर्मः ।
ब्रह्मद्विषस्ते प्रणिहन्मि येन राजन्यवृत्तिर्धृतकार्मुकेषु. ॥ ३५ ॥

अन्वय —हे   ! अय तव सत्यं धर्मं अस्ति, तु मम अपि अन्य धर्मः व्यतिस्ते, येन राजन्यवृत्तिः   र्मुकेषु ( अहम् ) ब्रह्मद्विष ते प्रणिहन्मि ।

प्रयोगप०—अनेन तव धर्मेण भूयते, ममाऽपि अन्येन धर्मेण व्यतिभूयते राजन्यवृत्तिना धृतकार्मुकेषुणा मया ब्रह्मद्विट् त्व प्रणिहन्यसे ।

व्याख्या—हे राक्षस=हे यातुधान !, अय = पूर्वोक्तो ब्राह्मणवध , तव = मारीचस्य, सत्य = वस्तुत , धर्म =   , अस्ति = वर्तते । तु = परन्तु, मम अपि = रामस्य अपि, अन्य = अपरः ( त्वद्भिन्न इत्यर्थ ), धर्म = आचार , व्यतिस्ते=व्यतिभवते ( व्यतिहारेण वर्तत इत्यर्थः ) । येन = धर्मेण, राजन्यवृत्तिः= क्षत्रियकर्मा, धृतकार्मुकेषु = गृहीतधनुर्बाण ( अहमिति शेष ), ब्रह्मद्विष = ब्राह्मणद्रोहिणो वेदद्वेषिणो वा, ते = तव, प्रणिहन्मि = नाशयामि ।

व्युत्पत्ति —राक्षस=रक्ष एव राक्षसस्तत्स   ौ, 'प्रज्ञादिभ्यश्च' इति स्वार्थे ( प्रकृत्यर्थे ) अण् , 'स्वार्थिका' प्रकृतितो लिङ्गवचनान्यतिवर्तन्तेऽपि' इति परिभाषया पुंस्त्वम् । व्यतिस्ते = यथा तवाऽय धर्मस्तथा ममाऽपि अनीदृश कश्चिद्धर्मो विद्यत इत्यर्थ । ततश्च अ   न्यिन्नी क्रियामन्य करोति इतरस्त्वविनीमितर इति कर्मव्यतिहारसम्भवात् । अस्तेर्लटि 'कर्तरि कर्मव्यतिहारे' इत्यात्मनेपद, 'श्नसोरल्लोप ' इत्यल्लोप । राजन्यवृत्ति = राज्ञोऽपत्य पुमान् राजन्य , 'राजश्वशुराद्यत्' इति यत , 'ये चाऽभा   ो.' इति प्रकृतिभाव । राजन्यस्य वृत्ति (व्यापार ) यस्य स ( बहु० ) । धृतकार्मुकेषु =कर्मणे   ीति कार्मुक, 'कर्मण उकञ्' इत्युकञ्प्रत्यय , 'अथाऽस्त्रियाम् । धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम् ।' इत्यमर । कार्मुक च इषवश्च कार्मुकेषव (द्वन्द्व ), धृता कार्मुकेषव येन स (बहु०), धृतकार्मुकेषु, इति मल्लिनाथसम्मत पाठः । तन्मते येन = कारणेन, धृतकार्मुकेषु = गृहीत चापेषु विषये, राजन्यवृत्ति = राजन्यस्य वृत्ति , क्षत्रियव्यापार इत्यर्थ ( बहु० ) । ब्रह्मद्विष =ब्रह्मणो द्वेष्टीति ब्रह्मद्विट्' तस्य ( क्विप् , उपपद० ), ते ='जासिनी' त्यादिना कर्मणि शेषे षष्ठी, त्वामित्यर्थ । प्रणिहन्मि='नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च' इति णत्वम् ।

भाषाऽर्थ—हे पापिष्ठ ! नरमांससे पेट भरनेवाला तू, वृक्षोंके फलसे प्राणधारण करनेवाले मुनियोंको मारता है, जो कि कल (आगामी दिन) के लिए भी कुछ सञ्चय नहीं करते है, ऐसे मुनियों पर तू क्यों नहीं कृपा करता है ? ॥ ३३ ॥

अथ मारीचो रामं प्रत्याह—

अद्मो द्विजान्देवयजीन्निहन्म कुर्मः पुरं प्रेतनराऽधिवासम् ।
धर्मो ह्ययं दाशरथे ! निजो नो नैवाऽध्यकारिष्महि वेदवृत्ते ॥ ३४ ॥

अन्वयः—हे दाशरथे ! द्विजान् अद्मः, देवयजीन् निहन्मः, पुरं प्रेतनराऽधिवासं कुर्मः, अयं नो निजो धर्मो हि, वेदवृत्ते न अध्यकारिष्महि एव ।

प्रयोगप०—(अस्माभिः) द्विजा अद्यन्ते, देवयजयो निहन्यन्ते, पुरं प्रेतनराऽधिवासः क्रियते, अनेन नो निजेन धर्मेण हि (भूयते), वेदवृत्ते न अध्यकार्षीत् एव (ब्रह्माऽस्मानिति शेषः)।

व्याख्या—हे दाशरथे = हे राम !, द्विजान् = ब्राह्मणान्, अद्मः = भक्षयामः (वयमिति शेषः)। देवयजीन् = सुरयाजकान्, निहन्मः = नाशयामः। पुरं = नगरं प्रेतनराऽधिवासं = मृतमनुष्याऽवस्थानं, कुर्मः = सम्पादयामः (सर्वानस्मत्पुरं नीत्वा मारयाम इत्यर्थः)। अयं = परद्रोहः, नः = अस्माकं, निजः = स्वः, नित्यो वा, धर्मः = आचारः। हि = निश्चयेन, वेदवृत्ते = वेदोक्ताऽनुष्ठाने, न अध्यकारिष्महि एव = न अधिकृता एव।

व्युत्पत्तिः—दाशरथे = दशरथस्याऽपत्यं पुमान् दाशरथिस्तत्सम्बुद्धौ, 'अत इञ्' इति इञ्प्रत्ययः। अद्मः = अदेर्लटि मसि शपो लुक्। देवयजीन् = देवान् यजन्तीति देवयजयस्तान्, यजेरौणादिक इप्रत्ययः (उपपदसमासः)। 'निहन्म' इति पदेन योगे 'जासिनिप्रहणनाटक्राथपिषां हिंसायाम्' इत्यत्र सङ्घातविगृहीतविपर्यस्तग्रहणात् षष्ठी प्राप्ताऽपि न भवति, कर्मणः शेषत्वेन अविवक्षितत्वात्। निहन्मः = निपूर्वाद्धन्तेर्लटि मसि शपो लुक्। प्रेतनराऽधिवासः = प्रेताश्च ते नराः प्रेतनराः (क० धा०), तेषामधिवासः प्रेतनराऽधिवासस्तम् (ष० त०)। निजः = 'निजं आत्मीयनित्ययोः' इति विश्वः। हि = 'हि हेताववधारणे' इत्यमरः। वेदवृत्तं = वेदविहितं वृत्तं वेदवृत्तं, तस्मिन् (मध्यमपदलोपी समासः)। अध्यकारिष्महि = अधिपूर्वात् कृधातोः कर्मणि लुङि 'स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च' इति चिण्वदिट्।

भावाऽर्थः—मारीच उवाच—हे राम ! वयं ब्राह्मणान्भक्षयामः, देवपूजकान् मारयामः, नगरं मृतमनुष्याऽवस्थानं कुर्मः, परद्रोहोऽस्माकं नित्यो धर्मः। वेदविहिताचारे वयं (राक्षसाः) न अधिकृता एव।

भाषाऽर्थ—मारीचने भी जवाब दिया 'हे राम ! हम ब्राह्मणों को खाते हैं,

देवपूजकोंको मारते हैं और को भरे हुए मनुष्योंका वासस्थान बनाते हैं, यह हमलोगोंका नित्य धर्म है, हमलोग वैदिक धर्मके अनुष्ठानमें अधिकृत नहीं हैं ( नहीं लिये गये हैं ) ॥ ३४ ॥

रामः प्रत्याह—

धर्मोऽस्ति सत्यं तव ऽयमन्यो व्यतिस्ते तु ममाऽपि धर्मः ।
ब्रह्मद्विषस्ते प्रणिहन्मि येन राजन्यवृत्तिर्धृतकार्मुकेषु ॥ ३५ ॥

अन्वय—हे राक्षस ! अयं तव सत्यं धर्मं अस्ति, तु मम अपि अन्यः धर्मः व्यतिस्ते, येन राजन्यवृत्तिः धृतकार्मुकेषु ( अहम् ) ब्रह्मद्विषः ते प्रणिहन्मि ।

प्रयोगप०—अनेन तव धर्मेण भूयते, ममाऽपि अन्येन धर्मेण व्यतिभूयते राजन्यवृत्तिना धृतकार्मुकेषुणा मया ब्रह्मद्विट् त्वं प्रणिहन्यसे ।

व्याख्या—हे राक्षस = हे यातुधान !, अयं = पूर्वोक्तो ब्राह्मणवधः, तव = मारीचस्य, सत्यं = वस्तुतः, धर्मः = , अस्ति = वर्तते । तु = परन्तु, मम अपि = रामस्य अपि, अन्यः = अपरः ( त्वद्भिन्न इत्यर्थः ), धर्मः = आचारः, व्यतिस्ते = व्यतिभवते ( व्यतिहारेण वर्तत इत्यर्थः ) । येन = धर्मेण, राजन्यवृत्तिः = क्षत्रियकर्मा, धृतकार्मुकेषु = गृहीतधनुर्बाणः ( अहमिति शेषः ), ब्रह्मद्विषः = ब्राह्मणद्रोहिणो वेदद्वेषिणो वा, ते = तव, प्रणिहन्मि = नाशयामि ।

व्युत्पत्ति—राक्षस = रक्ष एव राक्षसस्तत्सम्बुद्धौ, 'प्रज्ञादिभ्यश्च' इति स्वाऽर्थे ( प्रकृत्यर्थे ) अण्, 'स्वार्थिकाः प्रकृतितो लि नान्यतिवर्तन्तेऽपि' इति परिभाषया पुंस्त्वम् । व्यतिस्ते = यथा तवाऽयं धर्मस्तथा ममाऽपि अन्यादृशः कश्चिद्धर्मो विद्यत इत्यर्थः । ततश्च अन्यसम्बन्धिनीं क्रियामन्यः करोति इतरसम्बन्धिनीमितरः इति कर्मव्यतिहारसम्भवात् । अस्तेर्लटि 'कर्तरि कर्मव्यतिहारे' इत्यात्मनेपदं, 'श्नसोरल्लोपः' इत्यल्लोपः । राजन्यवृत्तिः = राज्ञोऽपत्यं पुमान् राजन्यः, 'राजश्वशुराद्यत्' इति यत्, 'ये चाऽभा गो' इति प्रकृतिभावः । राजन्यस्य वृत्तिः (व्यापारः) यस्य सः ( बहु० ) । धृतकार्मुकेषु = कर्मणे ।।ति कार्मुकं, 'कर्मण उकञ्' इत्युकञ्प्रत्ययः, 'अथाऽस्त्रियाम् । धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम् ।' इत्यमरः । कार्मुकं च इषवश्च कार्मुकेषवः (द्वन्द्वः), धृता कार्मुकेषवः येन सः (बहु०), धृतकार्मुकेषु, इति मल्लिनाथसम्मतः पाठः । तन्मते येन = कारणेन, धृतकार्मुकेषु = गृहीतचापेषु विषये, राजन्यवृत्तिः = राजन्यस्य वृत्तिः, क्षत्रियव्यापार इत्यर्थः ( बहु० ) । ब्रह्मद्विषः = ब्रह्मणो द्वेष्टीति ब्रह्मद्विट् तस्य ( क्विप्, उपपद० ), ते = 'जासिनी' त्यादिना कर्मणि शेषे षष्ठी, स्वामित्यर्थः । प्रणिहन्मि = 'नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च' इति णत्वम् ।

भावार्थ—राम पुनस्तमुवाच- अथ परद्रोहः सत्य तव धर्मः, किन्तु ममाऽपि परद्रोहिनिग्रहरूपोऽन्यो धर्मो व्यतिभवते। येन धर्मेण क्षत्रियवृत्तिर्धनुर्धारी अहं ब्रह्मद्रोहिणं त्वां नाशयामि'।

भाषार्थ—रामने फिर उससे कहा—यह सच है कि परद्रोह तेरा धर्म है, मेरा भी उससे भिन्न ( परद्रोहिनाशरूप ) धर्म है। जिस धर्मसे मैं क्षत्रियकी वृत्ति से धनुर्धारण कर ब्राह्मणद्रोही तेरा नाश करता हूँ ॥ ३५ ॥

इत्थप्रवादं युधि सम्प्रहारं प्रचक्रतू रामनिशाविहारौ।
तृणाय मत्वा रघुनन्दनोऽथ बाणेन रक्षः प्रधनान्निरास्थत् ॥ ३६ ॥

अन्वय—रामनिशाविहारौ युधि इत्थम्प्रवादं, सम्प्रहारं प्रचक्रतु। अथ रघुनन्दनो रक्षः तृणाय मत्वा बाणेन प्रधनात् निरास्थत्।

प्रयोगप०—रामनिशाविहाराभ्याम् इत्थम्प्रवादः सम्प्रहारः प्रचक्रे। रघुनन्दनेन ( रक्षः ) निरासि।

व्याख्या—रामनिशाविहारौ = राघवराक्षसौ, युधि = युद्धे इत्थम्प्रवादम् = ईदृ वाक्कलहं ( मल्लिनाथमते 'इत्थमि'ति व्यस्त पदम्, प्रवादं सम्प्रहारमित्यस्य तन्मते अन्योन्यप्रवादरूप कलहम् वाक्कलहमित्यर्थ इति बोध्यम् ), सम्प्र = अस्त्रपातं, प्रचक्रतु = विदधतु, अथ = अनन्तर, रघुनन्दन = रामचन्द्रः, रक्षः = राक्षसं ( मारी चमित्यर्थ ), तृणाय मत्वा = तृणं मत्वा ( येत्यर्थः ) बाणेन = शरेण, प्रधनात् = सङ्ग्रामात्, निरास्थत् = अपनीतवान् ( ऽस्त्रेण दूरं निक्षिप्तवानित्यर्थ )। 'पृतनां निरास' इति मल्लिनाथसम्मतपाठे पृतनां ( सेनाम् ), तृणाय मत्वा रणे बाणेन निरास इत्यन्वय।

व्युत्पत्ति—रामनिशाविहारौ = निशायां विहारो यस्य स निशाविहार (बहु०)। रामश्च निशाविहारश्च (द्वन्द्व)। युधि = युध्यन्ते अस्यामिति युत्, तस्यां, 'सम्पदादिभ्य क्विप्' इति अधिकरणे क्विप्। इत्थप्रवादम् = इत्थं प्रवाद यस्मिन् स इत्थ-प्रवाद, तम् ( बहु० )। रघुनन्दन = नन्दयतीति नन्दन, 'टुनदि समृद्धौ' इति धातो 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यच' इति ल्यु। 'युवोरनाकौ' इत्यन। रघूणां ( रघुवंश्यानां राज्ञाम् ) नन्दन (ष० त०)। तृणाय = मन्यतेर्योगे 'मन्यकर्मण्यनादरे विभाषाऽप्राणिषु' इति चतुर्थी। प्रधनात् = 'युद्धमायोधनं जन्यं प्रधनं प्रविदारणम्।' इत्यमर। निरास्थत् = 'असु क्षेपणे' इति धातोर्लुङ्। 'अस्यतिवक्तिख्यातिभ्योऽङ्' इत्यङ्, 'अस्यतेस्थुक्' इति थुक्।

भावार्थ—राममारीचौ समाप्ते एतादृ युक्तमस्त्रप्रहारं कृतवन्तौ, ततो रामो राक्षसमनादरेण वा सङ्ग्रामप्राङ्गणाद् दूरं निक्षिप्तवान्।

भाषाऽर्थ —रामचन्द्र और मारीचने समाममें ऐसा विवादकर असप्रहार किया, तब रामचन्द्रजीने मारीचको तृणकी तरह एक बाणसे संग्रामभूमिसे दूर हटा दिया ॥ ३६ ॥

जग्मु प्रसाद द्विजमानसानि द्यौर्वर्षुका पुष्पचयं बभूव ।
निर्व्याजमिज्या ववृते वचश्च भूयो बभाषे मुनिना कुमार ॥ ३७ ॥

अन्वय —द्विजमानसानि प्रसाद जग्मु, द्यौ पुष्पचय वर्षुका बभूव, इज्या निर्व्याज ववृते, मुनिना कुमारो भूयो वचश्च बभाषे ।

प्रयोगप०—द्विजमानसै प्रसादो जग्मे, द्यावा वर्षुकया बभूवे इज्यया ववृते, मुनि कुमार वचो बभाषे ।

व्याख्या—द्विजमानसानि = ब्राह्मणचित्तानि, प्रसाद=प्रसन्नतां, जग्मु =गतानि । द्यौ = आकाश, पुष्पचय = कुसुमसमूह, वर्षुका = वर्षणशीला, बभूव = आसीत् । इज्या = याग , निर्व्याज = निरुपद्रव ( क्रि० वि० ), ववृते = प्रवृत्ता । मुनिना = विश्वामित्रेण, कुमार =राम , भूय =पुन , वचश्च = वचन च ( वक्ष्यमाणप्रकारमिति भाव ), बभाषे = भाषित. ।

व्युत्पत्ति—द्विजमानसानि = मनांसि एव मानसानि, 'प्रज्ञादिभ्यश्च' इति स्वार्थे अण् । द्विजानां मानसानि ( ष० त० ), मुनिमानसानि' इति मल्लिनाथ पाठ । प्रसाद = 'प्रसादस्तु प्रसन्नता' इत्यमर । जग्मु 'गमहनजने'त्यादिना उपधालोप । पुष्पचय = पुष्पाणां चय पुष्पचयस्तम् ( ष० त० ), 'वर्षुका' इति पदेन योगे 'न लोकाऽव्ययनिष्ठाखलर्थतृनाम्' इति षष्ठीप्रतिषेधात् कर्मणि द्वितीया । वर्षुका = 'वृषु सेचने' इति धातो. 'लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ्' इत्युकञ् । इज्या = यजनमिज्या, यज्धातो. 'व्रजयजोर्भावे क्यप्' इति क्यप् । निर्व्याज= निर्गत व्याज. यस्मात्तद् यथा तथा ( बहु० ) । ववृते='वृतु वर्तने' इति धातोर्लिट । बभाषे = कर्मणि लिट् , भूधातो. समानाऽथकत्वाद्द्विकर्मकत्वम् ।

भावाऽर्थ—ततो ब्राह्मणमनांसि प्रसन्नानि जातानि, आकाशात्पुष्पवृष्टिर्बभूव, योगो निरुपद्रव प्रवृत्त , पुनरपि विश्वामित्र कुमारमकथयत् ।

भाषाऽर्थ —तब ब्राह्मणों का चित्त प्रसन्न हुआ, आकाशने फूल बरसाये, यज्ञ बिना उपद्रवके सम्पन्न हुआ और ऋषिने कुमारको फिर कहा ॥ ३७ ॥

महीयमाना भवताऽतिमात्र सुराऽध्वरे घस्मरजित्वरेण ।
दिवोऽपि वज्रायुधभूषणाया हृणीयते वीरवती न भूमि. ॥ ३८ ॥

अन्वय —सुराऽध्वरे घस्मरजित्वरेण भवता अतिमात्र महीयमाना वीरवती भूमि वज्रायुधभूषणाया दिव अपि न हृणीयते ।

प्रयोगपo—महीय्यमानया वीरवत्या भूम्या न हृणीय्यते।

व्याख्या—सुराऽध्वरे = देवार्थयज्ञे, घस्मरजित्वरेण = राक्षसजैत्रेण, भवता = त्वया, अतिमात्रम् = अत्यर्थं, महीय्यमाना = पूज्यमाना, वीरवती = विक्रान्तशालिनी ( वीरस्वामिका च सतीत्यर्थं ), भूमि = पृथिवी, वज्रायुधभूषणाया = शक्रालङ्काराया ( वज्रपाणिस्वामिकाया अपीत्यर्थं ), दिव अपि = स्वर्गात् अपि, न हृणीयते = न जिह्रेपतीत्यर्थं )।

व्युत्पत्ति—सुराऽध्वरे सुराणामध्वर सुराऽवरस्तस्मिन् ( ष० त० ), 'यज्ञः सवोऽध्वरो याग सप्ततन्तुर्मख क्रतु ।' इत्यमर । घस्मरजित्वरेण=वसतीति घस्मर, 'घस्लृ अदने' इति धातो 'सुघस्यद क्मरच्' इति क्मरच्। 'मक्षको घस्मरोऽद्मर' इत्यमर । जयशीलो जित्वर, 'जि जये' इति धातो 'इण्नशजिसर्तिभ्य क्वरप्' इति क्वरप् 'ह्रस्वस्य पिति कृति तुक्' इति तुगागमश्च। घस्मराणां जित्वरो घस्मरजित्वरस्तेन ( ष० त० )। अतिमात्र = मात्रामतिक्रान्त यथा तथा अतिमात्रम् (क्रि० वि० ) 'अत्यादय क्रान्ताद्यर्थे द्वितीयया' इति समास । महीय्यमाना = महीय्यते इति महीय्यमाना, 'महीङ् पूजायाम्' इति कण्ड्वादिधातो यगन्तात् कर्मणि लटि पुनर्यकि अतो लोपे शानचि मुक्। वीरवती = प्रशस्त वीर अस्ति यस्यां सा वीरवती, 'तदस्याऽस्त्यस्मि'न्निति मतुप्' 'मादुपधायाश्च मतोर्वोऽयवादिभ्य ' इति मस्य व, तत स्त्रीत्वविवक्षायाम् 'उगितश्च' इति ङीप्। वज्रायुधभूषणाया = वज्रम् आयुध यस्य स वज्रायुध ( बहु० )। वज्रायुध ( इन्द्र ) भूषण यस्या सा वज्राऽऽयुधभूषणा, तस्या ( बहु० )। हृणीयते = 'हृणीङ् रोषणे लज्जायां च' इति कण्डवादिधातोर्यगन्तात् लट् । 'ह्रियां ह्रीच्छति जिह्रति लज्जते च हृणीयते ।' इति भट्टमल्ल । 'हृणीङ महीङ' इति कण्ड्वादिषु ङित्करणात् 'अवयवे कृत लिङ्ग समुदायस्य विशेषक भवतीति न्या ।

भावाऽर्थं—देवप्रीत्युद्देश्येन विधीयमाने यज्ञे राक्षसजित्वरेण त्वया पूज्यमाना वीरस्वामिका पृथ्वी इन्द्रस्वामिकाया दिव ( स्वर्गात् ) अपि लज्जिता न भवति।

भाषाऽर्थ—यज्ञमें राक्षसोंको जीतनेवाले तुमसे अत्यन्त ही पूजी गई वीर स्वामीवाली यह पृथ्वी इन्द्र स्वामीसे युक्त स्वर्गसे भी ( बराबरीके कारण ) नहीं लजाती है ॥ ३८ ॥

सङ्क्षेपेण पुन स्तौति—

बलिर्बबन्धे जलधिर्ममन्थे जह्रेऽमृत दैत्यकुल विजिग्ये।
कल्पाऽन्तदु स्था वसुधा तथोहे येनैष भारोऽतिगुरुर्न तस्य ॥ ३९ ॥

अन्वय—( हे राम ! ) येन बलि बबन्धे, जलधि ममन्थे 'अमृत जह्रे, दैत्यकुल विजिग्ये, तथा कल्पाऽन्तदु स्था वसुधा ऊहे, तस्य एष भार अतिगुरु न

प्रयोगप०—यो बलिं बबन्ध, जलधिं ममन्थ, अमृतं जहार, दैत्यकुलं विजिग्ये, कल्पाऽन्तदुःस्था वसुधासुवाह, तस्य एतेन भारेण गुरुणा न (भूयते)।

व्याख्या—(हे राम !) येन=भवता, बलिः='विरोचनपुत्र' बबन्धे=बद्ध (वामनाऽवतारे इत्यर्थः), जलधिः=समुद्र, ममन्थे=मथित (कच्छपाऽवतारे इत्यर्थः) अमृत=पीयूष, जह्रे=हृतम्, दैत्यकुलम्=असुरसमूह, विजिग्ये=जित (स्त्रीमायया वञ्चितमित्यर्थः), तथा=तेन प्रकारेण, कल्पान्तदुःस्था=प्रलये दुःखस्थिता, वसुधा=पृथ्वी, ऊहे=ऊढा (उद्धृता, वराहाऽवतारे इत्यर्थः), तस्य=भवत, एष=अयं, भारः=भर (यज्ञरक्षणरूप), अतिगुरुर्न=अतिगौरवयुक्तो न (बलिबन्धनाद्यपेक्षया कियानयं भार इति भाव)।

व्युत्पत्ति—बबन्धे='बन्ध बन्धने' इति धातो कर्मणि लिट्। अत्र श्लोके सर्वत्र कर्मणि लिट्। 'असयोगाल्लिट् कित्' इति लिटोऽकित्वात् अनुनासिकलोपो न। जलधिः=जलानि धीयन्तेऽस्मिन्निति जलधि, जलोपपदपूर्वकात् धाधातो 'कर्मण्यधिकरणे च' इति अधिकरणे किप्रत्यय। ममन्थे='मन्थ विलोडने' इति धातो पूर्ववत् रूकार। अमृत='पीयूषममृत सुधा।' इत्यमर। दैत्यकुल=दैत्याना कुलम् (ष० त०)। विजिग्ये='सन्लिटोर्जे' इति कुत्वम्। तथा=तेन प्रकारेण इति तथा 'प्रकारवचने थाल्' इति थाल्। 'त्यदादीनाम' इति अत्वम्। कल्पाऽन्तदुःस्था=कल्पस्य अन्त कल्पाऽन्त (ष० त०)। दुःखेन तिष्ठतीति दुःस्था, 'आतश्चोपसर्गे' इति कर्तरि क। कल्पाऽन्ते दुःस्था (स० त०)। ऊहे=वहेर्यजादित्वात् सम्प्रसारणम्। अतिगुरु=अत्यन्त गुरु (सुप्सुपा समास)।

भावाऽर्थ—हे राम ! येन भवता वामनाऽवतारे बलिर्बद्ध, कच्छपाऽवतारे समुद्रो मथित, अमृत हृत, मोहिनीरूपेण दैत्यसमूहो वञ्चित, तथा वराहाऽवतारे प्रलये दुःखस्थिता पृथ्वी धृता, तादृशस्य तव साम्प्रतिक यज्ञरक्षणात्मकोऽयं भार अतिगुरुत्वपूर्णो न।

भावार्थ—हे राम ! आपने बलिको बाँधा, समुद्रमथन किया, अमृतहरण कर लिया, दैत्योंको जीता और प्रलयमें दुःखसे रही हुई पृथ्वीका उद्धार किया, ऐसे आपके लिए यह यज्ञरक्षणात्मक कार्य ज्यादा गौरवपूर्ण नहीं है ॥ ३९ ॥

इति ब्रुवाणो मधुरं हितं च तमाक्षिपन्मैथिलयज्ञभूमिम्।
रामं मुनिः प्रीतमना मखाऽन्ते यशांसि राज्ञा निजिघृक्षयिष्यन् ॥४०॥

अन्वय—इति मधुरं हितं च ब्रुवाणः मुनिः मखाऽन्ते प्रीतमनाः (सन्) राज्ञा यशांसि निजिघृक्षयिष्यन् तं रामं मैथिलयज्ञभूमिम् आक्षिपत्।

प्रयोगाप०—' ब्रुवाणेन मुनिना प्रीतमनसा ( सता ) यशांसि निजिघृक्षयिष्यता स रामो मैथिलयज्ञभूमिम् आहि ।

व्याख्या—इति = इत्थ, मधुर = प्रिय, हित = श्रेयस्कर, ब्रुवाण = कथयन्, मुनि॰ = विश्वामित्र , मखाऽन्ते = यज्ञाऽन्ते, प्रीतमनाः=प्रसन्नचित्त. ( सन् ) राज्ञा= नृपाणां, यशांसि = कीर्ती , निजिघृक्षयिष्यन् = निग्रहीतुम् ( अभिभवितुम् ) एषयिष्यन् , त = पूर्वोक्त, राम = रामचन्द्र, मैथिलयज्ञभूमि = वैदेहयज्ञभुवम्, आञ्जिहत् = अजीगमत् ( गमितवान् इत्यर्थं ) ।

व्युत्पत्ति —ब्रवाण ='ब्रूञ् व्यक्तायां वाचि' इति धातो 'लक्षणहेत्वो क्रियाया' इति , मखान्ते = मखस्य अन्तो मखान्तस्तस्मिन् (ष० त०) प्रीतमना =प्रीत मनो यस्य स (बहु०), 'अत्वसन्तस्य चाऽधातो' इति उपधादीर्घत्वम् । यशांसि= 'यश कीर्ति समज्ञा च' इत्यमर । निजिघृक्षयिष्यन्=ग्रहे सनि ण्यन्तात् 'लृट सद्वा' इति शत्रादेश ।'रुदविदमुषग्रहिस्वपिप्रच्छ सश्च' इति सन किस्वात् 'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीना क्ङिति च' इति सम्प्रसारणे ादि । राम = 'गतिबुद्धी'त्यादिना 'आञ्जिहत्' इति पदेन योगे अणि कर्तु कर्मत्वम् । मैथिलयज्ञभूमि = मिथिलाया राजा मैथिल 'जनपदशब्दात्क्षत्रियादञ्' इत्यत्र 'तस्य रा त्यवत्' इत्यतिदेशाद् अञ्प्रत्यय । यज्ञस्य भूमिर्यज्ञभूमि (ष० त०) । मैथिलस्य यज्ञभूमिर्मैथिलयज्ञभूमिस्ताम् (ष० त०) । आञ्जिहत्='अहि गतौ' इति धातो 'इदितो नुम् धातो' इति नुमि प्रयोजकव्यापारे णिच् लुङ् आट् चङि णिलोप । 'द्विर्वचनेऽचि' इति णिलोपस्य स्थानिवद्भावाद् 'अजादेर्द्वितीयस्य' इति हिशब्दस्य द्विर्वचनम् । 'नन्द्रा सयोगादय.' इति नकारस्य प्रतिषेध । अभ्यासकार्यम् ॥ ४० ॥

भावाऽर्थं—मुनिरित्थ वदन् यज्ञाऽन्ते प्रसन्नो भूत्वा रामतोऽन्येषा राज्ञां कीर्तिमभिभवितुमेषयिष्यन् राम जनकयज्ञभूमिं निनाय ।

भाषाऽर्थ—इस तरह प्रिय और कल्याणकारक वचन कहते हुए विश्वामित्रने यज्ञके अन्तमें प्रसन्नचित्त होकर अन्य राजाओंकी कीर्तिको रामके द्वारा अभिभूत करानेकी इच्छा करते हुए रामचन्द्रको मिथिलाके महाराज जनककी यज्ञभूमिमें पहुँचाया ॥ ४० ॥

इत स्म मित्रावरुणौ किमेतौ किमश्विनौ सोमरसपिपासू ।
जन जनकाऽऽश्रमस्थ रूपेण तावौजिहता नृसिहौ ॥ ४१ ॥

—सोमरस पिपासू मित्रावरुणौ इत स्म किम् ? अश्विनौ एतौ किम् ( इति ) तौ नृसिहौ रूपेण जनकाश्रमस्य समस्त जनम् औजिहताम् ।

प्रयोगप०—'पिपासुभ्यां मित्रावरुणाभ्यामीयते स्म किम् ? अश्विभ्याम् एताभ्याम् (भूयते) किम् (इति)' ताभ्यां नृसिंहाभ्यां जनकाश्रमस्थः समस्तो जन औहि।

व्याख्या—सोमरस=सोमलतानिर्यास, पिपासू=पातुमिच्छू, मित्रावरुणौ=मित्रावरुणाख्यौ देवौ, इत स्म किम्=आगतौ स्म किम् ? अश्विनौ=अश्विनीकुमारौ, एतौ किम्=आगतौ किम्, (इति=इत्थम्), तौ=पूर्वोक्तौ, नृसिंहौ=पुरुषश्रेष्ठौ, रूपेण=सौन्दर्येण, जनकाश्रमस्थ=मैथिलप्रासादस्थ, समस्त=निखिल, जन=मनुष्यम्, औजिहताम्=वितर्कं कारितवन्तौ।

व्युत्पत्ति—सोमरस=सोमस्य रस सोमरसस्तम् (ष० त०)। पिपासू='पा पाने' इति धातो सन्नन्तादुप्रत्यय, तदन्तयोगे सोमरसमित्यत्र 'न लोकाव्यय'—त्यादिसूत्रेण षष्ठीप्रतिषेधाद् द्वितीया। मित्रावरुणौ=मित्रश्च वरुणश्च मित्रावरुणौ (द्वन्द्व), 'देवताद्वन्द्वे च' इत्यानङादेश। इत स्म='इण् गतौ' इति धातो कर्तरि स्मयोगे 'लट् स्मे' इति भूते लटि तस्। अश्विनौ=अश्विन्या भवौ अश्विनौ, 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्' इत्यण 'नक्षत्रेभ्यो बहुलम्' इति लुकि 'लुक्तद्धितलुकि' इति ङीपो लुक्। 'नासत्यावश्विनौ दस्रावाश्विनेयौ च तावुभौ।' इत्यमर। एतौ=आङ्पूर्वादिण कर्तरि क्त। नृसिंहौ=नरौ सिंहौ इव नृसिंहौ, 'उपमितं व्याघ्रादिभि सामान्याऽप्रयोगे' इति समास। रूपेण='रूपं स्वभावे सौन्दर्ये' इति विश्व। जनकाऽऽश्रमस्थ=जनकस्य आश्रम जनकाऽऽश्रम (ष० त०), तस्मिंस्तिष्ठतीति जनकाश्रमस्थस्तम् 'सुपि स्थ' इति क। औजिहताम्='ऊह वितर्के' इति धातो णौ चङि तसस्तामादेश। णिलोपस्य स्थानिवद्भावात् 'अजादेर्द्वितीयस्य' इति हिशब्दस्य द्विर्भाव। जुत्वम्। किं मित्रावरुणावश्विनौ वेति शुद्धसन्देहात् सन्देहभेदोऽलङ्कार। तदुक्तं—'सन्देह प्रकृतेऽन्यस्य संशय प्रतिभोत्थित। शुद्धो निश्चयगर्भोऽसौ निश्चयान्त इति त्रिधा' इति साहित्यदर्पणे।

भावाऽर्थ—'सोमरसपानेच्छू मित्रावरुणौ आगतौ किमथवा अश्विनीकुमारौ आगतौ किम्' इति रामलक्ष्मणौ दृष्ट्वा जनकसभास्थिता जना ऊहं चक्रु।

भाषाऽर्थ—'सोमलताका रस पीनेके लिए सूर्य और वरुण आये हुए हैं क्या ? अथवा ये (दोनों) अश्विनीकुमार हैं' पुरुषश्रेष्ठ राम और लक्ष्मणको देख कर महाराज जनकके सभागृहमें बैठे हुए सब लोग तर्क करने लगे ॥ ४१ ॥

अजिग्रहत्तं जनको धनुस्तद्येनार्दिदद् दैत्यपुरं पिनाकी।
जिज्ञासमानो बलमस्य बाह्वोर्हसन्नभाङ्क्षीद्रघुनन्दनस्तत् ॥ ४२ ॥

अन्वय—जनक अस्य बाह्वो बल जिज्ञासमान तं तत् धनु अजिग्रहत्, येन पिनाकी दैत्यपुरम् आर्दिदत्। रघुनन्दन हसन् तत् अभाङ्क्षीत्।

प्रयोगप०—जनकेन जिज्ञासमानेन स तद्धनुरग्राहि, येन पिनाकिना दैत्यपुरमादि। रघुनन्दनेन हसता तत् अभाजि ( अभाञ्जि वा )।

व्याख्या—जनक = मिथिलेश्वर, अस्य = रामस्य, बाह्वो = भुजयो, बल = शक्ति, जिज्ञासमान = ज्ञातुमिच्छन्, त = राम, तत् = प्रसिद्ध, धनु = कार्मुकम्, अजिग्रहत् = ग्राहयामास। येन = धनुषा, पिनाकी = महादेव, दैत्यपुर = त्रिपुरम्, आदिदत् = अर्दयामास ( सहृतवानित्यर्थ )। रघुनन्दन = रामचन्द्र, हसन् = हास्य कुर्वन् ( सन् ), तद् = धनु, अभाङ्क्षीत् = बभञ्ज।

व्युत्पत्ति—जिज्ञासमान = सन्नन्तात् जानाते ( 'ज्ञा अवबोधने' इति धातो 'ज्ञाश्रुस्मृदृशा सन' इत्यात्मनेपदे लट शानजादेश। तम् = ग्रहेश्च बुद्ध्यर्थत्वात् 'गतिबुद्धी'त्यादिना कर्मसज्ञा, तत 'कर्मणि द्वितीया' इति द्वितीया। अजिग्रहत् = (ग्राह्यत्वेन अबोधयत् ) ग्रहेर्हेतुमण्ण्यन्तात् चङि णिलोप, 'णौ चङ्युपधाया ह्रस्व,' इति ह्रस्व सन्वद्भावादित्वम्। पिनाकी=पिनाक अस्याऽस्तीति पिनाकी(इनिप्रत्यय ) 'सौ च' इति दीर्घत्वम्, 'पिनाकोऽजगव धनु' इति, 'पिनाकी प्रमथाऽधिप' इति चाऽमर। दैत्यपुर = दैत्याना पूरिति, दैत्यपुर, तत् ( ष० त० ) 'ऋक्पूरब्धू पथामानक्षे' इति समासाऽन्त अप्रत्यय, एकवचनमतन्त्रम् ( अविवक्षितम् ) दैत्यपुराणीत्यर्थ। 'स्वार्थिका प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' इति न्यायेन नपुसकलिङ्गनिर्देश। 'दैत्यपुर' इति मल्लिनाथसम्मत पाठस्तन्मते समासाऽन्तविधेरनित्यत्वात् न अप्रत्यय। आर्दिदत् = 'अर्द हिंसायाम्' इति चौरादिकाद्धातो चङि रेफवर्जितद्विर्भावादि। हसन् = हसतीति, 'हस हसने' इति धातो शतृप्रत्यय। अभाङ्क्षीत् = 'भञ्जो आमर्दने' इति धातो लुङि सिचि 'वदव्रजहलन्तस्याऽच' इति वृद्धि, 'अस्तिसिचोऽपृक्ते' इति ईटि कुत्वषत्वे।

भावार्थ—जनको रामस्य बाहुबल ज्ञातुमिच्छन् येन धनुषा हरो दैत्यपुराणि सजहार तादृश धनु रामाय समर्पितवान् रामोऽपि हसस्तत् बभञ्ज।

भाषाऽर्थ—जनकने रामके बाहुबलको जाननेकी इच्छासे उनको वह धनुष सौंपा, जिस धनुषसे महादेवने दैत्योंके शहरोंका ध्वस किया था, रामने भी हँसकर उसे तोड़ दिया ॥ ४२ ॥

ततो नदीष्णान्पथिकान्गिरिज्ञानाह्वायकान्भूमिपतेरयोध्याम्।
दित्सु सुता योधहरैस्तुरङ्गैर्व्यसर्जयन्मैथिलमर्त्यमुख्य ॥ ४३ ॥

अन्वय—तत सुता दित्सु मैथिलमर्त्यमुख्य नदीष्णान् पथिकान् गिरिज्ञा भूमिपते आह्वायकान् योधहरै तुरङ्गै अयोध्या व्यसर्जयत्।

प्रयोगप०—सुता दित्सुना मैथिलमर्त्यमुख्येन नदीष्णा पथिक[illegible] आह्वायका अयोध्यां ( प्रति ) व्यसृज्यन्त।

व्याख्या—तत =धनुर्भङ्गाऽनन्तर, सुतां=पुत्रीं (सीतामित्यर्थ) दित्सु = दातुमिच्छु, मैथिलमर्त्यमुख्य =वैदेहजनश्रेष्ठ (जनकनरेन्द्र), नदीष्णान्=नदीतरणकुशलान्, पथिकान्=मार्गकुशलान्, गिरिज्ञान्=पर्वतमार्गाऽभिज्ञान् (गिरि=वाचि ज्ञान्=अभिज्ञान् वचनकुशलानिति च गम्यते, एतावता सन्दर्भेण अविलम्बगामित्वमुक्तम), भूमिपते =राज्ञ (दशरथस्येत्यर्थ), आह्वायकान्=आह्वातॄन्, योधहरै = योद्धृवाहकै, तुरङ्गै =अश्वै (साधनै), अयोध्या=कोशल (प्रति), व्यसर्जयत्=प्रेषितवान् ।

व्युत्पत्ति —दित्सु =ददाते 'सनि मीमे' इत्यादिना अच इस् । द्विर्वचनम् । 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोप 'स स्यार्धधातुके' इति तत्वम् । 'सनाशंसभिक्ष उ' इत्युप्रत्यय । मैथिलमर्त्यमुख्य मर्त्येषु मुख्यो मर्त्यमुख्य (स० त०) मैथिलश्चाऽसौ मर्त्यमुख्य (क० धा०)। नदीष्णान्=नद्या स्नान्तीति नदीष्णास्तान् 'सुपि स्थ' इत्यत्र 'सुपी'ति योगविभागात्कप्रत्यय । 'निनदीभ्या स्नाते कौशले' इति षत्वम् । पथिकान्=पथेषु कुशला पथिकास्तान्, 'तत्र कुशल पथ' इति ठक्प्रत्यय इति जयमङ्गलमल्लिनाथौ तन्न, तत्र सूत्रे 'गोपदादिभ्यो वुन्' इत्यतो वुनोऽनुवृत्ते, वुनि सति तु 'पथक' इति स्यात्, अत पन्थान गच्छतीति विग्रहे 'पथ ष्कन्' इति ष्कन्, 'पान्थ पथिक इत्यपि' इत्यमर । गिरिज्ञान्=गिरीन् जानन्तीति गिरिज्ञास्तान् 'इगुपधज्ञाप्रीकिर क इति क, अथवा जानन्तीति ज्ञा (पूर्वसूत्रेण क), गिरि (वाचि विषये) ज्ञान्, वचनकुशलानिति च गम्यते। भूमिपते =भूमे पतिर्भूमिपतिस्तस्य (ष० त०) कृत्यप्रयोगे कर्मणि षष्ठी। आह्वायकान्=आह्वायन्तीति आह्वायकास्तान् आङ्पूर्वकात् 'ह्वेञ् स्पर्धायां शब्दे च' इति धातो 'ण्वुल्तृचौ' इति ण्वुल् 'युवोरनाकौ' इत्यकादेश । 'आतो युक् चिण्कृतो' इति युगागमश्च। योधहरै =युध्यन्ते इति योधा, 'युध सम्प्रहारे' इति धातो पचाद्यच्। 'भटा योधाश्च योद्धार' इत्यमर । योधान्हरन्तीति योधहारास्तै (योधवहोग्यवयस्कैरित्यर्थ), 'वयसि च' इत्यच्। तुरङ्गै =विसर्जनक्रियाया साधकतमत्वात् 'साधकतम करणम्' इति करणसंज्ञा, तत 'कर्तृकरणयोस्तृतीया' इति तृतीया। अयोध्या=तामुद्दिश्येत्यर्थ । अत एव गम्यमानोद्देशक्रिया प्रति कर्मत्वम्। यथाऽहु 'न केवल श्रूयमाणैव क्रिया निमित्त कारकभावस्य किन्तु गम्यमानाऽपी'ति।

भावार्थ —तत पुत्रीं दित्सुर्जनको महाराजदशरथस्य आकारणार्थं नदीतरणनिपुणान् नानामार्गकुशलान् पर्वतमार्गाभिज्ञान् वचनरचनायोग्यान् अश्वारोहान् अयोध्या प्रति प्रेषितवान् ।

भाषार्थ —तब महाराज जनकने रामचन्द्रको कन्यादान करनेकी इच्छासे

प्रयोगप०—जनकेन जिज्ञासमानेन स तद्धनुरग्राहि, येन पिनाकिना दैत्यपुर-मार्दि। रघुनन्दनेन हसता तत् अभाजि ( अभाञ्जि वा )।

व्याख्या—जनक =मिथिलेश्वर, अस्य=रामस्य, बाह्वो =भुजयो, बल= शक्ति, जिज्ञासमान =ज्ञातुमिच्छन्, त=राम, तत्=प्रसिद्ध, धनु =कार्मुकम्, अजिग्रहत्=ग्राहयामास। येन=धनुषा, पिनाकी=महादेव, दैत्यपुर=त्रिपुरम्, आर्दिदत्=अर्दयामास ( संहृतवानित्यर्थ )। रघुनन्दन =रामचन्द्र, हसन्=हास्य कुर्वन् ( सन् ), तद्=धनु, अभाङ्क्षीत्=बभञ्ज।

व्युत्पत्ति —जिज्ञासमान =सन्नन्तात् जानाते ( 'ज्ञा अवबोधने' इति धातो 'ज्ञाश्रुस्मृदृशां सन' इत्यात्मनेपदे लट शानजादेश। तम्=ग्रहेश्च बुद्ध्यर्थत्वात् 'गतिबुद्धी'त्यादिना कर्मसंज्ञा, तत 'कर्मणि द्वितीया' इति द्वितीया। अजिग्रहत्= (ग्राहत्वेन अबोधयत्) ग्रहेर्हेतुमण्ण्यन्तात् चङि णिलोप, 'णौ चङ्युपधाया ह्रस्व,' इति ह्रस्व सन्वद्भावादित्वम्। पिनाकी=पिनाक अस्याऽस्तीति पिनाकी(इनिप्रत्यय) 'सौ च' इति दीर्घत्वम्, 'पिनाकोऽजगव धनु' इति, 'पिनाकी प्रमथाऽधिप' इति चाऽमर। दैत्यपुर=दैत्याना पूरिति, दैत्यपुर, तत् ( ष० त० ) 'ऋक्पूरब्धू पथा-मानक्षे' इति समासाऽन्त अप्रत्यय, एकवचनमतन्त्रम् ( अविवक्षितम् ) दैत्यपुरा णीत्यर्थ। 'स्वार्थिका प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' इति न्यायेन नपुंसकलिङ्ग निर्देश। 'दैत्यपुर' इति मल्लिनाथसम्मत पाठस्तन्मते समासाऽन्तविधेरनित्यत्वात् न अप्रत्यय। आर्दिदत्='अर्द हिंसायाम्' इति चौरादिकाद्धातो चङि रेफवर्जित-द्विर्भावादि। हसन्=हसतीति, 'हस हसने' इति धातो शतृप्रत्यय। अभाङ्क्षीत्= 'भञ्जो आमर्दने' इति धातो लुङि सिचि 'वदव्रजहलन्तस्याऽच' इति वृद्धि, 'अस्तिसिचोऽपृक्ते' इति ईटि कुत्वषत्वे।

भावार्थ —जनको रामस्य बाहुबल ज्ञातुमिच्छन् येन धनुषा हरो दैत्यपुराणि सजहार तादृश धनू रामाय समर्पितवान् रामोऽपि हसस्तत् बभञ्ज।

भाषाऽर्थ —जनकने रामके बाहुबलको जाननेकी इच्छासे उनको वह धनुष सौंपा, जिस धनुषसे महादेवने दैत्योंके शहरोंका ध्वस किया था, रामने भी हँसकर उसे तोड़ दिया ॥ ४२ ॥

ततो नदीष्णान्पथिकान्गिरिज्ञानाह्वायकान्भूमिपतेरयोध्याम्।
दिदृसु सुता योधहरैस्तुरङ्गैर्व्यसर्जयन्मैथिलमर्त्यमुख्य ॥ ४३ ॥

अन्वय —तत सुता दिदृसु मैथिलमर्त्यमुख्य नदीष्णान् पथिकान् गिरिज्ञा भूमिपते आह्वायकान् योधहरै तुरङ्गै अयोध्या व्यसर्जयत्।

प्रयोगप०—सुता दिदृसुना मैथिलमर्त्यमुख्येन नदीष्णा पथिका गिरिज्ञा आह्वायका अयोध्या ( प्रति ) व्यसर्ज्यन्त।

वृद्ध होते हुए भी अतिशय तरुण पुरुषकी तरह अश्रान्त वाहनमें चढ़कर शीघ्र मिथिलामें पहुँचे ॥ ४४ ॥

वृन्दिष्ठमार्चीद्वसुधाऽधिपाना त प्रेष्ठमेत गुरुवद्गरिष्ठम् ।
सदृङ्महान्तं सुकृताऽधिवास बहिष्ठकीर्तिर्यशसा वरिष्ठम् ॥ ४५ ॥

अन्वय —सदृक् बहिष्ठकीर्ति (स) वसुधाऽधिपानां वृन्दिष्ठ श्रेष्ठं गुरुवत् गरिष्ठ महान्त सुकृताऽधिवास यशसा वरिष्ठम् एत तम् आर्चीत् ।

प्रयोगप०—सदृशा बहिष्ठकीर्तिना (तेन) वसुधाऽधिपाना वृन्दिष्ठ प्रेष्ठो गरिष्ठो महान् सुकृताऽधि गो वरिष्ठ एष स आर्चि ।

व्याख्या— = (अनुरूप इत्यर्थ ), बहिष्ठकीर्ति = बहुलतरयशा, (स ) वसुधाऽधिपाना = राज्ञा ( मध्ये ), वृन्दिष्ठ = वृन्दारकतम (श्रेष्ठमित्यर्थ ) प्रेष्ठ = प्रियतम, गुरुवत् = आचार्यवत् , गरिष्ठ = गुरुतम ( पूज्यतममित्यर्थ ) महान्त = महाऽऽशय, सुकृताऽऽधिवास = धर्मनिलय, यशसा = कीर्त्या, वरिष्ठम = उरुतमम् ( अधिकमित्यर्थ ), एतम् = , तं = दशरथम्, आर्चीत् = अर्चितवान् ।

व्युत्पत्ति —सदृक् = समान इव दृश्यते इति , शब्दोपपदात् दृश् धातो 'समानान्ययोश्च' इति क्विन् 'दृग्दृशवतुषु' इति समानशब्दस्य सभाव' । बहिष्ठकीर्ति = अतिशयेन बहुला बहिष्ठा, इष्ठन्प्रत्यये कृते 'प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणा फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दा' इति सूत्रेण देश । बहिष्ठा कीर्तिर्यस्य स ( बहु० ) । वसुधाऽधिपाना = वसुधाया अधिपा वसुधाधिपा तेषाम् ( ष० त० ) 'वसुधोर्वी वसुन्धरा' इत्यमर । वृन्दिष्ठम् = अतिशयेन वृन्दारक वृन्दिष्ठ , तम्, इष्ठनि—'प्रियस्थिरे'त्यादिना वृन्दारकस्य वृन्दादेश । 'वृन्दारकौ रूपि यौ' इत्यमर । प्रेष्ठम् = अतिशयेन प्रिय प्रेष्ठस्त, पूर्वसूत्रेण प्रि प्रादेश । गुरुवत् = गुरुणा तुल्य, वतिप्रत्यय । गरिष्ठम् = अतिशयेन गुरु गरिष्ठस्त, पूर्वसूत्रेण गुरोर्गरादेश । ऽधिवास = शोभन कृत सुकृतम् ( गति ) अधिवसत्यस्मिन्निति अधिवास , 'हलश्च' इति अधिकरणे घञ् । सु अधिवास सुकृताऽधिवासस्तम् ( ष० त० ) । वरिष्ठम् = अतिशयेन उरु वरिष्ठ, तम्, पूर्वसूत्रेण उरोर्वरादेश । एतम् = आङ्पूर्वादिण कर्तरि क्त । आर्चीत् = अर्चधातो लुङि 'इट ईटि' इति सलोप ।

भावाऽर्थ —मिथिलाऽधीश्वरो महायशा जनक स्वाऽनुरूप राजश्रेष्ठ प्रियत गुरुवत्पूज्य महानुभाव धर्माधारभूत समायात दशरथ मधुपर्कादिभि पूजयामासेत्यर्थ ।

भाषाऽर्थ—दशरथके अनुरूप कीर्तिशाली महाराज जनकने राजाओंमें श्रेष्ठ, अत्यन्त प्रिय, गुरुवत् पूजनीय, महानुभाव, धर्मके आधार स्थान तथा महायशा ऐसे आये महाराजकी पूजा की ।' ४५ ॥

महाराज दशरथको बुलानेके लिए नदी तैरनेमें निपुण, अनेक मार्गोंमें कुशल पर्वत-मार्ग जानेवाले तथा वचनरचनामें चतुर घुड़सवारोंको अयोध्यामें भेजा ॥ ४३ ॥

क्षिप्रं ततोऽध्वन्यतुरङ्गयायी यविष्ठवद्वृद्धतमोऽपि राजा ।
आख्यायकेभ्यः श्रुतसूनुवृत्तिरग्लानयानो मिथिलामगच्छत् ॥ ४४ ॥

अन्वयः—ततः आख्यायकेभ्यः श्रुतसूनुवृत्तिः अध्वन्यतुरङ्गयायी राजा वृद्धतमः अपि यविष्ठवत् अग्लानयानः ( सन् ) मिथिलां क्षिप्रम् अगच्छत् ।

प्रयोगप०—श्रुतसूनुवृत्तिना अध्वन्यतुरङ्गयायिना राज्ञा वृद्धतमेनाऽपि अग्लानयानेन ( सता ) मिथिला क्षिप्रमगम्यत ।

व्याख्या—ततः = अनन्तरम् ( अश्वारोहाणामयोध्याप्राप्त्यनन्तरम् ), आख्यायकेभ्यः = दूतेभ्यः, श्रुतसूनुवृत्तिः = आकर्णितपुत्रव्यापारः ( श्रुतराक्षसवधहरधनुर्भङ्गरूपकर्मेत्यर्थः ), अध्वन्यतुरङ्गयायी = शीघ्रगत्यश्वगामी, राजा = दशरथः, वृद्धतमः अपि = स्थविरतमः अपि, यविष्ठवत् = युवतमवत्, अग्लानयानः = श्रमरहिताऽश्वादिः ( सन् ), मिथिलां = जनकपुरीं, क्षिप्रं = सत्वरम्, अगच्छत् = ययौ ।

व्युत्पत्तिः—आख्यायकेभ्यः = आख्यान्ति ( सन्देशं कथयन्ति ) इति आख्यायकाः तेभ्यः । 'ख्या प्रकथने' इति धातोर्ण्वुल्, युक् च । श्रुतसूनुवृत्तिः = सूनोर्वृत्तिः सूनुवृत्तिः ( ष० त० ), श्रुता सूनुवृत्तिर्येन सः ( ब० व्री० ) । अध्वन्यतुरङ्गयायी = अध्वानमलं गच्छन्तीति अध्वन्याः, 'अध्वनो यत्खौ' इति यत्प्रत्ययः 'ये चाऽभावकर्मणोः' इति प्रकृतिभावात्र टिलोपः । अध्वन्याश्च ते तुरङ्गाः अध्वन्यतुरङ्गाः ( क० धा० ) 'घोटके वीतितुरगतुरङ्गाऽश्वतुरङ्गमाः ।' इत्यमरः । अध्वन्यतुरङ्गैर्यातीति तच्छीलः 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनि, 'आतो युक् चिण्कृतोः' इति युगागमश्च । वृद्धतमः = अतिशयेन वृद्धः 'अतिशायने तमबिष्ठनौ' इति तमप्प्रत्ययः । यविष्ठवत् = अतिशयेन युवा यविष्ठः, पूर्वसूत्रेण इष्ठन्प्रत्यये कृते 'स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः' इति सूत्रेण वलित्यस्य लोपे जकारस्य गुणे अवादेशः । यविष्ठेन तुल्यं यविष्ठवत्, 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिप्रत्ययः ( वत्यन्तमव्ययम् ) । ग्लानं ग्लानिः, भावे निष्ठा । अविद्यमानं ग्लानं यस्मिंस्तत् अग्लानम्, ( नञ् ) अग्लानं यानं यस्य सः ( बहु० ) । 'अग्लानयानः' इति मल्लिनाथसम्मतः पाठः । क्षिप्रं = क्रियाविशेषणम् । अगच्छत् = 'गम्लृ गतौ' इति धातोर्लङ् । 'इषुगमियमां छः' इति छः ।

भावार्थः—ततो दूतेभ्यः राक्षसवधहरधनुर्भङ्गरूपं पुत्रपराक्रमं श्रुत्वा महाराजो दशरथः स्थविरतमोऽपि तरुणतमवत् श्रमरहितवाहनः सत्वरं मिथिलां प्रापत् ।

भाषार्थ—तब महाराज दशरथ दूतोंसे पुत्रका पराक्रम सुनकर अत्यन्त

वृद्ध होते हुए भी अतिशय तरुण पुरुषकी तरह अश्रान्त वाहनमें चढ़कर शीघ्र मिथिलामें पहुँचे ॥ ४४ ॥

वृन्दिष्ठमार्चीद्वसुधाऽधिपानां तं प्रेष्ठमेतं गुरुवद्गरिष्ठम् ।
सदृङ्महान्तं सुकृताऽधिवासं बहिष्ठकीर्तिर्यशसा वरिष्ठम् ॥ ४५ ॥

अन्वयः—सदृक् बहिष्ठकीर्तिः (सः) वसुधाऽधिपानां वृन्दिष्ठं श्रेष्ठं गुरुवत् गरिष्ठं महान्तं सुकृताऽधिवासं यशसा वरिष्ठम् एतं तम् आर्चीत् ।

प्रयोगप०—सदृशा बहिष्ठकीर्तिना (तेन) वसुधाऽधिपानां वृन्दिष्ठः प्रेष्ठो गरिष्ठो महान् सुकृताऽधि गो वरिष्ठ एष स आर्चि ।

व्याख्या— = (अनुरूप इत्यर्थः), बहिष्ठकीर्तिः = बहुलतरयशाः, (स ) वसुधाऽधिपानां = राज्ञां ( मध्ये ), वृन्दिष्ठं = वृन्दारकतमं (श्रेष्ठमित्यर्थः) प्रेष्ठं = प्रियतमं, गुरुवत् = आचार्यवत्, गरिष्ठं = गुरुतमं ( पूज्यतममित्यर्थः ) महान्तं = महाऽऽशयं, सुकृताऽऽधिवासं = धर्मनिलयं, यशसा = कीर्त्या, वरिष्ठम् = उरुतमम् ( अधिकमित्यर्थः ), एतम् = , तं = दशरथम्, आर्चीत् = अर्चितवान् ।

व्युत्पत्तिः—सदृक् = समान इव दृश्यते इति , शब्दोपपदात् दृश्धातोः 'समानान्ययोश्च' इति क्विन्, 'दृग्दृ षु' इति समानशब्दस्य सभावः । बहिष्ठकीर्तिः = अतिशयेन बहुला बहिष्ठा, इष्ठन्प्रत्यये कृते 'प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः' इति सूत्रेण बह्यादेशः । बहिष्ठा कीर्तिर्यस्य सः ( बहु० ) । वसुधाऽधिपानां = वसुधाया अधिपा वसुधाधिपाः तेषाम् ( ष० त० ) 'वसुधोर्वी वसुन्धरा' इत्यमरः । वृन्दिष्ठम् = अतिशयेन वृन्दारकः वृन्दिष्ठः, तम्, इष्ठनि—'प्रियस्थिरे'त्यादिना वृन्द वृन्दादेशः । 'वृन्दारकौ रूपिमुख्यौ' इत्यमरः । प्रेष्ठम् = अतिशयेन प्रियः , पूर्वसूत्रेण प्रियस्य प्रादेशः । गुरुवत् = गुरुणा तुल्यः, वतिप्रत्ययः । गरिष्ठम् = अतिशयेन गुरुः गरिष्ठस्तं, पूर्वसूत्रेण गुरोर्गरादेशः । ऽधिवासः = शोभनं कृतं सुकृतम् ( गति- ) अधिवसत्यस्मिन्निति अधिवासः, ' ' इति अधिकरणे घञ् । अधिवासः सुकृताऽधिवा ( ष० त० ) । वरिष्ठम् = अतिशयेन उरुः वरिष्ठः, तम्, पूर्वसूत्रेण उरोर्वरादेशः । एतम् = आङ्पूर्वादिण कर्तरि क्तः । आर्चीत् = अर्चधातोर्लुङि 'इट ईटि' इति सलोपः ।

भावार्थः—मिथिलाऽधीश्वरो महायशा जनकः स्वाऽनुरूपं राजश्रेष्ठं प्रियतमं गुरुवत्पूज्यं महानुभावं धर्माधारभूतं समायातं दशरथं मधुपर्कादिभिः पूजयामासेत्यर्थः ।

भाषाऽर्थः—दशरथके अनुरूप कीर्तिशाली महाराज जनकने राजाओंमें श्रेष्ठ, अत्यन्त प्रिय, गुरुवत् पूजनीय, महानुभाव, धर्मके आधार स्थान तथा महायशा ऐसे आये महाराजकी पूजा की ।' ४५ ॥

त्रिवर्गपारीणमसौ भवन्तमध्यासयन्नासनमेकमिन्द्रः ।
विवेकदृश्वत्वमगात्सुराणां तं मैथिलो वाक्यमिदं बभाषे ॥ ४६ ॥

अन्वयः—'असौ इन्द्रः त्रिवर्गपारीणं भवन्तम् एकम् आसनम् अध्यासयन् सुराणां विवेकदृश्वत्वम् अगात्' मैथिलः तम् इदं वाक्यं बभाषे ।

प्रयोगः०—'अमुना इन्द्रेण भवन्तमेकमासनमध्यासयता विवेकदृश्वत्वमगायि' मैथिलेन स इदं वाक्यं बभाषे ।

व्याख्या—असौ = विप्रकृष्टस्थः, इन्द्रः = शक्रः, त्रिवर्गपारीणं = धर्मार्थकामपारगामिनं, भवन्तं = त्वाम्, एकम् = अभिन्नम्, आसनं = विष्टरम्, अध्यासयन् = अधिष्ठापयन् ( अर्धासनमधिगमय्येत्यर्थः ) सुराणां = देवानां, विवेकदृश्वत्वं = विवेकदर्शित्वम्, अगात् = प्रापत्, मैथिलः = जनकः, तं = दशरथम्, इदम् = उक्तप्रकारं वाक्यं = वचनं, बभाषे = अकथयत् ।

व्युत्पत्तिः—त्रिवर्गपारीणं = त्रयाणां ( धर्मार्थकामानाम् ) वर्गस्त्रिवर्गः ( ष० त० ), 'त्रिवर्गो धर्मकामार्थैः' इत्यमरः । पारं गामी पारीणः 'अवारपारात्यन्तानुकामं गामी' इत्यत्र विगृहीतविपर्यस्तग्रहणात् खप्रत्ययः, 'आयनेयी'त्यादिना खस्यैनः । त्रिवर्गस्य पारीणस्त्रिवर्गपारीणस्तम् ( ष० त० ) । भवन्तम् = 'गतिबुद्धि' त्यादिना कर्मसंज्ञा । आसनम् = 'अध्यासयन्' इति पदेन योगे 'अधिशीङ्स्थाऽऽसां कर्म' इत्याधारस्य कर्मसंज्ञा । विवेकदृश्वत्वं = विवेकं दृष्टवानिति विवेकदृश्वा, 'दृशेः क्वनिप्' इति क्वनिप्, विवेकदृश्वनो भावो विवेकदृश्वत्वं, तत् ( त्वप्रत्ययः ) । अगात् = 'इणो गा लुङि' इतीणो गादेशः 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु' इति सिचो लुक् । बभाषे = भाषधातोः ब्रूधातुसमानार्थकत्वाद्द्विकर्मकत्वम् ।

भाषाऽर्थः—'इन्द्रो धर्मार्थकामपारगामिनं भवन्तमेकमासनमारोप्य देवानां मध्ये विवेकदर्शी सञ्जातः' इति जनको दशरथं बभाषे ।

भावाऽर्थः—'इन्द्र धर्म, अर्थ और कामके पारगामी आपको अपने आसनपर बैठाकर देवताओंसे विवेकदर्शी हुए हैं' जनकने दशरथको ऐसा कहा ॥ ४६ ॥

हिरण्मयी शाललतेव जङ्गमा च्युता दिवः स्थास्नुरिवाऽचिरप्रभा ।
शशाऽङ्ककान्तेरधिदेवताऽऽकृतिः सुता ददे तस्य सुताय मैथिली ॥ ४७ ॥

अन्वयः—हिरण्मयी जङ्गमा शाललता इव दिवः च्युता स्थास्नुः अचिरप्रभा इव शशाऽङ्ककान्तेः अधिदेवताऽऽकृतिः सुता मैथिली तस्य सुताय ददे ।

प्रयोगः०—हिरण्मयीं जङ्गमां शाललतामिव दिवश्च्युतां स्थास्नुमचिरप्रभामिव शशाऽङ्ककान्तेरधिदेवताकृतिं सुतां मैथिलीं तस्य सुताय ददौ ।

व्याख्या—हिरण्मयी = सुवर्णमयी ( स्वर्णनिर्मिता ), जङ्गमा = चरिष्णु, शाललता, इव = वृक्षवल्ली इव, दिवः = आकाशात्, च्युता = पतिता, स्थास्नु = स्थिरा, अचिरप्रभा इव = विद्युल्लता इव, शशाङ्ककान्तेः = चन्द्रिकायाः, अधिदेवताकृतिः = अधिदेवताकारा, सुता = पुत्री, मैथिली = सीता, तस्य = दशरथस्य, सुताय = पुत्राय (रामायेत्यर्थः), ददे = दत्ता ( जनकेनेति शेषः )। [उपलक्षणमेतत्, इत्थमेव तेन भरताय माण्डवी, लक्ष्मणाय उर्मिला, शत्रुघ्नाय श्रुतकीर्तिः प्रदत्तेति ज्ञेयम् । ]

व्युत्पत्ति—हिरण्मयी=हिरण्यस्य विकारो हिरण्मयी, 'दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवाशिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि' इति मयटि यलोपनिपातः । जङ्गमा = अङ्ग्यते इति जङ्गमा, गमेर्यङि नुगागमे पचाद्यचि 'यङोऽचि च' इति यङो लुक् । शाललता = शालस्य लता ( ष० त० ) । दिवः ='द्योदिवौ द्वे स्त्रियामभ्रं व्योमपुष्करमम्बरम् ।' इत्यमरः । स्थास्नु = 'ग्लाजिस्थश्च ग्स्नुः' इति ग्स्नुः । अचिरप्रभा = न चिरम् अचिरम् ( नञ्० ), अचिरं प्रभा यस्याः सा ( बहु० ) । शशाऽङ्ककान्तेः =शशः अङ्कः यस्य स शशाऽङ्कः ( बहु० ), तस्य कान्तिः शशाऽङ्ककान्तिः तस्याः ( ष० त० ) । अधिदेवताऽऽकृतिः = देव एव देवता, 'देवात्तल्' इति तल्प्रत्ययः । अधिष्ठात्री देवता अधिदेवता, 'प्रादयो गताद्यर्थे प्रथमया' इति समासः । अधिदेवताया इव आकृतिर्यस्याः सा ( व्यधिकरणबहुव्रीहिः ) । मैथिली=मैथिलस्य अपत्यं स्त्री मैथिली, 'अत इञ्' इति इञ्, तदन्ताद् 'इतो मनुष्यजातेः' इति ङीप् । ददे=कर्मणि लिट् ।

भावाऽर्थ—सुवर्णनिर्मिता चरिष्णु वृक्षलता इव, आकाशपतिता स्थिरा विद्युदिव तथा चन्द्रकान्तेरधिष्ठात्री देवीव पुत्री सीता जनकेन रामाय प्रदत्ता ।

भाषाऽर्थ—जनकने सुवर्णमयी सञ्चारिणी वृक्षकी लताकी तरह, आकाश से पतित स्थिर बिजली की नाई तथा चन्द्रकान्तिकी अधिष्ठात्री देवीके सदृश आकार वाली पुत्री सीताके साथ रामचन्द्रका विवाह करा दिया ॥ ४७ ॥

लब्धा ततो विश्वजनीनवृत्तिस्तामात्मनीनामुदवोढ रामः ।
सद्रत्नमुक्ताफलभर्मभूषां सम्वहयन्तीं रघुवर्यलक्ष्मीम् ॥ ४८ ॥

अन्वय—ततः विश्वजनीनवृत्तिः रामः लब्धाम् आत्मनीनां सद्रत्नमुक्ताफलभर्मभूषां रघुवर्यलक्ष्मीं सम्वहयन्तीं ताम् उदवोढ ।

प्रयोगप०—विश्वजनीनवृत्तिना रामेण लब्धा आत्मनीना सद्रत्नमुक्ताफलभर्मभूषा रघुवर्यलक्ष्मीं सम्वहयन्ती सा उदवाहि ।

व्याख्या—ततः =दानाऽनन्तरं, विश्वजनीनवृत्तिः =सर्वजनहितप्रवृत्तिः रामः =रामचन्द्रः, लब्धां=प्राप्ताम्, आत्मनीनां=स्वहिताम्, सद्रत्नमु भर्मभूषाम्=

त्रिवर्गपारीणमसौ भवन्तमध्यासयन्नासनमेकमिन्द्रः ।
विवेकदृश्वत्वमगात्सुराणां तं मैथिलो वाक्यमिदं बभाषे ॥ ४६ ॥

अन्वयः—'असौ इन्द्रः त्रिवर्गपारीणं भवन्तम् एकम् आसनम् अध्यासयन् सुराणां विवेकदृश्वत्वम् अगात्' मैथिलः तम् इदं वाक्यं बभाषे ।

प्रयोगप०—'अमुना इन्द्रेण भवन्तमेकमासनमध्यासयता विवेकदृश्वत्वमगायि' मैथिलेन स इदं वाक्यं बभाषे ।

व्याख्या—असौ = विप्रकृष्टस्थः, इन्द्रः = शक्रः, त्रिवर्गपारीणं = धर्माऽर्थकामपारगामिनं, भवन्तं = त्वाम्, एकम् = अभिन्नम्, आसनं = विष्टरम्, अध्यासयन् = अधिष्ठापयन् ( अर्धासनमधिगमयन्नित्यर्थः ) सुराणां = देवानां, विवेकदृश्वत्वं = विवेकदर्शित्वम्, अगात् = प्रापत्, मैथिलः = जनकः, तं = दशरथम्, इदम् = उक्तप्रकारं वाक्यं = वचनं, बभाषे = अकथयत् ।

व्युत्पत्तिः—त्रिवर्गपारीणं = त्रयाणां ( धर्माऽर्थकामानाम् ) वर्गस्त्रिवर्गः ( ष० त० ), 'त्रिवर्गो धर्मकामार्थैः' इत्यमरः । पारं गामी पारीणः 'अवारपाराऽत्यन्ताऽनुकामं गामी' इत्यत्र विगृहीतविपर्यस्तग्रहणात् खप्रत्ययः, 'आयनेयी'त्यादिना खस्येनः । त्रिवर्गस्य पारीणस्त्रिवर्गपारीणस्तम् ( ष० त० ) । भवन्तम् = 'गतिबुद्धी'त्यादिना कर्मसंज्ञा । आसनम् = 'अध्यासयन्' इति पदेन योगे 'अधिशीङ्स्थाऽऽसां कर्म' इत्याधारस्य कर्मसंज्ञा । विवेकदृश्वत्वं = विवेकं दृष्टवानिति विवेकदृश्वा, 'दृशेः क्वनिप्' इति क्वनिप्, विवेकदृश्वनो भावो विवेकदृश्वत्वं, तत् ( त्वप्रत्ययः ) । अगात् = 'इणो गा लुङि' इतीणो गादेशः 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु' इति सिचो लुक् । बभाषे = भाषधातोः ब्रूधातुसमानार्थकत्वाद्द्विकर्मकत्वम् ।

भावार्थः—'इन्द्रो धर्मार्थकामपारगामिनं भवन्तमेकमासनमारोप्य देवानां मध्ये विवेकदर्शी सञ्जातः' इति जनको दशरथं बभाषे ।

भावार्थः—'इन्द्र धर्म, अर्थ और कामके पारगामी आपको अपने आसनपर बैठाकर देवताओंसे विवेकदर्शी हुए हैं' जनकने दशरथको ऐसा कहा ॥ ४६ ॥

हिरण्मयी शाललतेव जङ्गमा च्युता दिवः स्थास्नुरिवाऽचिरप्रभा ।
शशाऽङ्ककान्तेरधिदेवताऽऽकृतिः सुता ददे तस्य सुताय मैथिली ॥ ४७ ॥

अन्वयः—हिरण्मयी जङ्गमा शाललता इव दिवः च्युता स्थास्नुः अचिरप्रभा इव शशाऽङ्ककान्तेः अधिदेवताऽऽकृतिः सुता मैथिली तस्य सुताय ददे ।

प्रयोगप०—हिरण्मयीं जङ्गमां शाललतामिव दिवश्च्युतां स्थास्नुमचिरप्रभामिव शशाऽङ्ककान्तेरधिदेवताकृतिं सुतां मैथिलीं तस्य सुताय ददौ ।

व्युत्पत्ति—सुप्रात=शोभनं प्रातर्यस्य तत् सुप्रात ( बहु० ), 'सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रेणीपदाजपदप्रोष्ठपदा' इत्यच्प्रत्ययान्तो निपात, टिलोपश्च। आसादि दम्=आसादित सम्मदो येन तत् (बहु०), 'मुत्प्रीति प्रमदो हर्षप्रमोदाऽऽमोदसम्मदा ।' इत्यमर । वन्दारुभि =वदन्त इति वन्दारव, तै 'वदि अभिवादनस्तुत्यो' इति धातो 'शृवन्द्योरारु' इत्यारु । 'वन्दारुरभिवादके' इत्यमर । अश्वीयराजन्यकहास्तिकाढ्यम्=अश्वाना समूह अश्वीयम्, 'केशाऽश्वाभ्या यञ्छावन्यतरस्याम्' इति छ (छस्येय)। राजन्याना समूहो राजन्यक, 'गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद् वुञ्' इति वुञ, 'प्रकृत्याऽके राजन्यमनुष्ययुवान' इति प्रकृतिभावादपत्ययकारलोपो न। हस्तिना समूहो हास्तिकम् 'अचित्तहस्तिधेनोष्ठक्' इति ठक्। अश्वीय च राजन्यक च हास्तिक च अश्वीयराजन्यकहास्तिक (द्वन्द्व ) 'द्वन्द्वश्च प्राणितूर्यसेनाऽङ्गानाम्' इति सेनाङ्गत्वात् एकवद्भाव । अश्वीयराजन्यकहास्तिकेन आढ्यम् (तृ० त०)। अध्वनीनम्=अध्वानमल गच्छतीति, 'अध्वनो यत्खौ' इति ख (खस्येन) 'आत्माऽध्वानौ खे' इति प्रकृतिभाव । =राज्ञा युगपत् राज्ञा सह वा इति यौगपद्ये साकल्ये वा 'अव्ययविभक्ती' त्यादिना अव्ययीभाव, 'अव्ययीभावे चाऽकाले' इति सहस्य सभाव 'अनश्च' इति ऽन्तष्टच्। अभ्ययोध्यम्=अयोध्यामभि अभ्ययोध्यम्,'लक्षणेनाऽभिप्रती आभिमुख्ये' इत्यव्ययीभाव ।

भावाऽर्थ—शो काले हर्षपूर्णं, स्तुतिपाठकै प्रशसित, क्षत्रि ऽश्वसम्पन्न पर्याप्तगतिशील तद्दशरथसैन्य राज्ञा दशरथेन सह अयोध्याऽभिमुख जगाम ।

भाषाऽर्थ—सुन्दर प्रात समयमें हर्षपूर्ण, चारणोंसे प्रशसित, क्षत्रिय, हाथी और घोडोंसे सम्पन्न, पर्याप्तगतिमें समर्थ दशरथकी फौज अयोध्याके सम्मुख चली ॥४९॥

विशङ्कटो वक्षसि बाणपाणि सम्पन्नतालद्वयस पुरस्तात् ।
भीष्मो धनुष्मानुपजान्वरत्निरैति स्म राम पथि जामदग्न्य ॥ ५० ॥

अन्वय—वक्षसि विशङ्कट बाणपाणि स लद्वयस भीष्म धनुष्मान् उपजान्वरत्नि जामदग्न्य राम पथि पुरस्तात् ऐति स्म ।

प्रयोगप०—विशङ्कटेन बाणपाणिना सम्पन्नतालद्वयसेन भीष्मेण धनुष्मता उपजान्वरत्निना जामदग्न्येन रामेण पथि पुरस्तात् एयते स्म ।

व्याख्या—वक्षसि=उरसि, विशङ्कट=विशाल, बाणपाणि=शरहस्त, सम्पन्नतालद्वयस=विशालतालवृक्षप्रमाण, भीष्म=भयङ्कर, धनुष्मान्=धन्वी, उपजान्वरत्नि=आजानुबाहु, जामदग्न्य=जमदग्निपुत्र, राम=परशुराम, पथि=मार्गे, पुरस्तात्=अग्रत, ऐति स्म= न् ।

व्युत्पत्ति—विशङ्कट=व्युपसर्गात् 'वे शालच्छङ्कटचौ' इति शङ्कटच् प्रत्यय,

उत्कृष्टमणिमौक्तिकसुवर्णालङ्कारा, रघुवर्ग्यलक्ष्मीं = रघुवर्गभवशोभा, सम्बहयन्तीं = सम्यग्बहुलीकुर्वतीं, तां = सीताम्, उदवोढ = ऊढवान् ।

व्युत्पत्ति —विश्वजनीनवृत्ति = विश्वस्मै जनाय हिता विश्वजनीना, 'आत्मन्विश्वजनभोगोत्तरपदात्ख' इति खप्रत्यय खस्येनश्च । विश्वजनीना वृत्तिर्यस्य स (बहु०) । आत्मनीनाम्=आत्मने हिता आत्मनीना, ताम्, पूर्वसूत्रेण खप्रत्यय । सद्रत्नमुक्ताफलभर्मभूषा=मुक्ता फलानीव मुक्ताफलानि, 'उपमित व्याघ्राऽदिभि सामान्याऽप्रयोगे' इति समास । रत्नानि च मुक्ताफलानि च भर्माणि च रत्नमुक्ताफलभर्माणि (द्वन्द्व ) 'स्वर्णं सुवर्णं कनक हिरण्य हेम हाटकम् । तपनीय शातकुम्भ गाङ्गेय भर्म कर्वुरम् ॥' इत्यमर । रत्नमुक्ताफलभर्मणा भूषा ( भूषणम् ) रत्नमुक्ताफलभर्मभूषा ( ष० त० ) । सती रत्नमुक्ताफलभर्मभूषा यस्या सा सद्रत्नमुक्ताफलभर्मभूषा, ताम् (बहु०) 'भूषाम्' इत्यस्य स्थाने क्वचित् 'शोभाम्' इति पाठ । रघुवर्ग्यलक्ष्मीं= रघूणा ( रघुवंशोत्पन्नाना राज्ञाम् ) वर्ग रघुवर्ग ( ष० त० ), तत्र भवा रघुवर्ग्या । 'वर्गान्ताच्च' इत्यनुवृत्तौ 'अशब्दे यत्खावन्यतरस्याम्' इति यत्प्रत्यय । रघुवर्ग्या चाऽसौ लक्ष्मी रघुवर्ग्यलक्ष्मीस्ता रघुवर्ग्यलक्ष्मीम् (क० धा०) । सम्बहयन्तीं=सम्बहुला कुर्वाणा सम्बहयन्ती, ताम्, सम्पूर्वाद्बहुलशब्दात् 'तत्करोति तदाचष्टे' इति णिचि लट शतरि ङीप्, णिचि इष्ठवद्भावात् 'प्रियस्थिरे'त्यादिना बहुलशब्दस्य बह्यादेश । उदवोढ=वहेर्लुङि तङि 'सहिवहोरोदवर्णस्य' इत्योत्वे ढत्वादिकार्यम् ।

भावाऽर्थ —दानाऽनन्तर सर्वहितव्यापारो राम प्राप्ता स्वहिता कृता रघुकुलशोभा बहुलीकुर्वतीं सीता परणीतवान् ।

भाषाऽर्थ —तब सबके हितके लिये कार्य करनेवाले रामचन्द्रजी ने अपना हित करनेवाली उत्तम आभरणोंसे भूषित और रघुवंशकी शोभाको बढ़ानेवाली सीताको स्वीकार किया ॥ ४८ ॥

सुप्रातमासादितसमदं तद्वन्दारुभिः सस्तुतमभ्ययोध्यम् ।
अश्वीयराजन्यकहास्तिकाऽढ्यमगात् सराज बलमध्वनीनम् ॥४९॥

अन्वय —सुप्रातम्, आसादितसमद वन्दारुभि सस्तुतम् अश्वीयराजन्यकहास्तिकाऽऽढ्यम् अध्वनीन तत् बल सराजम् अभ्ययोध्यम् अगात् ।

प्रयोगप०—सुप्रातेन आसादितसम्मदेन सस्तुतेन अश्वीयराजन्यकहास्तिकाढ्येन अध्वनीनेन तेन बलेन अभ्ययोध्यम् अगायि ।

व्याख्या—सुप्रात = सुप्रभातम्, आसादितसमद = प्राप्तहर्षं, वन्दारुभि = वन्दिभि, सस्तुत=कृतस्तवम्, अश्वीयराजन्यकहास्तिकाऽऽढ्यम्—अश्वक्षत्रियगजसमूहसम्पन्नम्, अध्वनीनम् = अध्वानमल गामि, तत् = प्रसिद्ध, बल = सैन्यं = सभूपम् ( दशरथसहितमित्यर्थ ), ०ध्यम् = प्रतिकोशलम्, अगात् = अगमत् ।

व्युत्पत्तिः—सुप्रातः=शोभनं प्रातर्यस्य तत् सुप्रातं ( बहु० ), 'सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः' इत्यच्प्रत्ययान्तो निपातः, टिलोपश्च । आसादितसम्मदम्=आसादितः सम्मदो येन तत् (बहु०), 'मुत्प्रीतिः प्रमदो हर्षः प्रमोदाऽऽमोदसम्मदाः ।' इत्यमरः । वन्दारुभिः =वदन्त इति वन्दारवः, तैः 'वदि अभिवादनस्तुत्योः' इति धातोः 'शृवन्द्योरारुः' इत्यारु । 'वन्दारुरभिवादके' इत्यमरः । अश्वीयराजन्यकहास्तिकाढ्यम्=अश्वानां समूहः अश्वीयम्, 'केशाऽश्वाभ्यां यञ्छावन्यतरस्याम्' इति छ (छस्येय )। राजन्यानां समूहो राजन्यकं, 'गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद् वुञ्' इति वुञ्, 'प्रकृत्याऽके राजन्यमनुष्ययुवानः' इति प्रकृतिभावादपत्ययकारलोपो न। हस्तिनां समूहो हास्तिकम् 'अचित्तहस्तिधेनोष्ठक्' इति ठक्। अश्वीयं च राजन्यकं च हास्तिकं च अश्वीयराजन्यकहास्तिकं (द्वन्द्व ) 'द्वन्द्वश्च प्राणितूर्यसेनाऽङ्गानाम्' इति सेनाङ्गत्वात् एकवद्भावः । अश्वीयराजन्यकहास्तिकेन आढ्यम् (तृ० त०) । अध्वनीनम्=अध्वानमलं गच्छतीति, 'अध्वनो यत्खौ' इति ख (खस्येन ) 'आत्माऽध्वानौ खे' इति प्रकृतिभावः । सराजं=राज्ञा युगपत् राज्ञा सह वा इति यौगपद्ये साकल्ये वा 'अव्ययविभक्ती' त्यादिना अव्ययीभावः, 'अव्ययीभावे चाऽकाले' इति सहस्य सभावः 'अनश्च' इति ष्टच् । अभ्ययोध्यम्=अयोध्यामभि अभ्ययोध्यम्, 'लक्षणेनाऽभिप्रती आभिमुख्ये' इत्यव्ययीभावः ।

भावाऽर्थः—शोभनप्रातःकाले हर्षपूर्णं, स्तुतिपाठकैः प्रशंसितं, क्षत्रियगजाऽश्वसम्पन्नं पर्याप्तगतिशीलं तद्दशरथसैन्यं राज्ञा दशरथेन सह अयोध्याऽभिमुखं जगाम ।

भाषाऽर्थः—सुन्दर प्रातःसमयमें हर्षपूर्ण, चारणोंसे प्रशंसित, क्षत्रिय, हाथी और घोड़ोंसे सम्पन्न, पर्याप्तगतिमें समर्थ द ी फौज अयोध्याके सम्मुख चली ॥४९॥

विशङ्कटो वक्षसि बाणपाणिः सम्पन्नतालद्वयसः पुरस्तात् ।
भीष्मो धनुष्मानुपजान्वरत्निरेति स्म रामः पथि जामदग्न्यः ॥ ५० ॥

अन्वयः—वक्षसि विशङ्कटः बाणपाणिः स लद्वयसः भीष्मः धनुष्मान् उपजान्वरत्निः जामदग्न्यः रामः पथि पुरस्तात् ऐति स्म ।

प्रयोगप०—विशङ्कटेन बाणपाणिना तालद्वयसेन भीष्मेण धनुष्मता उपजान्वरत्निना जामदग्न्येन रामेण पथि पुरस्तात् एयते स्म ।

व्याख्या—वक्षसि=उरसि, विशङ्कटः=विशालः, बाणपाणिः=शरहस्तः, सम्पन्नतालद्वयसः=विशालतालवृक्षप्रमाणः, भीष्मः=भयङ्करः, धनुष्मान्=धन्वी, उपजान्वरत्निः=आजानुबाहुः, जामदग्न्यः=जमदग्निपुत्रः, रामः=परशुरामः, पथि=मार्गे, पुरस्तात्=अग्रतः, ऐति स्म=आगतवान् ।

व्युत्पत्तिः—विशङ्कटः=व्युपसर्गात् 'वेः शालच्छङ्कटचौ' इति शङ्कटच् प्रत्ययः,

'विशङ्कट पृथु बृहद्विशाल पृथुल महत्।' इत्यमर । 'विशङ्कटे वक्षसि' इति मल्लिनाथसम्मत पाठ । बाणपाणि = बाण पाणौ यस्य स (बहु०) 'प्रहरणार्थेभ्य परे निष्ठासप्तम्यौ' इति पाणिशब्दस्य परनिपात । सम्पन्नतालद्वयस =सम्पन्नश्चासौ ताल सम्पन्नताल' (क० धा०), सम्पन्नताल प्रमाणमस्य सम्पन्नतालद्वयस, 'प्रमाणे द्वयसज्दघ्नन्मात्रच' इति द्वयसच् प्रत्यय । भीष्म = बिभेत्यस्मादिति भीष्म ( औणादिको मक्प्रत्यय ) 'भीमादयोऽपादाने' इत्यपादानार्थे साधु । धनुष्मान्=धनुरस्ति यस्य स ( मतुप् )। उपजान्वरत्नि =जानुनो समीपमुपजानु ( समीपार्थे अव्ययीभाव ) तत्र ( उपजानु ) अरत्नि (लक्षणया बाहु ) यस्य स (बहु०)। 'अरत्निस्तु निष्कनिष्ठेन मुष्टिना' इत्यमर । जामदग्न्य =जमदग्ने अपत्य पुमान् जामदग्न्य, 'गर्गादिभ्यो यञ्' इत्यत्र पाठादपत्येऽपि गोत्रत्वारोपात् यञ्। साक्षात् (मुख्यार्थेन) अपत्यविवक्षाया तु 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इत्यणि जामदग्नो भवति। पुरस्तात्=पूर्वस्मिन्निति पुरस्तात्, पूर्वशब्दात 'अस्ताति च' इति अस्तातिप्रत्यय पुरादेशश्च। ऐति स्म = आङ् पूर्वादिण् धातो स्मयोगे 'लट् स्मे' इति भूते लट्।

भावार्थ —विपुलवक्षा शरहस्त तालवृक्षसमोन्नत भयङ्करो धानुष्क आजानुबाहु परशुराम मार्गे अग्रत राममाजगाम।

भाषार्थ —चौड़ी छातीवाले, हाथमें बाण लिये हुए ताड़वृक्षके समान ऊँचे, भयङ्कर, धनुर्धारी और दीर्घबाहुयुक्त जमदग्निके पुत्र परशुरामजी मार्गमें रामको मिले।

उच्चैरसौ राघवमाह्वतेद धनु सबाण कुरु माऽतियासी ।
पराक्रमज्ञ' प्रियसन्ततिस्त नम्र' क्षितीन्द्रोऽनुनिनीषुरूचे ॥ ५१ ॥

अन्वय —असौ राघवम् उच्चै आह्वत 'इद धनु सबाण कुरु, मा अतियासी'। पराक्रमज्ञ प्रियसन्तति क्षितीन्द्र त नम्र अनुनिनीषु ऊचे।

प्रयोगप०—अमुना राघव उच्चैराह्वायि—'(त्वया) इद धनु सबाण क्रियता, मा अतियायि'। पराक्रमज्ञेन प्रियसन्ततिना क्षितीन्द्रेण स नम्रेण अनुनिनीषुणा ( सता ) ऊचे।

व्याख्या—असौ = परशुराम, राघव=रामचन्द्रम्, उच्चै =तारस्वरम्, आह्वत= सस्पर्द्धमाहूतवान्, इद = पुरोनिर्दिष्ट, धनु =कार्मुक, सबाण= सशर, कुरु = विधेहि ( मया सह युध्यस्वेत्यर्थ ) मा अतियासी =अतिक्रम्य मा गा, पराक्रमज्ञ =परशुरामविक्रमाऽभिज्ञ, प्रियसन्तति = सन्तानवत्सल, क्षितीन्द्र = महाराज ( दशरथ इत्यर्थ ) त = परशुराम, नम्र = प्रणत, अनुनिनीषु = अनुनेतुमिच्छु ( सन् ), ऊचे = उवाच।

व्युत्पत्ति —राघव = रघोरपत्य पुमान् राघवस्तम् ( अण्प्रत्यय )। आह्वत=

ह्वेञ् स्पर्धायां शब्दे च इति धातो लुङि 'स्पर्धायामाङ' इत्यात्मनेपदम् । 'आत्मनेपदेष्वन्यतरस्याम्' इति च्लेरङादेश । 'आतो लोप इटि च' इत्याकारलोप । सबाण=बाणेन सहित सबाण, तत् ( बहु० )। मा अतियासी =अतिपूर्वकाद 'या प्रापणे' इति धातोर्माङ्योगे 'माङि लुङ्' इति लुङ् 'न माङ्योगे' इत्यडागमाभाव । 'यमरमनमातां सक्च' इति सक् इट् च । 'इट ईटि' इति सलोप । पराक्रमज्ञ=पराक्रम जानातीति पराक्रमज्ञस्तम्, 'आतोऽनुपसर्गे क' इति कप्रत्यय । यद्वा जानातीति ज्ञ, 'इगुपधज्ञाप्रीकिर क' इति कप्रत्यय, पराक्रमस्य ज्ञ ( ष० त० )। प्रियसन्तति =प्रिया सन्ततिर्यस्य स ( बहु० ) 'अभीष्टेऽभीप्सित हृद्य दयित वल्लभ प्रियम् ।' इत्यमर । क्षितीन्द्र =क्षितेरिन्द्र ( ष० त० ) अनुनिनीषु = नयते सन्नन्तात् उप्रत्यय । ऊचे = 'ब्रूञ् व्यक्ताया वाचि' इति धातो कर्तरि लिट्, 'ब्रुवो वचि' इति वचिरादेश ।

भावार्थ —परशुरामो रामचन्द्र तारस्वरेण सस्पर्धमाहूतवान्—'इद मदीय धनु सशर कुरु, अतिक्रम्य मा गा' इति । तत परशुरामविक्रमाऽभिज्ञ सुतवत्सलो दशरथो नम्रो भूत्वा अनुनयार्थं तमकथयत् ।

भाषार्थ —परशुरामने रामचन्द्रजीको ऊँचे स्वरसे ललकारा—'रामचन्द्र ! मेरे इस धनुपर बाण चढ़ाओ, मेरे वचनको लाघकर मत जाओ'। परशुरामके पराक्रमको जाननेवाले, पुत्रवत्सल महाराज दशरथने नम्र होकर ऋषिको मनानेकी इच्छा रखते हुए कहा ॥ ५१ ॥

अनेकशो निर्जितराजकस्त्व पितॄनतार्प्सीर्नृपरक्ततोयैः ।
सक्षिप्य सरम्भमसद्विपक्ष काऽऽस्थाऽर्भकेऽस्मिंस्तव राम ! रामे ॥५२॥

अन्वय —हे राम ! त्वम् अनेकशो निर्जितराजक ( सन् ) नृपरक्ततोयै पितॄन् अतार्प्सी , असद्विपक्ष सरम्भ सक्षिप्य, अर्भके रामे तव का आस्था ? ।

प्रयोगप०—( हे राम ! ) त्वया निर्जितराजकेन ( सता ) पितर अतर्पिषत, असद्विपक्ष सरम्भ सक्षिप्यताम्, रामे तव कया आस्थया ( भूयते )।

व्याख्या—हे राम=हे जामदग्न्य !, त्व=भवान्, अनेकश =बहुश ( बहुवारमित्यर्थ ), निर्जितराजक =पराजितराजसमूह ( सन् ) नृपरक्ततोयै =राजरुधिरजलै, पितॄन्=अग्निष्वात्तादीन्, अतार्प्सी =तर्पितवानसि । असद्विपक्ष=अविद्यमानशत्रु, सरम्भ=क्रोध, सक्षिप्य=सहृर । अर्भके=बालके, रामे=रामचन्द्रे, तव=भवत, का आस्था=क आदर ( नाऽय बालस्ते क्रोधभाजन भवितुमर्हतीत्यर्थ )।

व्युत्पत्ति —अनेकश =एकैकवारम् एकश, 'सख्यैकवचनाच्च वीप्सायाम्' इति शस्प्रत्यय । न एकश अनेकश ( नञ्० ) क्रियाविशेषणमेतत् । निर्जितराजक =

'विशङ्कट पृथु बृहद्विशालं पृथुलं महत्।' इत्यमरः। 'विशङ्कटे उरसि' इति मल्लिनाथसम्मतः पाठः। बाणपाणिः = बाणः पाणौ यस्य सः (बहु०) 'प्रहरणार्थेभ्यश्च परे निष्ठासप्तम्यौ' इति पाणिशब्दस्य परनिपातः। सप्तसप्ततालद्वयसः = सप्तसप्ताश्च ते तालाः सप्ततालाः (क० धा०), सप्तसप्ततालाः प्रमाणमस्य सप्तसप्ततालद्वयसः, 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' इति द्वयसच् प्रत्ययः। भीष्मः = बिभेत्यस्मादिति भीष्मः (औणादिको मक्प्रत्ययः) 'भीमादयोऽपादाने' इत्यपादानार्थे साधुः। धनुष्मान् = धनुरस्ति यस्य सः (मतुप्)। उपजान्वरत्निः = जानुनोः समीपमुपजानु (समीपार्थे अव्ययीभावः) तत्र (उपजानु) अरत्निः (लक्षणया बाहुः) यस्य सः (बहु०)। 'अरत्निस्तु निष्कनिष्ठेन मुष्टिना' इत्यमरः। जामदग्न्यः = जमदग्नेः अपत्यं पुमान् जामदग्न्यः, 'गर्गादिभ्यो यञ्' इत्यत्र पाठादपत्येऽपि गोत्रत्वारोपात् यञ्। साक्षाद् (मुख्यार्थेन) अपत्यविवक्षाया तु 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इत्यणि जामदग्नो भवति। पुरस्तात् = पूर्वस्मिन्निति पुरस्तात्, पूर्वशब्दात् 'अस्ताति च' इति अस्तातिप्रत्ययः पुरादेशश्च। ऐति स्म = आङ् पूर्वादिण् धातोः स्मयोगे 'लट् स्मे' इति भूते लट्।

भावार्थः—विपुलवक्षाः शरहस्तः तालवृक्षसमोन्नतः भयङ्करो धानुष्कः आजानुबाहुः परशुरामः मार्गे अग्रतः राममाजगाम।

भाषार्थ—चौड़ी छातीवाले, हाथमें बाण लिये हुए तालवृक्षके समान ऊँचे, भयङ्कर, धनुर्धारी और दीर्घबाहुयुक्त जमदग्निके पुत्र परशुरामजी मार्गमें रामको मिले।

> उच्चैरसौ राघवमाह्वतेदं धनुः सबाणं कुरु माऽतियासीः।
> पराक्रमज्ञः प्रियसन्ततिस्तं नम्रः क्षितीन्द्रोऽनुनिनीषुरूचे ॥ ५१ ॥

अन्वयः—असौ राघवम् उच्चैः आह्वत 'इदं धनुः सबाणं कुरु, मा अतियासीः'। पराक्रमज्ञः प्रियसन्ततिः क्षितीन्द्रः तं नम्रः अनुनिनीषुः ऊचे।

प्रयोगपरि०—अमुना राघवः उच्चैराह्वायि—'(त्वया) इदं धनुः सबाणं क्रियतां, मा अतियायि'। पराक्रमज्ञेन प्रियसन्ततिना क्षितीन्द्रेण सः नम्रेण अनुनिनीषुणा (सता) ऊचे।

व्याख्या—असौ = परशुरामः, राघवं = रामचन्द्रम्, उच्चैः = तारस्वरम्, आह्वत = सस्पर्द्धमाहूतवान्, इदं = पुरोनिर्दिष्टं, धनुः = कार्मुकं, सबाणं = सशरं, कुरु = विधेहि (मया सह युध्यस्वेत्यर्थः) मा अतियासीः = अतिक्रम्य मा गाः, पराक्रमज्ञः = परशुरामविक्रमाऽभिज्ञः, प्रियसन्ततिः = सन्तानवत्सलः, क्षितीन्द्रः = महाराजः (दशरथ इत्यर्थः) तं = परशुरामं, नम्रः = प्रणतः, अनुनिनीषुः = अनुनेतुमिच्छुः (सन्), ऊचे = उवाच।

व्युत्पत्तिः—राघवं = रघोरपत्यं पुमान् राघवस्तम् (अण्प्रत्ययः)। आह्वत =

ह्वेञ् स्पर्धायां शब्दे च इति धातो लुङि 'स्पर्धायामाङ' इत्यात्मनेपदम् । 'आत्मनेपदेष्वन्यतरस्याम्' इति च्लेरङादेश । 'आतो लोप इटि च' इत्याकारलोप । सबाण=बाणेन सहित सबाण, तत् ( बहु० )। मा अतियासी =अतिपूर्वकात् या प्रापणे' इति धातोर्माङ्योगे 'माङि लुङ्' इति लुङ् 'न माङ्योगे' इत्यडागमाभाव । 'यमरमनमातां सक्च' इति सक् इट् च । 'इट ईटि' इति सलोप । पराक्रमज्ञ=पराक्रम जानातीति पराक्रमज्ञस्तम्, 'आतोऽनुपसर्गे क' इति कप्रत्यय । यद्वा जानतीति ज्ञ, 'इगुपधज्ञाप्रीकिर क' इति कप्रत्यय, पराक्रमस्य ज्ञ (ष० त०)। प्रियसन्तति =प्रिया सन्ततिर्यस्य स (बहु०) 'अभीष्टेऽभीप्सित हृद्य दयित वल्लभ प्रियम् ।' इत्यमर । क्षितीन्द्र =क्षितेरिन्द्र (ष० त०) अनुनिर्नपु =नयते सन्नन्तात् उप्रत्यय । ऊचे ='ब्रूञ् व्यक्तायां वाचि' इति धातो कर्तरि लिट्, 'ब्रुवो वचि' इति वचिरादेश ।

भावार्थ—परशुरामो रामचन्द्र तारस्वरेण सस्पर्धमाहूतवान्—'इद मदीय धनु सशर कुरु, अतिक्रम्य मा गा' इति । तत परशुरामविक्रमाऽभिज्ञ सुतवत्सलो दशरथो नम्रो भूत्वा अनुनयाऽर्थं तमकथयत् ।

भाषाऽर्थ—परशुरामने रामचन्द्रजीको ऊँचे स्वरसे ललकारा—'रामचन्द्र ! मेरे इस धनुपर बाण चढाओ, मेरे वचनको लाघकर मत जाओ'। परशुरामके पराक्रमको जाननेवाले, पुत्रवत्सल महाराज दशरथने नम्र होकर ऋषिको मनानेकी इच्छा रखते हुए कहा ॥ ५१ ॥

अनेकशो निर्जितराजकस्त्वं पितॄनतार्प्सीर्नृपरक्ततोयैः ।
संक्षिप्य संरम्भमसद्विपक्षः काऽऽस्थाऽर्भकेऽस्मिंस्तव राम ! रामे ॥५२॥

अन्वय—हे राम ! त्वम् अनेकशो निर्जितराजक (सन्) नृपरक्ततोयै पितॄन् अतार्प्सी, असद्विपक्ष संरम्भ संक्षिप्य, अर्भके रामे तव का आस्था ? ।

प्रयोगप०—(हे राम !) त्वया निर्जितराजकेन (सता) पितर अतर्पिषत, असद्विपक्ष संरम्भ संक्षिप्यताम्, रामे तव कया आस्थया (भूयते) ।

व्याख्या—हे राम=हे जामदग्न्य !, त्वं=भवान्, अनेकश =बहुश (बहुवारमित्यर्थ ), निर्जितराजक =पराजितराजसमूह (सन्) नृपरक्ततोयै =राजरुधिरजलै, पितॄन्=अग्निष्वात्तादीन्, अतार्प्सी =तर्पितवानसि । असद्विपक्षः=अविद्यमानशत्रु, संरम्भ=क्रोध, संक्षिप्य=संहर । अर्भके=बालके, रामे=रामचन्द्रे, तव=भवत, का आस्था=क आदर (नाऽयं बालस्ते क्रोधभाजनं भवितुमर्हतीत्यर्थ )।

व्युत्पत्ति—अनेकश =एकैकवारम् एकश, 'संख्यैकवचनाच्च वीप्सायाम्' इति शस्प्रत्यय । न एकश अनेकश (नञ्०) क्रियाविशेषणमेतत् । निर्जितराजक =

राज्ञां समूहो राजकं; 'गोत्रोक्षोष्ट्रोरभ्र'इत्यादिना वुञ्। निर्जितं राजकं येन सः (बहु०)। नृपरक्ततोयैः=नॄन् पान्तीति नृपाः (कप्रत्ययः), तेषां रक्तानि नृपरक्तानि (ष० त०), तानि एव तोयानि नृपरक्ततोयानि, तैः, 'मयूरव्यंसकादयश्च' इति रूपकसमासः। अताप्सीः ='तृप प्रीणने' इति धातोर्लुङि 'स्पृशमृपकृषतृपदृपां च्लेः सिज्वा वाच्यः' इति विकल्पात्सिचि 'अनुदात्तस्य चर्दुपधस्याऽन्यतरस्याम्' इति अमभावपक्षे रूपम्। असद्विपक्षः=विरुद्धः पक्षः यस्य सः विपक्षः ( बहु० ), न सन् असन् ( नञ्० ), सः विपक्षः यस्य सः असद्विपक्षस्तम् (बहु०),'द्विड्विपक्षाऽहितामित्रदस्युशात्रवशत्रवः।' इत्यमरः। संरम्भं='संरम्भः सम्भ्रमः कोपे' इति विश्वः। संक्षिप्य=क्षिपेर्दैवादिकाल्लोटि सिपि 'अतो हेः' इति हिलोपः। अर्भके='पोतः पाकोऽर्भको डिम्भः' इत्यमरः।

भावाऽर्थः—हे परशुराम! भवान् बहुवारं राजसमूहं जितवान्, राजरक्तजलैः पितॄन् तर्पितवांश्च, तव शत्रुर्नाऽस्ति अतः क्रोधं संहर, बालके रामे तव कः आदरः ?।

भाषाऽर्थः—हे परशुरामजी! आपने बहुत बार राजाओंको जीता और उनके रुधिररूप जलोंसे पितरोंको तृप्त किया, आपका कोई शत्रु नहीं है, इस कारणसे क्रोध छोड़िए। बालक रामपर आपको क्रोध नहीं करना चाहिए॥ ५२॥

अजीगणद्दाशरथं न वाक्यं यदा स दर्पेण तदा कुमारः।
धनुर्व्यकार्क्षीद् गुरुबाणगर्भं लोकानलावीद्विजितांश्च तस्य॥ ५३॥

अन्वयः—यदा सः दर्पेण दाशरथं वाक्यं न अजीगणत् तदा कुमारः गुरुबाणगर्भं धनुः व्यकार्क्षीत्, विजितान् तस्य लोकांश्च अलावीत्।

प्रयोगप०—यदा तेन वाक्यं न अगणि, तदा कुमारेण धनुः व्यकर्षि, विजिताः तस्य लोकाश्च अलाविषत।

व्याख्या—यदा=यस्मिन् काले, सः=परशुरामः, दर्पेण=गर्वेण, दाशरथं= दशरथसम्बन्धि ( दशरथस्येत्यर्थः ), वाक्यं=वचः, न अजीगणत्=न गणितवान्, तदा=तस्मिन् काले, कुमारः=राजकुमारः ( रामचन्द्र इत्यर्थः )। गुरुबाणगर्भं= दुर्वहशरयुक्तं, धनुः=चापं ( परशुरामस्येति भावः ), व्यकार्क्षीत्=विकृष्टवान् ( चकर्षेत्यर्थः )। विजितान्=तपोजितान्, तस्य=परशुरामस्य, लोकांश्च=पुण्यस्थानानि च, अलावीत्=छिन्नवान् ( निःस्पृहस्य तस्य अनुज्ञयैव चिच्छेदेत्यर्थः। रामबाणस्य अमोघवर्तित्वादिति भावः )।

व्युत्पत्तिः—यदा='सर्वैकान्यकियत्तदः काले दा' इति काले दाप्रत्ययः। दाशरथं=दशरथस्येदं दाशरथं, तत् 'तस्येदम्' इत्यण्। अजीगणत्='गण संख्याने' इति धातोः स्वाऽर्थण्यन्ताल्लुङि 'चङि' इति द्विर्वचनम्, 'ई च गणः' इत्यभ्यासस्येकारः। तदा=पूर्वसूत्रेण दाप्रत्ययः। गुरुबाणगर्भं=गुरुबा

राज्ञा समूहो राजक, 'गोत्रोक्षोष्ट्रोरभ्रे'त्यादिना वुञ्। निर्जित राजक येन स (बहु०)। नृपरक्ततोयै=नृन् पान्तीति नृपा (कप्रत्यय), तेषा रक्तानि नृपरक्तानि (ष० त०), तानि एव तोयानि नृपरक्ततोयानि, तै, 'मयूरव्यसकादयश्च' इति रूपकसमास। अताप्सीं ='तृप प्रीणने' इति धातोर्लुङि 'स्पृशमृशकृषतृपदृपा च्लेः सिज्वा वाच्य' इति विकल्पात्सिचि 'अनुदात्तस्य चर्दुपधस्याऽन्यतरस्याम्' इति अम्भावपक्षे रूपम्। असद्विपक्ष=विरुद्ध पक्ष यस्य स विपक्ष (बहु०), न सन् असन् (नञ्०), स विपक्ष यस्य स असद्विपक्षस्तम् (बहु०), 'द्विड्विपक्षाऽहितामित्रदस्युशात्रवशत्रव ।' इत्यमर। सरम्भ='सरम्भ सभ्रम कोपे' इति विश्व। सक्षिम्य=क्षिपेर्दैवादिकाल्लोटि सिपि 'अतो हे' इति हिलोप। अर्भके='पोत पाकोऽर्भको डिम्भ' इत्यमर।

भावार्थ —हे परशुराम! भवान् बहुवार राजसमूह जितवान्, राजरक्तजलै पितॄन् तर्पितवाश्च, तव शत्रुर्नाऽस्ति अत क्रोध सहर, बालके रामे तव क आदर ?।

भाषार्थ —हे परशुरामजी! आपने बहुत बार राजाओंको जीता और उनके रुधिररूप जलोंसे पितरोंको तृप्त किया, आपका कोई शत्रु नहीं है, इस कारणसे क्रोध छोड़िए। बालक रामपर आपको क्रोध नहीं करना चाहिए॥ ५२॥

अजीगणद्दाशरथ न वाक्य यदा स दर्पेण तदा कुमार ।
धनुर्व्यकार्क्षीद् गुरुबाणगर्भ लोकानलावीद्विजिताश्च तस्य ॥ ५३ ॥

अन्वय —यदा स दर्पेण दाशरथ वाक्य न अजीगणत् तदा कुमार गुरुबाणगर्भ धनु व्यकार्क्षीत्, विजितान् तस्य लोकाश्च अलावीत्।

प्रयोगप०—यदा तेन वाक्य न अगणि, तदा कुमारेण धनु व्यकर्षि, विजिता तस्य लोकाश्च अलाविषत।

व्याख्या—यदा=यस्मिन् काले, स =परशुराम, दर्पेण=गर्वेण, दाशरथ= दशरथसम्बन्धि (दशरथस्येत्यर्थ), वाक्य=वच, न अजीगणत्=न गणितवान्, तदा=तस्मिन् काले, कुमार =राजकुमार (रामचन्द्र इत्यर्थ)। गुरुबाणगर्भ= दुर्वहशरयुक्त, धनु =चाप (परशुरामस्येति भाव), व्यकार्क्षीत्=विकृष्टवान् (चकर्षेत्यर्थ)। विजितान्=तपोजितान्, तस्य=परशुरामस्य, लोकांश्च=पुण्यस्थानानि च, अलावीत्=छिन्नवान् (नि स्पृहस्य तस्य अनुज्ञयैव चिच्छेदेत्यर्थ। रामबाणस्य अमोघवर्तित्वादिति भाव)।

व्युत्पत्ति —यदा='सर्वैकान्यकियत्तद काले दा' इति काले दाप्रत्ययः। दाशरथ=दशरथस्येद दाशरथ, तत् 'तस्येदम्' इत्यण। अजीगणत्='गण सख्याने' इति धातो स्वाऽर्थण्यन्ताल्लुङि 'चङि' इति द्विर्वचनम्, 'ई च गण' इत्यभ्यासस्येकार। तदा=पूर्वसूत्रेण दाप्रत्यय। गुरुबाणगर्भ=गुरुश्चाऽसौ बाण गुरुबाण·

( क० धा० ) स गर्भे यस्य तत् गुरुबाणगर्भं, तत् ( बहु० ) । व्यकार्षीत्='कृष विलेखने' इति धातो लुङ । पूर्ववत् 'स्पृशमृषकृषतृपे'त्यादिना पक्षे सिचि रूपम् । हलन्तलक्षणा वृद्धि , 'षढो क सि' इति कत्वम् । लोकान्-'अथो जगती लोको विष्टप भुवन जगत् ।' इत्यमर । अलावीत्='लूञ् छेदने' इति धातो लुङि सिचि वृद्धि ।

भावार्थ —यदा परशुरामो गर्वेण दशरथवाक्य न श्रुतवान् तदा रामचन्द्र दुर्वहबाणयुक्त तस्य धनुश्चकर्ष, तपोजितान् परशुरामपुण्यलोकाश्च अच्छिनत् ।

भाषार्थ —जब परशुरामने घमण्डसे दशरथकी बात न सुनी, तब रामचन्द्रने उनके बाणयुक्त धनुको खीचा और पुण्यसे जीते गये उनके लोकोंको नष्ट कर दिया ॥ ५३ ॥

जिते नृपाऽरौ सुमनीभवन्ति शब्दायमानान्यशनैरशङ्कम् ।
वृद्धस्य राज्ञाऽनुमतेर्बलानि जगाहिरेऽनेकमुखानि मार्गान् ॥ ५४ ॥

अन्वय —नृपाऽरौ जिते ( सति ) सुमनीभवन्ति अशनै अशङ्क शब्दायमानानि बलानि वृद्धस्य राज्ञ अनुमते अनेकमुखानि ( सन्ति ) मार्गान् जगाहिरे।

प्रयोगप०—सुमनीभवद्भि शब्दायमानै बलै अनेकमुखै ( सद्भि ) मार्गा जगाहिरे ।

व्याख्या—नृपाऽरौ=क्षत्रियाऽन्तके ( परशुरामे इत्यर्थ ), जिते=पराभूते (सति), सुमनीभवन्ति=प्रसन्नचित्तानि, अशनै =अमन्दम्, अशङ्क=निश्शङ्क, शब्दायमानानि=शब्द कुर्वाणानि ( क्ष्वेडमानानीत्यर्थ ), बलानि=सैन्यानि, वृद्धस्य=स्थविरस्य राज्ञ =नृपस्य (दशरथस्येत्यर्थ ), अनुमते=अनुज्ञानात्; अनेकमुखानि बहुमुखानि ( सन्ति ), मार्गान्=नानापथान् , जगाहिरे=प्रविविशु ।

व्युत्पत्ति —नृपाऽरौ=नृपाणामरिर्नृपाऽरिस्तस्मिन् (ष० त०)। सुमनीभवन्ति= शोभन मनो येषा तानि सुमनांसि (बहु०), असुमनासि सुमनासि यथा सम्पद्यन्ते तथा भवन्ति सुमनीभवन्ति,'अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च' इति च्वौ अन्तस्य लोप 'अस्य च्वौ' इतीकार , ततो लट शत्रादेशो नपुंसके जसि नुमागम । अशनै = न शनै ( नञ० ) । अशङ्कम्=अविद्यमाना शङ्का यस्मिन् (कर्मणि) तद् यथा तथा, 'नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोप ' इति नञ्बहुव्रीहि । शब्दायमानानि= 'शब्दवैरकलहाऽभ्रकण्वमेघेभ्य करणे' इति क्यङ् , तदन्ताल्लट शानजादेश । अनेकमुखानि=न एकानि अनेकानि ( नञ० ), तानि मुखानि येषा तानि (बहु०) । मार्गान्='अयन वर्त्म मार्गाऽध्वपन्थान' पदवी सृति ।' इत्यमर । जगाहिरे= गाहू विलोडने' इति धातोर्लिट् ।

भावार्थ —क्षत्रियनाशके परशुरामे जिते सति प्रसन्नानि उच्चस्वरेण निःशङ्क

शब्द कुर्वाणानि सैन्यानि महाराजस्य दशरथस्य अनुज्ञानात् बहुमुखानि भूत्वा अनेकान् पथ प्राविशन्।

भाषाऽर्थं—परशुरामके हारने पर प्रसन्न चित्तवाले निःशङ्क होकर ऊंचे स्वरसे शब्द करनेवाले सैनिक लोगोंने महाराज दशरथकी अनुमतिसे अनेक स्थानोंमें फैलकर मार्गोंमें प्रवेश किया ॥ ५४ ॥

अथ पुरुजवयोगान्नेदयद् दूरसस्थ दवयदतिरयेण प्राममुर्वीविभागम्।
क्लमरहितमचेतन्नीरजीकारितक्ष्मा बलमुपहितशोभा तूर्णमायादयोध्याम् ॥

अन्वय—अथ पुरुजवयोगात् दूरसस्थ नेदयत्, प्राप्तम् उर्वीविभागम् अतिरयेण दवयत् क्लमरहितम् अचेतत् बल नीरजीकारितक्ष्माम् उपहितशोभाम् अयोध्या तूर्णम् आयात्।

प्रयोगप०—नेदयता दवयता क्लमरहितेन अचेतता बलेन नीरजीकारितक्ष्मा उपहितशोभा अयोध्या तूर्णम् आयायत।

व्याख्या—अथ=नानापथगमनाऽनन्तर, पुरुजवयोगात्=महावेगवशात्, दूरसस्थ=विप्रकृष्टस्थ नेदयत्=अन्तिकस्थ कुर्वन्, प्राप्तम्=आसन्नम्, उर्वीविभाग=पृथ्वीविभागम्, अतिरयेण=वेगाऽतिशयेन, दवयत्=दूरीकुर्वत्, क्लमरहितम्=अखेदम्, अचेतत्=अजानत् (इयद्दूर गतमिति अजानदिति भाव), बल=सैन्य, नीरजीकारितक्ष्मा=निर्धूलीकारितपृथ्वीम् (सिक्तसमृष्टभूतलामित्यर्थ), उपहितशोभाम्=आहितश्रीकाम् (ध्वजपताकादिभिरिति शेष), अयोध्या=कोशल, तूर्ण=त्वरितम्, आयात्=आजगाम।

व्युत्पत्ति—पुरुजवयोगात्=पूयते वर्द्धते इति पुरु, पूर्यते पृणातेर्वा औणादिक कुप्रत्यय। पुरुश्चाऽसौ जव पुरुजव (क० धा०), तेन योग पुरुजवयोग, तस्मात् (तृ० त०)। दूरसस्थं=सम्यक् स्थान सस्था, 'आतश्चोपसर्गे' इत्यङ्। दूरे सस्था यस्य तत् दूरसस्थ, तत् (व्यधिकरणबहु०)। नेदयत्=अन्तिकशब्दात् 'तत्करोति तदाचष्टे' इति णिच्, णाविष्ठवद्भावात् 'अन्तिकबाढयोर्नेदसाधौ' इति नेदादेश। पश्चाल्लट्, शतरि शप् अयादेश। उर्वीविभागम्=उर्व्या विभाग उर्वीविभागस्तम् (ष० त०)। अतिरयेण=अत्यन्त रय अतिरयस्तेन (सुप् सुपा समास) 'हेतौ' इति तृतीया। दवयत्=दूरशब्दात् पूर्ववण्णिचि इष्ठवद्भावे च 'स्थूलदूर' इत्यादिना यणादिपरलोप पूर्वस्य च गुण पश्चात्तथैव लडादय। क्लमरहित=क्लमेन रहितम् (तृ० त०), अचेतत्=चेततीति चेतत्, 'चिती सज्ञाने' इति धातोर्लट् शत्रादेश। न चेतत् अचेतत् (नञ्०) नीरजीकारितक्ष्मा=निर्गत रज यस्या सा नीरजा (बहु०)। अनीरजा नीरजा यथा सम्पद्यते तथा कारिता नीरजी-

करिता सुमतीवत् प्रक्रिया। नीरजीकारिता क्षमा यस्यां सा नीरजीकारितक्षमा, ताम् ( बहु० )। उपहितशोभाम्=उपहिता शोभा यस्यां सा उपहितशोभा, ताम् (बहु०) 'शोभाकान्तिर्द्युतिश्छवि' इत्यमर। तूर्णम्='त्वरा सम्भ्रमे' इति धातो 'रुष्य-मत्वरसंघुषास्वनाम्' इत्यादिना पक्षे इडभाव 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' इति वकारोपधयोरूठ्, 'रदाभ्यां निष्ठातो न पूर्वस्य च द' इति नत्वम्। आयात्= आङ्पूर्वाद्धातेर्लङ्।

भावार्थ—अनन्तर महावेगवशात् दूरस्थित निकटीकुर्वत् निकटस्थ पृथ्वी विभाग दूरीकुर्वत् श्रमरहितम् इयद्दूर गतमित्यजानत् दशरथसैन्य सिक्तसमृष्टभू-तलां ध्वजपताकादिभि शोभासम्पन्नामयोध्यां सत्वर प्रापत्॥ ५५॥

भाषार्थ—तब अत्यन्त वेगके कारण दूरस्थितको निकटस्थ और निकटस्थ पृथ्वीके विभागको दूर करती हुई, श्रमरहित 'इतने दूर गये हैं' ऐसा भी वेगके कारण नहीं जानती हुई महाराज दशरथकी सेना सेचन और झाडू देनेसे धूलिरहित जमीनवाली और शोभासे परिपूर्ण अयोध्यामें जल्दीसे आ पहुँची॥ ५५॥

इति श्रीभट्टिकाव्ये व्याख्याद्वयोपेते प्रकीर्णकाण्डे सीतापरिणयो नाम द्वितीय सर्ग.॥

---

## तृतीयः सर्गः

वधेन सख्ये पिशिताऽशनानां क्षत्राऽन्तकस्याऽभिभवेन चैव।
आढ्यम्भविष्णुर्यशसा कुमार प्रियम्भविष्णुर्न स यस्य नाऽऽसीत्॥ १॥

अन्वय—सख्ये पिशिताऽशनाना वधेन क्षत्राऽन्तकस्य अभिभवेन चैव य आढ्यम्भविष्णु कुमार यस्य प्रियम्भविष्णु न, स न आसीत्।

प्रयोगप०—आढ्यम्भविष्णुना कुमारेण यस्य प्रियम्भविष्णुना न ( अभूयत ), तेन न अभूयत।

व्याख्या—सख्ये=युद्धे, पिशिताऽशनानां=राक्षसानां, वधेन=हननेन क्षत्राऽन्तकस्य=परशुरामस्य, अभिभवेन च=पराजयेन च (एवकार पादपूरणे), यशसा=कीर्त्या, आढ्यम्भविष्णु=समृद्धो भवन् (रक्षोवधपरशुरामविजयसजातकीर्तिसम्पन्न इत्यर्थ ), कुमार=रामचन्द्र, यस्य=जनस्य, प्रियम्भविष्णु=प्रियभूत, न=न अभूत्, स=अप्रियराम, न आसीत=अभूत् ( रामस्य सर्वप्रियङ्करत्वादिति भाव। एतेनाऽस्य यौवराज्याऽभिषेकहेतुर्जनाऽनुराग उक्त )।

व्युत्पत्ति—सख्ये='मृधमास्कन्दन सख्य समीक साम्परायिकम्।' इत्यमर। पिशिताऽशनाना=पिशितमशन येषा ते पिशिताऽशना, तेषाम् ( बहु० ) कृद्योगे

कर्मणि षष्ठी । वधेन=हनन वधस्तेन, हन्धातो 'हनश्च वध' इति भावे अप् वधा देशश्च । पत्राऽन्तकस्य=पत्राणामन्तक पत्राऽन्तकस्तस्य ( ष० त० ) कर्मणि षष्ठी । अभिभवेन='ऋदोरप्' इत्यप् । आढ्यभविष्णु =अनाढ्य आढ्यो भवतीति आढ्यभविष्णु, 'आढ्यसुभगस्थूलपलितनग्नाऽन्धप्रियेषु च्व्यर्थेष्वच्वौ कृञ करणे ख्युन्' इत्यनुवृत्तौ 'कर्तरि भुव खिष्णुच्खुकञौ' इति खिष्णुच्प्रत्यय 'अरुर्द्विषदजन्तस्य मुम्' इति मुम् । प्रियभविष्णु =अप्रिय प्रियो भवतीति प्रियभविष्णु, पूर्ववत् प्रक्रिया ।

भावाऽर्थ —विश्वामित्रयज्ञे राक्षसवधेन विवाहाऽनन्तर परशुरामविजयेन च यश सम्पन्नो रामचन्द्र सर्वस्याऽपि प्रियोऽभूत् ।

भाषाऽर्थ —युद्ध में राक्षसोंको मारने से और परशुरामको पराजित करनेसे कीर्ति पाये रामचन्द्र जिसके प्यारे नहीं थे वैसा कोई भी पुरुष नहीं था ( अर्थात् रामचन्द्र सबके ही प्यारे हो गये थे ) ॥ १ ॥

तत सुचेतीकृतपौरभृत्यो राज्येऽभिषेक्ष्ये सुतमित्यनीचै ।
आघोषयन् भूमिपति समस्त भूयोऽपि लोक सुमनीचकार ॥ २ ॥

अन्वय —तत सुचेतीकृतपौरभृत्य भूमिपति 'सुत राज्ये अभिषेक्ष्ये' इति अनीचै आघोषयन् भूय अपि समस्त लोक सुमनीचकार ।

प्रयोगप०—सुचेतीकृतपौरभृत्येन भूमिपतिना 'सुतो राज्येऽभिषेक्ष्यते' इति आघोषयता समस्तो लोक सुमनीचक्रे ।

व्याख्या—तत =जनाऽनुरागाऽनन्तर, सुचेतीकृतपौरभृत्य =अनुरक्तीकृत नागरिकभृत्य, भूमिपति =महाराज ( दशरथ इत्यर्थ ) सुत=पुत्र ( रामम् ), राज्ये राजकर्मणि, अभिषेक्ष्ये=अभिषेक्ष्यामि ( अभिषेक करिष्यामि ), इति=इत्थम्, अनीचै =उच्चै, आघोषयन्=घोषणा कारयन्, भूयोऽपि=पुनरपि, समस्त लोक=सवर्णा प्रजा, सुमनीचकार=सन्तुष्टचित्त चकार ( रामाऽभिषेकवृत्तान्त सर्वलोकानन्दकरो जात इत्यर्थ ) ।

व्युत्पत्ति —सुचेतीकृतपौरभृत्य शोभन चेतो येषा ते सुचेतस ( बहु० ) असुचेतस सुचेतस यथा सम्पद्यन्ते तथा कृता सुचेतीकृता ( च्विप्रत्यय ) 'अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च' इति साधुत्वम् । पुरि भवा पौरा, 'तत्र भव' इत्यण् । सुचेतीकृता पौरा भृत्याश्च येन स ( बहु० ) । भूमिपति =भूमे पति (ष० त० ) अभिषेक्ष्ये='षिच क्षरणे' इति धातो कर्तरि लृट् तङ् । अनीचै =न नीचै ( नञ्० ) । समस्त='विश्वमशेष कृत्स्न समस्तनिखिलाऽखिलानि नि शेषम् ।' इत्यमर । सुमनीचकार=असुमना सुमना यथा सम्पद्यते तथा चकार सुमनीचकार 'अरु' रित्यादिसूत्रेण पूर्ववत्साधुत्वम् ।

भावार्थ—अनन्तर पौरभृत्यानामनुरञ्जको महाराजो दशरथ "पुत्रस्य राज्याऽभिषेक करिष्यामी"त्याघोषणा कारयन् पुनरपि सपूर्णा प्रजा सन्तुष्टाश्चकार।

भाषार्थ—तब नागरिक और भृत्योंको प्रसन्न करनेवाले महाराज दशरथ ने "मै अपने पुत्र रामचन्द्रका राज्याऽभिषेक करूँगा" ऐसी घोषणा करवा दी तथा फिर भी सब लोकको प्रसन्न किया ॥ २ ॥

आदिक्षदादीप्तकृशानुकल्प सिंहासन तस्य सपादपीठम् ।
सन्तप्तचामीकरवल्गुवज्रं विभागविन्यस्तमहार्घरत्नम् ॥ ३ ॥

अन्वय—तस्य आदीप्तकृशानुकल्प सन्तप्तचामीकरवल्गुवज्र विभागविन्यस्तमहार्घरत्न सपादपीठ सिंहासनम् आदिक्षत् ।

प्रयोगप०—(तेन) तस्य आदीप्तकृशानुकल्प सिंहासनम् आदेशि।

व्याख्या—तस्य=रामस्य, आदीप्तकृशानुकल्पं=प्रज्वलिताग्निवर्णं, सन्तप्त चामीकरवल्गुवज्रम्=उत्तप्तसुवर्णसुन्दरहीरक, विभागविन्यस्तमहार्घरत्न=तत्तत्प्रदेशखचितबहुमूल्यमणिक, सपादपीठ=पादपीठसहित, सिंहासन=सौवर्ण राजासनम्, आदिक्षत्=सज्जीक्रियतामित्यादिष्टवान् ( दशरथ इति शेष )।

व्युत्पत्ति—आदीप्तकृशानुकल्पम्=समन्तादीप्त आदीप्त ( गतिसमास )। आदीप्तश्चाऽसौ कृशानु आदीप्तकृशानु ( क० धा० )। ईषदसमाप्त आदीप्तकृशानुः आदीप्तकृशानुकल्प तत् (कल्पप्प्रत्यय)। सन्तप्तचामीकरवल्गुवज्र=सम्यक् तप्तानि सन्तप्तानि (गति०)। सन्तप्तानि च तानि चामीकराणि सन्तप्तचामीकराणि ( क० धा० ), 'चामीकर जातरूप महारजतकाञ्चने।' इत्यमर। सन्तप्तचामीकराणि इव वल्गूनि सन्तप्तचामीकरवल्गूनि, 'उपमानानि सामान्यवचनै' इति समास। सन्तप्तचामीकरवल्गूनि वज्राणि यस्य तद् ( बहु० )। विभागविन्यस्तमहार्घरत्न=विभागेषु विन्यस्तानि विभागविन्यस्तानि ( स० त० )। महान् अर्घ ( मूल्यम् ) येषां तानि महार्घाणि ( बहु० )। विभागविन्यस्तानि महार्घाणि रत्नानि (पद्मरागादीनि) यस्मिंस्तत् ( बहु० )। सपादपीठ=पादयो पीठ पादपीठ ( ष० त० ), तेन सहितं सपादपीठ, तत् ( बहु० )। आदिक्षत्=आङ्पूर्वकात् 'दिश अतिसर्जने' इति धातो लुङि 'शल इगुपधादनिट• क्स' इति क्स ।

भावार्थ—दशरथ प्रज्वलिताऽग्निवर्णसदृशम् उत्तप्तसुवर्णसमसुन्दरहीरकभूषित तत्तत्प्रदेशखचितबहुमूल्यपद्मरागादिमणिशोभित पादपीठसहित सिंहासन रामस्य कृते सज्जीक्रियतामित्यादिदेश।

भाषार्थ—महाराज दशरथने 'प्रज्वलित अग्निके सदृश, तप्त किये गये सोने की तरह, सुन्दर हीरोंसे भूषित, तत्तत् प्रदेशोंमें जडे गये बहुमूल्य रत्नोंसे शोभित पादपीठ(पावदान) से युक्त सिंहासनको रामके लिए तैयार करो' ऐसी आज्ञा दी॥३॥

प्रास्थापयत्पूगकृतान्स्वपोष पुष्टान्प्रयत्नाद् दृढगात्रबन्धान् ।
सभर्मकुम्भान्पुरुषान्समन्तात्पत्काषिणस्तीर्थजलाऽर्थमाशु ॥ ४ ॥

अन्वय—पूगकृतान् स्वपोष पुष्टान् दृढगात्रबन्धान् सभर्मकुम्भान् पत्काषिण पुरुषान् तीर्थजलाऽर्थं समन्तात् प्रास्थापयत् ।

प्रयोगप०—पूगकृता पुष्टा दृढगात्रबन्धा सभर्मकुम्भा पत्काषिण पुरुषा प्रास्थाप्यन्त ।

व्याख्या—पूगकृतान् = सङ्घीकृतान् , स्वपोष पुष्टान् = स्वेन धनेन पुष्टान् , दृढगात्रबन्धान् = कठोरशरीरसन्धीन् ( भारोद्वहने योग्यानित्यर्थं ), सभर्मकुम्भान् = सुवर्णकलशसहितान् , पत्काषिण = पदातीन् , पुरुषान् = पुस , तीर्थजलाऽर्थं = तीर्थजलानयनार्थम ( अभिषेकार्थमिति भाव ), समन्तात् = सर्वासु दिक्षु, आशु = शीघ्र, प्रयत्नात् = उत्साहात् , प्रास्थापयत् = प्रस्थापितवान् ।

व्युत्पत्ति—पूगकृतान् = अपूगा पूगा कृता पूगकृता , तान् 'श्रेण्यादिषु च्व्यर्थवचन कर्तव्यम्' इति वचनात् 'श्रेण्यादय कृतादिभि ' इति समास । स्वपोष पुष्टान् = 'स्वे पुष' इति णमुल् 'अमैवाव्ययेन' इति समास 'कषादिषु यथाविध्यनुप्रयोगश्च' । दृढगात्रबन्धान् = गात्रस्य बन्ध गात्रबन्ध ( ष० त० ) 'गात्र वपु सहनन शरीर वर्ष्म विग्रह ।' इत्यमर । दृढो गात्रबन्धो येषां ते दृढगात्रबन्धास्तान् (बहु०) । सभर्मकुम्भान् = भर्मण कुम्भा भर्मकुम्भा (ष० त०), भर्मकुम्भै सहिता सभर्मकुम्भास्तान् (बहु०) । पत्काषिण = पादौ कषन्तीति तच्छीला पत्काषिणस्तान् 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनि 'हिमकाषिहतिषु च' इति पादशब्दस्य पदादेश । तीर्थजलार्थम् = तीर्थानां जलानि तीर्थजलानि ( ष० त० ), तीर्थजलेभ्य इद (यथा तथा) तीर्थजलार्थम् 'अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्' इति समास । प्रयत्नात् = प्रकृष्टो यत्न प्रयत्नस्तस्मात् ( प्रादिसमास ) । प्रास्थापयत् = प्रपूर्वस्तिष्ठतिगमनाऽर्थकस्तस्मात् ण्यन्ताल्लङ्, 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ' इति पुगागम ।

भावाऽर्थ—महाराजो दशरथ सङ्घीकृतान् स्वधनपुष्टान् दृढशरीरसन्धीन् गृहीतसुवर्णकलशान् पदातीन् पुरुषान् तीर्थजलानयनार्थं सर्वासु दिक्षु शीघ्रमुत्साहात् प्रस्थापितवान् ।

भाषाऽर्थ—महाराज दशरथने इकट्ठे किये गये, अपने धन से पुष्ट, दृढ शरीरसन्धियोंसे युक्त, सोनेके कलश लिये हुए, पैदल बहुतसे पुरुषोंको तीर्थजल लानेके लिए सब दिशाओंमें शीघ्र उत्साहसे भेजा ॥ ४ ॥

उक्षाम्प्रचक्रुर्नगरस्य मार्गान्ध्वजान्बबन्धुर्मुमुचु खधूपान् ।
दिशश्च पुष्पैश्चकरुविचित्रैरर्थेषु राज्ञा निपुणा नियुक्ता ॥ ५ ॥

अन्वय.—अर्थेषु निपुणाः राज्ञा नियुक्ताः नगरस्य मार्गान् उक्षाम्प्रचक्रुः, ध्वजान् बबन्धुः, खधूपान् मुमुचुः, दिशश्च विचित्रैः पुष्पैः चकरुः।

प्रयोगप०—निपुणैः नियुक्तैः मार्गाः उक्षाम्प्रचक्रिरे, ध्वजा बबन्धिरे, खधूपा मुमुचिरे, दिशश्च पुष्पैः चकरिरे।

व्याख्या—अर्थेषु = कर्तव्याऽर्थेषु, निपुणाः = प्रवीणाः, राज्ञा = दशरथेन, नियुक्ताः = अधिकृताः, पुरुषाः, नगरस्य = पुरस्य, मार्गान् = पथः, उक्षाम्प्रचक्रुः = निषिषिचुः (धूलिप्रशमनार्थमिति शेषः)। ध्वजान् = केतून्, बबन्धुः = उच्छ्रायितवन्तः। खधूपान् = आकाशव्यापिधूपान्, मुमुचुः = प्रमुक्तवन्तः (प्रसारयामासुरित्यर्थः)। दिशश्च = आशाश्च, विचित्रैः = नानाप्रकारैः, पुष्पैः = कुसुमैः, चकरुः = विचिक्षिपुः (दिक्षु पुष्पाणि विचिक्षिपुरित्यर्थः)।

व्युत्पत्तिः—निपुणाः = 'प्रवीणे निपुणाऽभिज्ञविज्ञनिष्णातशिक्षिताः।' इत्यमरः। उक्षाम्प्रचक्रुः = 'उक्ष सेचने' इति धातोर्लिट्। 'इजादेश्च गुरुमतोऽनृच्छः' इत्याम्प्रयोगे कृञोऽनुप्रयोगः। 'कृञ्चानुप्रयुज्यते लिटि' इत्यत्र पदान्तरानुप्रयोगनिषेधेऽपि 'ते प्राग्धातोः' इत्यनेन गत्युपसर्गसञ्ज्ञकानां धात्वर्थकत्वादिना धात्वन्तरप्रायत्वाच्च अत्र धातोः प्रागेव प्रयोगनियमात् तेषां प्रोपसर्गस्य न व्यवधायकत्वमतो नाऽसाधुत्वम्। 'तं पातयां प्रथममास' 'प्रभ्रंशयां यो नहुषं चकार' इत्यादिस्थले तु उपसर्गेतरस्य व्यवधानात् असाधुत्वमेव। जयमङ्गलाकारेण तु व्यवधानभयात् 'उक्षान् प्रचक्रुः' इति पाठः कल्पितः व्याख्यातः च—उक्षणमुक्षः 'गुरोश्च हलः' इत्यप्रत्ययः, सः विद्यते येषां ते उक्षास्तान् (सेकवन्तः) 'अर्शआदिभ्योऽच्' इत्यच् प्रत्ययः इति। तन्मल्लिनाथमते प्रसिद्धपाठत्यागादप्रसिद्धपाठकल्पनाच्च साहसमेवेत्युपेक्ष्यम्। खधूपान् = खव्यापकाः धूपाः खधूपास्तान् (मध्यमपदलोपी समासः) चकरुः = 'कॄ विक्षेपे' इति धातोः लिटि 'ऋच्छत्यॄताम्' इति गुणः।

भावार्थः—विधेयाऽर्थनिपुणाः राजाऽधिकृताः पुरुषाः नगरमार्गान् सिक्तवन्तः, ध्वजानुच्छ्रायितवन्तः, आकाशव्यापिनो धूपान् प्रसारयामासुः, दिक्षु विचित्रपुष्पाणि च विचिक्षिपुः।

भाषाऽर्थ—कार्योंमें निपुण महाराजसे नियुक्त पुरुषोंने शहरके मार्गोंको सींचा, ध्वजाओंको फहराया, आकाशको व्याप्त करनेवाले धूपोंको फैलाया और दिशाओंको रङ्ग बिरङ्गे फूलोंसे सजाया ॥ ५ ॥

मातामहाऽऽवाससुपेयिवांसं मोहादपृष्ट्वा भरतं तदानीम्।
तत्केकयी सोढुमशक्नुवाना ववार रामस्य वनप्रयाणम् ॥ ६ ॥

अन्वयः—तत् सोढुम् अशक्नुवाना केकयी तदानीं मातामहावासम् उपेयिवांसं भरतं मोहात् अपृष्ट्वा रामस्य वनप्रयाणं ववार।

प्रास्थापयत्पूगकृतान्स्वपोषं पुष्टान्प्रयत्नाद् दृढगात्रबन्धान् ।
सभर्मकुम्भान्पुरुषान्समन्तात्पत्काषिणस्तीर्थजलार्थमाशु ॥ ४ ॥

अन्वय —पूगकृतान् स्वपोषं पुष्टान् दृढगात्रबन्धान् सभर्मकुम्भान् पत्काषिण पुरुषान् तीर्थजलार्थं समन्तात् प्रास्थापयत् ।

प्रयोगप०—पूगकृता पुष्टा दृढगात्रबन्धा सभर्मकुम्भा पत्काषिण पुरुषा प्रास्थाप्यन्त ।

व्याख्या—पूगकृतान्=सङ्घीकृतान्, स्वपोषं पुष्टान्=स्वेन धनेन पुष्टान्, दृढगात्रबन्धान्=कठोरशरीरसन्धीन् ( भारोद्वहने योग्यानित्यर्थ ), सभर्मकुम्भान्=सुवर्णकलशसहितान्, पत्काषिण =पदातीन्, पुरुषान्=पुंस, तीर्थजलार्थं=तीर्थजलानयनार्थम ( अभिषेकार्थमिति भाव ), समन्तात्=सर्वासु दिक्षु, आशु = शीघ्र, प्रयत्नात्=उत्साहात्, प्रास्थापयत्=प्रस्थापितवान् ।

व्युत्पत्ति —पूगकृतान्=अपूगा पूगा कृता पूगकृता, तान् 'श्रेण्यादिषु च्व्यर्थवचनं कर्तव्यम्' इति वचनात् 'श्रेण्यादय कृतादिभि' इति समास । स्वपोषं पुष्टान्='स्वे पुष' इति णमुल् 'अमैवाव्ययेन' इति समास 'कषादिषु यथाविध्यनुप्रयोगश्च' । दृढगात्रबन्धान्=गात्रस्य बन्ध गात्रबन्ध ( ष० त० ) 'गात्र वपु संहनन शरीर वर्ष्म विग्रह ।' इत्यमर । दृढो गात्रबन्धो येषां ते दृढगात्रबन्धास्तान् (बहु०) । सभर्मकुम्भान्=भर्मण कुम्भा भर्मकुम्भा (ष० त०), भर्मकुम्भै सहिता सभर्मकुम्भास्तान् (बहु०) । पत्काषिण =पादौ कषन्तीति तच्छीला पत्काषिणस्तान् 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनि 'हिमकाषिहतिषु च' इति पादशब्दस्य पदादेश । तीर्थजलार्थम्=तीर्थानां जलानि तीर्थजलानि ( ष० त० ), तीर्थजलेभ्य इद (यथा तथा) तीर्थजलार्थम् 'अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्' इति समास । प्रयत्नात्=प्रकृष्टो यत्न प्रयत्नस्तस्मात् ( प्रादिसमास ) । प्रास्थापयत्=प्रपूर्वस्तिष्ठतिर्गमनार्थकस्तस्मात् ण्यन्ताल्लङ्, 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ' इति पुगागम ।

भावार्थ —महाराजो दशरथ सङ्घीकृतान् स्वधनपुष्टान् दृढशरीरसन्धीन् गृहीतसुवर्णकलशान् पदातीन् पुरुषान् तीर्थजलानयनार्थं सर्वासु दिक्षु शीघ्रमुत्साहात् प्रस्थापितवान् ।

भाषार्थ —महाराज दशरथने इकट्ठे किये गये, अपने धन से पुष्ट, दृढ शरीर सन्धियोंसे युक्त, सोनेके कलश लिये हुए, पैदल बहुतसे पुरुषोंको तीर्थजल लानेके लिए सब दिशाओंमें शीघ्र उत्साहसे भेजा ॥ ४ ॥

उक्षान्प्रचक्रुर्नगरस्य मार्गान्ध्वजान्बबन्धुर्मुमुचु स्वधूपान् ।
दिशश्च पुष्पैश्चकरुर्विचित्रैरर्थेषु राज्ञा निपुणा नियुक्ता ॥ ५ ॥

अन्वयः—अर्थेषु निपुणाः राज्ञा नियुक्ताः नगरस्य मार्गान् उदाम्प्रचक्रुः, ध्वजान् बबन्धुः, खधूपान् मुमुचुः, दिशश्च विचित्रैः पुष्पैः चकरुः ।

प्रयोगप०—निपुणैः नियुक्तैः मार्गाः उदाम्प्रचक्रिरे, ध्वजाः बबन्धिरे, खधूपाः मुमुचिरे, दिशश्च पुष्पैः चकरिरे ।

व्याख्या—अर्थेषु=कर्तव्याऽर्थेषु, निपुणाः=प्रवीणाः, राज्ञा=दशरथेन, नियुक्ताः= अधिकृताः, पुरुषाः, नगरस्य=पुरस्य, मार्गान्=पथः, उदाम्प्रचक्रुः=निषिषिचुः ( धूलिप्रशमनार्थमिति शेषः )। ध्वजान्=केतून्, बबन्धुः=उच्छ्रायितवन्तः । खधूपान्=आकाशव्यापिधूपान्, मुमुचुः=प्रमुक्तवन्तः ( प्रसारयामासुरित्यर्थः )। दिशश्च=आशाश्च, विचित्रैः=नानाप्रकारैः, पुष्पैः=कुसुमैः, चकरुः=विचिक्षिपुः ( दिक्षु पुष्पाणि विचिक्षिपुरित्यर्थः )।

व्युत्पत्तिः—निपुणाः='प्रवीणे निपुणाऽभिज्ञविज्ञनिष्णातशिक्षिताः ।' इत्यमरः । उदाम्प्रचक्रुः='उक्ष सेचने' इति धातोर्लिट् । 'इजादेश्च गुरुमतोऽनृच्छः' इत्याम्प्रयोगे कृञोऽनुप्रयोगः । 'कृञ्चानुप्रयुज्यते लिटि' इत्यत्र पदान्तरानुप्रयोगनिषेधेऽपि 'ते प्राग्धातोः' इत्यनेन गत्युपसर्गसञ्ज्ञकानां धात्वर्थकत्वादिना धात्वक्षरप्रायत्वाच्च अत्र धातोः प्रागेव प्रयोगनियमात् तेषां प्रोपसर्गस्य न व्यवधायकत्वमतो नाऽसाधुत्वम् । 'तं पातयां प्रथममास' 'प्रभ्रंशयां यो नहुषं चकार' इत्यादिस्थले तु उपसर्गेतरस्य व्यवधानात् असाधुत्वमेव । अयमल्लाकारेण तु व्यवधानभयात् 'उक्षान् प्रचक्रुः' इति पाठः कल्पितः व्याख्यातः च—उक्षणमुक्षा 'गुरोश्च हलः' इत्यप्रत्ययः, सा विद्यते येषां ते उक्षास्तान् ( सेकवन्तः ) 'अर्शआदिभ्योऽच्' इत्यच् प्रत्यय इति । तन्मल्लिनाथमते प्रसिद्धपाठत्यागादप्रसिद्धपाठकल्पनाच्च साहसमेवेत्युपेक्ष्यम् । खधूपान्=खव्यापकाः धूपाः खधूपास्तान् ( मध्यमपदलोपो समासः ) चकरुः='कॄ विक्षेपे' इति धातोः लिटि 'ऋच्छत्यॄताम्' इति गुणः ।

भावाऽर्थः—विधेयाऽर्थनिपुणाः राजाऽधिकृताः पुरुषाः नगरमार्गान् सिक्तवन्तः, ध्वजानुच्छ्रायितवन्तः, आकाशव्यापिनो धूपान् प्रसारयामासुः, दिक्षु विचित्रपुष्पाणि च विचिक्षिपुः ।

भाषाऽर्थ—कार्योंमें निपुण महाराजसे नियुक्त पुरुषोंने शहरके मार्गोंको सींचा, ध्वजाओंको फहराया, आकाशको व्याप्त करनेवाले धूपोंको फैलाया और दिशाओंको रङ्ग विरङ्गे फूलोंसे सजाया ॥ ५ ॥

मातामहाऽऽवासमुपेयिवांसं मोहादपृष्ट्वा भरतं तदानीम् ।
तत्केकयी सोढुमशक्नुवाना ववार रामस्य वनप्रयाणम् ॥ ६ ॥

अन्वयः—तत् सोढुम् अशक्नुवाना केकयी तदानीं मातामहावासम् उपेयिवांसं भरतं मोहात् अपृष्ट्वा रामस्य वनप्रयाणं ववार ।

प्रयोगप०—अशक्नुवानया केकय्या रामस्य वनप्रयाण वव्रे।

व्याख्या—तत्=रामाऽभिषेचन, सोढु=मर्षितुम्, अशक्नुवाना=अशकनशीला, केकयी=कैकेयी (भरतमातेत्यर्थः) तदानीं=तस्मिन् समये (वरप्रार्थनाकाल इत्यर्थ), मातामहावास=मातामहभवनम् (केकयराजप्रासादमित्यर्थ), उपेयिवासम्=उपगत, भरत=स्वपुत्र, मोहात्=मौढ्यात्, अपृष्ट्वा=अननुयुज्य (दूतप्रेषणेन अपृष्ट्वेत्यर्थ), रामस्य=रामचन्द्रस्य, वनप्रयाणम्=अरण्यप्रस्थान ववार=प्रार्थित वती (रामवनगमन वरत्वेन प्रार्थितवतीत्यर्थ)।

व्युत्पत्ति—सोढु='षह मर्षणे' इति धातो शक्नोतावुपपदे 'शकधृषज्ञाग्ला-घटरभलभक्रमसहार्हाऽस्त्यर्थेषु तुमुन्' इति तुमुन्। अशक्नुवाना='शक्लृ शक्तौ' इति धातो परस्मैपदित्वाच्छानच न, अत 'ताच्छील्यवयोवचनशक्तिषु चानश्' इति चानश्प्रत्यय, श्नोरुवङादेश। मातामहावास=मातु पिता मातामह, 'पितृव्यमातु लमातामहपितामहा' इति 'मातृपितृभ्यां पितरि डामहच्' इति डामहच्प्रत्ययान्तो निपात। आवसत्यस्मिन्निति आवास 'हलश्च' इत्यधिकरणे घञ्। मातामहस्य आवासो मातामहावासस्तम् (ष० त०)। उपेयिवासम्=उपपूर्वात् इण्धातो 'उपे-यिवाननाश्वाननूचानश्च' इति लिट क्वसुप्रत्ययान्तो निपात। मोहात्='विभाषा गुणे-ऽस्त्रियाम्' इति हेतौ पञ्चमी। अपृष्ट्वा=न पृष्ट्वा (नञ्०)। रामस्य=कर्तरि षष्ठी। वनप्रयाण=वनाय प्रयाण वनप्रयाण, तत्र 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायाम-नध्वनि' इति चतुर्थी, तत 'चतुर्थी'ति योगविभागाच्चतुर्थीतत्पुरुष। 'अटव्यरण्य विपिन गहन कानन वनम्।' इत्यमर। ववार='वृञ् वरणे' इति धातोर्लिट्।

भावार्थ—रामाऽभिषेक सोढुमसमर्था कैकेयी तस्मिन्नवसरे मातामहभवनस्थ भरत मौढ्यात् अपृष्ट्वा रामस्य वनगमन वरत्वेन प्रार्थितवती।

भाषाऽर्थ—उस उत्सवको नहीं सहती हुई कैकेयीने उस समय मातामहके यहां स्थित भरतको मूढतासे बिना पूछे राजासे वरके तौरपर रामचन्द्रके वनगमन-की प्रार्थना की॥ ६॥

कर्णेजपैराहितराज्यलोभा स्त्रैणेन नीता विकृति लघिम्ना।
रामप्रवासे व्यमृशन्न दोष जनाऽपवाद सनरेन्द्रमृत्युम्॥ ७॥

अन्वय—कर्णेजपै आहितराज्यलोभा स्त्रैणेन लघिम्ना विकृति नीता रामप्रवासे सनरेन्द्रमृत्यु जनाऽपवाद दोष न व्यमृशत्।

प्रयोगप०—आहितराज्यलोभया विकृति नीतया सनरेन्द्रमृत्युर्जनाऽपवादो दोष (तया) न व्यमृश्यत।

व्याख्या—कर्णेजपै=सूचक (मन्थरादिभिर्जनैरित्यर्थ), आहितराज्यलोभा=

जनितराज्यतृष्णा, स्त्रैणेन = स्त्रीसम्बन्धिना, लघिम्ना = लघुत्वेन, विकृतिं = विकार (प्रकृतिवैपरीत्यमित्यर्थः), नीता = प्रापिता (कैकेयीत्यर्थः), रामप्रवासे = रामचन्द्र-निर्वासने, सनरेन्द्रमृत्यु = दशरथमरणसहित, जनाऽपवाद = लोकनिन्दारूप, दोष = दूषण न व्यमृशत् = न व्यचारयत्।

व्युत्पत्ति—कर्णेजपैः = कर्णेजपन्तीति कर्णेजपास्तैः, 'स्तम्बकर्णयोरमिजपोः' इत्यच् 'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक्, 'कर्णेजपः सूचकः स्यात्' इत्यमरः। आहितराज्यलोभा=राज्यस्य लोभो राज्यलोभः (ष० त०), आहितो राज्यलोभो यस्याः सा (बहु०)। स्त्रैणेन=स्त्रीषु भवः स्त्रैणस्तेन, 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्' इति नञ्प्रत्ययः। लघिम्ना = लघोर्भावो लघिमा, तेन 'पृथ्वादिभ्य इमनिज्वा' इति इमनिच् टिलोपश्च। रामप्रवासे=रामस्य प्रवासो रामप्रवासस्तस्मिन् (ष० त०)। सनरेन्द्रमृत्यु=नराणामिन्द्रो नरेन्द्रः (ष० त०), तस्य मृत्युर्नरेन्द्रमृत्युः (ष० त०) तेन सहितः सनरेन्द्रमृत्युस्तम् (बहु०)। जनापवाद=जनानामपवादो जनाऽपवाद-स्तम् (ष० त०)। व्यमृशत=विपूर्वात् 'मृश आमर्शने' इति तौदादिकात् धातोर्लङ्।

भावाऽर्थ—सूचकैर्जनितराज्यतृष्णा स्त्रीसुलभेन लाघवेन विकारयुक्ता कैकेयी रामनिर्वासने राजमरणयुक्त लोकाऽपवाददूषणं नाऽऽलोचितवती।

भाषाऽर्थ—सूचकों (चुगलखोरों) की बात सुनकर राज्यतृष्णासे युक्त स्त्रीसहज लाघवसे विकारवाली कैकेयीने राम का वनवास होनेपर दशरथ के मृत्युसे युक्त लोकाऽपवादरूप दोषका विचार नहीं किया ॥ ७ ॥

वसूनि देशांश्च निवर्तयिष्यन् रामं नृपः सङ्गिरमाण एव।
तयाऽवजज्ञे भरताऽभिषेको विषादशङ्कुश्च मतौ निचख्ने ॥ ८ ॥

अन्वय—नृपः रामं निवर्तयिष्यन् वसूनि देशांश्च सङ्गिरमाण एव तया अव-जज्ञे, भरताऽभिषेकः विषादशङ्कुश्च मतौ निचख्ने।

प्रयोगप०—नृपः निवर्तयिष्यन्त सङ्गिरमाणमेव सा अवजज्ञौ, भरताऽभिषेकं विषादशङ्कुं च मतौ निचखान।

व्याख्या—नृपः = राजा, रामं = रामचन्द्रं, निवर्तयिष्यन् = परावर्तयिष्यन्, वसूनि=धनानि, देशांश्च = जनपदांश्च, सङ्गिरमाण एव = प्रतिजानान एव (देवि! एतानि ते दास्यामीति शेषः) तया = कैकेय्या, अवजज्ञे=अवज्ञातः (अनङ्गीकरणा-दिति भावः)। भरताऽभिषेकश्च = स्वपुत्राऽभिषेचनमेव, विषादशङ्कुः = शोकशल्य, मतौ = मनसि, निचख्ने = निखातः (रामविवासनं भरताऽभिषेचनं चेति वरद्वय-मयाचतेत्यर्थः)।

व्युत्पत्ति—निवर्तयिष्यन् = 'लृट् शेषे च' इति चकरात् क्रियोपपदे लृट्,

तस्य स्थाने शत्रादेशः । वसूनि='रिक्थमृक्थं धनं वसु' इत्यमरः । सङ्गिरमाणः= सङ्गिरते इति सङ्गिरमाणः, सम्पूर्वात् 'गॄ निगरणे' इति तौदादिकाद्धातोः 'समः प्रतिज्ञाने' इत्यात्मनेपदे लट् शानजादेशः । 'ऋत इत्' इति रेफपर इकारः 'आने मुक्' इति मुगागमश्च । अवजज्ञे='ज्ञा अवबोधने' इति कर्मणि लिट्, भरताऽभिषेकः= भरतस्याऽभिषेकः ( ष० त० )। विषादशङ्कुः=विषादः शङ्कुरिव विषादशङ्कुः, 'उपमितं व्याघ्रादिभिः सामान्याऽप्रयोगे' इति समासः । निचख्ने=निपूर्वात् 'खनु अवदारणे' इति धातोः कर्मणि लिट्, 'गमहने' त्यादिना उपधालोपः ।

भावार्थः—दशरथो रामवनगमनं निवारयिष्यन् कैकेय्यै धनं देशांश्च दातुमङ्गीचकार, परं तया तदवज्ञानपूर्वकं भरताऽभिषेकरूपमपरं शोकशल्यं च मनसि निखातम् ।

भाषाऽर्थ—राजाने रामको वनवास नहीं कराने के लिए कैकेयीको बहुत धन और बहुत देशोंका देना स्वीकार किया, परन्तु उन्होंने तिरस्कारपूर्वक भरताभिषेक रूप दूसरे शोकशङ्कुको चित्तमें गाड़ दिया ॥ ८ ॥

ततः प्रविव्राजयिषुः कुमारमादिक्षदस्याऽभिगमं वनाय ।
सौमित्रिसीताऽनुचरस्य राजा सुमन्त्रनेत्रेण रथेन शोचन् ॥ ९ ॥

अन्वयः—ततः राजा कुमारं प्रविव्राजयिषुः ( सन् ) सौमित्रिसीताऽनुचरस्य अस्य सुमन्त्रनेत्रेण रथेन वनाय अभिगमं शोचन् आदिक्षत् ।

प्रयोगप०—राज्ञा प्रविव्राजयिषुणा (सता) अभिगमः शोचता आदेशि ।

।—ततः =वरप्रार्थनाऽनन्तरं, राजा=दशरथः, कुमारं=रामं, प्रविव्राजयिषुः=प्रविव्राजयितुमिच्छुः ( सन् ), सौमित्रिसीताऽनुचरस्य=लक्ष्मणजानकीसहायस्य, अस्य=रामस्य सुमन्त्रनेत्रेण=सुमन्त्रसारथिना, रथेन=स्यन्दनेन, वनाय=य, अभिगमं=प्रयाणं, शोचन्=रुदन् , आदिक्षत्=आदिष्टवान् ।

व्युत्पत्तिः—प्रविव्राजयिषुः='व्रज गतौ' इति ण्यन्ताद्धातोः सनि उप्रत्ययः । सौमित्रिसीताऽनुचरस्य=सुमित्राया अपत्यं पुमान् सौमित्रिः, 'बाह्वादिभ्यश्च' इति इञ् । सौमित्रिश्च सीता च सौमित्रिसीतं, 'सर्वो द्वन्द्वो विभाषयैकवद्भवति' इति वचनादेकवद्भावः । अन्यथाऽनुचरशब्दस्य टप्रत्ययान्तत्वात् स्त्रियां ङीपि 'नद्यृतश्च' इति कप्प्रसङ्गात् । समासाऽन्तविधेरनित्यत्वेऽपि पुंवद्भावाऽनुपपत्तेरिति । अनु ( पश्चात् ) चरति ( गच्छति ) इति अनुचरः, 'भिक्षासेनादायेषु च' इति चकारस्याऽनुक्तसमुच्चयाऽर्थत्वात् टः । सौमित्रीसीतम् अनुचरं यस्य सः सौमित्रिसीताऽनुचरस्तस्य ( बहु० ) । सुमन्त्रनेत्रेण=सुमन्त्रः नेत्रः (नेता सारथिर्वा) यस्य सः सुमन्त्रनेत्रस्तेन ( बहु० ), 'नेत्रमक्षिगुणे वस्त्रे तरुमूले विलोचने । नेत्रं रथे च नाड्यां च नेत्रो नेतरि भेद्यवत् ।' इति विश्वः । वनाय='गत्यर्थकर्मणी' त्यादिना चतुर्थी । अभिगमम्

अभिगमनमभिगमस्तम्, 'ग्रहवृदृनिश्चिगमश्च' इत्यप् । आदिक्षत्=दिशेर्लुङि 'शल इगुपधादनिट क्स' इति क्स ।

भावार्थ —ततो राजा राम प्रव्राजयितुमिच्छु सन् सीतालक्ष्मणयुक्तस्य रामस्य सुमन्त्रसारथिना रथेन वनाऽभिगमन रुदन् सन् आज्ञापितवान् ।

भाषाऽर्थ —तब शोक करते हुए राजाने रामको वनमें भेजनेकी इच्छासे सुमन्त्रको सारथि बनाकर लक्ष्मण और सीताके साथ रामचन्द्रको रथमें चढ़ाकर वनमें जानेकी आज्ञा दी ॥ ९ ॥

केचिन्निनिन्दुर्नृपमप्रशान्त विचुक्रुशु केचन साऽस्रमुच्चै ।
ऊचुस्तथाऽन्ये भरतस्य माया धिक्केकयीमित्यपरो जगाद ॥ १० ॥

अन्वय —केचित् अप्रशान्त नृप निनिन्दु, केचन सास्रम् उच्चै विचुक्रुशु, तथा अन्ये भरतस्य मायाम् ऊचु, अपर केकयीं धिक् इति जगाद ।

प्रयोगप० —कैश्चिदप्रशान्तो नृपो निनिन्दे, कैश्चन विचुक्रुशे, अन्यैर्भरतस्य माया ऊचे, अपरेण जगदे ।

व्याख्या —केचित=जना, अप्रशान्त=शान्तिरहित, नृप=दशरथ, निनिन्दु = निन्दितवन्त । केचन=जना, सास्र=सबाष्पम्, उच्चै =उच्चस्वर, विचुक्रुशु = चक्रन्दु (हा रामेति शेष)। तथा=तेन प्रकारेण, अन्ये=अपरे, भरतस्य=कैकेयीतनयस्य, माया=शाठ्यम्, ऊचु =कथयन् (स्वयमपसृत्य मातृमुखेन भरत इद कपटनाटकमाचरतीत्यूचुरित्यर्थ ) । अपर =अन्य, कैकयीं=भरतजननीं, धिक्= धिक्कार, इति=इत्थ, जगाद=अब्रवीत् ।

व्युत्पत्ति —अप्रशान्त=न प्रशान्त अप्रशान्तस्तम् ( नञ० ), निनिन्दु = 'णिदि याम' इति धातोर्लिट । 'इदितो नुम् धातो ' इति नुमागम । सास्रम्= अस्रै सहित सास्र तद् यथा तथा ( बहु०, क्रि० वि० ), विचुक्रुशु ='क्रुश आह्वाने रोदने च' इति धातोर्लिट् । केकयीं = धिग्योगे 'उभसर्वतसो कार्या धिगुपर्यादिषु त्रिषु । द्वितीयाम्रेडितान्तेषु ततोऽन्यत्राऽपि दृश्यते ॥' इति द्वितीया । धिक्='धिक् निर्भर्त्सननिन्दयो ' इति विश्व । 'इत्यपरे जजल्पु ' इति मल्लिनाथसमत पाठ ।

भावार्थ —एव रामप्रव्रजनादेशे केचित् शान्तिरहित राजान निन्दितवन्त, केचन सबाष्प हा रामेति उच्चै चक्रन्दु, तथा अन्ये भरतस्य मायाम ( भरतेनैव मातृमुखेन एतत्सर्वमनुष्ठितम इति ) ऊचु । अपर कैकयीं धिगित्यकथयत् ।

भाषाऽर्थ —दशरथके ऐसी आज्ञा देनेपर कोई शान्तिरहित राजाकी निन्दा करने लगे, कोई आँखोंमें आँसू भरकर ऊँचे स्वरसे 'राम ! राम !' चिल्लाने लगे, दूसरे लोग 'यह सब भरतका कपट है' ऐसा कहने लगे और कुछ लोग कैकेयीको धिक्कारने लगे ॥ १० ॥

गतो वनं श्वो भवितेति रामः शोकेन देहे जनताऽतिमात्रम् ।
धीरास्तु तत्र च्युतमन्यवोऽन्ये दधुः कुमाराऽनुगमे मनांसि ॥ ११ ॥

अन्वयः—जनता 'रामः श्वो वनं गतो भविता' इति शोकेन अतिमात्रं देहे, अन्ये धीरास्तु च्युतमन्यवः ( सन्तः ) कुमाराऽनुगमे मनांसि दधुः ।

प्रयोगप०—जनतया 'रामेण गतेन भविता' इति शोकेन देहे । अन्यैर्धीरैस्तु च्युतमन्युभिः ( सद्भिः ) मनांसि दधिरे ।

व्याख्या—जनता=जनसमूहः, रामः =रामचन्द्रः, श्वः = भाविदिने, वनम् = अरण्यं, गतः = प्राप्तः, भविता=भविष्यति, इति = अस्माद्धेतोः, शोकेन = मन्युना, अतिमात्रम्=अत्यन्तं, देहे=दग्धा । अन्ये—अपरे, धीरास्तु = धैर्यवन्तस्तु, च्युतमन्यवः = शोकरहिताः ( सन्तः ), कुमाराऽनुगमे = रामाऽनुव्रजने, मनांसि=चित्तानि, दधुः = निदधुः ( रामाऽनुगमनं कर्तुमीषुरित्यर्थः, अतस्तेषां रामवियोगाभावात् च्युतमन्यव इत्युक्तम् ) ।

व्युत्पत्तिः—जनता = जनानां समूहो जनता, 'ग्रामजनबन्धुभ्यस्तल्' इति तल्, 'तलन्तं स्त्रियाम्' इति लिङ्गाऽनुशासनसूत्रात्तदन्तस्य स्त्रीत्वम् । भविता = भूधातोः 'अनद्यतने लुट्' इति लुट् । 'गतो भविता' इत्यत्र 'धातुसम्बन्धे प्रत्ययाः' इति वचनात् भूतकालस्य भविष्यत्कालेन सम्बध्यमानत्वेऽपि साधुत्वम् । शोकेन= 'मन्युशोकौ तु शुक् स्त्रियाम्' इत्यमरः । देहे=दहतेः कर्मणि लिट् 'अत एकहल्मध्येऽनादेशादेर्लिटि' इत्येत्वाऽभ्यासलोपौ । च्युतमन्यवः = च्युतो मन्युर्येषां ते ( बहु० ) । कुमाराऽनुगमे = कुमारस्य अनुगमः कुमाराऽनुगमस्तस्मिन् ( ष० त० ) ।

भावाऽर्थः—रामः परदिने वनं गमिष्यतीति शोकेन जनता अत्यर्थं दग्धा । अन्ये धैर्यवन्तस्तु निःशोकाः सन्तो रामाऽनुगमे मतिं चक्रुः ।

भाषाऽर्थ—'राम कल वन जायेंगे' इस शोकसे जनता सन्तप्त हुई । अन्य धीर पुरुषलोग शोकरहित होकर रामका अनुगमन करनेको तैयार हो गये ॥ ११ ॥

प्रस्थास्यमानावुपसेदुषस्तौ शोशुच्यमानानिदमूचतुस्तान् ।
किं शोचतेहाऽभ्युदये बताऽस्मान् नियोगलाभेन पितुः कृतार्थान् ॥ १२ ॥

अन्वयः—प्रस्थास्यमानौ तौ उपसेदुषः शोशुच्यमानान् तान् इदम् ऊचतुः (हे जनाः !) पितुः नियोगलाभेन कृतार्थान् अस्मान् इह अभ्युदये किं शोचत, बत ।

प्रयोगप०—प्रस्थास्यमानाभ्यां ताभ्याम् उपसेदिवांसः शोशुच्यमानास्ते इदम् ऊचिरे 'कृताऽर्था वयं किं शोच्यामहे' ।

व्याख्या—प्रस्थास्यमानौ = गमिष्यन्तौ, तौ = रामलक्ष्मणौ, उपसेदुषः =उप-

सन्नान् ( निकटागतानित्यर्थः ), शोशुच्यमानान्=भृशं शोचतः, तान्=जनान्, इदं=वक्ष्यमाणम्, ऊचतुः=उक्तवन्तौ, ( हे जनाः ! ) पितुः=जनकस्य, नियोगलाभेन=आज्ञाकरणलाभेन, कृतार्थान्=कृतकृत्यान्, अस्मान्=न ( अशोच्यानित्यर्थः ), इह=अस्मिन्, अभ्युदये=वृद्धौ, किं=किमर्थं, शोचत=शोकं कुरुत, बत=आश्चर्यम् ( सन्तोषेऽपि शोचनादाश्चर्यमित्यर्थः )।

व्युत्पत्तिः—प्रस्थास्यमानौ=प्रस्थानं करिष्यन्तौ, प्रपूर्वात् स्थाधातोः 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम्, 'लृटः सद्वा' इति लृटः शानजादेशः। उपसेदुः=उपपूर्वात् सदेः 'भाषायां सदवसश्रुवः' इति लिटः क्वसुरादेशः। शोशुच्यमानान्=भृशं शोचन्तीति शोशुच्यमानास्तान्, यङन्तात् 'शुच शोके' इति धातोः लटः शानजादेशः इदं=ब्रूञ्धातोर्द्विकर्मकत्वात् 'इदं' मुख्यकर्म, 'तान्' इति तु गौणकर्म। नियोगलाभेन=नियोगस्य लाभो नियोगलाभस्तेन ( ष० त० )। कृतार्थान्=कृतः अर्थः यैस्ते कृतार्थास्तान् (बहु०), 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु।' इत्यमरः। शोचत=अधीष्टे ( सत्कारपूर्वके व्यापारे ) लोट्।

भावार्थः—गमिष्यन्तौ रामलक्ष्मणौ निकटागतान् भृशं शोचतो जनानिदमूचतुः—'हे जनाः ! पितुः वनगमनाज्ञालाभेन कृतकृत्यान् अस्मान् एतादृशे अभ्युदये किं शोचत ? आश्चर्यम् !' इति।

भाषार्थः—प्रस्थान करनेवाले राम और लक्ष्मणने निकट आये हुए अत्यन्त शोक करनेवाले प्रजाजनोंको कहा—'महाशयो ! पिताजीकी आज्ञा पानेसे कृतकृत्य हम-लोगोंको ऐसी वृद्धिके अवसरपर आपलोग क्यों शोक करते हैं ? आश्चर्य है !' ॥१२॥

असृष्ट यो यश्च भयेष्वरक्षील्लँ यः सर्वदाऽस्मानपुषत्स्वपोषम्।
महोपकारस्य किमस्ति तस्य तुच्छेन यानेन वनस्य मोक्षः ॥ १३ ॥

अन्वयः—यः अस्मान् असृष्ट, यश्च भयेषु अरक्षीत्, यः सर्वदा स्वपोषम् अपुषत्, तस्य महोपकारस्य तुच्छेन वनस्य यानेन मोक्षः अस्ति किम् ?

प्रयोगप०—येन वयम् असृज्महि, येन भयेषु अरक्षिष्महि, येन अपोषिष्महि, मोक्षेण भूयते किम् ?

व्याख्या—यः=पिता, अस्मान्=पुत्रान्, असृष्ट=जनितवान्। यः=पिता, भयेषु=आपत्सु, अरक्षीत्=रक्षितवान्। यः=पिता, सर्वदा=सर्वस्मिन् काले, स्वपोषम् अपुषत्=धनेन पुष्टवान्। तस्य=पितुः, महोपकारस्य=महोपकृतेः, तुच्छेन=अल्पत्वेन, वनस्य=काननस्य, यानेन=गमनेन ( तदाज्ञयेति शेषः ), मोक्षः=मुक्तिः ( प्रत्युपकार इत्यर्थः ), अस्ति किं=वर्तते किम् ? ( नाऽस्त्येवेत्यर्थः )।

व्युत्पत्ति —असृष्ट='सृज विसर्गे' इति दैवादिकाद्धातोः कर्तरि लुङि तङि 'झलो झलि' इति सलोपः। मझ्झादिना ष्टुत्वम्। अरक्षीत्='रक्ष पालने' इति धातोर्लुङ् 'इट ईटि' इति सलोप। सर्वदा=सर्वस्मिन् काले सर्वदा, 'सर्वैकाऽन्यकियत्तदः काले दा' इति दाप्रत्यय। स्वपोष='स्वे पुष' इति णमुल, 'अमैवाऽव्ययेन' इति समास, अपुषत्=पुष्यतेर्लुङ्, 'पुषादी' इत्यादिना अङ। महोपकारस्य= महांश्चाऽसौ उपकारो महोपकारस्तस्य (क० धा०)। वनस्य=शेषे षष्ठी, कृद्योगा यास्तु षष्ठ्या 'गत्यर्थकर्मणी' त्यादिना चतुर्थ्या बाध्यमानत्वात्।

भावार्थ —य पिता अस्मान् जनितवान्, आपत्सु रक्षितवान्, सर्वदा धनेन पुष्टवान्, तस्य पितु महोपकारस्य अल्पेन वनगमनेन किं प्रत्युपकारोऽस्ति ?

भाषाऽर्थ —जिन पिताजीने हम लोगोंको पैदा किया, आपत्तियोंमें रक्षा की और धनसे पुष्ट किया, उनके महोपकारका तुच्छ वनगमनसे प्रत्युपकार होता है क्या ? ॥ १३ ॥

विद्युत्प्रणाशं स वरं प्रनष्टो यद्वोर्ध्वशोषं तृणवद्विशुष्कः ।
अर्थे दुरापे किमुत प्रवासे न शासनेऽवास्थित यो गुरूणाम् ॥ १४ ॥

अन्वय —उत प्रवासे किं दुरापेऽपि अर्थे य गुरूणां शासने न अवास्थित, स विद्युत्प्रणाशं प्रनष्ट वरं, यद्वा तृणवत् ऊर्ध्वशोषं विशुष्कः वरम्।

प्रयोगप०—येन न अवास्थायि, तेन प्रनष्टेन विशुष्केण वा वरम् ( भूयताम् )।

व्याख्या—उत=किं च, प्रवासे किं=विदेशवासे किं, दुरापेऽपि=दुःशक्येऽपि, अर्थे=कर्तव्याऽर्थे विषये, य=जन, गुरूणां=पित्रादीनां, शासने=आज्ञायां, न अवास्थित=न अवस्थितवान्, स=जन, विद्युत्प्रणाशं=विद्युदिव प्रणश्य, प्रनष्ट= विनाशं गत (सद्य एव मृतप्राय इत्यर्थ), वरं=किञ्चित्प्रिय, यद्वा=अथवा, तृणवत्=तृणेन तुल्यम्, ऊर्ध्वशोषं विशुष्क=ऊर्ध्व एव तिष्ठन् विशोषयुक्त, वर=किञ्चित्प्रिय।

व्युत्पत्ति —दुरापे=दुःखेन आप्तु शक्यो दुरापस्तस्मिन्, 'ईषद्दुःसुषु कृच्छ्राऽकृच्छ्रार्थेषु खल्' इति खल्प्रत्यय। अवास्थित=अवपूर्वात्तिष्ठतेर्लुङ् 'समवप्रविभ्यः स्थ' इत्यात्मनेपदम्, 'स्थाघ्वोरिच्च' इति कित्त्वमित्त्वं च, 'ह्रस्वादङ्गात्' इति सिचो लोप। विद्युत्प्रणाशम्='उपमाने कर्मणि च' इति चकारात् कर्तरि उपमानोपपदे 'कर्त्रोर्जीवपुरुषयोर्नशिवहो' इति णमुल कषादित्वादनुप्रयोग। 'उपसर्गादसमासेऽपि णोपदेशस्य' इति णत्वम्। वर='देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिये।' इत्यमर। तृणवत्=तृणेन तुल्यं तृणवत्, 'तेन तुल्यं क्रिया चेद्वति' इति वति। ऊर्ध्वशोषम्=ऊर्ध्वं शुषित्वा इति ऊर्ध्वशोषम्, 'ऊर्ध्वे शुषिपूरो' इति कर्तरि ऊर्ध्व उपपदे णमुलप्रत्यय, पूर्ववदनुप्रयोग। विशुष्क='शुष क' इति निष्ठातकारस्य क।

भावार्थ—किं च प्रवासे एव किं दुःशङ्कनीये कर्तव्यार्थेऽपि यः गुरुजनानाम् (मातापित्राचार्यप्रभृतीनाम) आज्ञां न पालयति तस्य विद्युत इव अचिरेणैव नाशः वरम्, अथवा तृणस्येव ऊर्ध्वशोषणमेव वरम् ।

भावार्थ—फिर परदेशमें रहनेकी ही क्या बात है ? दुःशङ्कनीय कार्यमें भी जो गुरुजनोंकी आज्ञा नहीं मानता है उसका बिजलीकी तरह जल्दी नाश होना ही अच्छा है, अथवा तृणकी तरह ऊपर ही ऊपर सूखना ही कुछ अच्छा है ॥ १४ ॥

पौरा निवर्तध्वमिति न्यगादीत्तातस्य शोकाऽपनुदा भवेत ।
मा दर्शताऽन्यं भरतं च मत्तो निवर्तयेत्याह रथं स्म सूतम् ॥ १५ ॥

अन्वयः—'हे पौराः ! निवर्तध्वं, तातस्य शोकाऽपनुदः भवेत, भरतं मत्तः अन्यं मा दर्शत' इति न्यगादीत्, सूतं च 'रथं निवर्तय' इति आह स्म ।

प्रयोगपरि०—'हे पौराः ! ( युष्माभिः ) निवृत्यताम्, शोकाऽपनुद्भिर्भूयेत, भरतो मत्तोऽन्यो मा दर्शि' इति ( तेन रामेण ) न्यगादिषत, सूतश्च 'रथो निवर्त्यताम्' इति उच्यते स्म ।

व्याख्या—हे पौराः=हे नागरिकाः, निवर्तध्वं=प्रतियात ( निवृत्ता भवत )। तातस्य=पितुः, शोकाऽपनुदः=दुःखाऽपहर्त्तारः भवेत=भवत, भरतं=कैकेयीनन्दनं, मत्तः=मत्, अन्यं=भिन्नं, मा दर्शत=न पश्यत । इति=इत्थं, न्यगादीत्=निगदितवान् । सूतं च=सारथिं च ( सुमन्त्रं चेत्यर्थः ), रथं=स्यन्दनं, निवर्तय=परावर्तय, इति=इदम्, आह स्म=उक्तवान् ।

व्युत्पत्तिः—पौराः=पुरि ( नगर्याम् ) भवाः पौरास्तत्सम्बोधने, ( अण्प्रत्ययः ) निवर्तध्वं=निपूर्वात् 'वृतु वर्तने' इति धातोर्लोट् । तातस्य='तातस्तु जनकः पिता ।' इत्यमरः । शोकाऽपनुदाः=शोकमपनुदन्तीति शोकाऽपनुदाः, 'तुन्दशोकयोः परिमृजाऽपनुदोः' इति कप्रत्ययः । भवेत='विधिनिमन्त्रणामन्त्रणाऽधीष्टसम्प्रश्नप्रार्थनेषु लिङ्' इति विधौ प्रार्थनायां वा लिङ् । मत्तः=मदिति मत्तः, अस्मच्छब्दात् 'पञ्चम्यास्तसिल्' इति तसिल् 'प्रत्ययोत्तरपदयोश्च' इति मदादेशः । मा दर्शत=दृशधातोः 'माङि लुङ्' इति लुङ् । न्यगादीत्=निपूर्वात 'गद व्यक्तायां वाचि' इति धातोर्लुङि 'अतो हलादेर्लघोः' इति वृद्धिः । 'इट ईटि' इति सलोपः । आहस्म='लट् स्मे' इति लट् 'ब्रुवः पञ्चानामादित आहो ब्रुवः' इत्याहादेशः ।

भावार्थ—'हे पौराः ! निवृत्ता भवत, पितुः शोकाऽपहर्त्तारो भवेत, भरतं च मात्समं पश्यत' इति अकथयत, सारथिं च 'रथं परावर्तय' इत्यब्रवीत् ।

भाषार्थ—रामने "नागरिको ! लौट जाओ, पिताजी का शोक हटाओ, भरतको मेरे बराबर देखो ' नागरिकों को ऐसा कहकर सारथिको रथ लौटानेको कहा ॥१५॥

व्युत्पत्ति —असृष्ट='सृज विसर्गे' इति दैवादिकाद्धातो कर्तरि लुङि तङि 'झलो झलि' इति सलोप । सृजादिना व्दुत्वम् । अरक्षीत्='रक्ष पालने' इति धातोर्लुङ् 'इट ईटि' इति सलोप । सर्वदा=सर्वस्मिन् काले सर्वदा, 'सर्वैकाऽन्यकियत्तद काले दा' इति दाप्रत्यय । स्वपोष='स्वे पुष' इति णमुल, 'अमैवाऽव्ययेन' इति समास, अपुषत्=पुष्यतेर्लुङ्, 'पुषादी' इत्यादिना अङ । महोपकारस्य=महांश्चाऽसौ उपकारो महोपकारस्तस्य (क० धा०)। वनस्य=शेषे षष्ठी, कृल्लक्षणा यास्तु षष्ठ्या 'गत्यर्थकर्मणी' त्यादिना चतुर्थ्या बाध्यमानत्वात् ।

भावार्थ —य पिता अस्मान् जनितवान्, आपत्सु रक्षितवान्, सर्वदा धनेन पुष्टवान्, तस्य पितु महोपकारस्य अल्पव्ययेन वनगमनेन कि प्रत्युपकारोऽस्ति ?

भाषाऽर्थ —जिन पिताजीने हम लोगोंको पैदा किया, आपत्तियोंमें रक्षा की और धनसे पुष्ट किया, उनके महोपकारका तुच्छ वनगमनसे प्रत्युपकार होता है क्या ? ॥ १३ ॥

विद्युत्प्रणाश स वर प्रनष्टो यद्वोर्ध्वशोष तृणवद्विशुष्क ।
अर्थे दुरापे किमुत प्रवासे न शासनेऽवास्थित यो गुरूणाम् ॥ १४ ॥

अन्वय —उत प्रवासे किं दुरापेऽपि अर्थे य गुरूणां शासने न अवास्थित, स विद्युत्प्रणाश प्रनष्ट वर, यद्वा तृणवत् ऊर्ध्वशोष विशुष्कः वरम् ।

प्रयोगप०—येन न अवास्थायि, तेन प्रनष्टेन विशुष्केण वा वरम् ( भूयताम् )।

व्याख्या—उत=किं च, प्रवासे किं=विदेशवासे कि, दुरापेऽपि=दु शकेऽपि, अर्थे=कर्तव्याऽर्थे विषये, य=जन, गुरूणा=विप्रादीना, शासने=आज्ञायां, न अवास्थित=न अवस्थितवान्, स=जन, विद्युत्प्रणाश=विद्युदिव प्रणश्य, प्रनष्ट=विनाश गत ( सद्य एव मृतप्राय इत्यर्थ ), वर=किञ्चित्प्रिय, यद्वा=अथवा, तृणवत्=तृणेन तुल्यम्, ऊर्ध्वशोष विशुष्क=ऊर्ध्वं एव तिष्ठन् विशोषयुक्त, वर=किञ्चित्प्रिय ।

व्युत्पत्ति —दुरापे=दु खेन आप्तु शक्यो दुरापस्तस्मिन्, 'ईषद्दु सुषु कृच्छ्राऽकृच्छ्राऽर्थेषु खल्' इति खल्प्रत्यय । अवास्थित=अवपूर्वात्तिष्ठतेर्लुङ् 'समवप्रविभ्य स्थ' इत्यात्मनेपदम्, 'स्थाघ्वोरिच्च' इति कित्वमित्व च, 'ह्रस्वादङ्गात्' इति सिचो लोप । विद्युत्प्रणाशम्='उपमाने कर्मणि च' इति चकारात् कर्तरि उपमानोपपदे 'कर्त्रोर्जीवपुरुषयोर्नशिवहो' इति णमुल कषादित्वादनुप्रयोग । 'उपसर्गादसमासेऽपि णोपदेशस्य' इति णत्वम् । वर='देवाद्वृते वर श्रेष्ठे त्रिषु क्लीब मनाक्प्रिये ।' इत्यमर । तृणवत्=तृणेन तुल्य तृणवत्, 'तेन तुल्य क्रिया चेद्वति' इति वति । ऊर्ध्वशोषम्=ऊर्ध्वं शुषित्वा इति ऊर्ध्वशोषम्, 'ऊर्ध्वे शुषिपूरो' इति कर्तरि ऊर्ध्वं उपपदे णमुलप्रत्यय, पूर्ववदनुप्रयोग । विशुष्क='शुष क' इति निष्ठातकारस्य क ।

भावार्थ—किं च प्रवासे एव किं दु शङ्कनीये कर्तव्यार्थेऽपि य गुरुजनानाम् (मातापित्राचार्यप्रभृतीनाम्) आज्ञां न पालयति तस्य विद्युत इव अचिरेणैव नाशः वरम्, अथवा तृणस्येव ऊर्ध्वशोषणमेव वरम्।

भाषाऽर्थ—फिर परदेशमें रहनेकी ही क्या बात है ? दु शङ्कनीय कार्यमें भी जो गुरुजनोंकी आज्ञा नहीं मानता है उसका बिजलीकी तरह जल्दी नाश होना ही अच्छा है, अथवा तृणकी तरह ऊपर ही ऊपर सूखना ही कुछ अच्छा है ॥ १४ ॥

पौरा निवर्तध्वमिति न्यगादीत्तातस्य शोकाऽपनुदा भवेत।
मा दर्शताऽन्य भरत च मत्तो निवर्तयेत्याह रथ स्म सूतम् ॥ १५ ॥

अन्वय—'हे पौरा । निवर्तध्व, तातस्य शोकाऽपनुदा भवेत, भरत मत्त अन्य मा दर्शत' इति न्यगादीत्, सूत च 'रथ निवर्तय' इति आह स्म।

प्रयोगप०—'हे पौरा ! ( युष्माभि ) निवृत्यताम्, शोकाऽपनुदर्भूयेत, भरतो मत्तोऽन्यो मा दर्शि' इति ( ते रामेण ) न्यगादिषत, सूतश्च 'रथो निवर्त्यं ताम्' इति उच्यते स्म।

व्याख्या—हे पौरा = हे नागरिका, निवर्तध्व=प्रतियात ( निवृत्ता भवत )। तातस्य = पितु, शोकाऽपनुदा = दु खाऽपहर्तार, भवेत=भवत, भरत = कैकेयीनन्दन, मत्त = मत्, अन्य = भिन्न, मा दर्शत=न पश्यत। इति=इत्थ, न्यगादीत्= निगदितवान्। सूत च = सारथिं च ( सुमन्त्र चेत्यर्थ ), रथ = स्यन्दन, निवर्तय = परावर्तय, इति = इदम, आह स्म = उक्तवान्।

व्युत्पत्ति—पौरा = पुरि ( नगर्याम् ) भवा पौरास्तत्सम्बोधने, ( अण्प्रत्यय ) निवर्तध्व = निपूर्वात् 'वृतु वर्तने' इति धातोर्लोट्। तातस्य='तातस्तु जनक पिता।' इत्यमर। शोकाऽपनुदा = शोकमपनुदन्तीति शोकाऽपनुदा, 'तुन्दशोकयो परिमृजाऽपनुदो' इति कप्रत्यय। भवेत = 'विधिनिमन्त्रणामन्त्रणाऽधीष्टसम्प्रश्नप्रार्थनेषु लिङ्' इति विधौ प्रार्थनायां वा लिङ्। मत्त = मदिति मत्त, अस्मच्छब्दात् 'पञ्चम्यास्तसिल्' इति तसिल् 'प्रत्ययोत्तरपदयोश्च' इति मदादेश। मा दर्शत=दृश्धातो 'माङि लुङ्' इति लुङ्। न्यगादीत्=निपूर्वात् 'गद व्यक्तायां वाचि' इति धातोर्लुङि 'अतो हलादेर्लघो' इति वृद्धि। 'इट ईटि' इति सलोप। आहस्म = 'लट् स्मे' इति लट् 'ब्रुव पञ्चानामादित आहो ब्रुव' इत्याहादेश।

भावार्थ—'हे पौरा ! निवृत्ता भवत, पितु शोकाऽपहर्तारो भवेत, भरत च मत्सम पश्यत' इति अकथयत्, सारथिं च 'रथ परावर्तय' इत्यब्रवीत्।

भाषाऽर्थ—रामने "नागरिको ! लौट जाओ, पिताजी का शोक हटाओ, भरतको मेरे बराबर देखो" नागरिकों को ऐसा कहकर सारथिको रथ लौटानेको कहा ॥१५॥

ज्ञात्वेङ्गितैर्गत्वरतां जनानामेकां शयित्वा रजनीं सपौरः ।
रक्षन् वनेवासकृताद्भयात्तान् प्रातश्छलेनाऽपजगाम रामः ॥ १६ ॥

अन्वयः—रामः इङ्गितैः जनानां गत्वरतां ज्ञात्वा सपौरः ( सन् ) एकां रजनीं तान् वनेवासकृतात् भयात् रक्षन् शयित्वा प्रातः छलेन अपजगाम ।

प्रयोगप०—रामेण सपौरेण ( सता ) रक्षता अपजग्मे ।

व्याख्या—रामः = रामचन्द्रः, इङ्गितैः = चेष्टितैः, जनानां = पौराणां, गत्वरतां= सहगन्तृत्वं, ज्ञात्वा = विदित्वा, सपौरः =पौरजनसहितः (सन्) एकाम्=एकसंख्यकां, रजनीं = रात्रिं, तान्=पौरान्, वनेवासकृतात्=अरण्यनिवासजनितात्, भयात् = सिंहव्याघ्रादिभीतेः, रक्षन्=रक्षां कुर्वन्, शयित्वा=सुप्त्वा, प्रातः =प्रभाते, छलेन=स्नानादिव्याजेन, अपजगाम=अपगतः ।

व्युत्पत्तिः—गत्वरतां=गमनशीलो गत्वरः, 'गत्वरश्च' इति क्वरबन्तो निपातः । गत्वरस्य भावो गत्वरता, ताम् (तल०)। सपौरः=पौरैः सहितः (बहु०)। रजनीं= 'कालाऽध्वनोरत्यन्तसंयोगे' इति द्वितीया । 'विभावरीतमस्विन्यौ रजनी यामिनी तमी ।' इत्यमरः । वनेवासकृतात्=वने वासो वनेवासः, 'सप्तमी'ति योगविभागात्समासः, 'शयवासवासिष्वकालात्' इति विकल्पेन सप्तम्या अलुक् । वनेवासेन कृतो वनेवासकृतस्तस्मात् ( तृ० त० )। भयात्='भीत्रार्थानां भयहेतुः' इति अपादानत्वम्, 'अपादाने पञ्चमी' इति पञ्चमी । शयित्वा='शीङ् स्वप्ने' इति धातोः क्त्वाप्रत्ययः, 'न क्त्वा सेट्' इति कित्वप्रतिषेधात् गुणायादेशौ ।

भावाऽर्थः—रामश्चेष्टितैः पौराणां सहगन्तृत्वं विदित्वा तैः सह एकां रात्रिं सिंहव्याघ्रादिभीतेः तेषां रक्षणं विधाय सुप्त्वा प्रभाते स्नानसन्ध्यादिव्यपदेशेन अपगतः ।

भाषाऽर्थ—रामचन्द्रजी चेष्टासे नागरिक पुरुषोंकी अपने साथ चलनेकी इच्छा जानकर उनके साथ एक रात सिंह व्याघ्र आदि भयकारणोंसे उनकी रक्षाकर सोकर प्रातःकाल स्नान, सन्ध्यावन्दन आदिके बहानेसे उनको छोड़कर चले गये ॥ १६ ॥

अस्राक्षुरस्रं करुणं रुवन्तो मुहुर्मुहुर्न्यश्वसिषुः कवोष्णम् ।
हा राम ! हा कष्टमिति ब्रुवन्तः पराङ्मुखैस्ते न्यवृतन्मनोभिः ॥१७॥

अन्वयः—ते करुणं रुवन्तः अस्रम् अस्राक्षुः, मुहुर्मुहुः कवोष्णं न्यश्वसिषुः, हा राम ! हा कष्टम् ! इति ब्रुवन्तः पराङ्मुखैः मनोभिः न्यवृतन् ।

प्रयोगप०—तैः रुवद्भिः अस्रम् असर्जि, न्यश्वासि, ब्रुवद्भिः न्यवर्ति ।

व्याख्या—ते = पौराः ( रामम् अपश्यन्त इति शेषः ), करुणं =दीनं, रुवन्तः = विलपन्तः, अस्रं =बाष्पम्, अस्राक्षुः =अमुञ्चन्, मुहुर्मुहुः =पुनः पुनः, कवोष्णं= मन्दोष्णं, न्यश्वसिषुः =निश्वसितवन्तः, हा राम=हा रामचन्द्र, हा कष्टं=हा दुःखम्,

इति=इत्थं, ब्रुवन्त =कथयन्त पराङ्मुखै =बहिर्मुखै (येन गतो रामस्तेन गतरित्यर्थ ) मनोभि =चित्तै (उपलक्षिता सन्त इत्यभिप्राय ), न्यवृतन्=निवृत्ता ।

व्युत्पत्ति —करुण=क्रि० वि० । रुवन्त =रुवन्तीति रुवन्त, 'रु शब्दे' इति धातोर्लट शत्रादेश । असाक्षु =तौदादिकस्य सृजेर्लुङि सिचि 'सृजिदृशोर्झल्यमकिति' इत्यमागम । हलन्तलक्षणा वृद्धि, कुत्वादिकार्यं च । कवोष्णम्=ईषदुष्ण कवोष्ण (तद् यथा तथा, क्रि० वि० ), 'कुगतिप्रादय' इति समास, 'कव चोष्णे' इति को कवादेश । न्यश्वसिषु =निपूर्वात् 'श्वस प्राणने' इति धातोर्लुङि 'ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्' इति वृद्धिप्रतिषेध, 'अतो हलादेर्लघो' इति विकल्पस्य प्राप्त्यभावात् । हा='हा विषादशुगर्तिषु' इत्यमर । पराङ्मुख =पराञ्चति (अनभिमुखो भवति ) इति पराक्, परोपपदात् 'अञ्चु गतिपूजनयो' इति धातो 'ऋत्विग' इत्यादिना क्विन् । पराक् मुख येषा ते पराङ्मुखा, तै (बहु० ) । न्यवृतन्='द्युद्भ्यो लुङि' इति विकल्पेन परस्मैपदम्, द्युतादित्वादङ् ।

भावार्थ —प्रभाते राममपश्यन्तस्ते पौरा करुणस्वरेण विलपन्त अश्रुमोचनमकुर्वन्, दीर्घमुष्ण च निश्वसितवन्त 'हा राम ! हा कष्टम् !' इति कथयन्त बहिर्मुखै मनोभि निवृत्ता ।

भाषार्थ —नागरिकलोग प्रात कालमें रामचन्द्रजीको न देखकर करुणस्वरसे बिलाप कर आँसू गिराने लगे, लम्बी लम्बी उसासें लेने लगे तथा 'हा राम ! हा कष्ट कह कर बहिर्मुख मनसे लौटे ॥ १७ ॥

> सूतोऽपि गङ्गासलिलै पवित्वा सहाऽश्वमात्मानमनल्पमन्यु ।
> ससीतयो राघवयोरधीयन् श्वसन्कदुष्ण पुरमाविवेश ॥ १८ ॥

अन्वय —सूत अपि सहाऽश्वम् आत्मान गङ्गासलिलै पवित्वा अनल्पमन्यु (सन् ) ससीतयो अधीयन् कदुष्ण श्वसन् पुरम् आविवेश ।

प्रयोगप०—सूतेनाऽपि अनल्पमन्युना ससीतयो राघवयो अधीयता श्वसता (सता ) पुराविविशे ।

व्याख्या—सूतोऽपि=सारथिरपि सहाऽश्वम्=साऽश्वम् (अश्वसहितमित्यर्थ ), आत्मान=स्व, गङ्गासलिलै=भागीरथीजलै, पवित्वा=पूत्वा (शोधयित्वा इत्यर्थ ) अनल्पमन्यु =अधिकशोक (सन् ), ससीतयो =सीतासहितयो, राघवयो =रामलक्ष्मणयो, अधीयन्=स्मरन्=( तान् स्मरन्नित्यर्थ ), कदुष्णम्=ईषदुष्ण श्वसन्=निश्वसन्, पुरम्=नगरीम् (अयोध्यामित्यर्थ ), आविवेश=प्रविष्टवान् ।

व्युत्पत्ति —सूत ='सूत क्षत्ता च सारथि ।' इत्यमर । सहाऽश्वम्=अश्वै सहित सहाऽश्वस्तम् (बहु० ), 'वोपसर्जनस्य' इति विकल्पत्वात् सभावाऽभाव ।

आत्मानम्=स्वदेहमात्मानं चेत्यर्थः । 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च ।' इत्यमरः । गङ्गासलिलैः=गङ्गायाः सलिलानि गङ्गासलिलानि, तैः ( ष० त० ) । पवित्वा='पूङ् पवने' इति धातोः क्त्वा, 'पूङश्च' इति विकल्पादिट् 'पूङः क्त्वा च' इति क्त्विप्रतिषेधाद्गुणः । अनल्पमन्युः=न अल्पः अनल्पः (नञ्०), स मन्युर्यस्य सः ( बहु० )। ससीतयोः=सीतया सहितौ, तयोः ( बहु० ) । राघवयोः= रघोरपत्ये पुमांसौ राघवौ, तयोः 'तस्याऽपत्यम्' इत्यण्, 'अधीयन्' इत्यस्य योगे 'अधीगर्थदयेशां कर्मणि' इति कर्मणि षष्ठी । अधीयन्=अधिपूर्वात् 'इक् स्मरणे' इति धातोः शतरि इयङादेशः । कदुष्णम्=ईषदुष्णं यथा तथा 'कुगतिप्रादयः' इति समासः 'कवं चोष्णे' इति चकारात् कोः कवादेशः ।

भावार्थः—सुमन्त्रोऽपि अश्वैः सह गङ्गास्नानं कृत्वा अधिकशोकः सन् रामलक्ष्मणौ सीतां च संस्मरन् मन्दोष्णं श्वसन् अयोध्यां प्राविशत् ।

भाषार्थ—सुमन्त्रने घोड़ोंके साथ अपनेको गङ्गाजलसे पवित्र कर अधिक शोक मानकर सीताके साथ राम और लक्ष्मणका स्मरण करते हुए उसाँसे लेकर अयोध्यामें प्रवेश किया ॥ १८ ॥

प्रतीय सा पूर्ददृशे जनेन द्यौर्भानुशीतांऽशुविनाकृतेव ।
राजन्यनक्षत्रसमन्विताऽपि शोकाऽन्धकारक्षतसर्वचेष्टा ॥ १९ ॥

अन्वयः—जनेन प्रतीय राजन्यनक्षत्रसमन्विता अपि शोकाऽन्धकारक्षतसर्वचेष्टा सा पूः भानुशीतांऽशुविनाकृता द्यौः इव ददृशे ।

प्रयोगप०—जनः राजन्यनक्षत्रसमन्वितामपि शोकाऽन्धकारक्षतसर्वचेष्टां तां पुरं भानुशीतांऽशुविनाकृतां दिवमिव ददर्श ।

व्याख्या—जनेन=रामानुयायिना लोकेन, प्रतीय=प्रतीत्य (प्रतिनिवृत्येत्यर्थः), राजन्यनक्षत्रसमन्विता अपि=क्षत्रियऋक्षयुक्ता अपि, शोकाऽन्धकारक्षतसर्वचेष्टा= मन्युतिमिरनिरस्त ' पारा, सा=पूर्वोक्ता, पूः=नगरी ( अयोध्येत्यर्थः ), भानुशीतांऽशुविनाकृता=सूर्यचन्द्रवियोजिता, द्यौः इव=आकाशम् इव, ददृशे=दृष्टा ।

व्युत्पत्तिः—प्रतीय 'ईङ् गतौ' इति धातोः क्त्वो ल्यपि रूपं, न तु इणः तस्य हि तुकि प्रतीत्येति स्यात् । 'प्रतीयुषा' इति पाठान्तरे 'उपेयिवाननाश्वाननूचानश्च' इत्यत्र उपोपसर्गस्य अविवक्षितत्वात् अत्र इणो लिटः क्वसुप्रत्ययो लिटि निपातितः । राजन्यनक्षत्रसमन्विता=राज्ञामपत्यानि पुमांसो राजन्याः 'राजश्वशुराद्यत्' इति यत्, 'ये चाऽभावकर्मणोः' इति प्रकृतिभावः । 'मूर्धाऽभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट् ।' इत्यमरः । राजन्या एव नक्षत्राणि राजन्यनक्षत्राणि, 'मयूरव्यंसकादयश्च' इति रूपकसमासः । राजन्येषु नक्षत्रत्वारोपात् रूपकाऽलङ्कारः । राजन्यनक्षत्रैः समन्विता (तृ० त०) । शोकाऽन्धकारक्षतसर्वचेष्टा=शोक एव अन्धकारः शोकाऽन्धकारः,

पूर्ववत्समासोऽलङ्कारश्च। हता सर्वा चेष्टा यस्याः सा हतसर्वचेष्टा (बहु०)। शोकाऽन्धकारेण हतसर्वचेष्टा (तृ० त०)। भानुशीतांशुविनाकृता=शीता अंशवः (किरणाः) यस्य स शीतांशुः (बहु०)। भानुश्च शीतांऽशुश्च भानुशीतांशू (द्वन्द्व), ताभ्यां विनाकृता (तृ० त०)। ददृशे=कर्मणि लिट्। अत्र पूर्वोक्तेन रूपकेण सह उपमायाः सङ्करः। "साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमा द्वयोः" इत्युपमालक्षणम्।

भावार्थः—जनाः प्रतिनिवृत्य क्षत्रियनक्षत्रयुक्तामपि शोकाऽन्धकारनिरस्तसर्वव्यापारां तां पुरं चन्द्रसूर्यरहितं नभ इव दृष्टवन्तः।

भावार्थः—पुरवासी लोगों ने क्षत्रियरूपी नक्षत्रोंसे युक्त होनेपर भी शोकरूपी अन्धकारसे चेष्टारहित अयोध्याको सूर्यचन्द्रसे रहित आकाशके तुल्य देखा ॥ १९ ॥

विलोक्य रामेण विना सुमन्त्रमच्योष्ट सत्त्वान्नृपतिश्च्युताशः।
मधूनि नैषीद्व्यलिपन्न गन्धैर्मनोरमे न व्यवसिष्ट वस्त्रे ॥ २० ॥

अन्वयः—नृपतिः रामेण विना सुमन्त्रं विलोक्य च्युताशः सत्त्वात् अच्योष्ट, मधूनि न ऐषीत्, गन्धैः न व्यलिपत्, मनोरमे वस्त्रे न व्यवसिष्ट।

प्रयोगप०—नृपतिना च्युताशेन (सता) सत्त्वादच्यावि, मधूनि न ऐषिषत, गन्धैर्न व्यलेपि, मनोरमे वस्त्रे न व्यवासिषाताम्।

व्याख्या—नृपतिः=दशरथः, रामेण विना=रामचन्द्रं विना, सुमन्त्रं=सारथिं, विलोक्य=दृष्ट्वा, च्युताशः=रामाऽऽगमने निराशः (सन्), सत्त्वात्=स्वभावात्, अच्योष्ट=च्युतः (धैर्याद् भ्रष्ट इत्यर्थः) मधूनि=मद्यानि, न ऐषीत्=न ऐच्छत्। गन्धैः=कुङ्कुमचन्दनादिभिः, न व्यलिपत्=न विलिप्तवान्। मनोरमे=सुन्दरे, वस्त्रे=वाससी (उत्तरीयाऽधरीये इत्यर्थः), न व्यवसिष्ट=नाच्छादितवान् (अतिशोकात् अरत्यपरनामा विषयद्वेषो जात इत्यर्थः)।

व्युत्पत्तिः—नृपतिः=नृणां पतिः (ष० त०)। रामेण=विनायोगे "पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्" इति तृतीया, पक्षे द्वितीयापञ्चम्यौ वा। च्युताशः=च्युता आशा यस्य सः (बहु०)। सत्त्वात्="सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः" इति विश्वः। अच्योष्ट='च्युङ् गतौ' इतिधातोर्लुङ्। ऐषीत्="इष इच्छायाम्" इति धातोः लुङि "नेटि" इति सिचि वृद्धिप्रतिषेधः। गन्धैः="गन्धस्तु सौरभे मृत्यौ गन्धने गर्वलेपयोः। स एव द्रव्यवचनो बहुत्वे पुंसि च स्मृतः ॥" इति कोषात् बहुवचनम् इति मल्लिनाथः। व्यलिपत्="लिप उपदेहे" इति धातोर्लुङि "लिपिसिचिह्वश्च" इत्यङ्। व्यवसिष्ट="वस आच्छादाने" इति सिचीट्।

भावार्थः—दशरथो रामं विनाऽऽगतं सारथिं वीक्ष्य रामागमननिराशः, सन् स्वभावात् च्युतः, मद्यपानं नैच्छत्, शरीरे कुङ्कुमचन्दनादिलेपनं नाऽकरोत्, एवं सुन्दरवस्त्रपरिधानमपि नाऽकार्षीत्।

भाषार्थ—महाराज दशरथ रामके विना आते हुए सुमन्त्रको देख निराशासे धैर्यरहित हुए, उन्होंने मद्य नहीं पिया, शरीरमें केशर चन्दन आदि सुगन्धित द्रव्य नहीं लगाया और सुन्दर वस्त्र भी नहीं पहना ॥ २० ॥

आसिष्ट नैकत्र शुचा व्यरंसीत् कृताऽकृतेभ्यः क्षितिपालभाग्भ्यः ।
स चन्दनोशीरमृणालदिग्धः शोकाऽग्निनाऽगाद् द्युनिवासभूयम् ॥ २१ ॥

अन्वय—चन्दनोशीरमृणालदिग्धः सः शुचा एकत्र न आसिष्ट, क्षितिपालभाग्भ्यः कृताऽकृतेभ्यः व्यरंसीत्, शोकाऽग्निना द्युनिवासभूयम् अगात्।

प्रयोगप०—चन्दनोशीरमृणालदिग्धेन तेन एकत्र न आसि, व्यरामि, द्युनिवासभूयम् अगामि।

व्याख्या—चन्दनोशीरमृणालदिग्धः = श्रीखण्डनलदबिसलिप्तः ( शोकाऽग्निदाहशान्त्यर्थमित्यर्थः ), सः = दशरथः, शुचा = शोकेन, एकत्र = एकस्मिन् स्थाने, न आसिष्ट = न उपविष्टः ( अनियताऽवस्थान आसीदित्यर्थः, एतेन अनवस्थालक्षणरूपः शोकाऽनुभावः उक्तः ), क्षितिपालभाग्भ्यः = राजाऽर्हेभ्यः, कृताकृतेभ्यः = सुवर्णरजतेभ्यः ( सुवर्णरजतमयाऽलङ्कारभाजनादिभ्यः इत्यर्थः । यद्वा—कृताऽकृतेभ्यः = असमापितेभ्यः, क्षितिपालभाग्भ्यः = राजार्हदूतप्रेषणादिभ्यः ), व्यरंसीत् = विरतः ( विरक्तः ) अभूत् । शोकाऽग्निना = मन्युवह्निना, द्युनिवासभूयं = देवभूयम्, अगात् = गतवान् ( स्वर्गं गत इत्यर्थः )।

व्युत्पत्ति—चन्दनोशीरमृणालदिग्धः = चन्दनञ्च उशीरं च मृणालं च चन्दनोशीरमृणालानि ( द्वन्द्वः ), तैर्दिग्धः ( तृ० त० )। "दिह उपचये" इति कर्मणि क्तः, "दादेर्धातोर्घः" इति हस्य घः, "झषस्तथोर्धोऽधः" इति तस्य धः, "झलां जश् झशि" इति जश्त्वम् । एकत्र = एकस्मिन्निति एकत्र, "सप्तम्यास्त्रल्" इति त्रल्, आसिष्ट = "आस उपवेशने" इति धातोर्लुङि तङि सिचीडागमः । क्षितिपालभाग्भ्यः = क्षितिं पालयतीति क्षितिपालः, क्षित्युपपदपूर्वकात् "पाल रक्षणे" इति धातोः "कर्मण्यण्" इत्यण्, क्षितिपालं भजन्ते इति क्षितिपालभाञ्जि, तेभ्यः "भजो ण्विः" इति ण्विः । कृताऽकृतेभ्यः = कृतानि च तानि अकृतानि, च कृताऽकृतानि, तेभ्यः "क्तेन नञ्विशिष्टेनान्ञ्' इति समासः । "व्यरंसीत्" इति योगे "जुगुप्साविरामप्रमादाऽर्थानामुपसंख्यानम्" इत्यपादानत्वम् "अपादाने पञ्चमी" इति पञ्चमी । "हेमरूप्ये कृताऽकृते" इत्यमरः । व्यरंसीत् = विपूर्वात् "रमु क्रीडायाम्" इति धातोर्लुङ्, "व्याङ्परिभ्यो रमः" इति परस्मैपदम्, 'यमरमनमातां सक् च" इति सगिटौ, "नेटि" इति वृद्धिप्रतिषेधः । शोकाऽग्निना = शोक एव अग्निः शोकाऽग्निस्तेन ( रूपक० )। द्युनिवासभूयः = द्यौर्निवासः यस्य स द्युनिवासः ( बहु० ), तस्य भावो द्युनिवासभूयं, तत् "भुवो भावे" इति क्यप्।

भावार्थ—राजा शोकदाहापनयनार्थं चन्दनोशीरादिलिप्तोऽपि शोकेन एकत्र स्थातु न पारितवान्, राजयोग्यानि सुवर्णरजतभूषणानि न परिहितवान् अथवा असमापितानि दूतप्रेषणादीनि राजयोग्यकर्माणि नाऽनुष्ठितवान्, किं बहुना? शोकाऽग्निना स्वर्गं जगाम।

भाषार्थ—चन्दन, उशीर और मृणालका लेप करनेपर भी महाराज दशरथ शोकके कारण एक जगह स्थिरतासे नहीं रह सके, उन्होंने राजाके योग्य सोने चांदीके अलङ्कार भी नहीं पहने अथवा आरम्भ किये गये दूत-प्रेषण आदि राजाओंके योग्य कार्य भी नहीं किये, कि बहुना? वे शोकाऽग्निसे स्वर्गवासी हो गये ॥ २१ ॥

विचुक्रुशुर्भूमिपतेर्महिष्य केशाँल्लुलुञ्चु, स्ववपूंषि जघ्नु ।
विभूषणान्युन्मुमुचु, क्षमाया पेतुर्बभञ्जुर्वलयानि चैव ॥ २२ ॥

अन्वय—भूमिपते महिष्य विचुक्रुशु, केशान् लुलुञ्चु, स्ववपूंषि जघ्नु, विभूषणानि उन्मुमुचु क्षमाया पेतु, वलयानि बभञ्जुश्चैव।

प्रयोगप०—महिषीभिर्विचुक्रुशे, केशा लुलुञ्चिरे, स्ववपूंषि जघ्निरे, विभूषणानि उन्मुमुचिरे, क्षमाया पेते, वलयानि बभञ्जिरे।

व्याख्या—भूमिपते=राज्ञ, महिष्य=राज्य (कौशल्यादिका इत्यर्थ), विचुक्रुशु=हा नाथ इत्याजुहुवु रुरुदुश्च। केशान्=शिरोरुहान्, लुलुञ्चु=चिच्छिदु। स्ववपूंषि=आत्मशरीराणि, जघ्नु=ताडयामासु। विभूषणानि=अलङ्कारान् (हारादीनित्यर्थ) उन्मुमुचु=तत्यजु। क्षमाया=पृथिव्या, पेतु=पतिता। वलयानि=कटकानि (सौभाग्यचिह्नानीति भाव), बभञ्जुश्च=चूर्णितवत्यश्च (एवकार पादपूरणार्थक)।

व्युत्पत्ति—भूमिपते=भूमे पतिर्भूमिपतिस्तस्य (ष० त०)। विचुक्रुशु= "क्रुश आह्वाने रोदने च" इति धातोर्लिट्। केशान्="चिकुर कुन्तलो बाल कच केश शिरोरुह" इत्यमर। लुलुञ्चु='लुञ्च अपनयने' इति धातोर्लिट्। स्ववपूंषि= स्वस्य वपूंषि स्ववपूंषि, तानि (ष० त०)। पेतु="पतॢ पतने" इति धातोर्लिट्, एत्वाऽभ्यासलोपौ। क्रियासमुच्चयोऽलङ्कार।

भावार्थ—कौशल्यादिका दशरथपत्न्य हा नाथ! इत्याजुहुवु रुरुदुश्च, केशानुत्पाटितवत्य, स्वाऽङ्गानि ताडितवत्य, हाराद्यलङ्कारान् तत्यजु, भूमौ पतिता एव वलयादीनि सौभाग्यचिह्नानि चूर्णितवत्य।

भाषार्थ—कौशल्या आदि दशरथ की रानियां हा नाथ! कहकर रोने लगीं, केशोंको नोचने लगीं, छाती आदि अङ्गों को पीटने लगीं, गहनोंको उतारने लगीं, जमीन पर पड़ने लगीं और सौभाग्यचिह्न वलय आदिको भी तोड़ने लगीं ॥ २२ ॥

ता सान्त्वयन्ती भरतप्रतीक्षा त बन्धुता न्यक्षिपदाशु तैले ।
दूताश्च राजाऽऽत्मजमानिनीषु प्रास्थापयन्मन्त्रिमतेन यून ॥ २३ ॥

अन्वय —बन्धुता भरतप्रतीक्षा ( सती ) ता सान्त्वयन्ती तम् आशु तैले न्यक्षिपत्, राजात्मजम् आनिनीषु ( सती ) यून दूतान् मन्त्रिमतेन प्रास्थापयच्च ।

प्रयोगप०—बन्धुतया भरतप्रतीक्षया सान्त्वयन्त्या ( सत्या ) स तैले न्यक्षेपि आनिनीष्वा ( सत्या ) युवानो दूता प्रास्थाप्यन्त ।

व्याख्या—बन्धुता=बन्धुसमूह , भरतप्रतीक्षा=भरत प्रतीक्षमाणा ( सती ), ता = महिषी , सान्त्वयन्ती = आश्वासयन्ती, त = दशरथम् (दशरथशरीरमित्यर्थ ), आशु = शीघ्र, तैले=तैलद्रोण्या, न्यक्षिपत्=निक्षिप्तवती ( अविक्रियाऽर्थमित्यर्थ ), राजाऽऽत्मज = भरतम्, आनिनीषु = आनेतुमिच्छु सती ( आनिनीषून् इति पाठे दूतविशेषणम् ), यून =तरुणान् ( कार्यनिर्वाहसमर्थानित्यर्थ ), दूतान्=सन्देशहरान् , मन्त्रिमतेन=सचिवाऽनुमत्या, प्रास्थापयच्च = प्रस्थापितवती च ।

व्युत्पत्ति —बन्धुता=बन्धूना समूह , "ग्रामजनबन्धुभ्यस्तल्" इति तल् । भरतप्रतीक्षा = भरत प्रतीक्षते ( सत्काराऽर्थम् ) इति भरतप्रतीक्षा 'ईक्षिक्षमिभ्या च" इत्युपसङ्ख्यानाण्ण । सान्त्वयन्ती = सान्त्व करोतीति सान्त्वयन्ती, णिजन्तात् शतृप्रत्यय । न्यक्षिपत् = निपूर्वात् क्षिपेर्लङ् । राजाऽऽत्मज = राज्ञ आत्मजो राजाऽऽत्मजस्तम् ( ष० त० ) । आनिनीषु =सन्नन्तान्नीधातोरुप्रत्यय । दूतान्="स्यात्सन्देशहरो दूत " इत्यमर । मन्त्रिमतेन=मन्त्रयन्ते इति मन्त्रिण , "मन्त्रि गुप्तपरिभाषणे" इति धातो "नन्दिग्रहिपचादिभ्यो ल्युणिन्यच " इति ग्रह्यादित्वात् णिनिप्रत्यय , यद्वा मन्त्र अस्ति येषा ते मन्त्रिण , "अत इनिठनौ" इतीनिप्रत्यय । मन्त्रिणा मत मन्त्रिमत, तेन ( ष० त० ) । प्रास्थापयत्=तिष्ठतेर्ण्यन्ताल्लङ् , "अर्तिह्रीव्लीरी क्नूयीक्ष्माय्याता पुङ् णौ' इति पुगागम ।

भावाऽर्थ =बन्धुसमूहो भरत प्रतीक्षमाण सन् राजपत्नी सान्त्वयन् दशरथ शरीरमविकृत्यर्थं शीघ्र तैले न्यक्षिपत् , भरताऽऽनयनाय मन्त्रिमतेन दूताश्च प्रस्थापितवान् ।

भाषाऽर्थ —राजा के बन्धुओंने भरतकी प्रतीक्षाकर रानियोंको सान्त्वना देकर दशरथके शरीरको शीघ्र तलसे रखा, और भरतको लानेकी इच्छासे मन्त्रियों की अनुमतिसे युवक दूतोंको भेजा भी ॥ २३ ॥

सुतो नभस्त पतित निरीक्ष्याब्रके विवस्वन्तमध स्फुरन्तम् ।
आख्यद्वसन्मातृकुले सखिभ्य पश्यन् प्रमाद भरतोऽपि राज्ञ ॥२४॥

अन्वय —मातृकुले वसन् भरत अपि सुप्त (सन्) नभस्त पतितम् अध स्फुरन्त विवस्वन्त निरीक्षाञ्चक्रे, राज्ञ प्रमाद पश्यन् सखिभ्य आख्यत्।

प्रयोगप०—वसता भरतेनाऽपि सुप्तेन (सता) नभस्त पतित अध स्फुरन् विवस्वान् निरीक्षाञ्चक्रे पश्यता सखिभ्य आख्यायि।

व्याख्या—मातृकुले=मातुलालये, वसन्=निवसन्, भरतोऽपि = कैकेयीनन्दनोऽपि, सुप्त =निद्राण (सन्), नभस्त =आकाशात्, पतित = भ्रष्टम्, अध =भूतले, स्फुरन्त = चलन्त, विवस्वन्त = सूर्यं, निरीक्षाञ्चक्रे=ददर्श (स्वप्ने अद्राक्षीदित्यर्थ)। राज्ञ =पितु (सूर्यकल्पस्येति शेष), प्रमादम्=अनर्थं, पश्यन्=प्रेक्षमाण, सखिभ्य = मित्रेभ्य, आख्यत्=अकथयत् (त दु स्वप्नमिति शेष)।

व्युत्पत्ति —मातृकुले = मातु कुल मातृकुल, तस्मिन् (ष० त०)। "कुल जनपदे गृहे" इति विश्व। नभस्त =नभस इति नभस्त 'अपादाने चाऽहीयरुहो' इति तसिप्रत्यय। निरीक्षाञ्चक्रे = 'ईक्ष दर्शने' इति धातो कर्तरि लिट्, "इजादेश्च गुरुमतोऽनृच्छ" इत्याम्। सखिभ्य =क्रियाग्रहणाच्चतुर्थी। "अथ मित्र सखा सुहृत्" इत्यमर। आख्यत् = ख्यातेर्लुङि "अस्यतिवक्तिख्यातिभ्योऽङ्" इत्यङ्। जयमङ्गलादिमते—' भरत सखिभ्य आख्यत् (अहम्) निरीक्षाञ्चक्रे' इत्यन्वय। तन्मते सुप्तावस्थाया चित्तव्याक्षेपात् लिट उत्तमपुरुषप्रयोग।

भावाऽर्थ —मातुलभवने निवसन्भरतोऽपि स्वप्ने आकाशात् पतित भूतले चलन्त सूर्यमपश्यत्, पितुरनिष्ट प्रेक्षमाण त स्वप्न मित्रेभ्योऽकथयच्च।

भाषाऽर्थ —मामाके भवनमे रहे हुए भरतने भी स्वप्नमे आकाशसे गिरे हुए पृथ्वीमे चलते हुए सूर्यको देखा और पिता का अनर्थ विचारकर मित्रोंसे कहा ॥२४॥

अशिश्रवन्नात्ययिक तमेत्य दूता यदार्थ प्रयियासयन्त ।
आहिष्ट जाताञ्जिहिषस्तदासावुत्कण्ठमानो भरतो गुरूणाम् ॥ २५ ॥

अन्वय —यदा दूता एत्य प्रयियासयन्त तम आत्ययिकम् अर्थं न अशिश्रवन्, तदा गुरूणाम् उत्कण्ठमान असौ भरत जाताऽञ्जिहिष (सन्) आहिष्ट।

प्रयोगप०—दूतै प्रयियासयद्भि स आत्ययिकम् अर्थ न अश्रावि, उत्कण्ठमानेन अमुना भरतेन जाताऽञ्जिहिषेण (सता) आहि।

व्याख्या—यदा = यस्मिन् समये, दूता = सन्देशहरा, एत्य=आगत्य (भरतमातृकुलमित्यर्थ), प्रयियासयन्त = प्रयातुमेषयन्त (जिगमिषयन्त इत्यर्थ), त=भरतम्, आत्ययिक = विनाशमात्रफलकम्, अर्थं = कैकेयीवृत्तान्त, न अशिश्रवन् = न श्रावितवन्त, (अनर्थमश्रावयित्वैव व्यपदेशान्तरेण गमनेच्छामजीजन

न्नित्यर्थः ) तदा = तस्मिन् समये ( अश्रवणकाल एवेत्यर्थः ), गुरूणां = पित्रादीनाम् उत्कण्ठमानः = स्मरन् असौ = अयं, भरतः = कैकेयीनन्दनः, जाताऽञ्जिहिषः = उत्पन्नजिगमिषः ( गमनेच्छुः सन्नित्यर्थः ), आंहिष्ट = अगमत् ।

व्युत्पत्तिः—एत्य=आङ्पूर्वादिणः क्त्वाप्रत्ययस्य "समासेऽनञ्पूर्वे क्त्वो ल्यप्" इति ल्यपि तुकि च रूपम् । प्रयियासयन्तः = याते सन्नन्तात् णिच्, लटः शत्रा देशः । तं="गतिबुद्धी" त्यादिसूत्रेण शृणोतेः शब्दकर्मत्वात्कर्मसञ्ज्ञा । आत्ययिकम्=अत्ययः ( विनाशः ) प्रयोजनं यस्य स आत्ययिकः तम्, "प्रयोजनम्" इति ठञ् "ठस्येकः" इति कादेशः "तद्धितेष्वचामादेः" इत्यादिवृद्धिश्च । अशिश्रवन्="श्रु श्रवणे" इति ण्यन्ताद्धातोर्लुङि 'चङि' इति द्विर्वचनं, 'स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा' इत्यभ्यासस्य इत्वम् । गुरूणाम् = 'अधीगर्थदयेशां कर्मणि' इति कर्मणि षष्ठी । उत्कण्ठमानः=उत्कण्ठते इति उत्कण्ठमानः, उत्पूर्वात् 'कठि शोके' इति धातोर्लटः शानच् । जाताऽञ्जिहिषः = अंहितुमिच्छा अञ्जिहिषा, 'अहि गतौ' इति भौवादिकाद्धातोः सन्नन्तात् 'अ प्रत्ययात्' इति अप्रत्ययः, इट् । इदित्वात् नुम् "न न्द्राः संयोगादयः" इति नकारवर्जमजादित्वात् द्वितीयैकाचो द्वित्वं चुत्वादिकार्यं च । जाता अञ्जिहिषा ( गमनेच्छा ) यस्य सः ( बहु० ) । 'गोस्त्रियोरुपसर्जनस्य' इति उपसर्जनह्रस्वः । आंहिष्ट=तस्मादेव धातोर्लुङि सिचि आड्वृद्धिः ।

भावार्थः—यदा दूताः भरतमातृकुलमागत्य भरतमयोध्यां प्रापयितुं पितृमरणवार्तामस्मै नाऽकथयन्, तदा पित्रादिस्मरणेन गमनेच्छुर्भरतोऽगच्छत् ।

भाषाऽर्थ—जब दूतोंने आकर लौटानेके लिए भरतको पितृमरणकी वार्ता न सुनाकर दूसरा ही बहाना किया, तब भरत भी माता पिता आदि गुरुजनों के स्मरण से उत्कण्ठित होकर चले ॥ २५ ॥

बन्धूनशङ्किष्ट समाकुलत्वादासेदुषः स्नेहवशादपायम् ।
गोमायुसारङ्गगणाश्च सम्यङ्नाऽयासिषुर्भीममरासिषुश्च ॥ २६ ॥

अन्वयः—समाकुलत्वात् स्नेहवशाच्च बन्धून् अपायम् आसेदुषः अशङ्किष्ट गोमायुसारङ्गगणाश्च सम्यक् न अयासिषुः, भीमम् अरासिषुश्च ।

प्रयोगप०—( भरतेन ) बन्धवः अपायम् आसेदिवांसः अशङ्किषत, गोमायुसारङ्गगणैश्च सम्यक् न अयायि, अरासि च ।

व्याख्या—समाकुलत्वात्=व्याकुलचित्तत्वात् ( दुःस्वप्न = दूतागमनादिनेत्यर्थः ) स्नेहवशाच्च = प्रेमवशाच्च, बन्धून्=बान्धवान् ( पित्रादीनित्यर्थः ), अपायं= नाशम्, आसेदुषः=प्राप्तान्, अशङ्किष्ट = शङ्कितवान् । गोमायुसारङ्गगणाश्च = शृगालमृगसमूहाश्च, सम्यक्= अनुकूलं, न अयासिषुः=न आगमन् ( शृगालाः प्रद

क्षिण मृगाश्च सव्यमित्यर्थ )। भीम=भयङ्करम् , अरासिषुश्च=रसितवन्तश्च ( शब्द कृतवन्तश्च इत्यर्थ )।

व्युत्पत्ति —समाकुलत्वात्=समाकुलस्य भाव समाकुलत्व तस्मात् ( त्वप्रत्यय )। स्नेहवशात्=स्नेहस्य वश स्नेहवशस्तस्मात् (ष० त०)। "प्रेमा ना प्रियता हार्द प्रेम स्नेह" इत्यमर । आसेदुष ="भाषाया सदवसश्रुव" इति क्वसु , "अत एकहल्मध्येऽनादेशादेर्लिटि" इत्येत्वाऽभ्यासलोपौ। अशङ्किष्ट=शङ्कतेर्लुङि सिचीट्। गोमायुसारङ्गगणाश्च=गो सारङ्गाश्च गोमायुसारङ्ग गोमायुसारङ्गा वा (द्वन्द्व ) 'विभाषावृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम्' इति विकल्पेन एकवद्भावस्तदभावो वा। गोमायुसारङ्गस्य गोमायुसारङ्गाणा वा गणा ( ष० त० )। अयासिषु =यातेर्लुङि "यमरमे" त्यादिना सगिटौ। अरासिषु ="रस शब्दे" इति धातोर्लुङ् 'अतो हलादेर्लघो ' इति सिचि वृद्धि ।

भावार्थ —भरतो व्याकुलचित्तत्वात् स्नेह बन्धूनामनिष्टमाशङ्कितवान् , श्रृगालास्तस्य प्रदक्षिण मृगाश्च सव्यमागच्छन् , एव भयङ्करशब्द च अकार्षु ।

भाषार्थ —आकुलता से और स्नेह के कारण से भी भरतने बन्धुओं के अनिष्ट की आशङ्का की, श्रृगाल और मृग उसके प्रतिकूल चलने लगे एवम् भयङ्कर शब्द भी करने लगे॥ २६ ॥

स प्रोषिवानेत्य पुर प्रवेक्ष्यन् शुश्राव घोष न जनौघजन्यम् ।
आकर्णयामास न वेदनादान् न चोपलेभे वणिजा पणाऽऽयान् ॥ २७ ॥

—स प्रोषिवान् ( सन् ) एत्य पुर प्रवेक्ष्यन् जनौघजन्य घोष न शुश्राव, वेदनादान् न आकर्णयामास, वणिजा पणाऽऽयान् च न उपलेभे।

प्रयोगप०—तेन प्रोषुषा प्रवेक्ष्यता ( सता ) जनौघजन्यो घोषो न शुश्रुवे, वेदनादा न आकर्णयाञ्चक्रिरे, पणायाश्च नोपलेभिरे ।

व्याख्या—स =भरत , प्रोषिवान्=प्रोषित ( सन् ), एत्य=आगत्य, पुरम्=अयोध्या, प्रवेक्ष्यन्=प्रवेश करिष्यन् , जनौघजन्य=नरसमूहजात, घोष=शब्द, न शुश्राव=न श्रुतवान् । वेदनादान्=श्रुतिध्वनीन् , न आकर्णयामास=न आकर्णितवान् । वणिजा=व्यापारिणा, पणाऽऽयाश्च=कार्षापणादिलाभाश्च ( पणायामिति टावन्तपाठे परस्परव्यवहार स्तुतिकौशल चेत्यर्थ ), न उपलेभे=न उपलब्धवान् ।

व्युत्पत्ति —प्रोषिवान्='भाषाया सदवसश्रुव ' इति क्वसु । यजादित्वात्सम्प्रसारण'वस्वेकाजाद्घसाम्' इति इट् । जनौघजन्य=जनानामोघो जनौघ ( ष० त० ) जायते इति जन्य , 'भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा' इति कर्तरि निपात , 'अचो यत्' इत्यत्र पठितात् 'तकिशसिचतियतिजनिभ्यो यद्वाच्य ' इति

वार्तिकात् यत् इति केचित्। जनौघेन जन्यो जनौघजन्यस्तम् ( तृ० त० )। वेदना दान्=वेदाना नादा वेदनादास्तान् ( ष० त० ), 'श्रुति स्त्री वेद आम्नायस्त्रयी' इत्यमर । आकर्णयामास='प्रातिपदिकाद्धात्वर्थे बहुलमिष्टवच्च' इति णिच् । तदन्तात्लिट्यामि 'अयामन्ताल्वाय्येत्न्विष्णु' इत्ययादेश । पणायान्=पण्यन्ते इति पणा 'पण व्यावहारे' इत्यस्मात् 'नित्य पण परिमाणे' इत्यप्। 'पणो वराटमाने स्यान्मूल्ये कार्षापणे गृहे।' इति विश्व पणानामाया पणायास्तान् ( ष० त० )।

भावार्थ —भरत इयन्त्यहानि प्रोषित सन् पुरप्रवेश करिष्यन् जनसमुहोत्पन्न शब्द वेदध्वनीश्च न श्रुतवान् , व्यवहारिणा कार्षापणादिलाभ च नोपलब्धवान्।

भाषार्थ —भरतको इतने दिन प्रवासमे रहकर अयोध्यापुरीमें प्रवेश करनेके समयमें जनसमूहमे उत्पन्न शब्द और वेदशब्द सुनाई नही पड़े और उन्होंने व्यापारियोंका मुनाफा भी नही देखा ॥ २७ ॥

चक्रन्दुरुच्चैर्नृपति समेत्य त मातरोऽभ्यर्णमुपागताऽस्रा ।
पुरोहिताऽमात्यमुखाश्च योधा विवृद्धमन्युप्रतिपूर्णमन्या ॥ २८ ॥

अन्वय —मातर पुरोहिताऽमात्यमुखा योधाश्च अभ्यर्ण त समेत्य विवृद्ध मन्युप्रतिपूर्णमन्या उपगतास्रा ( सन्त ) उच्चै नृपति चक्रन्दु ।

प्रयोगप०—मातृभि पुरोहिताऽमात्यमुख्यैर्योधैश्च विवृद्धमन्युप्रतिपूर्णमन्यैरुपागतास्रै ( सद्भि ) नृपतिश्चक्रन्दे ।

व्याख्या—मातर =जनन्य (कौशल्यादिका इत्यर्थ ), पुरोहिताऽमात्यमुखा = पुरस्कृतपुरोधोमन्त्रिण , योधाश्च=भटाश्च, अभ्यर्णम्=आसन्नम् , त=भरत, समेत्य=प्राप्य, विवृद्धमन्युप्रतिपूर्णमन्या =प्रवृद्धशोकव्याप्तग्रीवापृष्ठशिरा ,उपागताऽस्रा =समायाताश्रव (सन्त ), उच्चै =तारस्वर, नृपति=राजान चक्रन्दु =हा नाथ । क्व गतोऽसीति चुक्रुशु ।

व्युत्पत्ति —मातर ='जनयित्री प्रसूर्माता जननी' इत्यमर । पुरोहिताऽमात्यमुखा =पुर (अग्रे) धीयते (स्थाप्यते) इति पुरोहित , 'निष्ठा' इति क्तप्रत्यय 'दधातोर्हि ' इति हिरादेश । अमा ( सह ) वर्तते इति अमात्य , 'अव्ययात्त्यप्' 'अमेहक्वतसित्रेभ्य एव' इति त्यप्। पुरोहितश्च अमात्यश्च पुरोहिताऽमात्यौ, अमात्यस्य अजाद्यदन्तत्वेऽपि पुरोहितस्य अभ्यर्हितत्वात् 'अभ्यर्हित च' इति पूर्वप्रयोग (द्वन्द्व )। तौ मुख (प्रधानम्) येषा ते (बहु०)। योधा =युध्यन्ते इति योधा , 'युध सम्प्रहारे' इति धातो पचाद्यच्। अभ्यर्णम्=अभिपूर्वादर्दे कर्तरि क्त 'अभेश्चाविदूर्ये' इतीट्प्रतिषेधात् 'रदाभ्या निष्ठातो न पूर्वस्य च द ' इति निष्ठानत्वम्। विवृद्धमन्युप्रतिपूर्णमन्या =विवृद्धश्चाऽसौ मन्यु विवृद्धमन्यु (क० धा०)। प्रतिपूर्णा मन्या

( ग्रीवापश्चाच्छिरा ) येषा ते प्रतिपूर्णमन्या (बहु०)। 'पश्चाद्ग्रीवाशिरा मन्या'। इत्यमर। विवृद्धमन्युना प्रतिपूर्णमन्या ( तृ० त० )। उपागताऽस्रा =उपागतम् अस्र येषा ते ( बहु० )। नृपतिम् = नृणा पति नृपतिस्तम् ( ष० त० )।

भावार्थ —कौशल्यादयो मातर पुरोहितमन्त्रिप्रधाना योद्धारश्च भरतसम्मुखमागत्य प्रवृद्धशोकव्याप्तग्रीवापश्चाच्छिरा अश्रुपूर्णनेत्रा सन्त 'हा नाथ! क्व गतोऽसी' ति नृप चुक्रुशु।

भाषार्थ —कौशल्या आदि माताओं तथा पुरोहित और मन्त्रियोंको आगे किये हुए योद्धालोग भी भरतके पास आकर बढ़े हुए शोकसे व्याप्त ग्रीवाकी पिछली नाडीवाले हो आसू गिराते हुए ऊँचे स्वरसे 'हा महाराज! आप कहाँ चले गये' ऐसा चिल्लाने लगे ॥ २८ ॥

दिदृक्षमाण परित ससीत राम यदा नैक्षत लक्ष्मण च।
रोरुद्यमान स तदाऽभ्यपृच्छद्यथावदाख्यन्नथ वृत्तमस्मै ॥ २९ ॥

अन्वय —स परित दिदृक्षमाण यदा ससीत राम लक्ष्मण च न ऐक्षत, तदा रोरुद्यमान अपृच्छत्, अथ अस्मै वृत्त यथावत् आख्यन्।

प्रयोगप०—तेन दिदृक्षमाणेन ससीतो रामो लक्ष्मणश्च न ऐक्ष्यत, रोरुद्यमानेन सता ( ते ससीत राम लक्ष्मण च ) अपृच्छ्यन्त, अस्मै वृत्तम् आख्यायि।

व्याख्या—स =भरत , परित =सर्वत , दिदृक्षमाण = द्रष्टुमिच्छन् ( सन ), यदा = यस्मिन् समये, ससीत = सीतासहित, राम=रामचन्द्र ( स्वज्येष्ठभ्रातरम् ), लक्ष्मण च = सुमित्राज्येष्ठतनय च ( स्वाऽनुज च ), न ऐक्षत=न अपश्यत्, तदा= तस्मिन् समये रोरुद्यमान =भृश रुदन् , अपृच्छत्=पृष्टवान् ( 'एते क्व गता' इत्यप्राक्षीदित्यर्थ ।) अथ = अनन्तरम् अस्मै = भरताय, वृत्त=भूतमर्थं, यथावत् = यथाऽर्हम् , आख्यन् = अकथयन् ( पुरोहितसचिवादय कैकेयीदुश्चेष्टम् एतदिति कथितवन्त इत्यर्थ )।

व्युत्पत्ति —परित ='पर्यभिभ्या च' इति तसिल् । दिदृक्षमाण ='ज्ञाश्रुस्मृदृशा सन' इति दृशे सन्नन्तादात्मनेपदे शानच्, 'हलन्ताच्च' इति सन कित्वात् 'सृजिदृशोर्झल्यमकिति' इत्यम् न भवति 'अकिति' इति प्रतिषेधात्। ससीत = सीतया सहित ससीतस्तम् ( बहु० ) ऐक्षत = ईक्षतेर्लङि आड्वृद्धि । रोरुद्यमान =रुदेर्यङन्ताल्लट शानजादेश । अथ='मङ्गलाऽनन्तराऽऽरम्भप्रश्नकार्त्स्न्येष्वथो अथ।' इत्यमर । अस्मै=क्रियाग्रहणाच्चतुर्थी। यथावत्=यथा अर्हतीति यथावत्, 'तदर्हम्' इति वतिप्रत्यय । आख्यन्=ख्याते 'अस्यतिवक्तिख्यातिभ्योऽङ्' इत्यङ्।

भावार्थ —भरत सीतारामौ लक्ष्मण च द्रष्टुमिच्छु सन् यदा कुत्राऽपि

नाऽपश्यत् तदा भृशं रुदन् पुरोहितादीन् 'एते क गता' इत्यपृच्छत्, तदनन्तरं ते भरताय कैकेयीदुश्चेष्टितमेतदिति सर्वं यथावत् अकथयन्।

भाषाऽर्थ—भरतजीने सीता, राम और लक्ष्मणको देखनेकी इच्छा करते हुए जब कहीं नहीं देखा तब रोते हुए उन्होंने पूछा, अनन्तर पुरोहित मन्त्री आदि लोगोंने उनको सब हाल ब्योरेवार सुनाया ॥ २९ ॥

आबद्धभीमभ्रुकुटीविभङ्गः शेश्वीयमानाऽरुणरौद्रनेत्रः ।
उच्चैरुपालब्ध स केकयीं च शोके मुहुश्चाऽविरतं न्यमाङ्क्षीत् ॥ ३० ॥

अन्वय—सः आबद्धभीमभ्रुकुटीभङ्गः शेश्वीयमानाऽरुणरौद्रनेत्रः ( सन् ) केकयीं मुहुः उच्चैः उपालब्ध, शोके अविरतं न्यमाङ्क्षीच्च ।

प्रयोगप०—तेन आबद्धभीमभ्रुकुटीविभङ्गेन शेश्वीयमानाऽरुणरौद्रनेत्रेण ( सता ) केकयी उपालम्भि, शोके न्यमज्जि च ।

व्याख्या—सः = भरतः, आबद्धभीमभ्रुकुटीविभङ्गः = सम्बद्धभयङ्करभ्रूकौटिल्यविकारः, शेश्वीयमानाऽरुणरौद्रनेत्रः = उच्छूनरक्तोग्रनयनः ( सन् ), केकयीं=स्वमातरं, मुहुः = पुनः पुनः, उच्चैः = तारस्वरम्, उपालब्ध=उपालब्धवान् ( 'अयि पापिष्ठे! किमिदमाचरितम्' इति उपालम्भं कृतवानित्यर्थः ), शोके= शोकसागरे, अविरतम् = अजस्रं, न्यमाङ्क्षीच्च = निमग्नश्च ।

व्युत्पत्ति—आबद्धभीमभ्रुकुटीविभङ्गः = भ्रुवो कुटी ( कौटिल्यम् ) इति भ्रुकुटी 'कुट कौटिल्ये' इति धातोः औणादिक इकारः 'कृदिकारादक्तिन' इति ङीप्। 'इको ह्रस्वोऽङ्यो गा ' इति विकल्पेन पूर्वस्येको ह्रस्वः । भ्रुकुटी एव विभङ्गः विकारः भ्रुकुटीविभङ्गः (रूपक०)। आबद्धो भीमो भ्रुकुटीविभङ्गो येन सः (बहु०)। 'दारुणं भीषणं भीष्मं भीमं घोरं भयानकम्' इत्यमरः। शेश्वीयमानाऽरुणरौद्रनेत्रः = अत्यर्थं शूयमाने शेश्वीयमाने 'टुओश्वि गतिवृद्ध्योः' इति धातोः यङन्ताल्लटः शानजादेशः 'विभाषा श्वेः' इति विकल्पात् असम्प्रसारणपक्षे रूपम् । 'गुणो यङ्लुकोः' इति गुणश्च। शेश्वीयमाने अरुणे रौद्रे नेत्रे यस्य सः ( बहु० )। उपालब्ध = उपाङ्पूर्वाल्लभतेर्लुङि तङि 'झलो झलि' इति सलोपः, धत्वादिकार्यं च। न्यमाङ्क्षीत् = निपूर्वात् 'टुमस्जो शुद्धौ' इति धातोर्लुङि सिचि 'मस्जिनशोर्झलि' इत्यन्तात्पूर्वनुम्विधानात् सयोगादिलोपः, हलन्तलक्षणा वृद्धिः, हल्ग्रहणस्य समुदायप्रतिपत्त्यर्थत्वात् कुत्वषत्वाऽनुस्वारादिपरसवर्णादिकार्यम्।

भावाऽर्थ—भरतः श्रवणाऽनन्तरं क्रोधाद्भयङ्करं भ्रूकौटिल्यं विधाय शोकाच्च उच्छूनरक्तभयङ्करनयनः सन् कैकेयीं मुहुः उच्चस्वरेण उपालब्धवान् शोकसागरे निमग्नश्च ।

भाषाऽर्थ—भरतजीने सुननेके बाद भयङ्करस्वरूपसे आँख भौं चढ़ाकर सूजे,

लाल और भयङ्कर नेत्रोंसे ताककर ऊँचे स्वरसे कैकेयीका बारबार उपालम्भ किया और वे शोकसमुद्र में भी डूब गये ॥ ३० ॥

उपालम्भमाह—

नृपात्मजौ चिक्लिशतु ससीतौ, ममार राजा, विधवा भवत्य ।
शोच्या वय, भूरनृपा, लघुत्व केकय्युपज्ञ बत ! बह्वनर्थम् ॥ ३१ ॥

अन्वय —ससीतौ नृपात्मजौ चिक्लिशतु, राजा ममार, भवत्य विधवा (सन्ति), वय शोच्या, भू अनृपा, बत ! केकय्युपज्ञ बह्वनर्थं लघुत्वम् ।

प्रयोगप०—ससीताभ्या नृपात्मजाभ्या चिक्लिशे, राज्ञा मम्रे, भवतीभिर्विधवाभि (भूयते), अस्माभि शोच्यै (भूयते), भुवा अनृपया (भूयते), केकय्युपज्ञेन बह्वनर्थेन लघुत्वेन (भूयते) ।

व्याख्या—ससीतौ = सीतासहितौ, नृपाऽऽत्मजौ = राजपुत्रौ (रामलक्ष्मणावित्यर्थ), चिक्लिशतु = क्लिष्टौ । राजा = दशरथ, ममार = मृत । भवत्य = यूय, विधवा = पतिरहिता (सन्तीति शेष) । वयम् = अस्मदादय, शोच्या = शोचनीया (निन्दाभाजनत्वादिति भाव) । भू = पृथिवी, अनृपा = राजरहिता (जातेति शेष "शोच्य राज्यमराजकम्" इति न्यायात् त्वमपि शोच्येति भाव) । बत = कष्ट, केकय्युपज्ञ = कैकय्या, प्रथममुपज्ञात, बह्वनर्थ = भूयिष्ठानर्थं, लघुत्व = तुच्छत्वम् (अस्तीति शेष) ।

व्युत्पत्ति —ससीतौ = सीतया सहितौ (बहु०), "गोस्त्रियोरुपसर्जनस्य" इति उपसर्जनह्रस्वत्वम् । नृपाऽऽत्मजौ = नृपस्य आत्मजौ (ष० त०) । चिक्लिशतु = क्लिश्यते ("क्लिश उपतापे" इति धातो) लिट् । ममार = "मृङ प्राणत्यागे" इति धातो लिट्, "म्रियतेर्लुङ्लिङोश्च" इति नियमात् परस्मैपदम् । विधवा = विगत धव (पति) यासा ता (बहु०), 'धव प्रिय पतिर्भर्ता', 'विश्वस्ताविधवे समे ।' इत्युभयत्राऽप्यमर । शोच्या = शोचितु योग्या, "शुच शोके" इति धातो 'ऋहलोर्ण्यत्' इति ण्यत् । अनृपा = अविद्यमान नृप यस्या सा (नञ् बहु०) । केकय्युपज्ञम् = उपज्ञायते इत्युपज्ञा, 'आतश्चोपसर्गे' इति कर्मण्यङ्, 'उपज्ञा ज्ञानमाद्य स्यात्' इत्यमर । केकय्या उपज्ञा यस्य तत् (बहु०) । बह्वनर्थम् = अविद्यमान अर्थ (प्रयोजनम्) येषा ते अनर्था (दोषा) 'नञोऽस्त्यर्थाना वाच्यो वा चोत्तरपदलोप' इति नञ्बहुव्रीहि । बहव अनर्था यस्मिंस्तत् (बहु०) । तुच्छत्व = तुच्छस्य भाव (त्वप्रत्यय) ।

भावार्थ —भरत कैकेयीमुपालब्धवान्—सीतासहितौ रामलक्ष्मणौ क्लेश प्रापतु, राजा मृत, भवत्यो (मातर) विधवा सन्ति, वय मातृपुत्रादय निन्दापा-

त्त्वाच्छोचनीया, पृथ्वी च राजरहिता सञ्जाता, कष्टम् ! कैकेय्याद्यज्ञानभूत राज्यतृष्णारूप तुच्छत्व राजमरणादिरूपबहुदोषकारण सञ्जातम् ।

भावार्थ—भरतजी कैकेयीको उपालम्भ ( उलहना ) देते हैं—सीता, राम और लक्ष्मणने क्लेश पाया, राजाका स्वर्गवास हुआ, अपलोग विधवा हुईं, हम लोग ( माता और पुत्र ) निन्दापात्र होनेसे शोचनीय है, पृथ्वी राजासे रहित है, हा ! कष्ट है, कैकेयी का आदिज्ञानभूत राज्यतृष्णारूप तुच्छता राजमरण आदि बहुत दोषोंका कारण हुआ ॥ ३१ ॥

नैतन्मत मत्कमिति ब्रुवाण सहस्रशोऽसौ शपथानशप्यत् ।
उद्वाश्यमान पितर सराम लुठ्यन् सशोको भुवि रोरुदावान् ॥ ३२ ॥

अन्वय—सशोक असौ सराम पितरम् उद्वाश्यमान भुवि लुठ्यन् रोरुदावान् 'एतत् मत मत्क न' इति ब्रुवाण सहस्रश शपथान् अशप्यत् ।

प्रयोगप०—सशोकेन अमुना उद्वाश्यमानेन लुठ्यता रोरुदावता 'एतेन मतेन मत्केन न ( भूयते )' इति ब्रुवाणेन शपथा अशप्यन्त ।

व्याख्या—सशोक =शोकयुक्त, असौ=भरत, सराम=रामसहित, पितर=दशरथम्, उद्वाश्यमान =उच्च क्रोशन् ( हा तात ! हा राम ! इति नामग्राहमुच्चराह्वान कुर्वन्नित्यर्थ ), भुवि =पृथिव्या लुठ्यन्=परिपतन्, रोरुदावान्=भृश रोदन कुर्वन्, एतत्=कैकेय्यनुष्ठित, मत=पक्ष, मत्क न=मत्कर्तृक न, इति = इद, ब्रुवाण = कथयन्, सहस्रश =अनेकवार, शपथान् = विश्वासवचनानि, अशप्यत्=अकरोत् ।

व्युत्पत्ति—सशोक =शोकेन सहित ( बहु० ) । सराम-रामेण सहित सराम स्तम् ( बहु० ) । पितर='तातस्तु जनक पिता ।' इत्यमर । उद्वाश्यमान =उद्वाश्यते इति उद्वाश्यमान, उत्पूर्वकात् 'वाश्र शब्दे' इति दैवादिकाद्धातो कर्तरि लट शानजादेश । लुठ्यन्=लुठ्यतीति लुठ्यन्, 'लुठ विलोडने' इति दैवादिकाद्धातो लट शत्रादेश । रोरुदावान् = भृश रोदन रोरुदा, रुदेयङन्तात् 'अप्रत्ययात्' इत्यप्रत्यय । 'अतो लोप ' इति 'यस्य हल ' इति अल्लोपो यलोपश्च । रोरुदा अस्ति यस्य स रोरुदावान् 'तदस्यास्त्यस्मिन्निति मतुप्' इति मतुप्, मत्कम्=अह ग्रामणीरस्य तत्, अस्मच्छब्दात् 'स एषा ग्रामणी ' इति कन्प्रत्यय, 'प्रत्ययोत्तरपदयोश्च' इति मपर्यन्तस्य मादेश । सहस्रश ='बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्' इति शस्प्रत्यय । अशप्यत्='शप आक्रोशे' इति धातोर्लङ् । अस्य कृधातुसमानार्थकत्व 'स तपोऽतप्यते' तिवन्निर्देशात् । 'शपते शप्यति शपत्याक्रोशत्यपि शप्यते ।' इति भट्टमल्ल ।

भावार्थ—सशोको भरत सराम पितरमुच्चै क्रोशन् भूमौ पतन् भृश रोदन च कुर्वन् मयैतन्नाचरितमिति कथयन् बहुवार शपथान् अकरोत् ।

भाषार्थ—शोकयुक्त भरतजीने रामचन्द्रजी और पिताको ऊंचे स्वरसे पुकारते हुए जमीनमें लोटपोटकर तथा अत्यन्त रोकर 'मातामे किया गया यह कार्य मेरी अनुमति से नहीं हुआ है' यह कहते हुए बहुत बार कसम खाई ॥ ३२ ॥

त सुस्थयन्त सचिवा नरेन्द्र दिधक्षयन्त समुदूहुरारात्।
अन्त्याहुति हावयितु सविप्राश्चिचीषयन्तोऽध्वरपात्रजातम् ॥ ३३ ॥

अन्वय—सचिवा त सुस्थयन्त नरेन्द्र दिधक्षयन्त सविप्रा (सन्त) अन्त्याहुति हावयितुम् अध्वरपात्रजात चिचीषयन्त आरात् समुदूहु ।

प्रयोगप०—सचिवै त सुस्थयद्भि नरेन्द्र दिधक्षयद्भि सविप्रै (सद्भि) चिचीषयद्भि (सद्भि) समुदूहे ।

व्याख्या—सचिवा =मन्त्रिण , त=भरत, सुस्थयन्त =सुस्थ कुर्वन्त , नरेन्द्र=दशरथ, दिधक्षयन्त =दग्धुमेषयन्त , सविप्रा =सब्राह्मणा (सन्त), अन्त्याहुति=प्रेत्याहुति, हावयितुम् =अग्नौ प्रक्षेपयितुम् , अध्वरपात्रजात=जुह्वादियज्ञभाजनसमूह, चिचीषयन्त =चेतुमिच्छन्त (यजमानाङ्गेषु यथाविधि निधातुमेषयन्त ), आरात् =नाऽतिदूरे, समुदूहु =उद्वाहयामासु ( चितामारोपयन्नित्यर्थ ) ।

व्युत्पत्ति—सचिवा =कार्येषु सचन्ते ( समवयन्ति ) इति सचिवा , 'पच-समवाये' इति धातो औणादिक इवन् । सुस्थयन्त ='तत्करोति तदाचष्टे' इति ण्यन्ताल्लट शत्रादेश । 'स्वस्थयन्त ' इति मल्लिनाथसम्मत पाठ । नरेन्द्र=नराणामिन्द्रो नरेन्द्रस्तम् ( ष० त० ) । दिधक्षयन्त ='दह भस्मीकरणे' इति धातो सन्नन्ताण्णिचि लट शत्रादेश 'ददेर्धातोर्घ ' इति घत्वम् । सविप्रा =विप्रै सहिता ( तत्पु० ) । अन्त्याहुतिम्=अन्ते भवा अन्त्या 'दिगादिभ्यो यत्' इति यत् 'अथाऽस्त्रियाम् । अन्तो जघन्य चरममन्त्यपाश्चात्यपश्चिमा ।' इत्यमर । अन्त्या चाऽसौ आहुतिरन्त्याहुतिस्ताम् ( क० धा० ) । हावयितु='हु दानादनयो ' इति धातोर्ण्यन्तात् 'तुमुन्ण्वुलौ क्रियाया क्रियाऽर्थायाम्' इति तुमुन् । अध्वरपात्रजातम् = अध्वरस्य पात्राणि अध्वरपात्राणि ( ष० त० ) । तेषा जातमध्वरपात्रजात, तत् ( ष० त० ) । चिचीषयन्त ='चिञ् चयने' इति धातो सन्नन्ताण्णिचि शतृप्रत्यय । समुदूहु =समुत्पूर्वात् 'वह प्रापणे' इति धातोर्लिट् यजादित्वात्संप्रसारणम्, अन्तर्भावितण्यर्थ ।

भावार्थ—मन्त्रिण प्रबोधनेन त सुस्थ कुर्वन्त राजान दग्धुमेषयन्त ब्राह्मणै सह अन्त्याहुतिमग्नौ प्रक्षेपयितु जुह्वादियज्ञभाजनानि यजमानाङ्गेषु यथाविधि निधातुमेषयन्त नगरस्य नाऽतिदूरे चितामारोपयन् ।

भाषार्थ—मन्त्रियोंने भरतको प्रबोध देकर,राजाका दाह करने के लिए ब्राह्मणों

के साथ अग्निमें अन्त्य आहुति देनेको जुहू आदि यज्ञपात्रोंको यजमानके अङ्गोंमें विधिपूर्वक रखनेकी इच्छासे शहरके निकट ही श्मशानमें राजाको पहुँचाया ॥३३॥

उदक्षिपन्पट्टदुकूलकेतूनवादयन्वेणुमृदङ्गकांस्यम् ।
कम्बूंश्च तारानधमन् समन्तात्तथानयन्कुङ्कुमचन्दनानि ॥ ३४ ॥

अन्वय—पट्टदुकूलकेतून् उदक्षिपन्, वेणुमृदङ्गकांस्यम् अवादयन्, तारान् कम्बूंश्च अधमन्, समन्तात् कुङ्कुमचन्दनानि आनयन्।

प्रयोगप०—( नियुक्तैः पुरुषैः ) पट्टदुकूलकेतव उदक्षिप्यन्त, वेणुमृदङ्गकांस्यमवाद्यत, तारा कम्बवश्च अध्मायन्त, कुङ्कुमचन्दना आनीयन्त।

व्याख्या—पट्टदुकूलकेतून्=कौशेयवस्त्रध्वजान्, उदक्षिपन् = उत्क्षिप्तवन्त ( नियुक्ता पुरुषा इति शेष, एवमन्यत्राऽपि )। वेणुमृदङ्गकांस्य = वंशमुरजकांस्यवाद्यम् ( सुषिरानद्धघनादिवाद्यमित्यर्थ ), अवादयन्=वादितवन्त, तारान्=उच्चैस्तरध्वनीन्, कम्बून् = शङ्खान्, अधमन्=अपूरयन्, समन्तात्=सर्वत, कुङ्कुमचन्दनानि=केसरमलयजान्, आनयन्=आनीतवन्त ( अकिरन्नित्यर्थ )।

व्युत्पत्ति—पट्टदुकूलकेतून्=पट्टाना दुकूलानि पट्टदुकूलानि ( ष० त० ), तेषा केतव पट्टदुकूलकेतवस्तान् ( ष० त० )। वेणुमृदङ्गकांस्य=कंसो नाम धातुर्लोहविशेष, कंसाय हित कंसीय 'तस्मै हितम्' इति छप्रत्यय 'आयनेयीयिय फढखछघा प्रत्ययादीनाम्' इतीय। कंसीयस्य विकार कांस्य, 'कंसीयपरशव्ययोर्यञञौ लुक्च' इति छस्य लुक् यञ्प्रत्ययश्च। वेणवश्च मृदङ्गाश्च कांस्यानि च वेणुमृदङ्गकांस्य, तत् 'जातिरप्राणिनाम्' इति समाहारद्वन्द्व, न तुर्याऽङ्गत्वान्मार्दङ्गिकपाणविकादिवन्मृदङ्गादितूर्याणा तूर्याऽङ्गताऽभावात्। अवादयन्=ण्यन्तात् वदेर्लङ्। अधमन्='ध्मा शब्दाऽग्निसंयोगयो' इति ध्मा तोर्लङ्। 'पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदा पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदा' इति धमादेश। कुङ्कुमचन्दनानि= कुङ्कुमाश्च चन्दनानि च कुङ्कुमचन्दनानि, तानि ( द्वन्द्व )। 'अथ कुङ्कुमम्। काश्मीरजन्माऽग्निशिख वर बाल्हीकपीतनम्।' इत्यमर। आनयन्=आङ्पूर्वान्नीधातोर्लङ्।

भावाऽर्थ—अधिकृता जना कौशेयवस्त्रध्वजान् उच्छ्रितवन्त, सुषिरादिवाद्यानि वादितवन्त, शङ्खवादनमकुर्वन्, एव सर्वत्र केसरमलयजानकिरन्।

भाषाऽर्थ—अधिकृत पुरुषोंने रेशमी वस्त्रके ध्वजोंको फहराया। वंशी, पखावज और कांस्य आदि वाद्योंको तथा ऊँचे स्वरवाले शङ्खोंको भी बजाया और चारों तरफ से केसर और चन्दन आदि सुगन्धि पदार्थोंको छिड़का ॥ ३४ ॥

श्रोत्राक्षिनासावदने सरुक्म कृत्वाऽजिने प्राक्शिरसं निधाय।
संचित्य पात्राणि यथाविधानमृत्विग्जुहाव ज्वलितं चिताग्निम् ॥३५॥

अन्वय—ऋत्विक् अजिने प्राक्शिरस निधाय श्रोत्राक्षिनासावदन सरुक्म कृत्वा पात्राणि यथाविधान सचित्य ज्वलित चिताऽग्नि जुहाव।

प्रयोगप०—ऋत्विजा ज्वलितश्चिताऽग्निर्जुहुवे।

व्याख्या—ऋत्विक्=सस्कर्ता ( भरत इत्यर्थ ), अजिने=चर्मणि ( कृष्ण-सारमृगचर्मणीत्यर्थ ) प्राक्शिरस=पूर्वशीर्ष ( शवमिति शेष ), निधाय=विधाय, श्रोत्राक्षिनासावदन=कर्णनेत्रनासिकामुख ( प्राणायतनमित्यर्थ ) सरुक्म=सुवर्ण-सहित, कृत्वा=विधाय, पात्राणि=भाजनानि ( स्रुगादीनीत्यर्थ ), यथाविधान=विधिपूर्वक, सचित्य=विन्यस्य ( तत्तदवयवेषु निधायेत्यर्थ ), ज्वलित=प्रदीप्त, चिताऽग्नि=चितिवह्नि, जुहाव=जुहोति स्म ( आहुतिभिरतार्प्सीदित्यर्थ )।

व्युत्पत्ति—ऋत्विक्=ऋतुमृतौ ऋतुप्रयुक्तो वा यजतीति ऋत्विक् 'ऋत्विग्द-धृगि' त्यादिना क्विन्नन्तो निपात। अजिने='अजिन चर्म कृत्ति स्त्री' इत्यमर। प्राक्शिरस=प्राक् शिरो यस्य स प्राक्शिरास्तम् ( बहु० )। श्रोत्राक्षिनासावदन=श्रोत्रे च अक्षिणी च नासा च वदन च श्रोत्राऽक्षिनासावदन, तत् 'द्वन्द्वश्च प्राणितूर्यसेना ङ्गानाम्' इति समाहारद्वन्द्व। सरुक्म=रुक्मेण सहित सरुक्म, तत् ( बहु० )। यथाविधान=विधानमनतिक्रम्य यथाविधान, पदार्थानतिवृत्तौ 'अव्यय विभक्ती' त्यादिना अव्ययीभावसमास। चिताग्नि=चिताया अग्निश्चिताऽग्निस्तम् ( ष० त० ), जुहाव=हुधातोर्लिट्।

भावाऽर्थ—भरत कृष्णाऽजिने प्राक्शिरस शव निधाय कर्णनेत्रनासिकामुखे सुवर्णखण्ड विन्यस्य स्रुगादियज्ञपात्राणि विधिपूर्वक तत्तदवयवेषु निधाय प्रदीप्त चिताग्निमाहुतिभिरतार्प्सीत।

भाषाऽर्थ—भरतजीने कृष्णसार मृगके चर्म पर शवको पूर्वाऽभिमुख रखकर कान, नेत्र नाक और मुखके छेदमें सोनेका टुकड़ा रखकर स्रुक् आदि यज्ञपात्रोंको शरीरके उन उन अवयवोंमें रखकर प्रज्वलित चिताग्निको आहुतियोंसे तृप्त किया॥

कृतेषु पिण्डोदकसञ्चयेषु हित्वाऽभिषेक प्रकृत प्रजाभि ।
प्रत्यानिनीषुर्विनयेन राम प्रायादरण्य भरत सपौर ॥ २६ ॥

अन्वय—भरत पिण्डोदकसञ्चयेषु कृतेषु प्रजाभि प्रकृतम् अभिषेक हित्वा राम प्रत्यानिनीषु सपौर अरण्य विनयेन प्रायात्॥ २६॥

प्रयोगप०—भरतेन प्रत्यानिनीषुणा सपौरेण अरण्य प्रायायत।

व्याख्या—भरत=कैकेयीपुत्र, पिण्डोदकसञ्चयेषु=पिण्डजलदानाऽस्थिसञ्चयेषु, कृतेषु=अनुष्ठितेषु ( श्राद्धसमाप्तावित्यर्थ ), प्रजाभि=अमात्यादिभि, प्रकृत=

प्रस्तुतम् , अभिषेक=राज्याऽभिषेक हित्वा=त्यक्त्वा, राम=रामचन्द्र, प्रत्यानिनीषु=प्रत्यानेतुमिच्छु , सपौर =पौरसहित , अरण्य=वन, विनयेन=नम्रतया ( अन्यथा रामस्याऽविश्वासादिति भाव ), प्रायात्=गतवान् ।

व्युत्पत्ति —पिण्डोदकसञ्चयेषु=पिण्डाश्च उदक च सञ्चयश्च पिण्डोदकसञ्चया स्तेषु (द्वन्द्व )। प्रजाभि =प्रजायन्ते इति प्रजास्ताभि 'उपसर्गे च सञ्ज्ञायाम्' इति डप्रत्यय ,'प्रजा स्यात्सन्ततौ जने ।' इत्यमर । प्रकृतम्='आदिकर्मणि क्त कर्तरि च' इति चकारात् कर्मणि क्त । हित्वा='ओहाक त्यागे' इति धातो क्त्वाप्रत्यय , 'जहातेश्च क्त्वि' इति हिरादेश । प्रत्यानिनीषु =प्रत्याङ्पूर्वान्नयते सन्नन्तात् उप्रत्यय । सपौर =पौरै सहित ( बहु० )। प्रायात्=प्रपूर्वाद्यातेर्लङ् ।

भावार्थ —भरत श्राद्धसमाप्तौ अमात्यादिभि प्रक्रान्त राज्याऽभिषेक त्यक्त्वा राम प्रत्यानेतुमिच्छु पौरै सहितो विनयेन अरण्यमगच्छत् ।

भाषार्थ —भरतजीने श्राद्धकी समाप्ति होनेपर मन्त्री आदियोंसे प्रस्तुत राज्याऽभिषेकको छोड़कर रामको लौटानेकी इच्छासे नागरिकोंके साथ विनयसे जङ्गलकी ओर प्रस्थान किया ॥ ३६ ॥

शीघ्रायमाणै ककुभोऽश्नुवानैर्जनैरपन्थानमुपेत्य सृप्तै ।
शोकादभूषैरपि भूश्चकासाञ्चकार नागेन्द्ररथाऽश्वमिश्रै ॥ ३७ ॥

अन्वय —शीघ्रायमाणै ककुभ अश्नुवानै अपन्थानम् उपेत्य सृप्तै शोकात् अभूषै अपि नागेन्द्ररथाऽश्वमिश्रै जनै भू चकासाञ्चकार ।

प्रयोगप०—भुवा चकासाञ्चक्रे ।

व्याख्या—शीघ्रायमाणै =शीघ्र गच्छद्भि , ककुभ =दिश , अश्नुवानै =व्याप्नुवद्भि , अपन्थानम्=असार्गम् ( अपर्याप्तत्वादिति शेष ), उपेत्य=प्राप्य, सृप्तै =गतै ( प्रसर्पद्भिरित्यर्थ ), शोकात्=सन्यो , अभूषै अपि=भूषणरहितै अपि, नागेन्द्ररथाऽश्वमिश्रै =हस्तिस्यन्दनहययुक्तै जनै =मनुष्यै ( हेतुभि ), भू =भूमि , चकासाञ्चकार=विरेजे ( स्वयमभूषितत्वेऽपि भुवनभूषणायमानहस्त्यादियोगात्तैरभूष्येव भूरिति भाव )।

व्युत्पत्ति —शीघ्रायमाणै =अशीघ्रा शीघ्रा भवन्त शीघ्रायमाणास्तै 'भृशादिभ्यो भुव्यच्वे ' इति क्यङन्ताल्लट शानजादेश । ककुभ ='दिशस्तु ककुभ काष्ठा आशाश्च हरितश्च ता ।' इत्यमर , अश्नुवानै =अश्नुवते इति अश्नुवानास्तै , 'अशू व्याप्तौ सघाते च' इति धातो शानचि उवङादेश । अपन्थान=न पन्था अपन्थास्तम् , 'ऋक्पूरब्धू पथामानक्षे' इति समासाऽन्ते अप्रत्यये प्राप्ते 'नञस्तत्पुरुषात्' इति प्रतिषेध , तत 'पथो विभाषा' इति विकल्पत्वात्पाक्षिक समासाऽन्ताऽभाव ।

अत एव 'अपन्थास्त्वपथं तुल्ये' इत्यमरः । सृत—' गतौ' इति धातोः कर्तरि क्तः । शोकात्='विभाषा गुणेऽस्त्रियाम्' इति हेतौ पञ्चमी । अभूषैः=भूषणं भूषा, 'भूष अलङ्कारे' इति धातोः 'गुरोश्च हलः' इत्यः । अविद्यमाना भूषा येषां ते अभूषास्तैः ( नञ्बहु० ) । नागेन्द्ररथाऽश्वमिश्रैः =नागेषु इन्द्राः नागेन्द्राः ( स० त० ), 'मतङ्गजो गजो नागः कुञ्जरो वारणः करी ।' इत्यमरः । नागेन्द्राश्च रथाश्च अश्वाश्च नागेन्द्ररथाऽश्वं 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' इति सेनाऽङ्गत्वात् समाहारद्वन्द्वः । 'बहुष्वनियमः' इति वचनात् हस्तिनां प्राधान्याच्च बह्वचोऽपि नागेन्द्रस्य पूर्वनिपातः । नागेन्द्ररथाऽश्वेन मिश्रा नागेन्द्ररथाऽश्वमिश्रास्तैः 'पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः' इति तृतीयातत्पुरुषः । जनैः ='हेतौ' इति तृतीया । चकाशाञ्चकार='चकासृ दीप्तौ' इति धातोः 'कास् प्रत्ययादाममन्त्रे लिटि' इति सूत्रे 'कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थम्' इति लिटि आम्प्रत्ययः । कर्तृ क्रियाफलयोगेऽपि नाऽऽत्मनेपदम्, 'आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य' इत्यत्र पूर्वग्रहणाऽनुवृत्तेः ।

भावार्थः—त्वरायुक्तैः दिग्व्यापकैः सङ्कुलत्वात् अमार्गेणाऽपि चलितैः शोकाद्धेतोर्भूषणरहितैः हस्तिरथहययुक्तैः शुशुभे ।

भाषाऽर्थ —शीघ्र जानेवाले, दिशाओंको व्याप्त करनेवाले, भीड़ अधिक होनेसे अमार्गसे भी जानेवाले, शोकके कारण भूषणरहित और हाथी, रथ और घोड़ोंसे युक्त ऐसे मनुष्योंसे पृथ्वी शोभित हुई ॥ ३७ ॥

उच्चिच्यिरे पुष्पफलं वनानि सस्नुः पितॄन्पिप्रियुरापगासु ।
आरेदुरित्वा पुलिनान्यशङ्कं छायां समाश्रित्य विशश्रमुश्च ॥ ३८ ॥

अन्वयः—( ते ) वनानि पुष्पफलम् उच्चिच्यिरे, आपगासु सस्नुः, पितॄन् पिप्रियुः, पुलिनानि इत्वा अशङ्कम् आरेदुः, छायां समाश्रित्य विशश्रमुश्च ।

प्रयोगप०—( तैः ) वनानि पुष्पफलम् उच्चिच्यिरे, आपगासु सस्ने, पितरः पिप्रियिरे, आरेदे, विशश्रमे च ।

व्याख्या—( ते=जनाः ) वनानि=अरण्यानि ( अरण्येभ्य इत्यर्थः ) पुष्पफलं=कुसुमफलम्, उच्चिच्यिरे = अपचिचियिरे ( सगृहीतवन्त इत्यर्थः ) आपगासु= नदीषु, सस्नुः =स्नातवन्तः । पितॄन्=अग्निष्वात्तादीन् , पिप्रियुः =प्रीणयामासुः (निवापाऽञ्जलिभिरिति शेषः ) । पुलिनानि = सैकतानि, इत्वा=गत्वा, अशङ्कं = निःशङ्कम् ( विस्रब्धमित्यर्थः ), आरेदुः =परिभाषितवन्तः । छायाम्=अनातपं, समाश्रित्य= अधिष्ठाय, विशश्रमुश्च=विश्रान्ताश्च ।

व्युत्पत्तिः—वनानि = 'अकथितं च' इति कर्मसञ्ज्ञा । पुष्पफलं=पुष्पाणि च फलानि च पुष्पफलं, तत् , 'जातिरप्राणिनाम्' इति समाहारद्वन्द्वः । उच्चिच्यिरे=

तत्पूर्वात् 'चिञ् चयने' इति धातो कर्तरि लिटि ञित्वात् आत्मनेपदम् । 'विभाषा चे.' इति कुत्वम् , 'एरनेकाचोऽसंयोगपूर्वस्य' इति यण्, 'दुह्याचपच्दण्डरुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम्' इत्यनुसारेण 'दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ । ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरितं कविना ॥' इति द्विकर्मकत्वम् । आपगासु = अपां समूह आप, 'तस्य समूह ' इत्यण् । आपेन गच्छन्तीति आपगा ( नद्य ), तासु 'अन्यत्राऽपि दृश्यत इति वक्तव्यम्' इति डप्रत्यय, 'स्रोतस्वती द्वीपवती स्रवन्ती निम्नगाऽऽपगा ।' इत्यमर । सस्नु ='ष्णा शौचे' इति धातोर्लिट् , झेरुस् , 'उस्यपदान्तात्' इति पररूपत्वम् । पिप्रियु = प्रीणाते 'प्रीञ् तर्पणे च' इति धातो लिटयसि इयङादेश । इत्वा = इण क्त्वाप्रत्यय । अशङ्कम् = अविद्यमाना शङ्का यस्मिन् ( कर्मणि ) तद्यथा तथा ( नञ्बहु०, क्रि० वि० ) । आरेटु = आङ्पूर्वात् 'रट परिभाषणे' इति धातोर्लिट , 'अत एके'—त्यादिना एत्वाभ्यासलोपौ । 'आरेमु' रिति मल्लिनाथसमत पाठान्तरं तत्र आङ्पूर्वात् 'रमु क्रीडायाम्' इति धातो 'व्याङ्परिभ्यो रम' इति परस्मैपदम् 'अत एके' त्यादिना एत्वाऽभ्यासलोपौ । आक्रीडन्नित्यर्थ । विशश्रमु = 'श्रमु तपसि खेदे च' इति धातोर्लिट् ।

भावाऽर्थ —ते जना वनेभ्य पुष्पफल सङ्गृहीतवन्त नदीषु स्नान चक्रु, श्राद्धतर्पणादिभि पितॄन् तर्पितवन्त, सैकतानि गत्वा विस्रब्ध भाषितवन्त एव छायामधिष्ठाय विश्राम च कृतवन्त ।

भावाऽथ —उन लोगोंने वनोंसे फूलों और फलोंको तोडा, नदियोंमें स्नान किया, श्राद्ध तर्पणादिसे पितरोंको तृप्त किया, तटोंमें जाकर नि शङ्क होकर बातचीत की और छायामें बैठकर विश्राम भी किया ॥ ३८ ॥

सम्प्राप्य तीर तमसाऽऽपगाया गङ्गाम्बुसम्पर्कविशुद्धिभाज ।
विगाहितु यामुनमम्बु पुण्य ययुर्निरुद्धश्रमवृत्तयस्ते ॥ ३९ ॥

अन्वय —ते गङ्गाऽम्बुसम्पर्कविशुद्धिभाज तमसाऽऽपगाया तीर सम्प्राप्य निरुद्धश्रमवृत्तय पुण्य यामुनम् अम्बु विगाहितु ययु ।

प्रयोगप०—तैर्गङ्गाम्बुसम्पर्कविशुद्धिभाग्भि निरुद्धश्रमवृत्तिभि यये ।

व्याख्या—ते = जना , गङ्गाम्बुसम्पर्कविशुद्धिभाज = भागीरथीजलसंसर्गोत्पविन्नाया , तमसाऽऽपगाया = तमसानद्या ( तरसा इति पाठान्तरे तरसा = वेगेन आपगाया = तमसाया इत्यर्थ ), तीर = तट, सम्प्राप्य = गत्वा, निरुद्धश्रमवृत्तय = निरस्तपरिश्रमवर्तना (सन्त ), पुण्य = पवित्र, यामुन = यमुनासम्बन्धि ( यमुनाया इत्यर्थ ) अम्बु = जल, विगाहितु = विगाहन कर्तुं, ययु = जग्मु ।

व्युत्पत्ति —गङ्गाऽम्बुसम्पर्कविशुद्धिभाज = गच्छति समुद्रमिति गङ्गा, गमेरो-

णादिको गन् प्रत्यय । गङ्गाया अम्बु गङ्गाऽम्बु, ( ष० त० ) 'अम्भोऽर्णस्तोयपानीय नीरक्षीराऽम्बुशम्बरम्' इत्यमर । गङ्गाम्बुना सम्पर्क गङ्गाम्बुसम्पर्क ( तृ० त० ) । विशुद्धि भजत इति विशुद्धिभाक्, 'भजो ण्वि' इति ण्विप्रत्यय । गङ्गाऽम्बुसम्पर्केण विशुद्धिभाक् गङ्गाऽम्बुसम्पर्कविशुद्धिभाक्, तस्य (तृ० त०) । तमसाऽऽपगाया = तमसा चाऽसौ आपगा, तमसाऽऽपगा, तस्या ( क० धा० ) । निरुद्धश्रमवृत्तय = श्रमस्य वृत्ति श्रमवृत्ति ( ष० त० ) । निरुद्धा श्रमवृत्तिर्येषां ते (बहु०) । पुण्य = पुनातीति पुण्य, तत्, औणादिको यत्प्रत्ययो णुक् ह्रस्वश्च । यामुन = यमुनाया इद यामुन, तत्, 'तस्येदम्' इत्यण् । विगाहितु = विपूर्वात् 'गाहू विलोडने' इति धातोस्तुमुन् ।

भावार्थ —ते गङ्गाजलसंसर्गाऽतिपवित्राया तमसानद्यास्तटमासाद्य अपगत-परिश्रमा सन्त पुण्य यमुनाजल विगाहितु चलिता ।

भाषार्थ —वे लोग गङ्गाजलके संसर्गसे अत्यन्त पवित्र तमसा नदीके तटमें पहुँचकर सुस्ताकर यमुनाके पवित्र जलमें स्नान करनेके लिए चले ॥ ३९ ॥

ईयुर्भरद्वाजमुनेर्निकेत यस्मिन् विशश्राम समेत्य राम ।
च्युताऽशनाया फलवद्विभूत्या व्यास्यन्नुदन्या शिशिरै पयोभि ॥४०॥

अन्वय —( ते ) भरद्वाजमुने निकेतम् ईयु, यस्मिन् राम समेत्य विशश्राम, (अथ ते) फलवद्विभूत्या च्युताऽशनाया (सन्त )शिशिरै पयोभि उदन्या व्यास्यन् ।

प्रयोगान्तर०—( तै ) निकेत ईये, यस्मिन् रामेण विशश्रमे, ( अथ तै ) च्युताऽशनायै ( सद्भि ) उदन्या व्यास्यत ।

व्याख्या—( ते = जना ) भरद्वाजमुने = भरद्वाजऋषे, निकेतम् = आश्रमम्, ईयु = जग्मु, यस्मिन् = भरद्वाजाश्रमे, राम = रामचन्द्र, समेत्य = आगत्य, विशश्राम = विश्रान्त ( अतस्तेऽपि तत्र सोत्कण्ठास्तस्थुरिति भाव ), (अथ = अनन्तर, ते = जना ) फलवद्विभूत्या = फलवद्वृक्षसम्पदा, च्युताऽशनाया = अपगतबुभुक्षा (सन्त ), शिशिरै = शीतलै, पयोभि = जलै उदन्या = पिपासा, व्यास्यन् = न्यवारयन् ।

व्युत्पत्ति —भरद्वाजमुने = भरद्वाजश्चाऽसौ मुनि भरद्वाजमुनि तस्य ( क० धा० ) । ईयु = इण्धातोर्लिट्, 'इणो यण्' इति यणादेश, 'दीर्घ इण किति' इत्य भ्यासदीर्घ । फलवद्विभूत्या = फलानि सन्ति येषु ते फलवन्त, वृक्षा इत्यर्थ, (मतु प्प्रत्यय ) तेषां विभूति फलवद्विभूतिस्तया (ष० त०) । च्युताऽशनाया = अशनस्य (भक्षणस्य) इच्छा अशनाया, 'सुप आत्मन क्यच्' इति क्यच् 'अशनायोदन्यध नाया बुभुक्षापिपासागर्धेषु' इतीत्वाऽभावनिपात 'अप्रत्ययात्' इत्यप्रत्यय । 'अश नाया बुभुक्षा क्षुत्' इत्यमर । च्युता अशनाया येषा ते ( बहु० ) । उदन्याम् = उद-कस्येच्छा उदन्या, ताम्, अशनायावत्प्रक्रिया ज्ञेया 'उदन्या तु पिपासा तृट् तर्ष'

इत्यमर । व्यास्यन्=विपूर्वात् अस्यते ('असु क्षेपणे' इति धातो ) लङ् आट् वृद्धिश्च ('च्युताशनाय ' इति पाठान्तरे रामविशेषणम्। तत्र व्यस्यन् इत्यस्य व्यास्यन्नित्यर्थं )

भावार्थ —यस्मिन् भरद्वाजमुनेराश्रमे राम आगत्य विश्रान्तस्तत्र ते जग्मु, फलै क्षुन्निवारण तथा च शीतलजलै पिपासाऽपनयन च चक्रु ।

भाषार्थ —भरद्वाज मुनिके जिस आश्रममें आकर रामचन्द्रजीने विश्राम किया था, उन लोगोंने भी वहाँ पर जाकर फलोंसे भूख तथा ठण्डे जलसे प्यास मिटायी ॥ ४० ॥

वाचयमान् स्थण्डिलशायिनश्च युयुक्षमाणाननिश मुमुक्षून् ।
अध्यापयन्त विनयात्प्रणेमु पद्गा भरद्वाजमुनि सशिष्यम् ॥ ४१ ॥

अन्वय —वाचयमान् स्थण्डिलशायिन अनिश युयुक्षमाणान् मुमुक्षून् अध्यापयन्त सशिष्य भरद्वाजमुनि पद्गा ( सन्त ) विनयात् प्रणेमु ।

प्रयोगप०—अध्यापयन् सशिष्यो भरद्वाजमुनि पद्गै प्रणेमे ।

व्याख्या—वाचयमान् = मौनव्रतिन, स्थण्डिलशायिन = भूशयनव्रतिन, अनिश = निरन्तर, युयुक्षमाणान् = योक्तुमिच्छत (योगाऽभ्यासनिष्ठानित्यर्थं ), मुमुक्षून् = मोक्षेच्छून् ( विरक्तानित्यर्थ ) अध्यापयन्त = पाठयन्त (ब्रह्मविद्यां ग्राहयन्त मित्यर्थं ), सशिष्य = छात्रसहित, भरद्वाजमुनि = भरद्वाजऋर्षि, पद्गा = पादचारिण सन्त, (ते) विनयात् = नम्रताया, प्रणेमु = प्रणता ( प्रणाम कृतवन्त इत्यर्थं ) ।

व्युत्पत्ति —वाचयमान् = वाच यच्छन्तीति वाचयमास्तान् 'वाचि यमो व्रते' इति खच् 'वाचयमपुरन्दरौ च' इत्यमन्तत्वनिपात । स्थण्डिलशायिन =स्थण्डिले शेरते इति स्थण्डिलशायिन, तान्, 'व्रते' इति णिनिप्रत्यय, 'य स्थण्डिले व्रत वशाच्छेते स्थण्डिलशाय्यसौ । स्थाण्डिलश्च' इत्यमर । युयुक्षमाणान् = योक्तुमिच्छन्तो युयुक्षमाणास्तान्, 'युज समाधौ' इति सन्नन्ताल्लट शानजादेश । मुमुक्षून्= मोक्तुमिच्छवो मुमुक्षवस्तान् 'मुच्लृ मोक्षणे' इति सन्नन्तात् उप्रत्यय । 'गति बुद्धी' त्यादिना कर्मत्वम् । अध्यापयन्तम् = अध्यापयतीति अध्यापयन्, तम्, 'क्रीङ्जीना णौ' इत्यात्वे पुगागम । सशिष्य=शिष्यै सहित सशिष्यस्तम् (बहु०)। भरद्वाजमुनि = भरद्वाजश्चाऽसौ मुनिर्भरद्वाजमुनिस्तम् ( क० धा० )। पद्गा = पादाभ्या गच्छन्तीति पद्गा, 'अन्यत्राऽपि दृश्यत इति वक्तव्यम्' इति गमेर्डप्रत्यय, 'हिमकाविहतिषु च' इति चकारस्य अनुक्तसमुच्चयाऽर्थत्वात् पादशब्दस्य पदादेश । प्रणेमु = प्रपूर्वात् 'णम प्रह्वत्वे शब्दे' इति धातोर्लिट्, 'अत' इत्यादिना एत्वाऽभ्यासलोपौ ।

भावार्थ —मौनव्रतिन भूशयनव्रतिन निरन्तर योक्तमिच्छतो विरक्तान्

पाठयन्त छात्रसहित भरद्वाजमुनिं ते जना पादचारिण सन्तो नम्रतापूर्वक प्रणता ।

भावार्थ—मौनव्रत तथा जमीनपर सोनेका व्रत लेनेवाले निरन्तर योगाऽभ्यास में तत्पर, मोक्ष की इच्छा रखनेवाले, विरक्तोंको ब्रह्मविद्या पढ़ाने वाले, शिष्यसहित भरद्वाज मुनिको उन लोगोंने पादचारी होकर नम्रतापूर्वक प्रणाम किया ॥ ४१ ॥

आतिथ्यमेभ्य परिनिर्विवित्सो कल्पद्रुमा योगबलेन फेलु ।
धामप्रथिम्नो म्रदिमान्वितानि वासासि च द्राघिमवन्त्युदूहु ॥ ४२ ॥

अन्वय—एभ्य आतिथ्य परिनिर्विवित्सो धामप्रथिम्न योगबलेन कल्पद्रुम फेलु म्रदिमान्वितानि द्राघिमवन्ति वासासि च उदूहु ।

प्रयोगप०—कल्पद्रुमै फेले, वासासि च उदूहिरे ।

व्याख्या—एभ्य =भरतादिभ्य , आतिथ्यम्=अतिथिसत्कार, परिनिर्विवित्सो = परिनिर्वप्तुमिच्छो ('परिनिर्विवत्सो' इति मल्लिनाथसम्मत पाठ, उभयत्राऽपि दातुमिच्छोरित्यर्थ ), धामप्रथिम्न =तजोराशे (मुनेरित्यर्थ ), योगबलेन = योगमहिम्ना, कल्पद्रुमा =कल्पवृक्षा (सङ्कल्पोपनता इत्यभिप्राय ), फेलु = फलिता (भक्ष्यान्नपानादिकमिति शेष )। म्रदिमाऽन्वितानि=मृदुत्वयुक्तानि, द्राघिमवन्ति=दीर्घतायुक्तानि, वासासि च = वस्त्राणि च उदूहु =उद्वहन्ति स्म ।

व्युत्पत्ति—एभ्य ='कर्मणा यमभिप्रैति स सम्प्रदानम्' इति सम्प्रदानसज्ञा, 'चतुर्थी सम्प्रदाने' इति चतुर्थी । आतिथ्यम्=अतिथये इदम् आतिथ्य, तत् 'अतिथेर्ञ्य' इति ञ्य । परिनिर्विवप्सो, उप्रत्यय । धामप्रथिम्न =पृथोर्भाव प्रथिमा, 'पृथ्वादिभ्य इमनिज्वा' इति इमनिच् 'र ऋतो हलादेर्लघो' इति ऋकारस्य र 'टे' इति टिलोप । धाम्ना (तेजसा) प्रथिमा (पृथुत्वम ) यस्य स धामप्रथिमा, तस्य (बहु०)। योगबलेन=योगस्य बल योगबल तेन (ष० त०), 'योगश्चित्तवृत्तिनिरोध' इति पतञ्जलि । कल्पद्रुमा =कल्पाना (सङ्कल्पितार्थानाम् ) द्रुमा (ष० त० )। फेलु ='फल निष्पत्तौ' इति धातोर्लिट्, 'तॄफलभजत्रपश्च' इ येत्वाऽभ्यासलोपौ । म्रदिमान्वितानि =मृदोर्भावो म्रदिमा, प्रथिमवत्प्रक्रिया ज्ञेया। म्रदिम्ना अन्वितानि म्रदिमाऽन्वितानि, तानि (तृ० त०)। द्राघिमवन्ति=दीर्घस्य भावो द्राघिमा, पूर्वसूत्रेण इमनिच्प्रत्यय, 'प्रियस्थिरे' त्यादिना द्राघादेश । द्राघिमा अस्ति येषा तानि द्राघिमवन्ति, तानि (मतुप्प्रत्यय )। वासासि ='वस्त्रमाच्छादन वासश्चेल वसनमशुकम् ।' इत्यमर । उदूहु =यजादित्वात् सम्प्रसारणम् ।

भावार्थ—एषामतिथीनां सत्कारार्थं तेजोराशेर्मुनेर्योगबलेन ।

कल्पवृक्षा भक्ष्यान्नपानादिक फलितास्तथा च कोमलानि दीर्घाणि वस्त्राणि च घ्रतवन्त ।

भावार्थ —इन अतिथियोंके सत्कारकी इच्छा करनेवाले तेजोराशि भरद्वाज मुनिके योग-बलसे कल्पवृक्षोंने फल आदि भक्ष्य पदार्थोको पैदाकर कोमल और दीर्घ वस्त्रोंको प्रकट किया ॥ ४२ ॥

आज्ञा प्रतीपुर्विनयादुपास्थुर्जगु सराग ननृतु सहावम् ।
सविभ्रम नेमुरुदारमूचुस्तिलोत्तमाऽऽद्या वनिताश्च तस्मिन् ॥ ४३ ॥

अन्वय —तस्मिन् तिलोत्तमाद्या वनिताश्च आज्ञा प्रतीपु, विनयात् उपास्थु, सराग जगु, सहाव ननृतु, सविभ्रम नेमु, उदारम् ऊचुश्च ।

प्रयोगप०—तिलोत्तमाऽऽद्याभिर्वनिताभिराज्ञा प्रतीपे, उपास्थायि, जगे, ननृते, नेमे, ऊचे च ।

व्याख्या—तस्मिन् = तत्काले, तिलोत्तमाऽऽद्या = तिलोत्तमाप्रभृतय, वनिता =नार्य (अप्सरस इत्यर्थ ), आज्ञा = भरताऽनुगाऽऽदेश, प्रतीपु = गृहीतवत्य ( चेटीभवाय इत्यर्थं )। विनयात् नम्रतया, उपास्थु = उपस्थिता ( पादप्रक्षालनादिना असेवन्त इत्यर्थ )। सराग=मालकोशिकादिरागबद्ध, जगु = अगायन् । सहाव = श्रृङ्गारचेष्टायुत, ननृतु = अनृत्यन् । सविभ्रम = विलाससहित, नेमु = प्रणेमु । उदार = गम्भीरम, ऊचुश्च = व्याजहुश्च ।

व्युत्पत्ति —तिलोत्तमाद्या = आदौ भवा आद्या, 'दिगादिभ्यो यत्' इति यत् । तिलोत्तमा आद्या यासा ता ( बहु० )। वनिता = 'प्रतीपदर्शिनी वामा वनिता महिला तथा ।' इत्यमर । प्रतीपु = प्रतिपूर्वादिपेर्लिटि द्विर्भावादिकार्यं सवर्णदीर्घादिकार्यम् । उपास्थु =उपपूर्वात्तिष्ठतेर्लुङि 'गातिस्थे' त्यादिना सिचो लुक् । 'आत ' इति झेर्जुस् 'उस्यपदान्तात्' इति पररूपत्वम् । सराग = रागै सहित यथा तथा ( बहु०, क्रि० )। जगु = 'गै शब्दे' इति धातोर्लिटि द्विर्भावे रूपम् । सहाव=हावेन सहित यथा तथा (बहु० क्रि०)। 'ननृतु ='नृती गात्रविक्षेपे' इति धातोर्लिटि 'उरत्' इत्यभ्यासऋकारस्याऽत्वम्, 'असयोगाल्लिट् कित्' इति लिट कित्त्वान्न गुण । सविभ्रम = विभ्रमेण सहित यथा तथा (बहु० क्रि०) नेमु = नमेर्लिटि 'अत' इत्यादिना एत्वाऽभ्यासलोपौ । उदार = क्रियाविशेषणम् । ऊचु = ब्रूञ्धातोर्लिट्, 'ब्रुवो वचि ' इति वच्यादेशे सम्प्रसारणे द्विर्भावे सवर्णदीर्घ ।

भावार्थ —तस्मिन् काले तिलोत्तमाद्योऽप्सरसो भरताऽनुगाऽऽदेश स्वीचक्रु, विनयात् असेवन्त, सराग गीतवत्य, श्रृङ्गारचेष्टायुक्त नृत्यमकुर्वन्, सविलास प्रणाम कृतवत्य, गम्भीरतापूर्वक व्याजहुश्च ।

भाषाऽर्थ —उस अवसरपर तिलोत्तमा आदि अप्सराओंने भरतके सहचरोंकी

आज्ञा मानी, नम्रतासे सेवा की, राग के साथ गाना गाया, शृङ्गारचेष्टापूर्वक नृत्य किया, विलासके साथ नमस्कार किया और गम्भीरताके साथ बातचीत भी की॥४३॥

वस्त्राऽन्नपानं शयनं च नाना कृत्वाऽवकाशे रुचिरं प्रक्लृप्तम् ।
तान्प्रीतिमानाह मुनिस्ततः स्म 'निबद्ध्वमाद्ध्वं पिबताऽत्त शेध्वम्' ॥४४॥

अन्वय—ततः मुनिः वस्त्राऽन्नपानं शयनं च नानाऽवकाशे रुचिरं प्रक्लृप्तं कृत्वा प्रीतिमान् ( सन् ) तान् आह—'( हे जनाः ! अत्र ) निबद्ध्वम् , आद्ध्वं, पिबत, अत्त, शेध्वम् ।

प्रयोगप०—मुनिना प्रीतिमता ( सता ) ते उच्यन्ते स्म—( हे जनाः ! अत्र युष्माभिः ) निवस्यताम् , आस्यतां, पीयताम् , अद्यतां, शय्यताम् ।

व्याख्या—ततः =अनन्तरं, मुनिः =भरद्वाजः, वस्त्राऽन्नपानं=वासोभक्ष्यपेयं शयनं च=शय्यां च, नानाऽवकाशे=अनेकप्रदेशे, रुचिरं=सुन्दरं ( यथा तथा, क्रि० वि० ), प्रक्लृप्तं=सज्जं ( 'रुचिरप्रक्लृप्तम्' इति पाठे इच्छानुसारसम्पादितमित्यर्थः ) कृत्वा=विधाय, प्रीतिमान्=प्रसन्नः ( सन् ), तान्=भरतसहचरान् , आह स्म=उक्तवान् , ( हे जनाः ! अत्र=आश्रमे ) निबद्ध्वम्=वस्त्राणि परिधत्त; आद्ध्वम्=उपविशत, पिबत=पानं कुरुत, अत्त=भक्षयत, शेध्वं=शयनं कुरुत ।

व्युत्पत्तिः—वस्त्राऽन्नपानं=वस्त्राणि च अन्नानि च पानानि च वस्त्राऽन्नपानं तद् 'सर्वो द्वन्द्वो विभाषैकवद्भवति' इति समाहारद्वन्द्वः । शयनं=शय्यतेऽस्मिन्निति शयनं, तद् ( अधिकरणे ल्युट् ), 'जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम्' इति जातावेकवचनम् । रुचिरं='सुन्दरं रुचिरं चारु सुषमं साधु शोभनम् ।' इत्यमरः । प्रक्लृप्तं='कृपो रो लः' इति लत्वम् । प्रीतिमान्=प्रीतिरस्ति यस्य सः ( मतुप् ) ( 'प्रीतवान्' इति मल्लिनाथसम्मतः पाठः, तत्र क्तवतुप्रत्ययः ) । निबद्ध्वं = निपूर्वात् 'वस आच्छादने' इति धातोर्लोटि ध्वमि धातुसकारस्य 'झलां जश् झशि' इति दकारः । आद्ध्वम्='आस उपवेशने' इति धातोः पूर्ववल्लोट् । पिबत='पा पाने' इति धातोर्लोट् , थस्य तादेशः, 'पाघ्राध्मा' त्यादिना पिबादेशश्च । अत्त ='अद भक्षणे' इति धातोर्लोट् , थस्य तादेशः । शेध्वं 'शीङ् स्वप्ने' इति धातोर्लोट् , ध्वमि शपो लुक् 'शीङः सार्वधातुके गुणः' इति गुणः । सर्वत्र 'प्रैषाऽतिसर्गप्राप्तकालेषु कृत्याश्च' इत्यतिसर्गे लोट् , अतिसर्गः =कामाचाराऽनुज्ञा । सर्वत्र विधौ लोडिति व्याख्यातॄणां जयमङ्गलादीनां मतमसत् , रागत एव प्राप्ते ज्योतिष्टोमादिवदपूर्वविधेयाऽभावः । नाऽप्यत्र 'ऋतौ जायामुपेयात्' इतिवन्नियम्यते, तदनिच्छतः मकरणे प्रत्यवायाऽभावात् । नाऽपि स्थानान्तरविहारपरिसङ्ख्यापरत्वमिति पाच्य पञ्चनखपञ्चभक्षणवत् स्थानान्तरविहारे दोषाऽभावात् । दोषत्रयदुष्टत्वाद् स्मदुक्तमेव युक्तमिति महामहोपाध्यायो मल्लिनाथः ।

कल्पवृक्षा भक्ष्यान्नपानादिकं फलितास्तथा च कोमलानि दीर्घाणि वस्त्राणि च प्रतवन्त ।

भावार्थ —इन अतिथियोंके सत्कारकी इच्छा करनेवाले तेजोराशि भरद्वाज मुनिके योग-बलसे कल्पवृक्षोंने फल आदि भक्ष्य पदार्थोंको पैदाकर कोमल और दीर्घ वस्त्रोंको प्रकट किया ॥ ४२ ॥

आज्ञां प्रतीयुर्विनयादुपास्थुर्जगुः सरागं ननृतुः सहावम् ।
सविभ्रमं नेमुरुदारमूचुस्तिलोत्तमाऽऽद्या वनिताश्च तस्मिन् ॥ ४३ ॥

अन्वय —तस्मिन् तिलोत्तमाद्या वनिताश्च आज्ञां प्रतीयुः, विनयात् उपास्थुः, सरागं जगुः, सहावं ननृतुः, सविभ्रमं नेमुः, उदारम् ऊचुश्च ।

प्रयोगप०—तिलोत्तमाऽऽद्याभिर्वनिताभिराज्ञा प्रतीये, उपास्थायि, जगे, ननृते, नेमे, ऊचे च ।

व्याख्या—तस्मिन् = तत्काले, तिलोत्तमाऽऽद्या = तिलोत्तमाप्रभृतयः, वनिता =नार्यः ( अप्सरस इत्यर्थः ), आज्ञां = भरताऽनुगाऽऽदेशं, प्रतीयुः = गृहीतवत्यः ( चेटीभवाय इत्यर्थः ) । विनयात् नम्रतायाः, उपास्थुः =उपस्थिताः ( पादप्रक्षालनादिना असेवन्त इत्यर्थः ) । सरागं=मालकौशिकादिरागबद्धं, जगुः =अगायन् । सहावं = श्रृङ्गारचेष्टायुतं, ननृतुः =अनृत्यन् । सविभ्रमं = विलाससहितं, नेमुः = प्रणेमुः । उदारं = गम्भीरम्, ऊचुश्च = व्याजहुश्च ।

व्युत्पत्ति —तिलोत्तमाद्या =आदौ भवा आद्या, 'दिगादिभ्यो यत्' इति यत् । तिलोत्तमा आद्या यासां ताः ( बहु० ) । वनिता = 'प्रतीपदर्शिनी वामा वनिता महिला तथा ।' इत्यमरः । प्रतीयुः =प्रतिपूर्वादिणेर्लिटि द्विर्भावादिकार्ये सवर्णदीर्घादिकार्यम् । उपास्थुः =उपपूर्वात्तिष्ठतेर्लुङि 'गातिस्थे'त्यादिना सिचो लुक् । 'आतः' इति झेर्जुस् 'उस्यपदान्तात्' इति पररूपत्वम् । सरागं = रागैः सहितं यथा तथा ( बहु०, क्रि० ) । जगुः = 'गै शब्दे' इति धातोर्लिटि द्विर्भावे रूपम् । सहावं=हावेन सहितं यथा तथा (बहु० क्रि०) । 'ननृतुः ='नृती गात्रविक्षेपे' इति धातोर्लिटि 'उरत्' इत्यभ्यासऋकारस्याऽत्वम्, 'असंयोगाल्लिट् कित्' इति लिटः कित्वान्न गुणः । सविभ्रमं = विभ्रमेण सहितं यथा तथा (बहु० क्रि०) नेमुः = नमेर्लिटि 'अत' इत्यादिना एत्वाऽभ्यासलोपौ । उदारं =क्रियाविशेषणम् । ऊचुः =ब्रूञ्धातोर्लिट्, 'ब्रुवो वचिः' इति वच्यादेशे सम्प्रसारणे द्विर्भावे सवर्णदीर्घः ।

भावार्थ —तस्मिन् काले तिलोत्तमादयोऽप्सरसो भरताऽनुगाऽऽदेशं स्वीचक्रुः, विनयात् असेवन्त, सरागं गीतवत्यः, श्रृङ्गारचेष्टायुक्तं नृत्यमकुर्वन्, सविलासं प्रणामं कृतवत्यः, गम्भीरतापूर्वकं व्याजहुश्च ।

भाषाऽर्थ —उस अवसरपर तिलोत्तमा आदि अप्सराओंने भरतके सहचरोंकी

आज्ञा मानी, नम्रतासे सेवा की, राग के साथ गाना गाया, शृङ्गारचेष्टापूर्वक नृत्य किया, विलासके साथ नमस्कार किया और गम्भीरताके साथ बातचीत भी की॥४३॥

वस्त्राऽन्नपानं शयनं च नाना कृत्वाऽवकाशे रुचिरं प्रक्लृप्तम् ।
तान्प्रीतिमानाह मुनिस्ततः स्म 'निबद्ध्वमाद्ध्वं पिबताऽत्त शेध्वम्' ॥४४॥

अन्वय—ततः मुनिः वस्त्राऽन्नपानं शयनं च नानाऽवकाशे रुचिरं प्रक्लृप्तं कृत्वा प्रीतिमान् ( सन् ) तान् आह—'( हे जनाः ! अत्र ) निबद्ध्वम्, आद्ध्वं, पिबत, अत्त, शेध्वम्।

प्रयोगप०—मुनिना प्रीतिमता ( सता ) ते उच्यन्ते स्म—( हे जनाः ! अत्र युष्माभिः ) निवस्यताम्, आस्यतां, पीयताम्, अद्यतां, शय्यताम्।

व्याख्या—ततः = अनन्तरं, मुनिः = भरद्वाजः, वस्त्राऽन्नपानं = वासोभक्ष्यपेयं शयनं च = शय्यां च, नानाऽवकाशे = अनेकप्रदेशे, रुचिरं = सुन्दरं ( यथा तथा, क्रि० वि० ), प्रक्लृप्तं = सज्जं ( 'रुचिरप्रक्लृप्तम्' इति पाठे इच्छानुसारसम्पादितमित्यर्थः ) कृत्वा = विधाय, प्रीतिमान् = प्रसन्नः ( सन् ), तान् = भरतसहचरान्, आह स्म = उक्तवान्, ( हे जनाः ! अत्र = आश्रमे ) निबद्ध्वम् = वस्त्राणि परिधत्त; आद्ध्वम् = उपविशत, पिबत = पानं कुरुत, अत्त = भक्षयत, शेध्वं = शयनं कुरुत।

व्युत्पत्तिः—वस्त्राऽन्नपानं = वस्त्राणि च अन्नानि च पानानि च वस्त्राऽन्नपानं तद्, 'सर्वो द्वन्द्वो विभाषैकवद्भवति' इति समाहारद्वन्द्वः। शयनं = शय्यतेऽस्मिन्निति शयनं, तद् ( अधिकरणे ल्युट् ), 'जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम्' इति जातावेकवचनम्। रुचिरं = 'सुन्दरं रुचिरं चारु सुषमं साधु शोभनम्।' इत्यमरः। प्रक्लृप्तं = 'कृपो रो लः' इति लत्वम्। प्रीतिमान् = प्रीतिरस्ति यस्य सः ( मतुप् ) ( 'प्रीतवान्' इति मल्लिनाथसम्मतः पाठः, तत्र क्तवतुप्रत्ययः )। निबद्ध्वं = निपूर्वात् 'वस आच्छादने' इति धातोर्लोटि ध्वमि धातुसकारस्य 'झलां जश् झशि' इति दकारः। आद्ध्वम् = 'आस उपवेशने' इति धातोः पूर्ववल्लोट्। पिबत = 'पा पाने' इति धातोर्लोट्, थस्य तादेशः, 'पाघ्राध्मा' इत्यादिना पिबादेशश्च। अत्त = 'अद भक्षणे' इति धातोर्लोट्, दस्य तादेशः। शेध्वं 'शीङ् स्वप्ने' इति धातोर्लोट्, ध्वमि शपो लुक् 'शीङः सार्वधातुके गुणः' इति गुणः। सर्वत्र 'प्रैषाऽतिसर्गप्राप्तकालेषु कृत्याश्च' इत्यतिसर्गे लोट्, अतिसर्गः = कामाचाराऽनुज्ञा। सर्वत्र विधौ लोडिति व्याख्यातॄणां जयमङ्गलादीनां मतमसत्, रागत एव प्राप्ते ज्योतिष्टोमादिवदपूर्वविधेयाऽभावः। नाऽप्यत्र 'ऋतौ जायामुपेयात्' इतिवन्नियम्यते, तदनिच्छतामकरणे प्रत्यवायाऽभावात्। नाऽपि स्थानान्तरविहारपरिसङ्ख्यापरत्वमिति पाञ्च पञ्चनखभक्षणवत्, स्थानान्तरविहारे दोषाऽभावात्। लोपत्रयदुष्टत्वाद् स्मदुक्तमेव युक्तमिति महामहोपाध्यायो मल्लिनाथः।

भावार्थ —ततो भरद्वाजो भक्ष्यपेयादिपदार्थान् अनेकस्थानेषु संस्थाप्य प्रसन्न सन्नतिथीनब्रवीत्–'महाशया ! वस्त्राणि परिधत्त, उपविशत, पेयसमूह यथेच्छं धयत, भक्ष्याणि भक्षयत, विस्रब्ध सविशत'।

भावार्थ —तब भरद्वाज ऋषिने वस्त्र, अन्न, पेय और शय्याको अनेक जगहोंमें अच्छी तरह सुसज्जितकर प्रसन्नतासे अतिथियोंसे कहा—'महाशयो ! वस्त्र पहनिए, बठिए, पीजिए, खाइए और आरामसे सोइए' ॥ ४४ ॥

ते भुक्तवन्त सुसुख वसित्वा वासास्युषित्वा रजनीं प्रभाते ।
द्रुत समध्वा रथवाजिनागैर्मन्दाकिनीं रम्यवना समीयु ॥ ४५ ॥

अन्वय —ते भुक्तवन्त , वासासि वसित्वा　ख रजनीम् उषित्वा, प्रभाते समध्वा द्रुत रथवाजिनागै रम्यवनां मन्दाकिनीं समीयु ।

प्रयोगप०—तैर्भुक्तवद्भि समध्वै रम्यवना मन्दाकिनी समीये।

व्याख्या—ते = जना , भुक्तवन्त =भक्षितवन्त ( सन्त ), वासांसि=वस्त्राणि, वसित्वा=आच्छाद्य, सुसुख = सुखपूर्वक, रजनीं = रात्रिम् , उषित्वा=स्थित्वा, प्रभाते= प्रात काले, समध्वा=अध्वगता ( सन्त ) द्रुत=शीघ्र, रथवाजिनागै =स्यन्दनहयहस्तिभि ,　=रमणीयकाननां रमणीयजलां वा, मन्दाकिनीं = मन्दाकिन्याख्यां नदीं, समीयु =सम्भूय गता ।

व्युत्पत्ति —भु　=क्तवतुप्रत्यय । वसित्वा = 'वस आच्छादने' इति धातो क्त्वाप्रत्यय । सुसुख = क्रियाविशेषणम् । रजनीं = 'कालाऽध्वनोरत्यन्तसयोगे' इति द्वितीया । उषित्वा = 'वस निवासे' इति धातो क्त्वाप्रत्यय , 'वसतिक्षुधोरिट्' इतीट् यजादित्वात् सम्प्रसारणम् । समध्वा =सम्प्राप्ता अध्वान समध्वा , 'अत्या दय क्रान्ताद्यर्थे द्वितीयया' इति समास , 'उपसर्गादध्वन ' इति समासान्तश्च्। रथवाजिनागै =रथाश्च वाजिनश्च रथवाजि ( सेनाङ्गत्वात् समाहारद्वन्द्व ) रथवाजि युक्ता नागा रथवाजिनागास्तै 'शाकपार्थिवादीनां सिद्धय उत्तरपदलोपस्योपसङ्ख्या नम' इति मध्यमपदलोपिसमास , द्वन्द्वसमासाश्रयणेन एकवद्भावाऽऽपत्ते । रम्यव नां=रम्याणि वनानि (काननानि जलानि वा) यस्या सा रम्यवना, ताम् , (बहु०)। 'गहन कानन वनम् ।' इति 'पय कीलालममृत जीवन भुवन वनम् ।' इति चा ऽमर । मन्दाकिनीं=चित्रकूटनिकटस्था काचन नदी मन्दाकिनी न तु गङ्गेति अरण्य काण्डे द्रष्टव्यमिति मल्लिनाथ । समीयु =सम्पूर्वादिणो लिटि झेरुसि 'इणो यण्' इति यण् 'दीर्घ इण किति' इत्यभ्यासदीर्घ ।

भावार्थ —ते भक्षितवन्त वस्त्राणि परिधाय सुखपूर्वक रात्रिमुषित्वा प्रात अध्वगता सन्त सत्वर स्यन्दनहयहस्तिभिर्यानै रमणीयवनजलयुक्ता मन्दाकिनीं सम्भूय गता ।

भावार्थ—वे लोग खाकर, वस्त्र पहनकर, सुखसे रात बिताकर, प्रातःकालमें मार्गको प्राप्तकर शीघ्र रथ, घोडे और हाथियों पर चढ़कर सुन्दर वन और जल से शोभित मन्दाकिनी नदीमें पहुँचे ॥ ४५ ॥

वैखानसेभ्य श्रुतरामवार्तास्ततो विशिञ्जानपतत्त्रिसङ्घम् ।
अभ्रलिहाऽग्र रविमार्गभङ्गमानहिरेऽद्रिं प्रति चित्रकूटम् ॥ ४६ ॥

अन्वय—ततः वैखानसेभ्यः श्रुतरामवार्ताः विशिञ्जानपतत्त्रिसङ्घम् अभ्रलिहाऽग्रं रविमार्गभङ्गं चित्रकूटम् अद्रिं प्रति आनहिरे ।

प्रयोगप०—श्रुतरामवार्तैः आनहे ।

व्याख्या—ततः = मन्दाकिनीगमनाऽनन्तरं, वैखानसेभ्यः = वानप्रस्थेभ्यः, श्रुतरामवार्ताः = आकर्णितरामचित्रकूटगमनवृत्तान्ताः ( सन्तः ), विशिञ्जानपतत्त्रिसङ्घम् = कूजत्पक्षिगणम् , अभ्रलिहाग्रम् = अभ्रङ्कषशिखरं, रविमार्गभङ्ग=सूर्यपथप्रतिरोधं, चित्रकूट = चित्रकूटनामकम् , अद्रिं प्रति=पर्वतं लक्ष्यीकृत्य, आनहिरे=जग्मुः ।

व्युत्पत्ति—वैखानसेभ्यः = 'आख्यातोपयोगे' इत्यपादानत्वम् । 'वैखानसो वनेवासी वानप्रस्थश्च तापसः ।' इति यादवः । श्रुतरामवार्ताः = रामस्य वार्ता रामवार्ता ( ष० त० ) श्रुता रामवार्ता यैस्ते ( बहु० ) । विशिञ्जानपतत्त्रिसङ्घ= विशिञ्जते इति विशिञ्जानः, 'शिजि अव्यक्ते शब्दे' इति धातोर्लटः शानजादेशः । पतत्त्रमस्ति येषां ते पतत्त्रिणः (इनिप्रत्ययः) । पतत्त्रिणां सङ्घः पतत्त्रिसङ्घः ( ष० त० ) । विशिञ्जानः पतत्त्रिसङ्घो यस्मिन् स विशिञ्जानपतत्त्रिसङ्घस्तम् (बहु०) । अभ्रलिहाग्रम् = अभ्रं लिहन्तीति अभ्रलिहानि, 'वहाऽभ्रे लिहः' इति खशि मुमागमः । अभ्रलिहानि अग्राणि ( शिखराणि ) यस्मिन् स अभ्रलिहाऽग्रस्तम् ( बहु० ) । रविमार्गभङ्ग = रवेर्मार्गः रविमार्गः ( ष० त० ), तस्य भङ्गो रविमार्गभङ्गः ( ष० त० ), स अस्याऽस्तीति रविमार्गभङ्गः, 'अर्शआदिभ्योऽच्' इत्यच्प्रत्ययः । अद्रिं प्रति= 'लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः' इति प्रतेः कर्मप्रवचनीयसंज्ञा, 'कर्मप्रवचनीययुक्ते द्वितीया' इति अद्रेर्द्वितीया । आनहिरे='अहि गतौ' इति धातोर्लिट् । 'अत आदेः' इत्यभ्यासदीर्घः, 'तस्मान्नुड् द्विहलः' इति नुडागमश्च ।

भावार्थ—मन्दाकिनीगमनाऽनन्तरं वानप्रस्थेभ्यो रामस्य चित्रकूटगमनवृत्तान्तं श्रुत्वा ते कूजत्पक्षिगणसहितं गगनचुम्बिशिखरयुक्तं सूर्यमार्गप्रतिरोधकं चित्रकूटपर्वतं लक्ष्यीकृत्य जग्मुः ।

भावार्थ—तब वानप्रस्थोंसे रामचन्द्रकी चित्रकूट जाने की खबर सुनकर वे लोग शब्द करनेवाले पक्षियोंसे युक्त, गगनचुम्बी शिखरोंसे शोभित तथा ऊँचाईसे सूर्यके मार्गके प्रतिरोधक चित्रकूट पर्वतको लक्ष्य करके चले ॥ ४६ ॥

दृष्ट्वोर्णुवानान्ककुभो बलौघान्वितत्य शार्ङ्गं कवच पिनह्य ।
तस्थौ सिसंग्रामयिषु शितेषु सौमित्रिरक्षिभ्रुवमुज्जिहान ॥ ४७ ॥

अन्वय —सौमित्रि ककुभ ऊर्णुवानान् बलौघान् दृष्ट्वा शार्ङ्गं वितत्य कवच पिनह्य सौमित्रिणा सिसङ्ग्रामयिषु शितेषु ( सन् ) अक्षिभ्रुवम् उज्जिहान तस्थौ ।

प्रयोगप०—सौमित्रिणा सिसङ्ग्रामयिषुणा शितेषुणा अक्षिभ्रुवम् उज्जिहानेन ( सता ) तस्थे ।

व्याख्या—सौमित्रि =लक्ष्मण , ककुभ = दिश , ऊर्णुवानान्=व्याप्नुवत , बलौघान्=सेनासमूहान् , दृष्ट्वा=विलोक्य, शार्ङ्गं=धनु , वितत्य=विस्तार्य ( मौर्वी सहित कृत्वा इत्यर्थ ), कवच=वर्म, पिनह्य=बद्ध्वा, सिसङ्ग्रामयिषु =योद्धुमिच्छु , शितेषु =तीक्ष्णबाण ( सन् ) अक्षिभ्रुव=नेत्रत्रिकुटिकम् , उज्जिहान = ऊर्ध्वं नयन् , तस्थौ=स्थितवान् ( लक्ष्मण शत्रुज्ञानया युद्धाऽर्थं सन्नद्ध इत्यर्थ )।

व्युत्पत्ति —सौमित्रि =सुमित्राया अपत्य पुमान् सौमित्रि , 'बाह्वादिभ्यश्च' इति इञ् । ऊर्णुवानान्=ऊर्णुते इति ऊर्णुवानास्तान् , 'ऊर्णुञ् आच्छादने' इति धातोर्लट शानजादेश उवङ् च । बलौघान् बलानामोघा बलौघास्तान् ( ष० त० ) शार्ङ्ग=शृङ्गस्य विकार शार्ङ्ग, तत्र 'अनुदात्तादेश्च' इत्यञ् । वितत्य = विपूर्वात् 'तनु विस्तारे' इति धातो समासे क्त्वो ल्यप् , तुक् 'वा ल्यपि' इत्यनुनासिकलोप । पिनह्य =अपिपूर्वात् 'णह बन्धने' इति धातो क्त्वो ल्यपि 'वष्टि भागुरिरल्लोपम वाप्योरुपसर्गयो ।' इति विकल्पादल्लोप । सिसङ्ग्रामयिषु =सङ्ग्रामयितुमिच्छु , 'सङ्ग्राम युद्धे' इति चुरादिण्यन्ताद्धातो सनि उप्रत्यय । शितेषु =शिता इषवो यस्य स ( बहु० )। अक्षिभ्रुवम् =अक्षिणी च भ्रुवौ च अक्षिभ्रुवम् ( प्राण्यङ्गत्वात् समाहारद्वन्द्व ) 'अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाऽक्षिभ्रुव दारगवोर्वष्ठीवपदष्ठीवनक्तंदिवरात्रिंदिवाऽहर्दिवसरजसनि श्रेयसपुरुषायुषद्व्यायुष त्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वा ' इति निपात 'लोचन नयन नेत्रमीक्षण चक्षुरक्षिणी ।' इत्यमर । उज्जिहान =उज्जिहीते इति उज्जिहान , उत्पूर्वात् 'ओहाङ्गतौ' इति जुहोत्यादिस्थाद्धातोर्लट शानजादेश , 'भृञामित्' इतीत्वम् , णिजर्थो निर्देश ।

भावार्थ —लक्ष्मणो दिग्व्यापकान् सेनासमूहान् विलोक्य धनु सज्य कृत्वा कवच बद्ध्वा समामाऽभिलाषी तीक्ष्णबाणयुक्त सन् अक्षिभ्रुवम् ऊर्ध्वं नयन् स्थितवान् ।

भाषार्थ —लक्ष्मणजी दिशाओंको व्याप्त करनेवाली सेनाओंको देखकर धनुमें मौर्वी चढ़ाकर कवच पहनकर समामकी इच्छा करते हुए तीक्ष्ण बाणोंको लेकर आँखे और भौंहोंको ऊपर चढ़ाकर रहे ॥ ४७ ॥

शुक्लोत्तरासङ्गभृतो विशस्त्रान्पादैः शनैरापततः समन्यून् ।
औहिष्ट तान्वीतविरुद्धबुद्धीन्विवन्दिषून्दाशरथिः स्ववर्ग्यान् ॥ ४८ ॥

अन्वय—दाशरथिः शुक्लोत्तरासङ्गभृतः विशस्त्रान् पादैः शनैः आपततः समन्यून् तान् वीतविरुद्धबुद्धीन् विवन्दिषून् स्ववर्ग्यान् औहिष्ट ।

प्रयोगप०—दाशरथिना शुक्लोत्तरासङ्गभृतः विशस्त्राः आपतन्तः समन्यवस्ते वीतविरुद्धबुद्धयो विवन्दिषवः स्ववर्ग्या औहिषत ।

व्याख्या—दाशरथिः = रामः, शुक्लोत्तरासङ्गभृतः = शुभ्रोत्तरीयधारिणः (न तु कवचभृत इत्यर्थः), विशस्त्रान् = आयुधरहितान् (न तु उद्यतायुधानित्यर्थः), पादैः = चरणैः, शनैः = मन्दं मन्दम्, आपततः = आगच्छतः (न तु यानैस्तूर्णमित्यर्थः), समन्यून् = सशोकान् (रुदत इत्यर्थः, न तु क्ष्वेडमानान्), तान् = भरताऽनुयायिनः, वीतविरुद्धबुद्धीन् = अपगतवैराऽभिसन्धीन्, विवन्दिषून् = प्रणामेच्छून्, स्ववर्ग्यान् = आत्मवर्गभवान् (स्वपक्षपातिन इत्यर्थः), औहिष्ट = ऊहितवान् (अनुद्धतवेशचिह्नेन सुहृद्भावेनागतान् निश्चिकायेत्यर्थः)।

व्युत्पत्ति—दाशरथिः = दशरथस्याऽपत्यं पुमान् (इञ्प्रत्ययः), शुक्लोत्तरासङ्गभृतः = शुक्लश्चाऽसौ उत्तरासङ्गः शुक्लोत्तरासङ्गः (क० धा०), 'द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा।' इत्यमरः। शुक्लोत्तरासङ्गं बिभ्रतीति शुक्लोत्तरासङ्गभृतस्तान् (क्विप्प्रत्ययः)। विशस्त्रान् = विगतानि शस्त्राणि येभ्यस्ते विशस्त्रास्तान् (बहु०)। आपततः = आपतन्तीति आपतन्तस्तान्, आङ्पूर्वात् 'पत्लृ पतने' इति धातोर्लटः शत्रादेशः। समन्यून् = मन्युना सहिताः समन्यवस्तान् (बहु०)। वीतविरुद्धबुद्धीन् = वीता विरुद्धा बुद्धिर्येषां ते वीतविरुद्धबुद्धयस्तान् (बहु०)। विवन्दिषून् = वन्दितुमिच्छवो विवन्दिषवस्तान्, वन्दिधातोः सन्नन्तादुः प्रत्ययः। स्ववर्ग्यान् = स्वस्य वर्गः स्ववर्गः (ष० त०), तस्मिन्भवाः स्ववर्ग्यास्तान्, 'अशब्दे यत्खावन्यतरस्याम्' इति यत्। औहिष्ट = 'ऊह वितर्के' इति धातोर्लुङि सिच्याड्वृद्धिः।

भावार्थ—रामः शुभ्रोत्तरीयधारिणः निःशस्त्रान् पदातीन् मन्दगतीन् आगच्छतो रुदतस्तान् भरताऽनुयायिनो विरुद्धबुद्धिरहितान् प्रणामेच्छून् आत्मपक्षपातिनः निश्चिकाय।

भाषार्थ—रामचन्द्रने सफेद उत्तरीय धारण करने वाले, शस्त्रहीन, धीरे धीरे पैदल आनेवाले तथा रोते हुए उन भरताऽनुयायियों को विरुद्धबुद्धिसे रहित, अभिवादनकी इच्छा करनेवाले तथा अपने पक्षपाती होनेका तर्क किया ॥ ४८ ॥

समत्वकाय चक्रुः रुदन्तो रामाऽन्तिकं बृहितमन्युवेगाः ।

आवेदयन्त क्षितिपालमुच्चैःकार मृत रामवियोगशोकात् ॥ ४९ ॥

अन्वय —( एते ) बृंहितमन्युवेगा रुदन्त क्षितिपाल रामवियोगशोकात् मृतम् उच्चैःकारम् आवेदयन्तो रामाऽन्तिक समूलकाष चकषु ।

प्रयोगप०—( एतैः ) बृंहितमन्युवेगैः रुदद्भिः आवेदयद्भिः ( सद्भिः ) रामाऽन्तिक चकषे ।

व्याख्या—( एते = भरतानुयायिन ) बृंहितमन्युवेगा = प्रवृद्धशोकप्रवाहा, रुदन्त = रोदन कुर्वन्त, क्षितिपाल = राजान (दशरथमित्यर्थः), रामवियोगशोकात् = रामविरहदुःख, मृत = गतप्राणम्, उच्चैःकारम् = उच्चैः कृत्वा, आवेदयन्त = आवेदन कुर्वन्त ('पुत्रशोकान्मृतो नृप ' इति उच्चैः कथयन्त इत्यर्थः ), रामाऽन्तिक = रामसमीप देश, समूलकाष = समूल कषित्वा (स्वशरीरलुण्ठन पतनैश्चेत्यर्थः ), चकषु = पिष्टवन्त ।

व्युत्पत्ति —बृंहितमन्युवेगा = मन्योर्वेगो मन्युवेग ( ष० त० ), बृंहितो मन्युवेगो येषां ते ( बहु० ) । क्षितिपाल = क्षिति पालयतीति क्षितिपालस्तम् 'कर्मण्यण्' इत्यण् । रामवियोगशोकात् = रामस्य वियोगो रामवियोग ( ष० त० ) तेन ( हेतुना ) शोको रामवियोगशोकस्तस्मात् ( तृ० त० ) । उच्चैःकारम् = 'अव्यये यथाऽभिप्रेताख्याने कृञ णमुलौ' इति णमुल् । अयथाऽभिप्रेताख्यान नाम अप्रियस्योच्चैः प्रियस्य च नीचै कथनम् । रामाऽन्तिक = रामस्य अन्तिको रामाऽन्तिकस्तम् ( ष० त० ), 'उपकण्ठाऽन्तिकाऽभ्यर्णाऽभ्यग्रा अप्यभितोऽव्ययम् ।' इत्यमर । समूलकाष = समूल कषित्वा, 'निमूलसमूलयो कष ' इति कषेर्णमुल् । 'कषादिषु यथाविध्यनुप्रयोग ' इति कषेरनुप्रयोग ।

भावार्थ—एते प्रवृद्धशोकावेगा रोदन कुर्वन्त सन्त उच्चस्वरेण 'दशरथो रामवियोगशोकेन मृत' इति कथयन्तो रामसमीपदेश स्वशरीरलुण्ठनै पतनैश्च आमूलाच्चकषु ।

भाषाऽर्थ—भरतके सहचर लोगोंने शोकका आवेग बढ़नेसे रोते हुए तथा 'महाराज दशरथ रामके वियोगके शोकसे मर गये' ऐसा ऊँचे स्वरसे कहते हुए रामके समीप-देशको मूलके साथ चूर्ण कर दिया ॥ ४९ ॥

चिर रुदित्वा करुण सशब्द गोत्राभिधाय सरित समेत्य ।
मध्येजलाद्राघवलक्ष्मणाभ्या प्रत्त जल त्र्यञ्जलमन्तिकेऽपाम् ॥५०॥

अन्वय —राघवलक्ष्मणाभ्यां चिर करुण सशब्द रुदित्वा सरित समेत्य मध्येजलात् अपाम् अन्तिके त्र्यञ्जल गोत्राऽभिधाय प्रत्तम् ।

प्रयोगप०—राघवलक्ष्मणौ जल प्रदत्तवन्तौ ।

व्याख्या—राघवलक्ष्मणाभ्यां = रामसौमित्रिभ्यां, चिरं = बहुक्षण, करुणं=दीनं, सशब्दं = सध्वान ( यथा तथा ), रुदित्वा=परिदेव्य, सरितं = नदीं, समेत्य = गत्वा, मध्येजलात् = जलमध्यात् ( जले स्नात्वा निर्गत्येत्यर्थः ), अपां = जलानाम् , अन्तिके = निकटे ( तीरे इत्यर्थः ) द्व्यञ्जलम् = अञ्जलिद्वयगृहीतं, जलं = तोयं, गोत्राऽभिधाय = नामग्राहं, प्रत्तं = दत्तम् ।

व्युत्पत्ति —राघवलक्ष्मणाभ्यां = रघोरपत्यं पुमान् राघवः ( अण्प्रत्ययः ), राघवश्च लक्ष्मणश्च राघवलक्ष्मणौ, ताभ्याम् ( द्वन्द्वः )। सशब्दं शब्दे सहितं यथा तथा ( बहु० क्रि० वि० )। रुदित्वा = 'रलो व्युपधाद्धलादेः सश्च' इति कित्वे विकल्पिते 'रुदविदमुषग्रहिस्वपिप्रच्छः सश्च' इति कित्वम् । मध्येजलात् = मध्ये जलस्य मध्येजलं, तस्मात् 'पारेमध्ये षष्ठ्या वा' इत्यव्ययीभावः एदन्तत्वनिपातश्च । 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' इत्यत्र 'अपञ्चम्याः' इति निषेधात् न लुगम्भावौ । 'ल्यब्लोपे कर्मण्यधिकरणे च' इति ल्यब्लोपे पञ्चमी। द्व्यञ्जलं = द्वयोरञ्जल्योः समाहारः इति द्व्यञ्जलं, 'तद्धितार्थोत्तरपदसमाहारे च' इति समासः, तस्य च 'सङ्ख्यापूर्वो द्विगुः' इति द्विगुसञ्ज्ञा 'द्वित्रिभ्यामञ्जलेः' इति समासाऽन्तष्टच् । 'यस्येति च' इति इकारलोपः 'स नपुंसकम्' इति नपुंसकत्वम् । द्व्यञ्जलं पदं द्व्यञ्जलिगृहीताऽर्थवाचकम् अन्यथा जलपदेन सह सामानाधिकरण्याऽयोगात् । एवं द्वौ अञ्जली प्रमाणमस्य इति विग्रहवाक्येनाऽपि न सामानाधिकरण्यसिद्धिः 'द्विगोर्लुगनपत्ये' इति प्रमाणतद्धितलुकि समासाऽन्ताऽनुपपत्तिप्रसङ्गात् तत्र 'अतद्धितलुकि' इत्यनुवृत्तेरिति । किं चाऽत्र अञ्जलिगतमेकस्यमेव बोध्यं, द्व्यञ्जलमिति तु द्वयोः कर्त्रोरञ्जल्योरपि द्वित्वादेवैतादृशः प्रयोगः इति मल्लिनाथः । गोत्राभिधाय = गोत्रमभिधायेति गोत्राऽभिधाय, 'द्वितीयायां च' इति णमुल् , 'आतो युक् चिण्कृतोः' इति युक् । 'गोत्रं नाम्नि कुलेऽचले ।' इति यादवः । प्रत्तं = प्रपूर्वाद् ददातेः कर्मणि क्तः , 'अच उपसर्गात्तः' इति ददस्तकारादेशः ।

भावार्थः—रामलक्ष्मणौ बहुक्षणं दीनं सशब्दं रोदनं कृत्वा नदीं गत्वा स्नात्वा निर्गम्य च तीरे एकैकमञ्जलिं नामग्रहणपूर्वकं दत्तवन्तौ ।

भाषाऽर्थ—राम और लक्ष्मणने बहुत समय तक दीनतासे विलापकर नदीमें जाकर स्नानकर तटमें पिताजीका नाम लेकर एक २ अञ्जलि जलदान किया ॥५०॥

अथ रामो भरतमनुनयन्नाह—

अरण्ययाने सुकरे पिता मां प्रायुङ्क्त राज्ये बत ! दुष्करे त्वाम् ।
मा गाः शुचं धीर ! भरं वहाऽमुमाभाषि रामेण वचः कनीयान् ॥ ५१ ॥

अन्वयः—( हे वत्स ! ) पिता मां सुकरे अरण्ययाने प्रायुङ्क्त, त्वां दुष्करे राज्ये

प्रायुङ्क्त, वत ! हे धीर ! शुच मा गा, अमुं भरं वह, (इति) रामेण कनीयान् वच आभाषि।

प्रयोगपरि०—'(हे वत्स !) पित्राऽहं प्रायुज्ये, त्वं प्रायुज्यथाः (त्वया) शुक् मा गायि, असौ भार उह्यताम्' रामः कनीयांसं वच आभाषिष्ट।

व्याख्या—(हे वत्स !=हे तात !) पिता=जनकः (दशरथ इत्यर्थः), मा=मां (प्रगल्भमपीति भावः), सुकरे=सुखसाध्ये, अरण्ययाने=वनवासे, प्रायुङ्क्त=नियुक्तवान्। त्वाम्=भवन्तं (बालमपीति भावः), दुष्करे=दुःखसाध्ये, राज्ये=राजकर्मणि, प्रायुङ्क्त=नियुक्तवान्। वत=हा। हे धीर=हे धर्यसम्पन्न !, शुचं=शोकं, मा गाः=मा गमः, अमुम्=इमं (पितृदत्तमित्यर्थः), भरं=राज्यभारं (दुर्वहमपीति भावः), वह=सम्पादय। (इति=इत्थं) रामेण=रामचन्द्रेण, कनीयान्=अनुजः (भरत इत्यर्थः), वचः=पूर्वोक्तं वचनम्, आभाषि=भाषितः।

व्युत्पत्तिः—सुकरे=सुखेन कर्तुं शक्यं सुकरं, तस्मिन् 'ईषद्दुःसुषु कृच्छ्राऽकृच्छ्रार्थेषु खल्' इति खल्। अरण्ययाने=अरण्ये यानमरण्ययानं तस्मिन् (स० त०)। प्रायुङ्क्त='युजिर् योगे' इति रौधादिकाद्धातोर्लङ्। 'प्रोपाभ्यां युजेरयज्ञपात्रेषु' इत्यात्मनेपदम्। दुष्करे=दुःखेन कर्तुं शक्यं दुष्करं तस्मिन् (पूर्ववत्खल् प्रत्ययः)। मा गाः=इण्धातोर्लुङि 'इणो गा लुङि' इति गादेशः 'न माङ्योगे' इत्यडभावः। भरं='भृञ् भरणे' इत्यस्माद्धातोः 'ऋदोरप्' इत्यप्। वह=विधौ लोट्, पित्राज्ञाया दुर्लङ्घ्यत्वादिति भावः। कनीयान्=अतिशयेन अल्पः कनीयान् अल्पशब्दात् 'द्विवचनविभज्योपपदे तरबीयसुनौ' इतीयसुन् 'युवाऽल्पयोः कनन्यतरस्याम्' इति कनादेशः। वचः='व्याहार उक्तिर्लपितं भाषितं वचनं वचः'। इत्यप्रधाने कर्मणि लुङ्।

भावार्थः—'हे वत्स ! पिता मां सुखसाध्ये वनवासे त्वां च दुःखसाध्ये राज्ये नियुक्तवान्, हन्त ! हे धैर्यसम्पन्न ! शोकं मा कुरु, पितृदत्तं राज्यभारं सम्पादय' इति रामो भरतमकथयत्।

भाषार्थ—'वत्स ! पिताजीने मुझको सुखसाध्य वनवासरूप कार्यमें तथा तुमको दुःखसाध्य राज्यशासनरूप कार्यमें नियुक्त किया, खेद है ! हे धीर ! शोक मत करो, पिताजीसे दिये गये इस राज्यभारका सम्पादन करो' रामचन्द्रजीने भरतको ऐसा वचन कहा ॥ ५१ ॥

कृती श्रुती वृद्धमतेषु धीमांस्त्वं पैतृकं चेद्वचनं न कुर्याः।
विच्छिद्यमानेऽपि कुले परस्य पुंसः कथं स्यादिह पुत्रकाम्या ॥ ५२ ॥

अन्वय—( हे वत्स ! ) वृद्धमतेषु श्रुती कृती धीमान् त्वं पैतृकं वचनं न कुर्याश्चेत् इह परस्य पुंसः कुले विच्छिद्यमाने अपि पुत्रकाम्या कथं स्यात् ।

प्रयोगप०—( हे वत्स ! ) श्रुतिना कृतिना धीमता त्वया पैतृकं वचनं न क्रियेत चेत् पुत्रकाम्यया कथं भूयेत ।

व्याख्या—( हे वत्स ! ) वृद्धमतेषु=पण्डिताचारेषु, श्रुती=आकर्णयिता, कृती=अनुष्ठाता, धीमान्=विद्वान्, त्वं=भरत, पैतृकं=पितृसम्बन्धि ( पितुरित्यर्थः ), वचनम्=आदेशं, न कुर्याश्चेत्=न पालयेयदि, इह=अस्मिल्लोके, परस्य अपि=अन्यस्य अपि, पुंसः=पुरुषस्य, कुले=वंशे, विच्छिद्यमाने अपि=उत्साद्यमाने अपि, पुत्रकाम्या=आत्मनः पुत्रेच्छा, कथं=केन प्रकारेण, स्यात्=भवेत् ( न कथञ्चिदपि भवेदित्यर्थः ), पित्राज्ञापालनविमुखात्पुत्राद् वंशोच्छेद एव वरमिति न कोऽपि पुत्रकामः स्यादिति भावः ।

व्युत्पत्तिः—वृद्धमतेषु=वृद्धानां मतानि वृद्धमतानि तेषु ( ष० त० ) 'बुधवृद्धौ पण्डितेऽपि' इत्यमरः । श्रुतियोगे 'क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्' इति कर्मणि सप्तमी । श्रुती=श्रवणं श्रुतम् ( भावे क्तप्रत्ययः ), श्रुतमनेनेति श्रुती 'इष्टादिभ्यश्च' इति कर्तरि इनिः । कृती=करणं कृतम् ( भावे क्तः ) । कृतमनेनेति कृती ( पूर्ववदिनिप्रत्ययः ) । धीमान्=प्रशस्ता धीरस्ति यस्य स धीमान् ( मतुप्प्रत्ययः ) पैतृकं=पितुरिदं पैतृकं, तत् 'पितुर्यच्च' इति चकारात् ठञ् 'इसुसुक्तान्तात्कः' इति ठस्य कादेशः । पुत्रकाम्या=पुत्रशब्दात् 'काम्यच्च' इति काम्यच्प्रत्ययः, तदन्ताद् प्रत्ययष्टाप् च ।

भावाऽर्थः—हे वत्स ! विद्वन्मतश्रोताऽनुष्ठाता विद्वांस्त्वमपि पित्रादेशं न पालयेर्यदि तदा अत्र लोके कुलोच्छेदसम्भावनायां जातायामपि कः पुरुषः पुत्रेच्छां कुर्यात् ?

भाषाऽर्थ—हे वत्स ! विद्वानोंके मत सुननेवाले और अनुष्ठान करनेवाले विद्वान् भी तुम पिताकी आज्ञाका पालन नहीं करोगे तो इस लोकमें कुलनाश की सम्भावना होनेपर भी किस पुरुषको पुत्र पानेकी इच्छा होगी ? ॥ ५२ ॥

अस्माकमुक्तं बहु मन्यसे चेद्यदीशिषे त्वं न मयि स्थिते च ।
जिहेष्यतिष्ठन्यदि तातवाक्ये, जहीहि शङ्कां, व्रज शाधि पृथ्वीम् ॥ ५३ ॥

अन्वय—त्वम् अस्माकम् उक्तं बहु मन्यसे चेत् मयि स्थिते न ईशिषे च तातवाक्ये अतिष्ठन् जिहेषि यदि, शङ्कां जहीहि, व्रज, पृथ्वीं शाधि ।

प्रयोगप०—त्वया उक्तं मन्यते, न ईश्यते, अतिष्ठता हीयते, शङ्का हीयतां, व्रज्यतां, पृथ्वी शिष्यताम् ।

प्रायुङ्क्त, बत ! हे धीर ! शुच मा गा , अमु भर वह, ( इति ) रामेण कनीयान् वच आभाषि ।

प्रयोगप०—'( हे वत्स ! ) पित्राऽहं प्रायुज्ये, त्व प्रायुज्यथा ( त्वया ) शुक् मा गायि, असौ भार उह्यताम्' राम कनीयास वच आभाषिष्ट ।

व्याख्या—( हे वत्स != हे तात ! ) पिता = जनक ( दशरथ इत्यर्थ ), मा = मा ( प्रगल्भमपीति भाव ), सुकरे = सुखसाध्ये, अरण्ययाने = वनवासे, प्रायुङ्क्त = नियुक्तवान् । त्वाम्=भवन्त ( बालमपीति भाव ), दुष्करे = दु खसाध्ये, राज्ये = राजकर्मणि, प्रायुङ्क्त = नियुक्तवान् । बत = हा । हे धीर = हे धैर्यसम्पन्न !, शुच = शोक, मा गा = मा गम , अमुम् = इम ( पितृदत्तमित्यर्थ ), भर = राज्यभार ( दुर्वहमपीति भाव ), वह = सम्पादय । ( इति = इत्थ ) रामेण = रामचन्द्रेण, कनीयान् = अनुज ( भरत इत्यर्थ ), वच =पूर्वोक्त वचनम् , आभाषि=भाषित ।

व्युत्पत्ति —सुकरे=सुखेन कर्तु शक्य सुकर, तस्मिन् 'ईषद्दु सुषु कृच्छ्राऽकृच्छ्रार्थेषु खल्' इति खल् । अरण्ययाने= अरण्ये यानमरण्ययान तस्मिन् ( स० त० ) । प्रायुङ्क्त='युजिर् योगे' इति रौधादिकाद्धातोर्लङ । 'प्रोपाभ्या युजेरयज्ञपात्रेषु' इत्यात्मनेपदम् । दुष्करे=दु खेन कर्तुं शक्य दुष्कर तस्मिन् ( पूर्ववत्खल् प्रत्यय )। मा गा =इण्धातोर्लुङि 'इणो गा लुङि' इति गादेश 'न माङ्योगे' इत्यडभाव । भर = 'भृञ् भरणे' इत्यस्माद्धातो 'ऋदोरप्' इत्यप् । वह = विधौ लोट् , पित्राज्ञाया दुर्लङ्घ्यत्वादिति भाव । कनीयान् = अतिशयेन अल्प कनीयान् अल्पशब्दात् 'द्विवचनविभज्योपपदे तरबीयसुनौ' इतीयसुन् 'युवाऽल्पयो कनन्यतरस्याम्' इति कनादेश । वच ='व्याहार उक्तिर्लपित भाषित वचन वच' । इत्यप्रधाने कर्मणि लुङ् ।

भावाऽर्थ —'हे वत्स ! पिता मां सुखसाध्ये वनवासे त्वां च दु खसाध्ये राज्ये नियुक्तवान् , हन्त ! हे धैर्यसम्पन्न ! शोक मा कुरु, पितृदत्त राज्यभार सम्पादय' इति रामो भरतमकथयत् ।

भाषाऽर्थ —'वत्स ! पिताजीने मुझको सुखसाध्य वनवासरूप कार्यमें तथा तुमको दु खसाध्य राज्यशासनरूप कार्यमें नियुक्त किया, खेद है ! हे धीर ! शोक मत करो, पिताजीसे दिये गये इस राज्यभारका सम्पादन करो' रामचन्द्रजीने भरतको ऐसा वचन कहा ॥ ५१ ॥

कृती श्रुती वृद्धमतेषु धीमांस्त्व पैतृक चेद्वचन न कुर्या ।
विच्छिद्यमानेऽपि कुले परस्य पुस कथ स्यादिह पुत्रकाम्या ॥ ५२ ।

अन्वयः—( हे वत्स ! ) वृद्धमतेषु श्रुती कृती श्रीमान् त्वं पैतृकं वचनं न कुर्याश्चेत् इह परस्य पुंसः कुले विच्छिद्यमाने अपि पुत्रकाम्या कथं स्यात् ।

प्रयोगप०—( हे वत्स ! ) श्रुतिना कृतिना धीमता त्वया पैतृकं वचनं न क्रियेत चेत् पुत्रकाम्यया कथं भूयेत ।

व्याख्या—( हे वत्स ! ) वृद्धमतेषु = पण्डिताचारेषु, श्रुती=आकर्णयिता, कृती=अनुष्ठाता, धीमान् = विद्वान्, त्वं = भरत, पैतृकं = पितृसम्बन्धि ( पितुरित्यर्थः ), वचनम्=आदेशं, न कुर्याश्चेत् = न पालयेयदि, इह = अस्मिंल्लोके, परस्य अपि=अन्यस्य अपि, पुंसः =पुरुषस्य, कुले = वंशे, विच्छिद्यमाने अपि = उत्साद्यमाने अपि, पुत्रकाम्या=आत्मनः पुत्रेच्छा, कथं = केन प्रकारेण, स्यात्=भवेत् ( न कथञ्चिदपि भवेदित्यर्थः ), पित्राज्ञापालनविमुखात्पुत्राद् वंशोच्छेद एव वरमिति न कोऽपि पुत्रकामः स्यादिति भावः ।

व्युत्पत्तिः—वृद्धमतेषु = वृद्धानां मतानि वृद्धमतानि तेषु ( ष० त० ) 'बुधवृद्धौ पण्डितेऽपि' इत्यमरः । श्रुतियोगे 'क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्' इति कर्मणि सप्तमी । श्रुती = श्रवणं श्रुतम् ( भावे क्तप्रत्ययः ), श्रुतमनेनेति श्रुती 'इष्टादिभ्यश्च' इति कर्तरि इनिः । कृती = करणं कृतम् ( भावे क्तः ) । कृतमनेनेति कृती ( पूर्ववदिनिप्रत्ययः ) । धीमान्=प्रशस्ता धीरस्ति यस्य स धीमान् ( मतुप्प्रत्ययः ) पैतृकं = पितुरिदं पैतृकं, तत्र 'पितुर्यच्च' इति चकारात् ठञ् 'इसुसुक्तान्तात्कः' इति तस्य कादेशः । पुत्रकाम्या = पुत्रशब्दात् 'काम्यच्च' इति काम्यच्प्रत्ययः, तदन्ताद्-प्रत्ययष्टाप् च ।

भावार्थः—हे वत्स ! विद्वन्मतश्रोताऽनुष्ठाता विद्वांस्त्वमपि पित्रादेशं न पालयेर्यदि तदा अत्र लोके कुलोच्छेदसम्भावनायां जातायामपि कः पुरुषः पुत्रेच्छां कुर्यात् ?

भाषार्थ—हे वत्स ! विद्वानोंके मत सुननेवाले और अनुष्ठान करनेवाले विद्वान् भी तुम पिताकी आज्ञाका पालन नहीं करोगे तो इस लोकमें कुलनाश की सम्भावना होनेपर भी किस पुरुषको पुत्र पानेकी इच्छा होगी ? ॥ ५२ ॥

अस्माकमुक्तं बहु मन्यसे चेद्यदीशिषे त्वं न मयि स्थिते च ।
जिहेष्यतिष्ठन्यदि तातवाक्ये, जहीहि शङ्कां, व्रज शाधि पृथ्वीम् ॥ ५३ ॥

अन्वयः—त्वम् अस्माकम् उक्तं बहु मन्यसे चेत् मयि स्थिते न ईशिषे च तातवाक्ये अतिष्ठन् जिहेषि यदि, शङ्कां जहीहि, व्रज, पृथ्वीं शाधि ।

प्रयोगप०—त्वया उक्तं मन्यते, न ईश्यते, अतिष्ठता ह्रीयते, शङ्का हीयतां, व्रज्यतां, पृथ्वी शिष्यताम् ।

व्याख्या—अस्माकम=अस्माभिरित्यर्थं, उक्तम=अभिहित ( वचनमित्यर्थं ), बहु मन्यसे चेत्=( अथ पितृसमो ज्येष्ठ इति हेतुना ) आद्रियसे यदि। मयि= ज्येष्ठ, स्थिते=विद्यमाने, न ईशिषे च=न प्रभवसि अपि। तातवाक्ये=पितृवचने, अतिष्ठन्=अस्थित ( सन् ), जिह्रेषि यदि=लज्जसे चेत। शङ्का=सन्देह ( इद कर्त्तव्य न वा इत्याकारकमित्यर्थ, जहीहि=त्यज, व्रज=गच्छ अयोध्यामिति शेष ), पृथ्वीं=कोशलभूमि, शाधि=पालय।

व्युत्पत्ति—बहु=क्रियाविशेषणम्। ईशिषे='ईश ऐश्वर्ये' इत्यादादिकाद्धातोर्लट्। 'ईश से' इतीडागम, तातवाक्ये=तातस्य वाक्य तातवाक्य, तस्मिन् ( ष० त० ), 'तातस्तु जनक पिता।' इत्यमर। अतिष्ठन्=तिष्ठतीति तिष्ठन् ( शतृप्रत्यय ), न तिष्ठन् अतिष्ठन् ( नञ० )। जिह्रेषि='ह्री लज्जायाम्' इति धातोर्लट् 'श्लौ' इति द्विर्भाव गुणश्च। जहीहि='ओहाक् त्यागे' इति धातोर्लोट्, 'ई हल्यघो' इतीत्वम्। शाधि='शासु अनुशिष्टौ' इति धातोर्लोट् 'शा हौ' इति हेर्धि।

भावार्थ—वत्स! त्व मदीय वचन मानयसि चेत्, मयि अग्रजे स्थिते स्वातन्त्र्य नाऽवलम्बसे च, एव पित्राज्ञाया अपालने लज्जसे चेत्, तर्हि विकल्प त्यज, अयोध्या गच्छ, कोशलभूमि पालय च।

भाषार्थ—भाई! तुम मेरे वचनको मानते हो और मेरे रहते स्वच्छन्द भी नहीं होते हो और पिताकी आज्ञा न माननेमें लजाते हो तो शङ्का छोड़ो, अयोध्यामें जाओ और पृथ्वीका शासन करो॥ ५३॥

अथ भरतोऽपि राम प्रत्याह—

'वृद्धौरसा राज्यधुरा प्रवोढु कथ कनीयानहमुत्सहेय।
मा मा प्रयुक्था कुलकीर्तिलोपे' प्राह स्म राम भरतोऽपि धर्म्यम्॥ ५४॥

अन्वय—वृद्धौरसा राज्यधुरां प्रवोढु कनीयान् अह कथम् उत्सहेय, कुलकीर्ति- लोपे मां मा प्रयुक्था ( इति ) भरत, अपि राम धर्म्य ( वाक्यम् ) प्राह स्म।

प्रयोगप०—'कनीयसा मया कथमुत्सह्येत, अह मा प्रयुक्थि' ( इति ) भरतेनाऽपि राम धर्म्य प्रोच्यते स्म।

व्याख्या—वृद्धौरसां=ज्येष्ठौरसपुत्रयुतां, राज्यधुरां=राज्यभार, प्रवोढु=धारयितु, कनीयान्=अनुज, अह=भरत, कथम् उत्सहेय=केन प्रकारेण उत्साह कुर्यां ( गर्हितमेतदित्यर्थं )। कुलकीर्तिलोपे=वंशयशोनाशके ( अस्मिन्कर्मणीति शेष ), मां=भरत, मा प्रयुक्था=मा नियुङ्क्ष्व, ( इति=इत्थम् ) भरतोऽपि= कैकेयीनन्दनोऽपि, राम=रामचन्द्र, धर्म्यं=धर्माऽनपेत ( वाक्यमिति शेष ), प्राह स्म=उक्तवान्।

व्युत्पत्ति —वृद्धौरसाम्=उरसा निर्मित औरस (औदर्य पुत्र), 'उरसोऽण् च' इत्यण्प्रत्ययश्चाधच्च। वृद्ध औरसो यस्या सा वृद्धौरसा, ताम् (बहु०)। राज्यधुरा=धूर्वतीति धू 'धुर्वी हिंसायाम्' इति धातो 'भ्राजभासधुर्विद्युतोर्जिपृजुग्रावस्तुव क्विप्' इति क्विप्, 'राल्लोप' इति वलोप, तत्त 'र्वोरुपधाया दीर्घ इक' इति दीर्घत्वम्। राज्यस्य धूरिति राज्यधुरा, ताम् (ष० त०), 'ऋक्पूरब्धू पथामानक्षे' इति ोऽप्रत्यय 'परवल्लिङ्ग द्वन्द्वतत्पुरुषयो' इति वचनाद्धुरस्त्रीत्वाट्टाप्। प्रवोढु=प्रपूर्वाद्वहधातो सहावुपपदे 'शकघृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन्' इति तुमुन् 'सहिवहारोदवर्णस्य' इत्योकार। कनीयान्=अतिशयेनाऽल्प कनीयान् (ईयसुन्प्रत्यय)। कथम् उत्सहेय=कथयोगे उत्पूर्वात्सहधातो 'विभाषा कथमि लिङ् च' इति गर्हाया लिङि तङि सीयुट्। 'इटोऽत्' इति इटोऽत्वम्। कुलकीर्तिलोपे=कुलस्य कीर्ति कुलकीर्ति (ष० त०) 'सन्ततिर्गोत्रजननकुलान्यभिजनाऽन्वयौ।' इत्यमर। कुलकीर्तिं लुम्पति (उच्छिनत्ति) इति कुलकीर्तिलोप, तस्मिन् 'कर्मण्यण्' इत्यण् 'उपपदमतिङ्' इति उपपदसमास। मा प्रयुक्था =प्रपूर्वाद्युजेर्माङ्योगे 'माङि लुङ' इति लुङि तङि सिचि 'झलो झलि' इति सिज्लोप। धर्म्य=धर्मादनपेत धर्म्यं, तत् 'धर्मपथ्यर्थन्यायादनपेते' इति यत्। प्राह स्म='लट् स्मे' इति भूते लट्।

भावार्थ —'ज्येष्ठभ्रातृयुक्त राज्यभार धारयितुमनुजोऽह कथमुत्साह कुर्याम्, वशयशोनाशकेऽस्मिन्कर्मणि मा मा नियुङ्क्ष्व' इति भरतोऽपि धर्मपूर्ण वाक्य राममुवाच।

भाषार्थ —'ज्येष्ठ भ्राताके रहते हुए छोटा भाई होकर मैं राज्यभारको धारण करनेके लिए कैसे उत्साह करूं, वशकी कीतिको नाश करानेवाले इस कर्ममें मुझे नियुक्त न कीजिये' ऐसा धर्मपूर्ण वाक्य भरतजीने भी रामचन्द्रजीको कहा॥ ५४॥

पुनश्चाह भरत —

ऊर्जस्वल हस्तितुरङ्गमेतदमूनि रत्नानि च राजभाञ्जि।
राजन्यक चैतदह क्षितीन्द्रस्त्वयि स्थिते स्यामिति शान्तमेतत्॥ ५५॥

अन्वय —'एतत् ऊर्जस्वल हस्तितुरङ्गम, अमूनि राजभाञ्जि रत्नानि, एतत् राजन्यक त्वयि स्थिते अह क्षितीन्द्र स्याम्' इति एतत् शान्तम्।

प्रयोगप०—'एतेन ऊर्जस्वलेन हस्तितुरङ्गेण (भूयते), अमीभि राजभाग्भि रत्नै (भूयते), एतेन राजन्यकेन च (भूयते), मया क्षितीन्द्रेण भूयेत' इति एतेन शान्तेन (भूयताम्)।

व्याख्या—एतत्=पुरोवर्ति, ऊर्जस्वल=बलवत्, हस्तितुरङ्ग=गजहयम्, अमूनि=अयोध्यास्थानि, राजभाञ्जि=नृपाऽर्हाणि, रत्नानि=मणय, एतत्=पुर स्थित, राजन्यक च=राजसमूहश्च, त्वयि=भवति, स्थिते=विद्यमाने, अहम्=अनुज,

क्षितीन्द्र =राजा, स्याम्=भवेयम् , इति=इत्थम् , एतत्=वचन, शान्तम्=निरस्तम् ( अस्तु इति शेष , तदेतदुच्चारणमपि नाऽर्हतीति भाव ) ।

व्युत्पत्ति —ऊर्जस्वलम् = ऊर्जनमूर्क् ( सम्पदादित्वात्क्विप् ) । ऊर्क् ( वलम् ) अस्ति यस्मिंस्तत् ऊर्जस्वलम् 'ज्योत्स्नातमिस्राश्रृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसा ' इति निपात । हस्तितुरङ्ग=हस्त (शुण्डादण्ड ) अस्ति येषा ते हस्तिन (इनिप्रत्यय ) ते च तुरङ्गाश्च हस्तितुरङ्ग, सेनाङ्गत्वात्समाहारद्वन्द्व । 'घोटके पीतितुरगतुरङ्गाश्च तुरङ्गमा ।' इत्यमर । राजभाञ्जि=राजान भजन्तीति राजभाञ्जि, 'भजो ण्वि ' इति ण्विप्रत्यय । राजन्यक = राजन्याना समूहो राजन्यक 'गोत्रोक्षोष्ट्रोरभ्रे'-त्यादिना वुञ्प्रत्यय । क्षितीन्द्र = क्षितेरिन्द्र ( ष० त० ) ।

भावाऽर्थ —पुनश्चाह भरत —'एप वलसम्पन्न गजहयसमूह अमूनि नृपयोग्यानि रत्नानि, एप राजसमूहश्च, भवति विद्यमाने अहमनुजो भूपो भवेयमित्येतत् वचनमनुचितमस्ति ।'

भाषाऽर्थ —भरतजीने फिर भी कहा —'ये वलसम्पन्न हाथी और घोडे है, ये राजयोग्य रत्न है, यह क्षत्रियोंका समूह है और मैं आपके रहते हुए राजा हो जाऊँ, यह अनुचित है' ॥ ५५ ॥

इति निगदितवन्त राघवस्त जगाद
'व्रज भरत ! गृहीत्वा पादुके त्व मदीये ।
च्युतनिखिलविशङ्क पूज्यमानो जनौघै
सकलभुवनराज्य कारयाऽस्मन्मतेन' ॥ ५६ ॥

अन्वय —राघव इति निगदितवन्त त जगाद-'हे भरत ! त्व मदीये पादुके गृहीत्वा व्रज, च्युतनिखिलविशङ्क जनौघै पूज्यमान ( सन् ) अस्मन्मतेन सकल भुवनराज्य कारय' ( इति ) ।

प्रयोगप०—राघवेण इति निगदितवान् स जगदे-'हे भरत ! त्वया व्रज्यतां, च्युतनिखिलविशङ्केन पूज्यमानेन ( सता ) सकलभुवनराज्य कार्यताम्' इति ।

व्याख्या—राघव = रामचन्द्र , इति = इत्थ (पूर्वोक्तमित्यर्थ ), निगदितवन्त=उक्तवन्त, त = भरत, जगाद = अब्रवीत् , हे भरत = हे भ्रात !, त्व मदीये = मत्सम्बन्धिन्यौ ( ममेत्यर्थ ), पादुके=काष्ठोपानहौ, गृहीत्वा = आदाय, व्रज=गच्छ, च्युतनिखिलविशङ्क = अपगतसमस्तातङ्क , जनौघै = मनुष्यसमूहै , पूज्यमान = आद्रियमाण ( सन् ), अस्मन्मतेन = अस्मदनुमत्या, सकलभुवनराज्य=सर्वलोकाधिपत्य, कारय = अनुष्ठापय ( पादुकाभ्या प्रयोज्याभ्यामित्यर्थ ) ।

व्युत्पत्तिः—राघव = रघोरपत्यं पुमान् ( अण्प्रत्ययः )। निगदितवन्त=न्यगद-दिति निगदितवान्, तम् ( क्तवतुप्रत्ययः )। मदीये=मम इमे मदीये, ते, अस्मच्छ-ब्दस्य 'त्यदादीनि च' इति वृद्धसञ्ज्ञाया 'वृद्धाच्छः' इति छप्रत्ययस्तस्य च 'आयनेयी' त्यादिना ईयादेशः 'प्रत्ययोत्तरपदयोश्च' इत्यस्मदो मदादेशः । च्युत-निखिलविशङ्क =च्युता निखिला विशङ्का यस्मात् सः (बहु०)। 'विश्वमशेष कृत्स्न समस्तनिखिलाऽखिलानि निःशेषम् ।' इत्यमरः । जनौघै =जनानामोघा जनौघास्तै ( ष० त० ), पूज्यमान =पूज्यत इति पूज्यमानः, पूजधातोः=कर्मणि यगन्तात् शानच् । अस्मन्मतेन=अस्माकं मतमस्मन्मतं तेन ( ष० त० ), अत्र 'प्रत्ययोत्त रपदयोश्च' इति मदादेशो न बहुवचनान्तत्वात्, तत्र सूत्रे तु 'ए ' इति वर्तते । सकलभुवनराज्य=सकलानि च तानि भुवनानि सकलभुवनानि (क० धा०), तेषां राज्यं सकलभुवनराज्यं तत् ( ष० त० )।

भावार्थ—रामचन्द्र इति कथयन्तं भरतमब्रवीत्–'हे भरत ! त्वं मम पादुके गृहीत्वा गच्छ, समस्तशङ्कारहितो जनसमूहै सत्क्रियमाण सन् अस्मदनुमत्या पादु-काभ्यां सर्वलोकाऽऽधिपत्य ' इति ।

भाषार्थ—ऐसा कहते हुए भरतको रामने कहा—'भरतजी ! तुम मेरे खड़ाऊँको लेकर अयोध्यामें जाओ, सम्पूर्ण शङ्काओं से रहित होकर जनसमूहों से पूजित होते हुए हमारी अनुमतिसे खड़ाऊँके द्वारा सम्पूर्ण लोकोंका राज्य करो' ॥५६॥

इति श्रीभट्टिकाव्ये व्याख्याद्वयोपेते राम गो नाम तृतीय सर्ग ।

---

## चतुर्थः :

निवृत्ते भरते धीमानत्रे रामस्तपोवनम् ।
प्रपेदे पूजितस्तस्मिन्दण्डकारण्यमीयिवान् ॥ १ ॥

अन्वय—धीमान् राम भरते निवृत्ते ( सति ) अत्रे तपोवन प्रपेदे । तस्मिन् पूजित ( सन् ) दण्डकारण्यम् ईयिवान् ।

प्रयोगप०—धीमता रामेण तपोवन प्रपेदे । पूजितेन (सता) दण्डकारण्यम् ईये।

—धीमान्=बुद्धिमान् ( सभरता पौरा मा गमन्निति बुद्धिमानित्यर्थः ), राम =रामचन्द्र, भरते=कैकेयीनन्दने, निवृत्ते=परावृत्ते ( सति ), अत्रे =अत्रि-महर्षे, तपोवनम्=आश्रम, प्रपेदे=प्राप्त । तस्मिन्=तपोवने, पूजित =पाद्याऽर्घ्या दिभि सत्कृत ( सन् ), दण्डकारण्य= म्, ईयिवान्=प्राप्त ।

व्युत्पत्ति—धीमान्=प्रशस्ता धीरस्ति यस्य स धीमान् (मतुप्), 'धीमान्सूरि कृती कृष्टिर्लब्धवर्णो वि ।' इत्यमर । दण्डकारण्य=दण्डकस्य ( इक्ष्वाकुराज

पुत्रस्य ) अरण्य दण्डकाऽरण्य, तत् ( ष० त० )। ईयिवान्='उपेयिवाननाश्वाननूचानश्च' इत्यत्र उपसर्गस्य अवि  त्वात्केवलादपि इण क्सु ।

भावार्थ—सभरताना पौराणां तत्र पुनरागमनमाशङ्क्य रामो भरतगमनानन्तर महर्षेरत्रेराश्रम प्राप्त , तत्र पाद्यार्घ्यादिभि सत्कृत सन् जनस्थानमाससाद ।

भाषार्थ—भरतके साथ पौरोंके वहाँपर फिर आनेकी आशङ्काकर रामचन्द्रजी भरतके जानेपर महर्षि अत्रिके आश्रममें गये, वहाँ पाद्य, अर्घ्य आदिसे सत्कृत होकर दण्डकाऽरण्यमें पहुँचे ॥ १ ॥

अटाट्यमानोऽरण्यानीं ससीत सहलक्ष्मण ।
बलाद् बुभुक्षुणोत्क्षिप्य जह्रे भीमेन रक्षसा ॥ २ ॥

अन्वय—ससीत सहलक्ष्मण ( राम ) अरण्यानीम् अटाट्यमान ( सन् ) बुभुक्षुणा भीमेन रक्षसा बलात् उत्क्षिप्य जह्रे ।

प्रयोगप०—ससीत सहलक्ष्मण ( रामम् ) अटाट्यमान ( सन्तम् ) बुभुक्षु भीम रक्षो जहार ।

व्याख्या—ससीत =सीतासहित , सहलक्ष्मण =लक्ष्मणयुक्त ( राम =रामचन्द्र ), अरण्यानीं=महारण्यम् , अटाट्यमान =भृश भ्रमन् ( सन् ), बुभुक्षुणा=क्षुधितेन, भीमेन=भयङ्करेण, रक्षसा=राक्षसेन ( विराधाख्येन इत्यर्थ ), बलात्=तरस , उत्क्षिप्य=ऊर्ध्वं क्षिप्त्वा, जह्रे=हृत ( 'यद्यपि सीता हृता न राम तथापि तद्धरणस्य आत्महरणप्रायत्वात्तथा व्यपदेश' इति महोपाध्यायो मल्लिनाथ ) ।

व्युत्पत्ति—ससीत =सीतया सहित ससीत 'तेन सहेति तुल्ययोगे' इति बहुव्रीहि , 'वोपसर्जनस्य' इति सहस्य सभाव । सहलक्ष्मण =लक्ष्मणेन सहित सहलक्ष्मण , पूर्ववद् बहुव्रीहि , 'वोपसर्जनस्य' इति वैकल्पिकत्वात्सभावाऽभाव । अरण्यानीं=महदरण्यमरण्यानी, ताम् 'इन्द्रवरुणभवशर्वरुद्रमृडहिमाऽरण्ययवयवनमातुलाचार्याणामानुक्' इति सूत्रेण 'हिमाऽरण्ययोर्महत्त्वे' इति वार्तिकाऽनुसार महत्त्वे ङीष्प्रत्यय आनुगागमश्च । 'महाऽरण्यमरण्यानी' इत्यमर । अटाट्यमान =भृशमटन् अटाट्यमान , यङ्विधाने 'सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् वाच्य' इत्यटतेर्यङन्ताल्लट शानजादेश , 'दीर्घोऽकित ' इत्यभ्यासदीर्घ । बुभुक्षुणा=भोक्तुमिच्छु बुभुक्षु तेन भुजे सन्नन्तादुप्रत्यय । जह्रे='हृञ् हरणे' इति धातो कर्मणि लिट् ।

भावार्थ—राम सीतालक्ष्मणाभ्या सह महारण्य भ्रमन् ( सन् ) भक्षणेच्छुना भयङ्करेण विराधनामकेन रक्षसा बलात् ऊर्ध्वक्षिप्य हृत ।

भाषार्थ—सीता और लक्ष्मणके साथ बड़े  में भ्रमण करते हुए रामचन्द्रजीको बुभुक्षित विराधनामक भयङ्कर राक्षसने ऊपर  हरण किया ॥ २ ॥

अवाक्शिरसमुत्पाद कृतान्तेनाऽपि दुर्दमम् ।
। भुजौ विराधाख्य त तौ भुवि निचख्नतु ॥ ३ ॥

अन्वय —( तत ) तौ अवाक्शिरसम् उत्पाद कृतान्तेन अपि दुर्दम विरा त भुजौ भुवि निचख्नतु ।

प्रयोगप०—ताभ्यामवाक्शिरा उत्पादो दुदमो विराधाख्य स भुवि निचख्ने ।

व्याख्या—( तत =अनन्तरम् ) तौ=रामलक्ष्मणौ, अवाक्शिरसम्=अधोमस्तकम्, उत्पादम्=ऊर्ध्वचरण, कृतान्तेन अपि=यमराजेन अपि, दुर्दम=दु खेन दमनीय, वि ख्य=विराधनामक त=राक्षस भुजौ=बाहू वा=मोटयित्वा, भुवि=पृथिव्या निचख्नतु=निख गौ ।

व्युत्पत्ति —अवाक्शिरसम्=अवाक् शिरो यस्य स अवाक्शिरास्तम् (बहु०) । उत्पादम्=ऊर्ध्वं पादौ यस्य स उत्पादस्तम् ( बहु० ) । कृताऽन्तेन=कृत अन्त येन स कृताऽन्तस्तेन ( बहु० ), 'कृतान्तो यमुनाभ्राता शमनो यम ।' इत्यमर । दुर्दम=दु खेन दम्यते इति दुर्दमस्तम् ( खल्प्रत्यय ) । विराधाऽऽख्य=विराध आख्यो यस्य स विराधाख्यस्तम् ( बहु० ) । भङ्क्त्वा='भञ्जो आमर्दने' इति धातो क्त्वाप्रत्यय, 'जाऽन्तनशा विभाषा' इति नलोपाऽभावपक्षे रूपम्, नलोपे सति तु ' ' इति रूपम् । निचख्नतु =निपूर्वात् 'खनु अवदारणे' इति धातोर्लिट्, तसोऽतुसि 'गमहने' त्यादिना उपधालोप ।

भावाऽर्थ —ततो रामलक्ष्मणौ अधोमस्तकम् ऊर्ध्वचरण यमेनाऽपि दु खेन दमनीय विराधनामक त बाहू मोटयित्वा पृथिव्या निखातवन्तौ ।

भाषाऽर्थ —तव राम और लक्ष्मणने जिसके मस्तक नीचे तथा पाव ऊपर हैं ऐसे, तथा यमराजसे भी दु खसे दमन किये जानेवाले विराधनामक उस राक्षस को बाँहें तोड़कर धरती में गाड़ दिया ॥ ३ ॥

आहिषाता रघुव्याघ्रौ शरभङ्गाश्रम तत ।
अध्यासित श्रिया ब्राह्म्या शरण्य शरणैषिणाम् ॥ ४ ॥

अन्वय —तत रघुव्याघ्रौ ( तौ ) ब्राह्म्या श्रिया अध्यासित शरणैषिणा शरण्य शरभङ्गाश्रमम् आहिषाताम् ।

प्रयोगप०—रघुव्याघ्राभ्याम् ( ताभ्याम् ) अध्यासित शरण्य शरभङ्गाश्रम आहि ।

व्याख्या—तत =विराधवधाऽनन्तर, रघुव्याघ्रौ=रघुश्रेष्ठो ( तौ=रामलक्ष्मणौ ), ब्राह्म्या=ब्रह्मसम्बन्धिन्या ( वदिक्या इत्यर्थ ), श्रिया=लक्ष्म्या, अध्या-

पुत्रस्य ) तरण्य दण्डकारण्य, तद् ( ष० त० )। ईयिवान्='उपेयिवाननाश्वाननू-चानश्च' इत्यत्र उपसर्गस्य ह्यविवक्षतत्वात्केवलादपि इण क्वसु'।

भावार्थ—भरतवाना पौराणां तत्र पुनरागमनमाशङ्क्य रामो भरतगमनानन्तरं महर्षेरत्रेराश्रमं प्राप्तः, तत्र पाद्यार्घ्यादिभिः सत्कृत सन् जनस्थानमाससाद।

भाषार्थ—भरतके साथ पौरोंके वहाँपर फिर आनेकी आशङ्काकर रामचन्द्रजी भरतके जानेपर महर्षि अत्रिके आश्रममें गये, वहाँ पाद्य, अर्घ्य आदिने सत्कृत होकर दण्डकारण्यमें पहुँचे ॥ १ ॥

अटाट्यमानोऽरण्यानीं ससीतः सहलक्ष्मणः ।
बलाद् बुभुक्षुणोत्क्षिप्य जह्रे भीमेन रक्षसा ॥ २ ॥

अन्वय—ससीत सहलक्ष्मण ( राम ) अरण्यानीम् अटाट्यमान ( सन् ) बुभुक्षुणा भीमेन रक्षसा बलात् उत्क्षिप्य जह्रे।

प्रयोगप०—ससीत सहलक्ष्मण ( रामम् ) अटाट्यमान ( सन्तम् ) बुभुक्षु भीम रक्षो जहार।

व्याख्या—ससीत =सीतासहित, सहलक्ष्मण =लक्ष्मणयुक्तः ( राम=रामचन्द्र ), अरण्यानीं=महारण्यम्, अटाट्यमानः=भृश भ्रमन् ( सन् ), बुभुक्षुणा= क्षुधितेन, भीमेन=भयङ्करेण, रक्षसा=राक्षसेन ( विराधाख्येन इत्यर्थ ), बलात्= तरसा, उत्क्षिप्य=ऊर्ध्वं क्षिप्त्वा, जह्रे=हृत ( 'यद्यपि सीता हृता न राम तथापि तद्धरणस्य आमहरणप्रायत्वात्तथा व्यपदेश इति महोपाध्यायो मल्लिनाथ )।

व्युत्पत्ति—ससीत =सीतया सहित ससीत 'तेन सहेति तुल्ययोगे' इति बहुव्रीहि, 'वोपसर्जनस्य इति सहस्य सभाव। सहलक्ष्मण =लक्ष्मणेन सहित सहलक्ष्मण, पूर्ववद् बहुव्रीहि 'वोपसर्जनस्य' इति वैकल्पिकत्वात्सभावाऽभाव। अरण्यानीं=महदरण्यमरण्यानी, ताम् 'इन्द्रवरुणभवशर्वरुद्रमृडहिमाऽरण्ययवयवनमातुलाचार्याणामानुक्' इति सूत्रेण 'हिमाऽरण्ययोर्महत्त्वे' इति वार्तिकाऽनुसार महत्त्वे ङीप्प्रत्यय आनुगागमश्च। 'महाऽरण्यमरण्यानी' इत्यमर। अटाट्यमान=भृशमटन् अटाट्यमान, यङ्विधाने 'सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् वाच्य' इत्यटतेर्यङन्तात्लट शानजादेश, 'दीर्घोऽकित' इत्यभ्यासदीर्घ। बुभुक्षुणा= भोक्तुमिच्छु बुभुक्षु तेन भुजे सन्नन्तादुप्रत्यय। जह्रे='हृञ् हरणे' इति धातो कर्मणि लिट्।

भावार्थ—राम सीतालक्ष्मणाभ्यां सह महारण्य भ्रमन् ( सन् ) भक्षणेच्छुना भयङ्करेण विराधनामकेन रक्षसा बलात् सन्क्षिप्य हृत।

भाषार्थ—सीता और लक्ष्मणके साथ बड़े जङ्गलमें भ्रमण करते हुए रामचन्द्रजीको बुभुक्षित विराधनामक भयङ्कर राक्षसने ऊपर उठाकर हरण किया ॥ २ ॥

अवाक्शिरसमुत्पादं कृतान्तेनाऽपि दुर्दमम् ।
भङ्क्त्वा भुजौ विराधाख्यं तौ भुवि निचख्नतुः ॥ ३ ॥

अन्वयः—( ततः ) तौ अवाक्शिरसम् उत्पादं कृतान्तेन अपि दुर्दमं विराधाख्यं भुजौ भङ्क्त्वा भुवि निचख्नतुः ।

प्रयोगप०—ताभ्यामवाक्शिरा उत्पादो दुर्दमो विराधाख्यः स भुवि निचख्ने ।

व्याख्या—( ततः = अनन्तरम् ) तौ = रामलक्ष्मणौ, अवाक्शिरसम् = अधोमस्तकम्, उत्पादम् = ऊर्ध्वचरणं, कृतान्तेन अपि = यमराजेन अपि, दुर्दमम् = दुःखेन दमनीयं, विराधाख्यं = विराधनामकं तं = राक्षसं भुजौ = बाहू भङ्क्त्वा = मोटयित्वा, भुवि = पृथिव्यां निचख्नतुः = निखातवन्तौ ।

व्युत्पत्ति—अवाक्शिरसम् = अवाक् शिरो यस्य सः अवाक्शिरास्तम् ( बहु० ) । उत्पादम् = ऊर्ध्वं पादौ यस्य स उत्पादस्तम् ( बहु० ) । कृताऽन्तेन = कृतः अन्तः येन स कृताऽन्तस्तेन ( बहु० ), 'कृतान्तो यमुनाभ्राता शमनो यमराड् यमः ।' इत्यमरः । दुर्दमः = दुःखेन दम्यते इति दुर्दमस्तम् ( खल्प्रत्ययः ) । विराधाऽऽख्यः = विराध आख्यो यस्य स विराधाख्यस्तम् ( बहु० ) । भङ्क्त्वा = 'भञ्जो आमर्दने' इति धातोः क्त्वाप्रत्ययः, 'जाऽन्तनशां विभाषा' इति नलोपाऽभावपक्षे रूपम्, नलोपे सति तु ' ' इति रूपम् । निचख्नतुः = निपूर्वात् 'खनु अवदारणे' इति धातोर्लिट्, तसोऽतुसि 'गमहन' इत्यादिना उपधालोपः ।

भावार्थः—ततो रामलक्ष्मणौ अधोमस्तकम् ऊर्ध्वचरणं यमेनाऽपि दुःखेन दमनीयं वि   तं राक्षसं बाहू मोटयित्वा पृथिव्यां निखातवन्तौ ।

भाषार्थ—तब राम और लक्ष्मणने जिसके मस्तक नीचे तथा पाँव ऊपर हैं ऐसे, तथा यमराजसे भी दुःखसे दमन किये जानेवाले विराधनामक उस राक्षस को बाँहें तोड़कर धरती में गाड़ दिया ॥ ३ ॥

आहिषातां रघुव्याघ्रौ शरभङ्गाश्रमं ततः ।
अध्यासितं श्रिया ब्राह्म्या शरण्यं शरणैषिणाम् ॥ ४ ॥

अन्वयः—ततः रघुव्याघ्रौ ( तौ ) ब्राह्म्या श्रिया अध्यासितं शरणैषिणां शरण्यं शरभङ्गाश्रमम् आहिषाताम् ।

प्रयोगप०—रघुव्याघ्राभ्याम् ( ताभ्याम् ) अध्यासितः शरण्यः शरभङ्गाश्रमः आहि ।

व्याख्या—ततः = विराधवधाऽनन्तरं, रघुव्याघ्रौ = रघुश्रेष्ठौ ( तौ = रामलक्ष्मणौ ), ब्राह्म्या = ब्रह्मसम्बन्धिन्या ( वदित्र्या इत्यर्थः ), श्रिया = लक्ष्म्या, अध्या-

सितम् = अधिष्ठित, शरणैषिणा = शरणार्थिना, शरण्य = शरणे साधु, शरभङ्गाश्रम=शरभङ्गमुन्याश्रमम्, आहिपाताम्=गतवन्तौ ।

व्युत्पत्ति —रघुव्याघ्रौ = रघुषु ( लक्षणया रघुवंशोत्पन्नेषु ) व्याघ्रौ इव इति रघुव्याघ्रौ ( स० त० ), 'स्युरुत्तरपदे व्याघ्रपुंगवर्षभकुञ्जरा । सिंहशार्दूलनागाद्या पुंसि श्रेष्ठार्थगोचरा ॥' इत्यमर । ब्राह्म्या = ब्रह्मण इयं ब्राह्मी, तया, 'तस्येदम्' इत्यण्, 'टिड्ढाणञि' त्यादिना ङीप । 'ब्राह्मोऽजातौ' इति व्यतिरिक्तार्थे निपातनाट्टिलोप । 'वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्र प्रजापति ।' इत्यमर । शरणैषिणा= शरणमिच्छन्ति ( अभिलषन्ति ) इति शरणैषिणस्तेषाम्, इषेस्ताच्छील्ये णिनि । शरण्य=शरणे ( रक्षणे ) साधु शरण्यस्तम्, 'तत्र साधु' इति यत्प्रत्यय । शरभङ्गाश्रम=शरभङ्गस्य आश्रम शरभङ्गाश्रमस्तम् ( ष० त० ) । आहिपाताम्='अहि गतौ' इति धातोर्लुङ् ।

भावार्थ —विराधवधाऽनन्तरं राघवश्रेष्ठौ रामलक्ष्मणौ वैदिक्या लक्ष्म्या अधिष्ठितं शरणार्थिनां रक्षकं शरभङ्गनामकस्य ऋषेराश्रमं गतवन्तौ ।

भाषार्थ —विराधको मारनेके अनन्तर राघवश्रेष्ठ राम और लक्ष्मण वैदिक लक्ष्मीसे अधिष्ठित, शरणकी इच्छा करने वालोंके रक्षक, शरभङ्ग ऋषिके आश्रममें पहुँचे ॥ ४ ॥

पुरो रामस्य जुहवाञ्चकार ज्वलने वपु ।
शरभङ्ग प्रदिश्याऽऽरात्सुतीक्ष्णमुनिकेतनम् ॥ ५ ॥

अन्वय —शरभङ्ग आरात् सुतीक्ष्णमुनिकेतनं प्रदिश्य रामस्य पुर वपु ज्वलने जुहवाञ्चकार ।

प्रयोगप०—शरभङ्ग वपु जुहवाञ्चके ।

व्याख्या—शरभङ्ग =शरभङ्गाख्य ऋषि, आरात्=समीपे, सुतीक्ष्णमुनिकेतन= सुतीक्ष्णऋष्याश्रम, प्रदिश्य=कथयित्वा ( रामस्य निवासत्वेनेति शेष ), रामस्य= रामचन्द्रस्य, पुर = अग्रे वपु = शरीर, ज्वलने = अग्नौ, जुहवाञ्चकार = हुतवान् ।

व्युत्पत्ति —आरात् = 'आराद् दूरसमीपयो ।' इत्यमर । सुतीक्ष्णमुनिकेतन= सुतीक्ष्णश्चाऽसौ मुनि सुतीक्ष्णमुनि ( क० धा० ), तस्य केतन सुतीक्ष्णमुनिकेतन, तत् ( ष० त० ) । जुहवाञ्चकार='हु दानादनयो' इति धातो 'भीह्रीभृहुवां श्लुवच्च' इति विकल्पादाम्प्रत्यय श्लुभावो द्विर्वचनं च ।

भावार्थ —शरभङ्ग 'समीपे भवन्निवासार्थं सुतीक्ष्णऋष्याश्रमोऽस्ती'ति कथयित्वा रामस्य अग्रत स्वशरीरमग्नौ हुतवान् ।

भाषार्थ —शरभङ्गजीने 'समीप ही आपके निवासके लिये सुतीक्ष्ण ऋषिका आश्रम है' [illegible] रामके सामने ही अपने [illegible] को अग्निमें ह[illegible]

हवनकाले राममब्रवीच्च शरभङ्गः—

'यूयं समैष्यथेत्यस्मिन्नासिष्महि वयं वने ।
दृष्टाः स्थ स्वस्ति वो याम स्वपुण्यविजितां गतिम्' ॥ ६ ॥

अन्वयः—'( हे राघव ! ) यूयं समैष्यथ इति वयम् अस्मिन् वने आसिष्महि, यूयं दृष्टाः स्थ, वः स्वस्ति, स्वपुण्यविजितां गतिं याम'।

प्रयोगप०—( हे राघव ! ) 'युष्माभिः समैष्यते' इति अस्माभिः आसि, युष्माभिर्दृष्टैर्भूयते, ( अस्माभिः ) स्वपुण्यविजिता गतिर्यायते ।

व्याख्या—( हे राघव=हे रामचन्द्र ! ) यूयं=भवन्तः ( त्रित्वाद्बहुवचनम् ), समैष्यथ = समागमिष्यथ, इति = हेतोः वयम् , अस्मिन् = अत्र, वने = अरण्ये, आसिष्महि = स्थिताः । यूयं = भवन्तः , दृष्टाः = अवलोकिताः , स्थ = भवथ (अस्माभिरिति शेषः )। वः =युष्मभ्यं, स्वस्ति=कल्याणम् । स्वपुण्यविजिताम्=आत्मधर्मार्जितां गतिं=लोकं, याम =यास्यामः (इति उक्त्वा शरभङ्गः स्वशरीरमग्नौ जुहाव)।

व्युत्पत्तिः—समैष्यथ=समाङ्पूर्वात् 'इण् गतौ' इति धातोर्लृट्। 'एत्येधत्यूठ्सु' इति वृद्धिः । वयम्='अस्मदो द्वयोश्च' इति चकारादेकत्वे बहुवचनम् । आसिष्महि='आस उपवेशने' इति धातोर्लुङि महिङि सिचीट् । स्थ='अस भुवि' इति धातोर्लटि थे 'श्नसोरल्लोपः' इत्यकारलोपः । वः स्वस्ति=चतुर्थीबहुवचनान्तस्य युष्मच्छब्दस्य 'बहुवचनस्य वस्नसौ' इति वसादेशः, स्वस्तिपदेन योगे 'नमः-स्वस्तिस्वाहास्वधाऽलं वषड्योगाच्च' इति चतुर्थी। स्वपुण्यविजिता = स्वस्य पुण्यं स्वपुण्यं ( ष० त० ), 'स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः ।' इत्यमरः । स्वपुण्येन विजिता स्वपुण्यविजिता, ताम् ( तृ० त० )। याम = 'वर्तमानसामीप्ये वर्तमानवद्वा' इति वर्तमानसामीप्ये लट् ।

भावार्थः—'हे राघव ! युष्माकमत्राऽऽगमनं भविष्यतीति हेतुनाऽत्र उपविष्टोऽस्मि । साम्प्रतं युष्माकं दर्शनं जातं, वः स्वस्ति, आत्मधर्मोपार्जितं लोकं गच्छामी'ति उक्त्वा शरभङ्गः स्वशरीरमग्नौ जुहाव ।

भाषाऽर्थः—'हे राम ! आपलोग यहाँ आयेंगे इस कारणसे मैं इस वनमें रहा था, मैंने आपलोगोंका दर्शन कर लिया । आपलोगोंका कल्याण हो । अब मैं अपने पुण्यसे अर्जित लोकमें जाता हूँ ।' ऐसा कहकर शरभङ्ग ऋषिने अपने शरीरको अग्निमें हवन किया ॥ ६ ॥

तस्मिन्कृशानुसाद्भूते सुतीक्ष्णमुनिसन्निधौ ।
उवास पर्णशालायां भ्रमन्ननिशमाश्रमान् ॥ ७ ॥

अन्वय —तस्मिन् कृशानुसाद्भूते (सति) अनिशम् आश्रमान् भ्रमन् सुतीक्ष्ण-मुनिसन्निधौ पर्णशालायाम् उवास।

प्रयोगप०—भ्रमता ( रामेण ) पर्णशालायामूषे।

व्याख्या—तस्मिन् = शरभगे, कृशानुसाद्भूते = कात्स्न्र्येन अग्नीभूते ( भस्मीभूते सतीत्यर्थ ), अनिश=निरन्तरम्, आश्रमान्=मुनिवासस्थानानि, भ्रमन्=पर्यटन् ( सरक्षणार्थमिति शेष ), सुतीक्ष्णमुनिसन्निधौ = सुतीक्ष्णऋषिसमीपे, पर्णशालायाम् = उटजे, उवास=उषितवान् ( राम इति शेष )।

व्युत्पत्ति —कृशानुसाद्भूते = 'विभाषा साति कार्त्स्न्ये' इति सातिप्रत्यय। भ्रमन् = ीति भ्रमन्, 'भ्रमु अनवस्थाने' इति धातोर्लट शत्रादेश। सुतीक्ष्ण मुनिसन्निधौ = सुतीक्ष्णश्चाऽसौ मुनि सुतीक्ष्णमुनि ( क० धा० ), तस्य सन्निधि सुतीक्ष्णमुनिसन्निधिस्तस्मिन् ( ष० त० )। पर्णशालाया=पर्णनिर्मिता शाला पर्णशाला, तस्या, 'शाकपार्थिवादीना सिद्धय उत्तरपदलोपस्योपसङ्ख्यानम्' इति मध्यमपदलोपिसमास'। 'पर्णशालोटजोऽस्त्रियाम्।' इत्यमर। उवास='वस निवासे' इति धातोर्लिटि 'लिट्यभ्यासस्योभयेषाम्' इत्यभ्यासस्य रणम्।

भावार्थ —शरभङ्गे भस्मीभूते सति रामो निरन्तर मुनिवासस्थानानि भ्रमन् सुतीक्ष्णऋषिसमीपे पर्णशालायां न्यवसत्।

भाषार्थ —शरभङ्ग ऋषिके भस्मीभूत होनेपर निरन्तर आश्रमोंमें भ्रमण कर रामचन्द्रजीने सुतीक्ष्ण ऋषिके समीप पर्णशालामें निवास किया॥ ७॥

वनेषु वासतेयेषु निवसन् पर्णसस्तर।
शय्योत्थाय मृगान्विध्यन्नातिथेयो विचक्रमे॥ ८॥

अन्वय —वासतेयेषु वनेषु निवसन् पर्णसस्तर शय्योत्थाय मृगान् विध्यन् आतिथेय ( सन् ) विचक्रमे।

प्रयोगप०—निवसता पर्णसस्तरेण विध्यता आतिथेयेन ( रामेण ) विचक्रमे।

व्याख्या—वासतेयेषु=वासयोग्येषु, वनेषु = अरण्येषु, निवसन् निवास कुर्वन्, पर्णसस्तर =पलाशशयय, शय्योत्थाय=शय्याया सत्वरमुत्थाय, मृगान् = हरिणान्, विध्यन् = प्रहरन् ( राम इति शेष ) आतिथेय = अतिथिसत्कारकुशल सन् ( न तु कुक्षिम्भरि सन्नित्यर्थ ), विचक्रमे=विचचार।

व्युत्पत्ति —वासतेयेषु = वसतौ साधूनि वासतेयानि, तेषु 'पथ्यतिथिवसतिस्वपतेर्ढञ्' इति ढञ्। पर्णसस्तर =सस्तीर्यते इति सस्तर ( तल्पम् ), सम्पूर्वात् 'स्तञ् आच्छादने' इति धातो 'ऋदोरप्' इत्यप्। पर्णानि सस्तरो यस्य स (बहु०),

'पत्र पलाश छदन दल पर्णं छद पुमान् ।' इत्यमर । 'पर्णसस्तरे' इति मल्लिनाथ-पाठस्तन्मते पर्णानां सस्तर इति पर्णसस्तरस्तस्मिन् ( ष० त० )। शय्योत्थाय=शेरते अस्यामिति शय्या, 'सज्ञाया निपदनिपतमनविदपुञ्शीङ्भृञिण' इति क्यप्, शय्याया सत्वरमुत्थाय इति शय्योत्थायम्, उत्पूर्वात्तिष्ठते 'अपादाने परीप्सायाम्' इति णमुल्, यक् च । विध्यन्='व्यध ताडने' इति धातोर्लट शतरि 'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीना क्ङिति च' इति रणम् । आतिथेय =अतिथिषु साधु आतिथेय, पूर्वसूत्रेण ढञ् 'आग्नेयी' त्यादिना एयादेश । वि मे='वे पादविहरणे' इत्यात्मनेपदम् ।

भावार्थ —रामो नि ोग्येषु वनेषु निवास कृत्वा रात्रौ पर्णशय्या सुप्त्वा प्रात शय्याया सत्वरमुत्थाय अतिथिसत्कारार्थं मृगान् प्रहरन् विचचार ।

भाषार्थ —रामचन्द्रजीने निवासयोग्य वनोंमें रहकर, रातमें पर्णशय्यापर सोकर प्रात काल शय्यामे जल्दी उठकर अतिथिसत्कारके लिए मृगोंको बाणसे प्रहार करते हुए विचरण किया ॥ ८ ॥

ऋग्यजुषमधीयानान्साम समर्चयन् ।
बुभुजे देवसात्कृत्वा शूल्यमुख्य च होमवान् ॥ ९ ॥

—(स) शूल्यम् उख्य च देवसात्कृत्वा होमवान् ( सन् ) ऋग्यजुषम् अधीयानान् सामन्याश्च समर्चयन् बुभुजे ।

प्रयोगप०—( तेन ) होमवता ता बुभुजे ।

व्याख्या—( स =राम ) शूल्य=शूलसस्कृत मासम्, उख्य च=स्थालीसस्कृत मास च, देवसात्कृत्वा=देवाऽधीन विधाय (देवेभ्यो दत्त्वेत्यर्थ ), होमवान्=नित्यहोमी ( सन्, ) ( 'जपता जुह्वता चैव निनिपातो न विद्यते ।' इति स्मरणादिति भाव )। ऋग्यजुषम् = ऋग्यजुर्वेदौ, अधीयानान्=पठत, सामन्याश्च = सामवेदनिपुणाश्च, समर्चयन्=मासदानेन सम्भावयन् ( सन् ), बुभुजे=भुक्तवान् ( देवब्राह्मणाहुतशिष्ट बुभुजे नात्मार्थम्, 'केवलाऽघो भवति केवलाऽदी' इति वचनात्, 'न पचेदन्नमात्मन' इति निषेधाच्चेति भाव )।

व्युत्पत्ति —शूल्य=शूले सस्कृत शूल्य, तत् 'शूलोखाद्यत्' इति यत् । उख्यम्= सस्कृत मासम् उख्य, तत् ( पूर्वसूत्रेणैव यत् )। देवसात्कृत्वा = देवाऽधीन देय कृत्वा, देवसात्कृत्वा, 'देये त्रा च' इति चकारात्साति प्रत्यय । होमवान्=होमोऽस्ति यस्य स (मतुप्प्रत्यय ), ऋग्यजुषम्=ऋचश्च यजूषि च ऋग्यजुष, तत् (द्वन्द्व ) 'अचतुरे' त्यादिना निपात । 'अर्थव्यवस्थितपादा ऋच' 'अच्छन्दास्यगीतानि यजूषि' इति ऋग्यजुषलक्षणे । अधीयानान्=अधीयते इति अधीयानास्तान्, अधि-

पूर्वस्य 'इङ् अध्ययने' इति धातोर्लटि शानचि रूपम् । सामन्यान्=सामसु साधव सामन्यास्तान् , 'तत्र साधु' इति यत् , 'ये चाभावकर्मणो' इति प्रकृतिभाव । 'अर्थव्यवस्थितपादा सगीतय सामानि' इति सामलक्षणम् । समर्चयन्=समर्चयतीति समर्चयन् ( शतृप्रत्यय ) । बुभुजे='भुज पालनाऽभ्यवहारयो' इति धातो 'भुजोऽनवने' इत्यात्मनेपदम् ।

भावार्थ —राम शूलसस्कृतमुखासस्कृत च मास देवेभ्यो दत्वा नित्यहोमी सन् ऋग्यजु सामवेदाऽध्येतॄन् मासदानेन सम्भाव्य अवशिष्टाऽश भुक्तवान् ।

भाषार्थ —रामचन्द्रजीने शूलमें और उखा ( बटलोही ) मे मस्कृत मास देवताओंको अर्पणकर होम करके ऋग्वेद यजुर्वेद और सामवेदके पाठ करनेवाले ब्राह्मणोंको मासदानसे सत्कारकर अवशिष्ट भाग स्वयम् खाया ॥ ९ ॥

युग्मम्—

वसानस्तन्त्रकनिभे सर्वाङ्गीणे तरुत्वचौ ।
काण्डीर खाड्गिक शार्ङ्गी रक्षन्विप्रास्तनुत्रवान् ॥ १० ॥
हित्वाऽऽशितङ्गवीनानि फलैर्येष्वाशितम्भवम् ।
तेष्वसौ दन्दशूकारिर्वनेष्वानभ्र निर्भय ॥ ११ ॥

अन्वय —तन्त्रकनिभे सर्वाङ्गीणे तरुत्वचौ वसान काण्डीर खाड्गिक शार्ङ्गी तनुत्रवान् विप्रान् रक्षन् ।

दन्दशूकाऽरि असौ आशितङ्गवीनानि हित्वा येषु फलै आशितम्भव, तेषु निर्भय ( सन् ) आनभ्र ।

प्रयोगप०—तरुत्वचौ वसानेन काण्डीरेण खाड्गिकेन शार्ङ्गिणा तनुत्रवता विप्रान् रक्षता दन्दशूकाऽरिणा अमुना निर्भयेण ( सता ) आनभ्रे ।

व्याख्या—तन्त्रकनिभे = नवीनवस्त्रसदृशे, सर्वाऽङ्गीणे = सकलाऽवयवव्यापिके, तरुत्वचौ = वल्कले, वसान = आच्छादयन् , काण्डीर = वाणवान् , खाड्गिक = खड्गयुक्त , शार्ङ्गी = धन्वी, तनुत्रवान् = कवचधारी, विप्रान् = ब्राह्मणान् , रक्षन् = पालयन् ।

दन्दशूकाऽरि = हिंस्रशत्रु , असौ=राम , आशितङ्गवीनानि = गोभक्षितकुशपलालादिकानि, हित्वा = त्यक्त्वा, येषु = वनेषु, फलै = सस्यै , आशितम्भव = तृप्ति ( भवतीति शेष ), तेषु=वनेषु, निर्भय = भयरहित ( सन् ), आनभ्र = बभ्राम ( रिक्तानि वनानि हित्वा पूर्णेषु विजहारेत्यर्थ ) ।

व्युत्पत्ति —तन्त्रकनिभे=तन्त्रात् ( तन्तुवायशलाकाया ) अचिराऽपहृत पट तन्त्रक ( नवीन इत्यर्थ ), 'तन्त्रादचिरापहृते' इति कन्प्रत्यय , 'तन्त्र स्वराष्ट्रचिन्ताया तन्तुवायपरिच्छदे ।' इति यादव । तन्त्रकाभ्या गौ तन्त्रकनिभे, ते ( तृ०

त० ) सर्वाङ्गीणे = सर्वाऽङ्गं व्याप्नुत इति सर्वाङ्गीणे, ते 'तत्सर्वादेः पथ्यङ्गकर्मपत्र-पात्रं व्याप्नोति' इति खप्रत्ययः । तरुत्वचौ = तरोस्त्वचौ इति तरुत्वचौ, ते ( ष० त० ) । वसानः = वस्ते इति वसानः, 'वस आच्छादने' इति धातोः शानच् । काण्डीरः = काण्डः (बाणः) अस्याऽस्तीति काण्डीरः, 'काण्डाण्डादीरन्नीरचौ' इति ईरन्प्रत्ययः, 'काण्डोऽस्त्री दण्डबाणयोः ।' इति कोषः । खाड्गिकः = खड्गः प्रहरणमस्य खाड्गिकः, 'प्रहरणम्' इति ठक्प्रत्ययः, 'किति च' इत्यादिवृद्धिश्च । 'खड्गिकः' इति पाठे 'अत इनिठनौ' इति ठन्प्रत्ययः । शार्ङ्गी शार्ङ्गमस्याऽस्तीति ( इनिः ) । तनुत्रवान् = तनुं त्रायत इति तनुत्रम्, तनूपपदात् 'त्रैङ् पालने' इति धातोः 'आतोऽनुपसर्गे कः' इति कः । तनुत्रमस्याऽस्तीति तनुत्रवान् ( मतुप् ) ।

दन्दशूकाऽरिः = गर्हितं दशन्तीति दन्दशूकाः, 'लुपसदचरजपजभदहदशगॄभ्यो भावगर्हायाम्' इति यङ् 'जपजभदहनशभञ्जपशां च' इति नुकि 'यजजपदशां यङः' इत्यूकः । दन्दशूकानामरिः ( ष० त० ) । आशितङ्गवीनानि = आशिताः (आशितवत्यः) गावः एषु इति आशितङ्गवीनानि 'अषडक्षाशितङ्ग्वलङ्कर्मालम्पुरुषाऽध्युत्तरपदात्खः' इति स्वाऽर्थे खप्रत्ययः, निपातनात्पूर्वपदस्य मुमागमः । फले = 'वृक्षादीनां फलं सस्यम्' इत्यमरः । आशितम्भवम् = आशितानां (आशितवताम्) भवनमाशितम्भवम्, 'आशिते भुवः करणभावयोः' इति खच्, मुमागमः । निर्भयः = निर्गतं भयं यस्मात्सः ( बहु० ), आनभ्र = 'अभ्र गतौ' इति धातोर्लिटि 'अत आदेः' इति दीर्घे 'तस्मान्नुड्द्विहलः' इति नुट् ।

भावाऽर्थः—नूतनवस्त्रसदृशे सर्वाङ्गव्यापके वल्कले ( उत्तरीयाऽधरीयरूपे ) आच्छादयन् धनुर्बाणखड्गधारी परिहितकवचो ब्राह्मणान् रक्षन् हिंस्रजन्तुहो रामचन्द्रो निष्फलवनानि त्यक्त्वा सफलवनेषु निर्भीकः सन् बभ्राम ।

भाषाऽर्थ—नवीनवस्त्रसदृश, सर्वाङ्गको व्याप्त करनेवाले वल्कलों को पहनते हुए धनु, बाण और खड्गको लेकर कवच धारणकर ब्राह्मणोंकी रक्षा करते हुए हिंस्र जन्तुओं का नाश करनेवाले रामचन्द्रजी जिन वनोंसे गायें तृप्त होती हैं उनको छोड़ कर जहांपर फलोंसे तृप्ति होती है वहाँ निर्भय होकर घूमने लगे ॥ १०-११ ॥

वातीनव्यालदीप्राऽस्त्रः सुत्वनः परिपूजयन् ।
पर्षद्वलान्महाब्रह्मैराट नैकटिकाश्रमान् ॥ १२ ॥

अन्वयः—वातीनव्यालदीप्राऽस्त्रः ( सन् ) सुत्वनः परिपूजयन् महाब्रह्मैः पर्षद्वलान् नैकटिकाश्रमान् आट ।

प्रयोगप०—( तेन ) वातीनव्यालदीप्राऽस्त्रेण ( सता ) परिपूजयता पर्षद्वला नैकटिकाऽश्रमाः आटिरे ।

व्याख्या—व्रातीनव्यालदीप्रास्त्र = स्वशरीरायासजीविना हिंस्रेषु तीक्ष्णाऽस्त्र (सन्), सुत्वन = सोमयाजिन , परिपूजयन्=सत्कुर्वन् , महाब्रह्मै =ब्राह्मणोत्तमै (सह) पर्षद्वलान् ाह्मणसभावत , नैकटिकाश्रमान्=समीपवर्तिमुनिवासस्थानानि, आट=गतवान् ( तेषु विचचारेत्यर्थ )।

व्युत्पत्ति—व्रातीनव्यालदीप्रास्त्र = नानाजातीया अनियतवृत्तय शरीरायास-जीविनो व्राता , तेषामिदम् ( कर्म ) व्रात 'तस्येदम्' इत्यण्। व्रातेन जीवन्तीति व्रातीना , 'व्रातेन जीवती'ति खञ्प्रत्यय । व्रातीनाना व्याला ( हिंस्रा ) व्रातीन व्याला (ष० त०)। दीप्राणि अस्त्राणि यस्य स दीप्राऽस्त्र (बहु०)। व्रातीनव्यालेषु दीप्राऽस्त्र ( स० त० )। सुत्वन = सोम सुन्वन्तीति सुत्वानस्तान् सुत्वन 'षुञ् अभिषवे' इति धातो 'सुयजोर्ड्वनिप्' इति ड्वनिप्, 'ह्रस्वस्य पिति कृति तुक्' इति तु 'न संयोगाद्वमन्तात्' इत्यल्लोपो न। महाब्रह्मै = महान्तश्च ते ब्रह्माण महाब्रह्मास्तै , 'सन्महत्परमोत्तमोत्कृष्टा पूज्यमानै' इति समास, 'कुमहद्भ्य स्याम्' इति ऽन्तष्टच्। 'वेदस्तत्त्व तपो ब्रह्म ब्रह्मा विप्र प्रजापति ।' इत्यमर । पर्षद्वलात्= पर्षत् अस्ति येषा ते पर्षद्वलास्तान् 'रज कृष्यासुतिपरिषदो वलच्' इत्यत्र परिषत्पदेन तदर्थबोधकस्य पर्षत्पदस्याऽपि ग्रहणात् वलच्प्रत्यय । 'परिषद्वलान्' इति मल्लिनाथसमत पाठस्तत्र परित सीदन्ति सा परिषत् , सपदादित्वात् क्विप् , अन्यत् पूर्ववत् । पर्ि ण यथा—'एकविंशतिस ै मीमांसान्यायपारगै । वेदाऽङ्गकुशलैश्चैव परिषत्त्व प्रकल्पयेत् ॥' इति स्मृति । नैकटिकाश्रमान्=निकटे वसन्तीति नैकटिका 'निकटे वसती'ति । नैकटिकानामाश्रमा नैकटिका न् ( ष० त० ), यद्वा नैकटिकाश्च ते आश्रमा नैकटिकाश्रमास्तान् ( क० धा० )। आट=अटेर्लिट् 'अत आदे' इत्यभ्यासस्य दीर्घत्वम्।

भावाऽर्थ—स्वशरीरायासजीविना हिंस्रेषु वधार्थं ज्वलदस्त्रधारी राम सोम यज्ञाऽनुष्ठा सत्कार कुर्वन् ब्राह्मणोत्तमै सह उत्तमब्राह्मणसभायुक्तान् समीपवर्त्याश्रमानगमत्।

भाषाऽर्थ—अपने शरीरको आयास देकर जीनेवालोंको मारनेवाले जन्तुओंपर अस्त्रप्रयोग करनेवाले रामचन्द्रजी सोमयाग करनेवालोंका सत्कारकर उत्तम ब्राह्मणोंके साथ वेदज्ञ ब्राह्मणोंकी सभासे युक्त निकटवर्ती आश्रमों में गये ॥ १२ ॥

युग्मम्

परेद्यव्यद्य पूर्वेद्युरन्येद्युश्चापि चिन्तयन्।
वृद्धिक्षयौ मुनीन्द्राणा प्रियम्भावुकतामगात् ॥ १३

आतिष्ठद्गु जपन्सन्ध्या प्रक्रान्तामायतीगवम् ।
प्रातस्तरा पतत्रिभ्य प्रबुद्ध प्रणमन् रविम् ॥ १४ ॥

अन्वय —( राम ) पतत्रिभ्य तरा प्रबुद्ध (सन्) आयतीगव प्रक्रान्ता सन्ध्याम् आतिष्ठद्गु जपन् रवि प्रणमन् परेद्यवि अद्य पूर्वेद्यु अन्येद्युश्चापि मुनीन्द्राणा वृद्धिक्षयौ चिन्तयन् प्रियम्भावुकताम् अगात् ।

प्रयोगप०—प्रबुद्धेन रविं प्रणमता वृद्धिक्षयौ चिन्तयता (तेन) प्रियम्भावुकता अगायि ।

व्याख्या—(राम =रामचन्द्र ) पतत्रिभ्य =पक्षिभ्य , प्रातस्तराम् =अतिप्रभाते, प्रबुद्ध =उत्थित (सन्), आयतीगव=गावा गोचगद् गोष्ठागमनकाले, प्रक्रान्ता प्रवृत्ता, सन्ध्या = सन्ध्याकालम् ( सन्ध्याकाले इत्यर्थ ), आतिष्ठद्गु=गोदोहनकालपर्यन्त जपन् = गायत्रीजप कुर्वन् , रवि = सूर्य, प्रणमन् = प्रणाम कुर्वन् , ( अपररात्रे आयतीगव ारभ्य तिष्ठद्गुकालपर्यन्त तिष्ठन्नेव सावित्रीं जपन् उदित सूर्य प्रणमन्नित्यर्थ ) परेद्यवि=परस्मिन् अहनि ( आगामिनीत्यर्थ ), अद्य = अस्मिन् अहनि, पूर्वेद्यु = पूर्वस्मिन् अहनि, अन्येद्युश्चापि = अन्यस्मिन् अहनि अपि ( सर्वदेत्यर्थ ), मुनीन्द्राणाम् = ऋषीणा वृद्धिक्षयौ = वृद्धिहानी, चिन्तयन् = ध्यायन् , प्रियम्भावुकताम्=ऋषीणा प्रियीभूतत्वम् , अगात्=प्राप्त (सर्वदा ऋषीणा योगक्षेमाऽनुसन्धानात्तेषामहरहरतिप्रियोऽभूदित्यर्थ )।

व्युत्पत्ति —पतत्रिभ्य =पतत्रमस्ति येषा ते पतत्रिण , तेभ्य (इनि ) 'पञ्चमी विभक्ते' इति पञ्चमी । 'पतत्रिपत्त्रिपतगपतत्पत्त्ररथाऽण्डजा ।' इत्यमर । प्रातस्तराम्=अतिशयेन प्रात प्रातस्तरा, प्रकर्षविवक्षाया तरप् , तदन्तात् 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' इत्याम् । आयतीगवम्=आयान्तीति आयत्य , आङ्पूर्वादिणो लट शत्रादेशे 'इणो यण्' इति यणि 'उगितश्च' इति ङीप् । आयत्यो (दोहाय आगच्छन्त्य ) गावो यस्मिन् काले आयतीगवम् , तस्मिन् 'तिष्ठद्गुप्रभृतीनि च' इत्यव्ययीभावत्वेन निपात । 'नाऽव्ययीभावादतोऽम्त्वपञ्चम्या' इति सप्तम्या अम्भाव । सन्ध्याम् = अहोरात्रस्य सन्धौ भवा ( वेला ) सन्ध्या ता 'तत्र भव' इति यत्प्रत्यय , यद्वा सम्यग् ध्यायन्ति अस्याम् ( वेलायाम् ) इति सन्ध्या, ताम् 'आतश्चोपसर्गे' इत्यङ् । आतिष्ठद्गु = तिष्ठन्ति गावो यस्मिन् ( काले ) दोहाय इति तिष्ठद्गु (दोहनकाल ) 'तिष्ठद्गुप्रभृतीनि च' इत्यव्ययीभावनिपातनात् साधुत्वम् । तिष्ठद्गुपर्यन्तम् आतिष्ठद्गु 'आङ् मर्यादाऽभिविध्यो' इति अव्ययीभाव । जपन्= जपतीति जपन् ( शतृप्रत्यय ) । 'जपन्नासीत सावित्रीं प्रत्यगातारकोदयात् । सन्ध्या प्राक्प्रातरेव हि तिष्ठेदासूर्यदर्शनात् ॥' इति स्मरणादिति भाव । परेद्यवि, अद्य

पूर्वेद्यु ,अन्येद्यु='सद्य परुत्परार्यैपम परेद्यव्यद्यपूर्वेद्युरन्येद्युर यतरेद्युरितरेद्यरपरेद्यरध रेद्युरुभयेद्युरुत्तरेद्यु ' इति निपातनात्सर्वत्र साधुत्व 'तद्धितश्चाऽसर्वविभक्ति ' इत्यव्ययत्वम् । मुनीन्द्राणा=मुनिषु इन्द्रा मुनीन्द्रास्तेषाम् ( स० त० ) वृद्धिक्षयौ=वृद्धिश्च क्षयश्च वृद्धिक्षयौ, तौ (द्वन्द्व )। प्रियम्भावुकताम्=अप्रिय प्रियो भवतीति प्रियम्भावुक , 'आढ्यसुभगे'त्याद्यनुवृत्तौ 'कर्तरि भुव खिष्णुच्खुकञौ' इति कर्तरि खुकञ्प्रत्यय , प्रियम्भावुकस्य भाव प्रियम्भावुकता, ताम् ( तल् ) ।

भावाऽर्थ —राम पक्षिभ्योऽपि अतिप्रभाते प्रबुध्य अपररात्रे गवा दोहार्थं गोष्ठागमनकालमारभ्य दोहनकालपर्यन्त सन्ध्याया गायत्रीजप कुर्वन् सूर्यं प्रणमन् आगामिनि, विद्यमाने, पूर्वस्मिन् , अन्यस्मिंश्च दिवसे ऋषीणा योगक्षेमचिन्तन कुर्वन् तेषा प्रियो बभूव ।

भाषाऽर्थ —रामचन्द्रजी पक्षियोंसे भी पहले उठकर गायोंके गोचरभूमिसे दोहनके लिये गोष्ठमें आनेके समयसे दोहनकालपर्यन्त सन्ध्यामें गायत्री जपकर सूर्योपस्थान करते हुए आगामी दिनमें, आज दिनमें, बीते हुए दिनमें तथा और दिनमें भी ऋषियोंकी लाभ-हानिकी चिन्ताकर उनके प्यारे हो गये ॥ १३–१४ ॥

ददृशे पर्णशालाया राक्षस्याऽभीकयाऽथ स ।
भार्योढ तमवज्ञाय तस्थे सौमित्रयेऽसकौ ॥ १५ ॥

अन्वय —अथ स पर्णशालायाम् अभीकया राक्षस्या ददृशे, असकौ भार्योढ तम् अवज्ञाय सौमित्रये तस्थे ।

प्रयोगप०—तमभीका राक्षसी ददर्श, असुकया तस्थे ।

व्याख्या—अथ = अनन्तर, स = रामचन्द्र , प [illegible] याम् = उटजे, अभी[illegible]क्या=कामुक्या, राक्षस्या = रक्ष स्त्रिया ( रावणानुजया शूर्पणखया ), ददृशे=दृष्ट । असकौ=कुत्सितेय, भार्योढम् = ऊढभार्य ( कृतोद्वाहम् ), त=रामचन्द्रम् , अवज्ञाय = तिरस्कृत्य, सौमित्रये = लक्ष्मणाय, तस्थे=स्वाऽभिप्राय ( मैथुनाऽभिलाषम् ) [illegible] स्थिता ।

व्युत्पत्ति —अभीकया = 'अनुकाऽभिकाऽभीक कमिता' इति निपात 'कम्र कामयिताऽभीक कमन कामनोऽभिक ।' इत्यमर । ददृशे=कर्मणि लिट् । असकौ= कुत्सिता असौ असकौ, 'अव्ययसर्व [illegible] कच्प्राक् टे ' इत्यकच् । भार्योढ = भार्या ऊढा येन स भार्योढस्तम् ( बहु० ) 'वाऽऽहिताग्न्यादिषु' इति निष्ठाया विकल्पेन परनिपात । सौमित्रये='तस्थे' इत्यनेन योगे 'श्लाघह्नुङ्स्थाशपा ज्ञीप्स्यमान ' इति सम्प्रदानत्वाच्चतुर्थी । तस्थे = तिष्ठते ( [illegible] ) कर्मकर्तरि लिट् 'प्रकाशनस्थेयाख्ययोश्च' इति प्र [illegible] आत्मनेपदम् ।

भावार्थ—अनन्तर कामुकी रावणाऽनुजा शूर्पणखा नाम राक्षसी राम पर्णशालाया विलोकयामास, च राम सपत्नीक विज्ञाय तमनादृत्य लक्ष्मणाय स्वाभिप्राय यन्ती स्थिता।

भाषार्थ—तब रामचन्द्रको पर्णशालामे रावणकी छोटी वहन शूर्पणखानामकी कामुकी राक्षसीने देखा। उसने रामचन्द्रजीकी पत्नी (सीता) के साथ देखकर तिरस्कार करके लक्ष्मणको अपना अभिप्राय जताया॥ १५॥

शूर्पणखाया रूप श्लोकत्रयेण वर्णयति—

दधाना बलिभ मध्य कर्णजाहविलोचना।
वाक्त्वचेनाऽतिसर्वेण चन्द्रलेखेव पक्षतौ॥ १६॥

अन्वय—बलिभ मध्य दधाना कर्णजाहविलोचना अतिसर्वेण वाक्त्वचेन पक्षतौ चन्द्रलेखा इव (असौ रघूत्तम प्रार्थयाञ्चक्रे इति (१९) एकोनविंशतितमश्लोकेन सह अन्वय)।

प्रयोगप०—दधानया कर्णजाहविलोचनया चन्द्रलेखया इव (अमुया रघूत्तम प्रार्थयाञ्चक्रे)।

व्याख्या—बलिभ = बलित्रययुक्त, मध्यम् = अवलग्न, दधाना = धारयन्ती, कर्णजाहविलोचना = श्रोत्राऽन्तनेत्रा (आयताक्षीत्यर्थ), अतिसर्वेण = सर्वाऽतिशायिना (सर्वोत्कृष्टेनेत्यर्थ), वाक्त्वचेन = वचनचर्मणा (मृदुभाषिणी मृद्वङ्गी चेत्यर्थ), पक्षतौ = पक्षमूले (प्रतिपदि इत्यर्थ) चन्द्रलेखा इव = चन्द्ररेखा इव (असौ रघूत्तम प्रार्थ )।

व्युत्पत्ति—बलिभ = बलयोऽस्मिन् सन्तीति बलिभस्त, 'तुन्दिबलिवटेर्भ' इति भप्रत्यय। कर्णजाहविलोचना = कर्णयोर्मूले कर्णजाहे, 'तस्य पाकमूले पील्वादिकर्णादिभ्य कुणब्जाहचौ' इति जाहच्प्रत्यय। कर्णजाहयोर्विलोचने यस्या सा (व्यधिकरणबहुव्रीहि)। अतिसर्वेण = सर्वमतिक्रान्तमतिसर्वं, तेन 'अत्यादय क्रान्ताद्यर्थे द्वितीयया' इति समास 'एकविभक्ति चाऽपूर्वनिपाते' इति प्रतिषेधात् उपसर्जनस्याऽपि सर्वशब्दस्य न पूर्वनिपात। वाक्त्वचेन = वाक् च त्वक् च वाक्त्वच, तेन (प्राण्यङ्गत्वात्समाहारद्वन्द्व) 'द्वन्द्वाच्चुदषहान्तात्समाहारे' इति टच्प्रत्यय, 'इत्थम्भूतलक्षणे' इति तृतीया। पक्षतौ = पक्षस्य मूल पक्षतिस्तस्या, 'पक्षात्ति' इति तिप्रत्यय, 'पक्षतिर्गरुतो मूल द्वयो प्रतिपदोरपि' इति यादव। चन्द्रलेखा = चन्द्रस्य लेखा (ष० त०)। उपमालङ्कार।

भावार्थ—बलित्रययुक्तमवलग्न धारयन्ती कर्णान्तविश्रान्तनयना मृद्वङ्गी मृदुभाषिणी प्रतिपदि स्थिता क्षीणा चन्द्ररेखेव असौ रघूत्तम प्रार्थयाञ्चक्रे।

भाषाऽर्थ —तीन वलियोंसे युक्त कमरवाली, दीर्घ नेत्रोंसे युक्त, मृदुभाषिणी और कोमलाङ्गी, प्रतिपदमें विद्यमान पतली चन्द्ररेखाके सदृश उस शूर्पणखाने लक्ष्मणसे प्रार्थना की ॥ १६ ॥

सुपाद् द्विरदनासोरूर्मृदुपाणितलाऽङ्गुलि ।
प्रथिमान दधानेन जघनेन घनेन सा ॥ १७ ॥

अन्वय —सुपाद् द्विरदनासोरू मृदुपाणितलाऽङ्गुलि प्रथिमान दधानेन घनेन जघनेन सा ( रघूत्तम प्रा ` ` )।

प्रयोगप०—सुपादा द्विरदनासोर्वा मृदुपाणितलाऽङ्गुल्या तया, ( रघूत्तम प्रा ` ` )।

व्याख्या—सुपात् = सुन्दरचरणा द्विरदनासोरू = हस्तिशुण्डासक्थि, मृदुपाणितलाऽङ्गुलि = कोमलकरतलाऽङ्गुलि, प्रथिमान = पृथुत्व, दधानेन = धारयता ( पृथुलेनेत्यर्थ ), घनेन = निबिडेन, जघनेन = कटिपुरोभागेन, ( उपलक्षिता ) सा = शूर्पणखा ( रघूत्तम प्रा ` ` )।

व्युत्पत्ति —सुपात् = शोभनौ पादौ यस्या सा ( बहु० ), 'सङ्ख्यासुपूर्वस्य' इति पादाऽन्तलोप 'पादोऽन्यतरस्याम्' इत्यस्य विकल्पत्वान्ङीबभाव । द्विरदनासोरू = रद्यते अनेनेति रद ( दन्त ) 'पुंसि सञ्ज्ञाया घ प्रायेण' इति घ । द्वौ रदौ ( दन्तौ ) यस्य स द्विरद ( बहु० ), तस्य नासे द्विरदनासे ( ष० त० ), ते इव ऊरू यस्या सा ( बहु० )। 'ऊरूत्तरपदादौपम्ये' इत्यूङ्प्रत्यय । 'सक्थि क्लीबे पुमानूरु' इत्यमर । हस्तिशुण्डावद् वृत्तानुपूर्वोरूरित्यर्थ । मृदुपाणितलाऽङ्गुलि = पाण्योस्तले पाणितले ( ष० त० ) पाणितले च अङ्गुलयश्च पाणितलाऽङ्गुलि (प्राण्यङ्गत्वात्समाहारद्वन्द्व )। अङ्गुलिशब्दस्य घिसञ्ज्ञकत्वे अल्पाच्तरत्वेऽपि पूर्वनिपातशास्त्राऽनित्यत्वात् परनिपात । मृदु पाणितलाङ्गुलि यस्या सा ( बहु० )। प्रथिमान = पृथोर्भाव प्रथिमा, तम् [ इमनिच्प्रत्यय ]।

भावाऽर्थ —सुन्दरचरणा हस्तिशुण्डासदृशवृत्तानुपूर्वोरुशोभिता कोमलकरतलाऽङ्गुलि पृथु नविराजिता सा राक्षसी रघूत्तम प्रार्थयाञ्चक्रे।

भाषाऽर्थ —सुन्दर चरणोंसे युक्त, हाथीकी सूडकी तरह वर्तुल और अनुपूर्व [ पूर्वानुगत ] ऊरूसे शोभित, कोमल और अङ्गुलियोंसे विराजित तथा स्थूल और निबिड जघनवाली उस राक्षसीने लक्ष्मणसे प्रार्थना की ॥ १७ ॥

उभ्रस दधती वक्त्र दल्लोलकुण्डलम् ।
कुर्वाणा पश्यत शयून् स्रग्विणी सुहसानना ॥ १८ ॥

अन्वय —उभ्रस शुद्धदल्लोलकुण्डल वक्त्र दधती, पश्यत शयून् कुर्वाणा, स्रग्विणी, सुहसानना [ असौ रघूत्तम प्रार्थयाञ्चक्रे ]।

प्रयोगः—दधत्या कुर्वाणया स्रग्विण्या सुहसाऽऽननया ( अमुया रघूत्तम प्रार्थयाञ्चक्रे ) ।

व्याख्या—उन्नसम् = उन्नतनासिकं, शुद्धदत् = शुक्लदन्तयुक्तं, लोलकुण्डलं = चञ्चलकर्णवेष्टनं, वक्त्रं = मुखं, दधती = धारयन्ती, पश्यतः = प्रेक्षमाणान् ( जनानिति शेषः ), शयून् = सानन्दान्, कुर्वाणा = विदधती, स्रग्विणी-माल्यवती, सुहसानना = सस्मितवदना ( असौ रघूत्तमं प्रार्थयाञ्चक्रे ) ।

व्युत्पत्तिः—उन्नसम् = उन्नता नासिका यस्य तत् उन्नसं, तत् (बहु०), "उपसर्गाच्च" इत्यच्, नासिकाया नसादेशश्च । शुद्धदत् = शुद्धा दन्ता यस्य तत् शुद्धदत्, तत् ( बहु० ), "अग्राऽन्तशुद्धशुभ्रवृषवराहेभ्यश्च" इति दन्तस्य दत्रादेशः । लोलकुण्डलं = लोले कुण्डले यस्य तत् लोलकुण्डलं, तत् ( बहु० ), "कुण्डलं कर्णवेष्टनम्" इत्यमरः, वक्त्रम् = उच्यते अनेनेति वक्त्रं, तत् ( औणादिकः त्रः )। दधती = दधातीति दधती ( शतृप्रत्ययः ), "नाभ्यस्ताच्छतुः" इति नुमभावः । शयून् = शम् ( सुखम् ) अस्ति येषां ते शयवः, तान्, 'कंशंभ्यां बभयुस्तितुतयसः" इति युस् । स्रग्विणी = स्रगस्ति यस्याः सा स्रग्विणी, "अस्मायामेधास्रजो विनिः" इति विनिप्रत्ययः तदन्तात्स्त्रीत्वविवक्षायाम् "ऋन्नेभ्यो ङीप्" इति ङीप् । सुहसानना = हसनं हसः "स्वनहसोर्वा" इति विकल्पेन अप्प्रत्ययः । शोभनो हसो यस्मिंस्तत् सुहसं ( बहु० ), तत् आननं यस्याः सा ( बहु० ) ।

भावाऽर्थः—उन्नतनासिकायुक्ता शुक्लदन्तोपेता कुण्डलाऽलङ्कृता पश्यतो जनान् सानन्दान् विदधती माल्यधारिणी सस्मितवदना असौ राक्षसी रघूत्तमं प्रार्थयाञ्चक्रे ।

भाषाऽर्थः—ऊँची नासिकावाली, सफेद दन्तोंसे शोभित, कुण्डलाऽलङ्कृत, देखनेवाले पुरुषोंको आनन्दित करनेवाली, माल्यधारिणी तथा मन्दहास्य करती हुई उस राक्षसीने लक्ष्मणसे प्रार्थना की ॥ १८ ॥

प्राप्य चञ्चूर्यमाणाऽसौ पतीयन्ती रघूत्तमम् ।
अनुका प्रार्थयाञ्चक्रे प्रियाकर्तुं प्रियंवदा ॥ १९ ॥

अन्वयः—अनुका पतीयन्ती चञ्चूर्यमाणा असौ रघूत्तमं प्राप्य प्रियंवदा ( सती ) प्रियाकर्तुं प्रार्थयाञ्चक्रे ।

प्रयोगः—अनुकया पतीयन्त्या चञ्चूर्यमाणया अमुया प्रियंवदया ( सत्या ) ( रघूत्तमः ) प्रार्थयाञ्चक्रे ।

व्याख्या—अनुका = कामुकी, पतीयन्ती = आत्मनः पतिमिच्छन्ती, चञ्चूर्यमाणा = इतस्ततो गर्हितं चरन्ती, असौ = राक्षसी (शूर्पणखेत्यर्थः), रघूत्तमं = राघव-

भाषाऽर्थ —तीन वलियोंसे युक्त कमरवाली, दीर्घ नेत्रोंसे युक्त, मृदुभाषिणी और कोमलाङ्गी, प्रतिपदमें विद्यमान पतली चन्द्ररेखाके सदृश उस शूर्पणखाने लक्ष्मणसे प्रार्थना की ॥ १६ ॥

सुपाद् द्विरदनासोरूर्मृदुपाणितलाऽङ्गुलि ।
प्रथिमान दधानेन जघनेन घनेन सा ॥ १७ ॥

अन्वय —सुपाद् द्विरदनासोरू मृदुपाणितलाऽङ्गुलि प्रथिमान दधानेन घनेन जघनेन सा ( रघूत्तम प्रा ` ` )।

प्रयोगप०—सुपादा द्विरदनासोर्वा मृदुपाणितलाऽङ्गुल्या तया, ( रघूत्तम प्रार्थयाञ्चक्रे )।

व्याख्या—सुपात् = सुन्दरचरणा द्विरदनासोरू = हस्तिशुण्डासक्थि, मृदुपाणितलाऽङ्गुलि = कोमलकरतलाऽङ्गुलि, प्रथिमान = पृथुत्व, दधानेन = धारयता ( पृथुलेनेत्यर्थ ), घनेन = निबिडेन, जघनेन = कटिपुरोभागेन, ( उपलक्षिता ) सा = शूर्पणखा ( रघूत्तम प्रार्थयाञ्चक्रे )।

व्युत्पत्ति —सुपात् = शोभनौ पादौ यस्या सा ( बहु० ), 'सङ्ख्यासुपूर्वस्य' इति पादाऽन्तलोप 'पादोऽन्यतरस्याम्' इत्यस्य विकल्पत्वान्ङीवभाव । द्विरदनासोरू = रद्यते अनेनेति रद ( दन्त ) 'पुंसि सञ्ज्ञाया घ प्रायेण' इति घ । द्वौ रदौ ( दन्तौ ) यस्य स द्विरद ( बहु० ), तस्य नासे द्विरदनासे ( ष० त० ), ते इव ऊरू यस्या सा ( बहु० )। 'ऊरूत्तरपदादौपम्ये' इत्यूङ्प्रत्यय । 'सक्थि क्लीबे पुमानूरु' इत्यमर । हस्तिशुण्डावद् वृत्तानुपूर्वोरूरित्यर्थ । मृदुपाणितलाऽङ्गुलि = पाण्योस्तले पाणितले ( ष० त० ) पाणितले च अङ्गुलयश्च पाणितलाऽङ्गुलि (प्राण्यङ्गत्वात्समाहारन्द्व )। अङ्गुलिशब्दस्य घिसञ्ज्ञकत्वे अल्पाच्तरत्वेऽपि पूर्वनिपातशास्त्राऽनित्यत्वात् परनिपात । मृदु पाणितलाङ्गुलि यस्या सा ( बहु० )। प्रथिमान = पृथोर्भाव प्रथिमा, तम् [ इमनिच्प्रत्यय ]।

भावाऽर्थ —सुन्दरचरणा हस्तिशुण्डासदृशवृत्तानुपूर्वोरुशोभिता कोमलकरतलाऽङ्गुलि पृथुघनजघनविराजिता सा राक्षसी रघूत्तम प्रार्थयाञ्चक्रे।

भाषाऽर्थ —सुन्दर चरणोंसे युक्त, हाथीकी सूंडकी तरह वर्तुल और अनुपूर्व [ पूर्वानुगत ] ऊरुसे शोभित, कोमल करतल और अङ्गुलियोंसे विराजित तथा स्थूल और निबिड जघनवाली उस राक्षसीने लक्ष्मणसे प्रार्थना की ॥ १७ ॥

उन्नस दधती वक्त्र शुद्धदल्लोलकुण्डलम् ।
कुर्वाणा पश्यत शयून् स्रग्विणी सुहसानना ॥ १८ ॥

अन्वय —उन्नस शुद्धदल्लोलकुण्डल वक्त्र दधती, पश्यत शयून् कुर्वाणा, स्रग्विणी, सुहसानना [ असौ रघूत्तम प्रार्थयाञ्चक्रे ]।

प्रयोगप०—दधत्या कुर्वाणया स्रग्विण्या सुहसाऽऽननया ( अमुया रघूत्तम प्रार्थयाञ्चक्रे )।

व्याख्या—उन्नसम् = उन्नतनासिक, शुद्धदत् = शुक्लदन्तयुक्त, लोलकुण्डल = चञ्चलकर्णवेष्टन, वक्त्र = मुख, दधती = धारयन्ती, पश्यत = प्रेक्षमाणान् ( जनानिति शेष ), शयून् = सानन्दान्, कुर्वाणा = विदधती, स्रग्विणी - माल्यवती, सुहसानना = सस्मितवदना ( असौ रघूत्तम प्रार्थयाञ्चक्रे )।

व्युत्पत्ति—उन्नसम् = उन्नता नासिका यस्य तत् उन्नस, तत् (बहु०), "उपसर्गाच्च" इत्यच्, नासिकाया नसादेशश्च । शुद्धदत = शुद्धा दन्ता यस्य तत् शुद्धदत्, तत् ( बहु० ), "अग्राऽन्तशुद्धशुभ्रवृषवराहेभ्यश्च" इति दन्तस्य दत्रादेश । लोलकुण्डल = लोले कुण्डले यस्य तत् लोलकुण्डल, तत् ( बहु० ), "कुण्डल कर्णवेष्टनम्" इत्यमर, वक्त्रम् = उच्यते अनेनेति वक्त्र, तत् ( औणादिक त्र् )। दधती = दधातीति दधती ( शतृप्रत्यय ), "नाभ्यस्ताच्छतु" इति नुमभाव । शयून् = शम ( सुखम् ) अस्ति येषा ते शयव, तान्, 'कशभ्या बभयुस्तितुतयस" इति युस् । स्रग्विणी = स्रगस्ति यस्या सा स्रग्विणी, "अस्मायामेधास्रजो विनि" इति विनिप्रत्यय तदन्तात्स्त्रीत्वविवक्षायाम् "ऋन्नेभ्यो ङीप्" इति ङीप् । सुहसानना = हसन हस "स्वनहसोर्वा" इति विकल्पेन अप्प्रत्यय । शोभनो हसो यस्मिंस्तत् सुहस ( बहु० ), तत् आनन यस्या सा ( बहु० )।

भावार्थ—उन्नतनासिकायुक्ता शुक्लदन्तोपेता कुण्डलाऽलङ्कृता पश्यतो जनान् सानन्दान् विदधती माल्यधारिणी सस्मितवदना असौ राक्षसी रघूत्तम प्रार्थयाञ्चक्रे।

भाषार्थ—ऊँची नासिकावाली, सफेद दन्तोंसे शोभित, कुण्डलाऽलङ्कृत, देखनेवाले पुरुषोंको आनन्दित करनेवाली, माल्यधारिणी तथा मन्दहास्य करती हुई उस राक्षसीने लक्ष्मणसे प्रार्थना की ॥ १८ ॥

प्राप्य चञ्चूर्यमाणाऽसौ पतीयन्ती रघूत्तमम् ।
अनुका प्रार्थयाञ्चक्रे प्रियाकर्तुं प्रियंवदा ॥ १९ ।

अन्वय—अनुका पतीयन्ती चञ्चूर्यमाणा असौ रघूत्तम प्राप्य प्रियवदा ( सती ) प्रियाकर्तुं प्रार्थयाञ्चक्रे।

प्रयोगप०—अनुकया पतीयन्त्या चञ्चूर्यमाणया अमुया प्रियवदया ( सत्या ) रघूत्तम ) प्रार्थयाञ्चक्रे।

व्याख्या—अनुका = कामुकी, पतीयन्ती = आत्मन पतिमिच्छन्ती, चञ्चूर्यमाणा = इतस्ततो गर्हित चरन्ती, असौ = राक्षसी (शूर्पणखेत्यर्थ ), रघूत्तमं = राघव-

श्रेष्ठ ( लक्ष्मणमित्यर्थ ), प्राप्य = आसाद्य, प्रियवदा = प्रियभाषिणी ( सती ), प्रियाकर्तुम् = अनुकूलयितु, प्रार्थयाञ्चक्रे = प्रार्थितवती ।

व्युत्पत्ति —अनुका = अनुकामयते इति अनुका, "अनुकाऽभिकाऽभीक कमिता" इत्यनूपसर्गात् कन्प्रत्ययाऽन्तो निपात । पतीयन्ती = "सुप आत्मन क्यच्" इति क्यच् "अकृत्सार्वधातुकयोर्दीर्घ" इति दीर्घत्व तत शतरि ङीप्। चञ्चूर्यमाणा = "लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम्" इति भावगर्हाया चरेर्यङि "चरफलोश्च" इत्यभ्यासस्य नुक् "उत्परस्याऽत" इत्युत्व "हलि च" इति दीर्घत्व च। रघूत्तम = रघुषु ( लक्षणया रघुवंश्येषु ) उत्तमो रघूत्तमस्तम् ( स० त० )। प्रियवदा = प्रिय वदतीति प्रियवदा, "प्रियवशे वद खच्" इति खचि मुमागम । प्रियाकर्तुं = "सुखप्रियादानुलोम्ये" इति डाच्। प्रार्थयाञ्चक्रे = "कास्प्रत्ययादाममन्त्रे लिटि" इत्याम्प्रत्यय ।

भावार्थ —कामुकी गर्हितमाचरन्ती असौ राक्षसी लक्ष्मण प्राप्य प्रियभाषिणी सती वल्लभत्वेन अनुकूलयितु प्रार्थितवती ।

भाषार्थ—कामुकी, पतिकी इच्छा तथा कुत्सित आचरण करती हुई उस [स्त्री]ने लक्ष्मणके पास जाकर प्रिय वचन बोलकर उनको पति बनाने के लिए प्रार्थना की ॥ १९ ॥

प्रार्थनाप्रकारमाह—

सौमित्रे ! मामुपायस्था कम्रामिच्छुर्वशवदाम् ।
स्वभोगीना सहचरीमशङ्क पुरुषायुषम् ॥ २० ॥

अन्वय —"सौमित्रे ! कम्रा वशवदा स्वभोगीना पुरुषायुष सहचरीं माम् इच्छु अशङ्क ( सन् ) उपायस्था " ।

प्रयोगप०—इच्छुना अशङ्केन ( त्वया ) [ अहम् ] उपायसि ।

व्याख्या—हे सौमित्रे = हे लक्ष्मण ! कम्रा = कामयित्री, वशवदा = वशवर्तिनीं, स्वभोगीनाम् = आत्मभोगहिता ( त्वद्भोगीनामिति पाठे त्वच्छरीरहिताम् अवैधव्यादिलक्षणयोगामित्यर्थ ), पुरुषायुष यावज्जीवन, सहचरीं = सहगामिनी, मा = सुन्दरीम्, इच्छु = अभिलाषुक , अशङ्क = नि शङ्क ( सन् ), उपायस्था = उपयच्छस्व ( परिणयेत्यर्थ )।

व्युत्पत्ति —सौमित्रे = सुमित्राया अपत्य पुमान् सौमित्रिस्तत्सम्बुद्धौ "बाह्वादिभ्यश्च" इतीञ् । कम्रा = "नमिकम्पिस्म्यजसकमहिंसदीपो र" इति रप्रत्यय , तदन्तात "अजाद्यतष्टाप्" इति टाप् । वशवदा = वश वदतीति वशवदा, ताम् ( खच्प्रत्ययो मुमागमश्च )। स्वभोगीना = स्वस्य भोग स्वभोग ( ष० त० ), तस्मै हिता स्वभो-

गीना, ताम् "आत्मन्विश्वजनभोगोत्तरपदात्ख" इति खप्रत्यय । पुरुषायुष=पुरुषस्य आयु पुरुषायुष, तत् "अचतुरे" त्यादिना अच्प्रत्ययान्तो निपात "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया। सहचरीं=चरतीति चरी, पचादिषु "चरट्" इति टित्करणान्ङीप्, तदन्तेन सहशब्दस्य "सुप्सुपा" इति समास —इति मल्लिनाथ । जयमङ्गलमते-सह चरतीति सहचरी, "भिक्षासेनाऽऽदायेषु च" इत्यत्र चकारात् टप्रत्यय । उभयत्र टित्त्वान्ङीत्। माम्='इच्छु' पदेन योगे "न लोकाव्ययनिष्ठाखलर्थतृनाम्' इति षष्ठीप्रतिषेध । इच्छु =इच्छतीति इच्छु "विन्दुरिच्छु" इति निपात । अशङ्क =अविद्यमाना शङ्का यस्य स ( नञ् बहु० )। उपायस्था ='उपाद्यम स्वकरणे' इत्यात्मनेपदम्, स्वकरण विवाह । "आशंसायां भूतवच्च" इति भूतवत्प्रत्ययो लुङ्, "विभाषोपयमने" इति पक्षे कित्वाऽभावान्नाऽनुनासिकलोप.।

भावाऽर्थ —हे सुमित्रानन्दन! कामयित्रीं त्वदधीनामात्मभोगहितां यावज्जीवन सहचारिणीं मामभिलाषुक सन् परिणय ।

भाषाऽर्थ —'हे लक्ष्मण! कामना करनेवाली, तुम्हारी अधीन, अपने भोगके लिए हित और जीवितकालपर्यन्त सहचारिणी बनानेवाली मेरे इच्छुक होकर विवाह करो' ॥ २० ॥

तामुवाच स गौष्ठीने वने स्त्रीपुंसभीषणे।
असूर्यम्पश्यरूपा त्वं किमभीरुररार्यसे ॥ २१ ॥

अन्वय —स ताम् उवाच—'असूर्यम्पश्यरूपा त्वं गौष्ठीने स्त्रीपुंसभीषणे वने किम् अभीरु ( सती ) अरार्यसे।

प्रयोगप०—तेन सा ऊचे—'असूर्यम्पश्यरूपया त्वया अभीर्वा ( सत्या ) किम् अरार्यते ?

व्याख्या—स =लक्ष्मण , ता=राक्षसीम्, उवाच=अकथयत्, ( हे मुग्धे! ) असूर्यम्पश्यरूपा=सूर्यकिरणाऽसंस्पृष्टरूपा, त्वं=भवती, गौष्ठीने=भूतपूर्वगोष्ठे, स्त्रीपुंसभीषणे=नरनारीभयजनके, वने=अरण्ये, किं=किमर्थम्, अभीरु=अभीता ( सती ), अरार्यसे=अटाट्यसे ( अत्यर्थमटसीति भाव )।

व्युत्पत्ति —असूर्यम्पश्यरूपा=न सूर्यं पश्यतीति असूर्यम्पश्यम्, 'असूर्यललाटयोर्दृशितपो' इति असूर्यशब्दोपपदात् दृशे खश्प्रत्ययो मुमागमश्च, 'पाघ्राध्मे' त्यादिना दृशे पश्यादेश । असूर्यमिति असमर्थसमास, दृशिना नञ सम्बन्धात्। असूर्यम्पश्य रूप यस्या सा ( बहु० )। गौष्ठीने=भूतपूर्व गोष्ठम् ( इदानीं व्यालाक्रान्तम् ) गौष्ठीन, तस्मिन् 'गोष्ठात्खञ्भूतपूर्वे' इति खञ्प्रत्यय ( ञित्वेन आदिवृद्धिश्च )। "गौष्ठीन भूतपूर्वकम्।" इत्यमर , स्त्रीपुंसभीषणे=स्त्री च पुमांश्च स्त्रीपुंसौ

(द्वन्द्व) "अचतुरे" त्यादिना अच्प्रत्ययान्तो निपात । "जात्याख्यायामेकस्मिन्बहु वचनमन्यतरस्याम्" इति विग्रहे जातावेकवचनम् । भीषयते इति भीषण, नन्द्यादित्वाल्ल्युप्रत्यय, कर्तरि ल्युडिति जयमङ्गलाव्याख्याने "भीषणा तामयोजयत् ।" इति टाबन्तप्रयोगविरोध इति मल्लिनाथ । स्त्रीपुंसयोर्भीषणे ( ष० त० ) । अभीरु = भयशीला भीरु, 'ञिभी भये' इति धातो 'भिय क्रुक्लुकनौ' इति क्रुप्रत्यय । न भीरु अभीरु ( नञ्० ) । अरार्यसे = ऋ गतौ' इति धातो "सूचिसूत्री" त्यादिना यङ् 'यङि च' इति गुण, 'नन्द्रा संयोगादय' इति प्रतिषेधात् द्वितीयैकाचो द्विर्भावे हलादि शेषे "दीर्घोऽकित" इत्यभ्यासदीर्घ ।

भावाऽर्थ —लक्ष्मण शूर्पणखामुवाच—मुग्धे ! असूर्यम्पश्यरूपवती कोमलाङ्गी त्व भूतपूर्वगोष्ठे नरनारीभयोत्पादके अरण्ये किमर्थमभीता सती अत्यर्थमटसि ।

छभाषाऽर्थछ लक्ष्मणने शूर्पणखासे कहा—हे मुग्धे ! सदा अन्त पुरमें रहनेसे सूर्यको नही देखनेवाली तुम, इस पहलेका गोष्ठ परन्तु अभी स्त्री और पुरुषोंको भय पैदा करनेवाले वनमें क्यों निर्भय होती हुई बार बार घूमती हो ॥ २१ ॥

मानुषानभिलष्यन्ती रोचिष्णुर्दिव्यधर्मिणी ।
त्वमप्सरायमाणेह स्वतन्त्रा कथमञ्चसि ॥ २२ ॥

अन्वय —रोचिष्णु दिव्यधर्मिणी अप्सरायमाणा त्वम् इह स्वतन्त्रा मानुषान् अभिलष्यन्ती कथम् अञ्चसि ।

प्रयोगप०—रोचिष्णवा दिव्यधर्मिण्या अप्सरायमाणया त्वया इह स्वतन्त्रया अभिलष्यन्त्या कथम् अञ्च्यते ।

व्याख्या—रोचिष्णु = दीप्तिमती, दिव्यधर्मिणी = देवधर्मसम्पन्ना ( लोकोत्तररूपलावण्योपेतेत्यर्थ ), अप्सरायमाणा = अप्सर कल्पा, त्व = भवती, इह=अस्मिन् ( वने इति शेष ), स्वतन्त्रा = स्वच्छन्दा ( एकाकिनीत्यर्थ ), मानुषान्=मानवान् ( नीचानिति भाव ), अभिलष्यन्ती=अभिलषन्ती ( इच्छन्तीत्यर्थ ), कथम् = किमर्थम्, अञ्चसि = अटसि ।

व्युत्पत्ति —रोचिष्णु =रोचनशीला रोचिष्णु, 'अलङ्कृञि' त्यादिना इष्णुच् । दिव्यधर्मिणी = दिवि भवा दिव्या, 'द्युप्रागपागुदक्प्रतीचो यत्' इति यत्प्रत्यय । दिव्याना धर्मा ( रूपलावण्यादय ) दिव्यधर्मा ( ष० त० ), ते सन्ति अस्या सा दिव्यधर्मिणी, 'धर्मशीलवर्णाऽन्ताच्च' इतीनि, तदन्तान्ङीप । अप्सरायमाणा = अप्सरा इव आचरतीति 'कर्तु क्यङ् सलोपश्च' इति क्यङन्ताल्लट शानजादेश 'ओजसोऽप्सरसो नित्यम्' इति नित्यसलोप । स्वतन्त्रा = स्व ( आत्मा ) तन्त्र ( प्रधानम् ) यस्या सा ( बहु० ), 'स्वतन्त्रोऽपावृत स्वैरी स्वच्छन्दो नि ह ।'

इत्यमर । मानुषान्=मनोरपत्यानि पुमांसो मानुषास्तान्, 'मनोर्जातावन्यतौ षुक् च' इति अन्प्रत्यय षुगागमश्च । अभिलष्यन्ती=अभिपूर्वात् 'लष कान्तौ' इति धातोर्लट् शत्रादेशस्तदन्तान्ङीप्, 'वा भ्राशम्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलष' इति विकल्पेन श्यन्।

भावार्थ—दीप्तिमती लोकोत्तररूपलावण्योपेता अप्सर सदृशी त्वमत्र वने एकाकिनी मनुष्यानभिलषन्ती किमर्थं भ्रमसि।

भाषार्थ—दीप्ति-सम्पन्न, लोकोत्तर रूप और लावण्यसे युक्त, अप्सरा के सदृश तुम इस वन मे अकेली रहकर मनुष्योंका अभिलाप करती हुई क्यों घूम रही हो? ॥ २२ ॥

उग्रम्पश्याऽऽकुलेऽरण्ये शालीनत्वविवर्जिता ।
कामुकप्रार्थनापट्वी पतिवत्नी कथ न वा ॥ २३ ॥

अन्वय—उग्रम्पश्याऽऽकुले अरण्ये शालीनत्वविवर्जिता कामुकप्रार्थनापट्वी (त्वम्) पतिवत्नी कथ न वा?

योगप०—शालीनत्वविवर्जितया कामुकप्रार्थनापट्व्या (त्वया) पतिवत्न्या कथ न वा (भूयते)।

व्याख्या—उग्रम्पश्याऽऽकुले=हिंस्रसङ्कीर्णे, अरण्ये=वने, शालीनत्वविवर्जि- =अधाष्टर्यरहिता (धृष्टा सतीत्यर्थ) कामुकप्रार्थनापट्वी=काम्यनुनयनिपुणा, ) पतिवत्नी=जीवत्पतिका, कथ=केन प्रकारेण, न वा=न वा।

। उग्रम्पश्याऽऽकुले=उग्र पश्यन्तीति उग्रम्पश्या (हिंस्रा), 'उग्र- इति निपात । उग्रम्पश्यै आकुलम् उग्रम्पश्याऽऽकुल, त०)। शालीनत्वविवर्जिता=शालाप्रवेशमर्हतीति शालीन (अधृष्ट) अधृष्टाकार्ययो' इति खञ्प्रत्ययान्तो निपात । शालीनस्य भाव-

(द्वन्द्व ) "अचतुरे" त्यादिना अच्प्रत्ययान्तो निपात । "जात्याख्यायामेकस्मिन्बहु वचनमन्यतरस्याम्" इति विग्रहे जातावेकवचनम् । भीषयते इति भीषण, नन्द्यादित्वाल्ल्युप्रत्यय , कर्तरि ल्युडिति जयमङ्गलाव्याख्याने "भीषणा तामयोजयत् ।" इति टाबन्तप्रयोगविरोध इति मल्लिनाथ । स्त्रीपुंसयोर्भीषणे ( प० त० ) । अभीरु= भयशीला भीरु , 'ञिभी भये' इति धातो 'भिय क्रुक्लुकनौ' इति क्रुप्रत्यय । न भीरु अभीरु ( नञ्० ) । अरार्यसे = ऋ गतौ' इति धातो 'सूचिसूत्री" त्यादिना यङ् 'यङि च' इति गुण , 'नन्द्रा संयोगादय ' इति प्रतिषेधात् द्वितीयैकाचो द्विर्भावे हलादि शेषे "दीर्घोऽकित " इत्यभ्यासदीर्घ ।

भावाऽर्थ —लक्ष्मण शूर्पणखामुवाच—मुग्धे ! असूर्यम्पश्यरूपवती कोमलाङ्गी त्व भूतपूर्वगोष्ठे नरनारीभयोत्पादके अरण्ये किमर्थमभीता सती अत्यर्थमटसि ।

॥भाषाऽर्थ॥ लक्ष्मणने शूर्पणखासे कहा—हे मुग्धे ! सदा अन्त पुरमें रहनेसे सूर्यको नहीं देखनेवाली तुम, इस पहलेका गोष्ठ परन्तु अभी स्त्री और पुरुषोंको भय पैदा करनेवाले वनमें क्यों निर्भय होती हुई बार बार घूमती हो ॥ २१ ॥

मानुषानभिलष्यन्ती रोचिष्णुर्दिव्यधर्मिणी ।
त्वमप्सरायमाणेह स्वतन्त्रा कथमञ्चसि ॥ २२ ॥

अन्वय —रोचिष्णु दिव्यधर्मिणी अप्सरायमाणा त्वम् इह स्वतन्त्रा मानुषान् अभिलष्यन्ती कथम् अञ्चसि ।

प्रयोगप०—रोचिष्णवा दिव्यधर्मिण्या अप्सरायमाणया त्वया इह स्वतन्त्रया अभिलष्यन्त्या कथम् अञ्च्यते ।

व्याख्या—रोचिष्णु = दीप्तिमती, दिव्यधर्मिणी = देवधर्मसम्पन्ना ( लोकोत्तररूपलावण्योपेतेत्यर्थ ), अप्सरायमाणा = अप्सर कल्पा, त्व = भवती, इह=अस्मिन् ( वने इति शेष ), स्वतन्त्रा = स्वच्छन्दा ( एकाकिनीत्यर्थ ), मानुषान्=मानवान् ( नीचानिति भाव ), अभिलष्यन्ती=अभिलषन्ती ( इच्छन्तीत्यर्थ ), कथम् = किमर्थम्, अञ्चसि = अटसि ।

व्युत्पत्ति —रोचिष्णु =रोचनशीला रोचिष्णु , 'अलङ्कृञ्' त्यादिना इष्णुच् । दिव्यधर्मिणी = दिवि भवा दिव्या , 'द्युप्रागपागुदक्प्रतीचो यत्' इति यत्प्रत्यय । दिव्याना धर्मा ( रूपलावण्यादय ) दिव्यधर्मा ( ष० त० ), ते सन्ति अस्या सा दिव्यधर्मिणी, 'धर्मशीलवर्णाऽन्ताच्च' इतीनि , तदन्तान्ङीप । अप्सरायमाणा = अप्सरा इव आचरतीति 'कर्तु क्यङ् सलोपश्च' इति क्यङन्ताल्लट शानजादेश 'ओजसोऽप्सरसो नित्यम्' इति नित्यसलोप । स्वतन्त्रा = स्व ( आत्मा ) तन्त्र ( प्रधानम् ) यस्या सा ( बहु० ), 'स्वतन्त्रोऽपावृत स्वैरी स्वच्छन्दो निरवग्रह ।'

मुखम्=आनन, कार्णवेष्टकिक=कुण्डलशोभित, यस्य=रामस्य, पाणी=हस्तौ, सङ्ग्रामे=युद्धे, सर्वकर्मीणौ=धनुराकर्षणादिव्यापकौ (सर्वकर्मसमर्थावित्यर्थः) औपजानुकौ=जानुसमीपभवौ (आजानुलम्बिनावित्यर्थः, एतेन शौर्यभाग्यसम्पत्तिरुक्ता)।

व्युत्पत्ति —चान्दनिकं=चन्दनेन सम्पादि चान्दनिक (चन्दनेन अवश्य शोभत इत्यर्थः), 'सम्पादिनि' इति ठञ्प्रत्यय । 'गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम् ।' इत्यमर । कार्णवेष्टकिक=कर्णयोर्वेष्टके कर्णवेष्टके कुण्डले, (ष० त०) ताभ्या सम्पादि कार्णवेष्टकिक, पूर्वसूत्रेण ठञ् । सर्वकर्मीणौ=सर्वाणि च तानि कर्माणि सर्वकर्माणि (क० धा०), सर्वकर्माणि व्याप्नुत इति सर्वकर्मीणौ ' दि पथ्यङ्कर्मपत्रपात्र व्याप्नोति' इति खप्रत्यय । औपजानुकौ=जान्वो समीपमुपजानु (समीपार्थे अव्ययीभाव), 'जानूरुपर्वाष्ठीवदस्त्रियाम्' इत्यमर । उपजानु (जानु-समीपे) भवौ औपजानुकौ, 'उपजानूपकर्णोपनीवेष्ठक्' इति ठक्प्रत्यय, 'इसुसुक्तान्तात्क' इति क ।

भावार्थ —यस्य शरीर चन्दनशोभित, मुख कुण्डलाऽलङ्कृत, यस्य पाणी युद्धे सर्वकर्मसमर्थौ तथा आजानुलम्बिनौ च वर्तेते ।

भाषार्थ —जिनका शरीर चन्दनसे और मुख कुण्डलोंसे शोभित है, जिनके हाथ संग्राममें सब कर्मोंमें समर्थ एव जानुपर्यन्त लम्बे हैं ॥ २५ ॥

बद्धा दुर्बलरक्षाऽर्थमसिर्येनौपनीविक ।
यश्चापमाश्मनप्रख्य सेषु धत्तेऽन्यदुर्वहम् ॥ २६ ॥

अन्वय —येन दुर्बलरक्षाऽर्थम् औपनीविक असि बद्ध य प्रख्यं सेषुम् अन्यदुर्वह चापं धत्ते ।

प्रयोगप०—य औपनीविकमसि बद्धवान् । येन आश्मनप्रख्य सेषुरन्यदुर्वह-श्चापो धीयते ।

व्याख्या—येन=रामेण, दुर्बलरक्षाऽर्थम्=शक्तिहीनत्राणार्थम्, औपनीविक=नीवीसमीपस्थ, असि=खड्ग, बद्ध=निबद्ध (कटिनिबद्ध इत्यर्थः), य=राम आश्मनप्रख्य=प्रस्तरसदृश (दृढमित्यर्थः), सेषु=सबाणम्, अन्यदुर्वहम्=अपरदुर्धार्यं, चाप=धनु धत्ते=धारयति (महाधानुष्कोऽयमित्यर्थः)।

व्युत्पत्ति —दुर्बलरक्षाऽर्थं=दुष्ट (मन्दत्वादित्यर्थः) बल येषा ते दुर्बला (बहु०), तेषा रक्षा दुर्बलरक्षा (ष० त०), तस्यै इदम् (यथा तथा) इति दुर्बलरक्षार्थम् (च० त०)। औपनीविक=नीव्या समीपमुपनीवि (समीपार्थेऽव्ययीभाव) तस्मिन्भव औपनीविक, 'उपजानूपे' त्यादिना ठक् । असि=खड्गो तु निस्त्रिंश-

भाषार्थ—हिंस्र जन्तुओंसे आकुल इस वन में ढीठ, कामुक पुरुषकी प्रार्थनाओंमे निपुण तुम, पतियुक्त क्यों नही हो ? ॥ २३ ॥

राघव पर्णशालायामिच्छाऽनुरहस पतिम् ।
य स्वामी मम कान्तावानौपकर्णिकलोचन ॥ २४ ॥

अन्वय —अनुरहस पर्णशालाया राघव पतिम् इच्छ, य मम स्वामी कान्तावान् औपकर्णिकलोचन ( अस्ति )।

प्रयोगप०—( त्वया ) राघव पतिरिष्यताम्, येन मम स्वामिना कान्तावता औपकर्णिकलोचनेन ( भूयते )।

व्याख्या—अनुरहसम्=एकाऽन्ते पर्णशालायाम् = उटजे ( स्थितमिति शेष ), राघव=रामचन्द्र, पति = स्वामिनम्, इच्छ=कामयस्व ( पतित्वेन वृणु इत्यर्थं ) य =राम , मम=लक्ष्मणस्य, स्वामी=प्रभु , कान्तावान्=सपत्नीक (रागीति भाव ), औपकर्णिकलोचन =कर्णान्तदीर्घनेत्र ( अस्तीति शेष )।

व्युत्पत्ति —अनुरहस=रहसि इति अनुरहसम् ( विभक्त्यर्थेऽव्ययीभाव , 'अन्ववतप्ताद्रहस' इति समासान्तोऽच् । स्वामी = स्वमस्याऽस्तीति स्वामी 'स्वामिन्नैश्वर्ये' इत्यामिनच्प्रत्ययान्तो निपात , कान्तावान्=कान्ताऽस्ति यस्य स (मतुप् )। औपकर्णिकलोचन=कर्णयो समीपमुपकर्णं ( समीपार्थेऽव्ययीभाव ) तत्र प्रायभवे ( बाहुल्येन भवत ) इति औपकर्णिके 'उपजानूपकर्णोपनीवेष्ठक्' इति ठक्। औपकर्णिके लोचने यस्य स ( बहु० ), 'लोचन नयन नेत्रमीक्षण चक्षुरक्षिणी ।' इत्यमर ।

भावार्थ —एकाऽन्ते पर्णशालायामवस्थित रामचन्द्र पतित्वेन वृणु, यो ममाऽपि प्रभु सपत्नीक कर्णाऽन्तदीर्घनेत्रोऽस्ति ।

भाषार्थ —एकान्त मे पर्णशाला मे अवस्थित रामचन्द्रजी को पतिभाव से वरण करो, जो रामचन्द्रजी मेरे भी स्वामी, पत्नी से युक्त तथा कर्णपर्यन्त विस्तृत नेत्रोंवाले है ॥ २४ ॥

वपुश्चान्दनिक यस्य कार्णवेष्टकिक मुखम् ।
सङ्ग्रामे सर्वकर्मीणौ पाणी यस्यौपजानुकौ ॥ २५ ॥

अन्वय —यस्य वपु चान्दनिक, मुख कार्णवेष्टकिक यस्य पाणी सङ्ग्रामे सर्वकर्मीणौ औपजानुकौ ।

प्रयोगप०—वपुषा चान्दनिकेन, मुखेन कार्णवेष्टकिकेन, पाणिभ्या सर्वकर्मीणाभ्याम् औपजानुकाभ्याम् ( भूयते )।

व्याख्या—यस्य = रामस्य, वपु = शरीर, चान्दनिक = मलयजशोभित,

मुखम्=आनन, कार्णवेष्टकिक=कुण्डलशोभित, यस्य=रामस्य, पाणी=हस्तौ, सङ्ग्रामे=युद्धे, सर्वकर्मीणौ=धनुराकर्षणादिव्यापकौ (सर्वकर्मसमर्थावित्यर्थ) औपजानुकौ=जानुसमीपभवौ (आजानुलम्बिनावित्यर्थ, एतेन शौर्यभाग्यसम्प त्तिरुक्ता)।

व्युत्पत्ति —चान्दनिक=चन्दनेन सम्पादि चान्दनिक (चन्दनेन अवश्य शोभत इत्यर्थ), 'सम्पादिनि' इति ठञ्प्रत्यय । 'गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम् ।' इत्यमर । कार्णवेष्टकिक=कर्णयोर्वेष्टके कर्णवेष्टके कुण्डले, (ष० त०) ताभ्या सम्पादि कार्णवेष्टकिक, पूर्वसूत्रेण ठञ् । सर्वकर्मीणौ=सर्वाणि च तानि कर्माणि सर्वकर्माणि (क० धा०), सर्वकर्माणि व्याप्नुत इति सर्वकर्मीणौ ' दि पथ्यङ्गकर्मपत्रपात्र व्याप्नोति' इति खप्रत्यय । औपजानुकौ=जान्वो समीपमुपजानु (समीपार्थे अव्ययीभाव), 'जानूरुपर्वाष्ठीवदस्त्रियाम्' इत्यमर । उपजानु (जानुसमीपे) भवौ औपजानुकौ, 'उपजानूपकर्णोपनीवेष्ठक्' इति ठक्प्रत्यय, ' न्तात्क' इति क ।

भावाऽर्थ —यस्य शरीर चन्दनशोभित, मुख कुण्डलाऽलङ्कृत, यस्य पाणी युद्धे सर्वकर्मसमर्थौ तथा आजानुलम्बिनौ च वर्तेते ।

भाषाऽर्थ —जिनका शरीर चन्दनसे और मुख कुण्डलोंसे शोभित है, जिनके हाथ सग्राममें सब कर्मोंमे एव जानुपर्यन्त लम्बे है ॥ २५ ॥

बद्धा दुर्बलरक्षाऽर्थमसिर्येनौपनीविक ।
यश्चापमाश्मनप्रख्य सेषु धत्तेऽन्यदुर्वहम् ॥ २६ ॥

अन्वय —येन दुर्बलरक्षाऽर्थम् औपनीविक असि बद्ध य प्रख्यं सेषुम् अन्यदुर्वह चापं धत्ते।

प्रयोगप०—य औपनीविकमसि बद्धवान् । येन आश्मनप्रख्य सेषुरन्यदुर्वह श्चापो धीयते ।

व्याख्या—येन=रामेण, दुर्बलरक्षाऽर्थम्=शक्तिहीनत्राणार्थम्, औपनीविक=नीवीसमीपस्थ, असि=खड्ग बद्ध=निबद्ध (कटिनिबद्ध इत्यर्थ), य=राम आश्मनप्रख्य=प्रस्तरसदृश (दृढमित्यर्थ), सेषु=सबाणम्, अन्यदुर्वहम्=अपरदुर्धार्य, चाप=धनु धत्ते=धारयति (महाधानुष्कोऽयमित्यर्थ)।

व्युत्पत्ति —दुर्बलरक्षाऽर्थ=दुष्ट (मन्दत्वादित्यर्थ) बल येषा ते दुर्बला (बहु०), तेषा रक्षा दुर्बलरक्षा (ष० त०), तस्यै इदम् (यथा तथा) इति दुर्बलरक्षार्थम् (च० त०)। औपनीविक=नीव्या समीपमुपनीवि (समीपार्थेऽव्ययीभावा) तस्मिन्भव औपनीविक, 'उपजानूपे' त्यादिना ठक्। असि=खड्गो तु निस्त्रिंश-

चन्द्रहासाऽसिरिष्टय' इत्यमर । आश्मनप्रख्यम्=अश्मैव आश्मनम्, स्वार्थे अण्। 'अश्मनो विकारे टिलोपो वक्तव्य' इति विकार एव टिलोपविधानात् न टिलोप । प्रख्याति ( प्रकाशयति ) इति प्रख्य ( सदृश ), 'आतश्चोपसर्गे' इत्यङ्, 'प्रख्यप्रतिनिधी अपि' इति सदृशाऽर्थे दण्डी । आश्मनेन प्रख्य आश्मनप्रख्यस्तम् ( तृ० त० )। सेषुम्=इषुभि सहित सेषुस्तम् ( बहु० )। अन्यदुर्वह=दु खेन वोढु शक्यो दुर्वह ( खल्प्रत्यय ) अन्यैर्दुर्वहोऽन्यदुर्वहस्तम् ( तृ० त० )।

भावार्थ —येन रामेण निर्बलरक्षाऽर्थ नीवीवस्त्रसमीपे खड्गो बद्ध , यश्च प्रस्तरसदृश दृढ वाणसहित रामादन्यैर्दुर्धार्यं चाप धारयति ।

भाषार्थ—जिन रामचन्द्रजीने दुर्बलोंकी रक्षा के लिए कटि वस्त्रमें तलवार बाधा है और जो पत्थरके तुल्य दृढ और वाणयुक्त तथा दूसरोंसे नहीं लिए जानेवाले धनु को धारण करते है ॥ २६ ॥

जेता यज्ञद्रुहा सङ्ख्ये धर्मसन्तानसूर्वने ।
प्राप्य दारगवाणा य मुनीनामभय सदा ॥ २७ ॥

अन्वय —सङ्ख्ये यज्ञद्रुहां जेता धर्मसन्तानसू । य प्राप्य वने मुनीना दारगवाणां सदा अभयम् ।

प्रयोगप०—(येन) यज्ञद्रुहा जेत्रा धर्मसन्तानस्वा(भूयते)। अभयेन (भूयते)।

व्याख्या—सङ्ख्ये=युद्धे, यज्ञद्रुहाम्=अध्वरद्रोहिणा ( राक्षसानामित्यर्थ ), जेता=जिष्णु , धर्मसन्तानसू =पुण्यपरम्परोत्पादक ( बहुधर्माचरणशील इत्यर्थ ) ( अस्तीति शेष ), य=रामम्, प्राप्य=आसाद्य ( शरणत्वेन लब्ध्वा इत्यर्थ ), वने=अरण्ये, मुनीना=वानप्रस्थादीनाम्, दारगवाणा=पत्नीधेनूना, सदा=सर्वदा, अभय=भीत्यभाव ( अस्तीति शेष )।

व्युत्पत्ति —सङ्ख्ये='युद्धमायोधन जन्य प्रधन प्रविदारणम् । मृधमास्कन्दन सङ्ख्यम्' इत्यमर । यज्ञद्रुहा=यज्ञेभ्यो द्रुह्यन्तीति यज्ञद्रुहस्तेषाम्, 'सत्सूद्विषे'-त्यादिना क्विप् ( जेतृपदेन योगे कर्मणि षष्ठी )। जेता=जयतीति जेता ( तृच् )। धर्मसन्तानसू =धर्माणा ( वर्णाश्रमादीनाम ) सन्तानो धर्मसन्तान ( ष० त० ) त सूते इति धर्मसन्तानसू ( पूर्ववत्क्विप् ) दारगवाणा=दाराश्च गावश्च दारगवाणि ( द्वन्द्व ), तेषाम्, 'अचतुरे' त्यादिना निपात । अभय=भयस्याऽभावोऽभयम् (अर्थाऽभावेऽव्ययीभाव )। येषामेव प्राप्तिक्रिया तेषामेवाऽभयमिति समानकर्तृत्वम्।

भावार्थ —राम सग्रामे यज्ञविघातकाना दैत्यराक्षसादीना जिष्णु बहुविधधर्माऽऽचरणशील अस्ति, यमासाद्य वने वानप्रस्थादीनामृषीणा पत्नीहोमधेनूना च भयाऽभावो वर्तते ॥

भाषार्थ —रामचन्द्रजी युद्धमें यज्ञविघातक दैत्य राक्षस आदियों को जीतने

वाले तथा अनेक प्रकारके धर्म करनेवाले हैं जिनको पाकर मुनियों को तथा उनकी पत्नी और गायों को सदा अभय है ॥ २७ ॥

ततो वावृत्यमानाऽसौ रामशाला न्यविक्षत ।
मामुपायस्त रामेति वदन्ती साऽऽदरं वच ॥ २८ ॥

अन्वय —तत असौ वावृत्यमाना हे राम ! माम् उपायस्त' इति सादर वच वदन्ती रामशाला न्यविक्षत ।

प्रयोगप०—अमुया वावृत्यमानया 'हे राम ! (त्वया) अहम् उपायंसि' वच वदन्त्या (तया) रामशाला न्यवेशि ।

व्याख्या—तत =लक्ष्मणवचनाऽनन्तरम्, असौ =राक्षसी, वावृत्यमाना =राम वृण्वाना (वरिष्यन्ती सतीत्यर्थ ), हे राम =हे राघव !, मा=सुन्दरीम् उपायस्त= परिणयतु ( भवानिति शेष ), इति एव, सादरम् =आदरयुक्त, वच =वचनम्, वदन्ती =कथयन्ती, रामशाला =रामपर्णकुटीर, न्यविक्षत =प्रविष्टा ।

व्युत्पत्ति —वावृत्यमाना =वावृत्यते इति वावृत्यमाना, 'वावृतु वरणे' इति धातोर्दैवादिकात् 'वर्तमानसामीप्ये वर्तमानवद्वा' इति कर्तरि लट शानच् । उपायस्त ='आशसाया भूतवच्च' इति लुङ् 'उपाद्यम स्वकरणे' इत्यात्मनेपद, शेष- विवक्षाया 'शेषे प्रथम ' इति प्रथमपुरुष । सादरम् =आदरेण सहित सादर तत् (बहु० ) । वच ='भाषित वचन वच इत्यमर । रामशाला =रामस्य शाला इति रामशाला, ताम् (ष० त० ) । न्यविक्षत =निपूर्वात् 'विश प्रवेशने' इति धातो 'नेर्विश ' इत्यात्मनेपदे लुङि 'शल इगुपधादनिट क्स ' इति च्ले क्स ।

भावार्थ —लक्ष्मणवचनाऽनन्तर शूर्पणखा राम वरिष्यन्ती सती 'हे राम ! भवान्मा परिणयतु' इति वचन कथयन्ती रामपर्णकुटीर प्रविष्टा ।

भाषार्थ —लक्ष्मणके ऐसा कहनेपर रामको वरण करती हुई शूर्पणखाने 'हे राम ! आप मुझसे विवाह कीजिए' ऐसा आदरपूर्ण वचन बोल कर रामचन्द्रकी पर्णशालामें प्रवेश किया ॥ २८ ॥

अस्त्रीकोऽसावहं स्त्रीमान्स पुष्यतितरां तव ।
पतिरित्यब्रवीद्रामस्तमेव व्रज, मा मुच ॥ २९ ॥

अन्वय —'असौ अस्त्रीक, अह स्त्रीमान्, स तव पति पुष्यतितरां, तम् एव व्रज, मा मुच ' इति राम (ताम् ) अब्रवीत् ।

प्रयोगप०—अमुना अस्त्रीकेण ( भूयते ), मया स्त्रीमता ( भूयते ), तेन तव पत्या पुष्यतेतराम्, (त्वया) स एव ।, मा मोचि, इति रामेण (सा) औच्यत ।

व्याख्या—असौ = लक्ष्मण, अस्त्रीक = अविद्यमानपत्नीक, अहं = राम, स्त्रीमान्=विद्यमानप्रशस्तपत्नीक, स =लक्ष्मण, तव=त्वदीय, पति =भर्ता, पुष्यतितरां = सम्पत्स्यतेतराम्, तम् एव = लक्ष्मणम् एव, व्रज = गच्छ, मा मुच = न त्यज, इति = एव, राम = रामचन्द्र (तां = शूर्पणखाम्), अब्रवीत् = उक्तवान्।

व्युत्पत्ति—अस्त्रीक = अविद्यमाना स्त्री यस्य सोऽस्त्रीक (नञ्बहु०) 'न ऋनश्च' इति कप, न कपि' इति ह्रस्वप्रनिषेध। स्त्रीमान् = प्रशस्ता स्त्री अस्ति यस्य स (मतुप्)। पति = धव प्रिय पतिर्भर्ता' इत्यमर। पुष्यतितराम्=अतीव पुष्यतीति पुष्यतितरा, 'तिङश्च' इति तरप् 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' इति आमु, मा मुच = मुचेर्लुङि लृदित्त्वादङ्, 'न माङयोगे' इत्यडभाव। अब्रवीत् = आदादिकस्य ब्रूञो लङि 'ब्रुव ईट्' इति ईटि रूपम्॥

भावार्थ—'लक्ष्मणोऽविद्यमानपत्नीकोऽस्ति, अहं सपत्नीकोऽस्मि, स तव पतिर्भवितुमर्हति। अतस्तमेव गच्छ, त न मुञ्च' इति राम शूर्पणखामब्रवीत।

भाषार्थ—'ये लक्ष्मण पत्नीरहित है, पर मै पत्नीयुक्त हू, वे ही तुम्हारे पति होने योग्य है, अत उन्हींके पास जाओ, मत छोड़ो' रामने शूर्पणखाको ऐसा कहा॥ २९॥

लक्ष्मण सा वृषस्यन्ती महोक्ष गौरिवाऽगमत्।
मन्मथाऽऽयुधसम्पातव्यथ्यमानमति पुन ॥ ३०॥

अन्वय—(तत) वृषस्यन्ती मन्मथायुधसम्पातव्यथ्यमानमति सा वृषस्यन्ती गौ महोक्षम् इव लक्ष्मणम् अगमत्।

प्रयोगप०—वृषस्यन्त्या मन्मथायुधसम्पातव्यथ्यमानमत्या तया वृषस्यन्त्या गवा महोक्ष इव लक्ष्मण पुनरगामि।

व्याख्या—(तत =रामवचनाऽनन्तरम्) वृषस्यन्ती=मैथुनेच्छावती, मन्मथाऽऽयुधसम्पातव्यथ्यमानमति =मदनबाणपातदूयमानमना, सा=शूर्पणखा, वृषस्यन्ती = आत्मनो वृषमिच्छन्ती, गौ = धेनु, महोक्षम् इव=महावृषभम् इव, लक्ष्मण = रामाऽनुज, पुन = भूय, अगमत् = आससाद।

व्युत्पत्ति—वृषस्यन्ती = आत्मनो वृषमिच्छतीति वृषस्यन्ती, 'सुप आत्मन क्यच्' इति क्यच्, ततो लट शतरि ङीप्, 'अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि' 'अश्ववृषयोर्मैथुनेच्छायाम् इत्यसुगागम। 'वृषस्यन्ती तु कामुकी' इत्यमर। मन्मथाऽऽयुधसम्पातव्यथ्यमानमति =मन्मथस्य आयुधानि मन्मथाऽऽयुधानि (ष० त०), तेषां सम्पात (ष० त०), तेन व्यथ्यमाना मतिर्यस्या सा व्यथ्यमानमति (बहु०), मन्मथाऽऽयुधसम्पातव्यथ्यमानमति (तृ०—

महोक्षम्=महांश्चासौ उक्षा महोक्ष , तम् (क० धा०), 'अचतुरे' त्यादिना निपात ।

भावार्थ —रामकथनानन्तर मशुनेच्छायुक्ता कामबाणपापीड्यमानमना सा आत्मनो वृषमिच्छन्ती गौ महावृषभमिव लक्ष्मण पुनराससाद ।

भाषार्थ —रामके कहनेके बाद कामुकी, कामदेवके बाणोंके प्रहारसे पीडित चित्तवाली वह राक्षसी साड़को चाहनेवाली गाय जिस तरह सांडके पास जाती है उसी तरह लक्ष्मणके पास फिर पहुंची ॥ ३० ॥

तस्या सासद्यमानाया लोलूयावान् रघूत्तम ।
असि कौक्षेयमुद्यम्य चकाराऽपनस मुखम् ॥ ३१ ॥

अन्वय —रघूत्तम सासद्यमानाया तस्या मुख लोलूयावान् ( सन् ) कौक्षेयम् असिम् उद्यम्य अपनस चकार ।

प्रयोगप०—रघूत्तमेन तस्या मुख लोलूयावना ( सता ) अपनस चक्रे ।

व्याख्या—रघूत्तम =लक्ष्मण , सासद्यमानाया =गर्हित सीदन्त्या ( आसीदन्त्या ), तस्या =शूर्प　, मुखम् =आनन, लोलूयावान् =अत्यर्थलवन युक्त ( सन् ) कौक्षेय=कुक्षिस्थम्, असि=खड्गम्, उद्यम्य=उत्क्षिप्य, अपनस= नासिकारहित, चकार=अकरोत् ( शूर्पणखाया नासिकाच्छेदमकरोदिति भाव ) ।

व्युत्पत्ति —रघूत्तम =रघुषु उत्तम ( स० त० ) । सासद्यमानाया =गर्हित सीदतीति सासद्यमाना, तस्या, 'लुपसद्चरे' त्यादिना सदेर्यङि लट शानच् । लोलूयावान्=अत्यर्थ लवन लोलूया लुनातेर्यङन्तात् 'अप्रत्ययात्' लूया इत्यप्रत्ययस्ततष्टाप् लोलूया अस्ति यस्य स लोलूयावान् ( मतुप् ) । कौक्षेय=कुक्षौ भव कौक्षेयस्तं 'दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ्' इति ढञ् ( तस्य एय ) । अपनसम् =अपगता नासिका यस्मात्तत् अपनस, तत् ( बहु० ), 'उपसर्गाच्च' इत्यच् , नासिकाया नसादेशश्च, 'घोणा नासा च नासिका ।' इत्यमर ।

भावार्थ —लक्ष्मणोऽत्यर्थलवनयुक्त सन् कुक्षिस्थ खड्गमुत्क्षिप्य गर्हितम् आसीदन्त्या तस्या शूर्पणखाया नासिकाम् अच्छिनत् ।

भाषार्थ —लक्ष्मणजीने अत्यन्त छेदनक्रियासे युक्त होकर कटि में बाधे हुए खड्गको उठाकर गर्हितरूपसे समीपमें आती हुई शूर्पणखा की नाक काट ली ॥३१॥

अह शूर्पणखा नाम्ना नून नाऽज्ञायिषि त्वया ।
दण्डोऽद्य क्षेत्रियो येन मय्यपातीति साऽब्रवीत् ॥ ३२ ॥

अन्वय —अह नाम्ना शूर्पणखा नून त्वया न अज्ञायिषि, येन त्वया अद्य क्षेत्रिय दण्ड मयि अपाति इति सा ( तम् ) अब्रवीत् ।

प्रयोगप०—'मा नाम्ना शूर्पणखा त्व न अज्ञासी , येन त्वमिम चेत्रिय दण्ड मयि अपीपत ' इति तया ( स ) औच्यत ।

व्याख्या—अह = सुन्दररूपधारिणी, नाम्ना = अभिधानेन, शूर्पणखा, नून = निश्चित, त्वया = भवता, न अज्ञायिषि=न ज्ञाताऽस्मि, येन=अज्ञानेन, त्वया=भवता, अय=नासाच्छेदरूप , चेत्रिय =जन्मान्तरशरीरे चिकित्स्य , दण्ड =दम [दण्टोऽपि छिन्नाया नासिकाया कुत प्ररोहाऽसम्भवात् चेत्रियो व्याधिरिव सवृत्त इति भाव ] मयि = शूर्पणखायाम्, अपाति = पातित ( मत्स्वरूपज्ञाने तु नेद घटते इति तात्पर्यम् ), इति = एव, सा = शूर्पणखा ( तम् = लक्ष्मणम् ) अब्रवीत् = अकथयत् ।

व्युत्पत्ति —नाम्ना = प्रकृत्यादेराकृतिगणत्वात् 'प्रकृत्यादिभ्य उपसख्यानम्' इति तृतीया । शूर्पणखा=शूर्पाणि इव नखा यस्या सा (बहु०), 'स्वाङ्गाच्चोपसर्जनादसयोगोपधात्' इति ङीषि प्राप्ते सज्ञाशब्दत्वात् 'नखमुखात्सज्ञायाम्' इति निषेध । 'पूर्व पदात्सज्ञायामग ' इति णत्वम् । अज्ञायिषि=जानाते (ज्ञाधातो ) कर्मणि लुङि तङि सिचि चिण्वदिटि युक च । चेत्रिय ='चेत्रियच्परचेत्रे चिकित्स्य ' इति निपातनात्साधुत्वम । 'परचेत्रशब्दात्सप्तम्यन्ताद्घच्, परशब्दस्य लोपश्च निपात्यते' इति मनोरमा । अन्ये तु 'परचेत्रे चिकित्स्य ' इत्यर्थे 'चेत्रियच्' इति निपात्यते । वाक्याऽर्थे पदवचन श्रोत्रियवदित्यप्याहु । चेत्रियो नाम शरीरान्तरे चिकित्स्यो व्याधिरप्रतिकार्य इत्यर्थ । तथा चाऽय नासाच्छेदरूपो दण्डोऽपि छिन्नाया नासाया पुन प्ररोहत्वाऽसम्भवात् तादृग्रूपेण व्यपदिष्ट । अपाति = पाते ( पततेर्ण्यन्तात् ) कर्मणि लुङि चिणादेशो णिलोपश्च ।

भावाऽर्थ —'हे लक्ष्मण ! अह शूर्पणखाऽस्मि इति नून त्वया न ज्ञात, येन अज्ञानेन त्वया अय जन्मान्तरप्रतिकार्यो दण्ड ( नासाच्छेदरूप ) मयि पातित ' इति सा तम् अकथयत् ।

भाषाऽर्थ —शूर्पणखाने लक्ष्मणसे कहा—हे लक्ष्मण ! 'मैं शूर्पणखा हूँ' निश्चय यह बात तुमने नहीं जानी, जिस अज्ञान से तुमने दूसरे जन्ममें मिटनेवाला यह नासिकाछेदरूप दण्ड मुझको दिया ॥ ३२ ॥

पर्यशाप्सीद्दिविष्ठाऽसौ सन्दर्श्य भयद वपु ।
अपिस्फवच्च बन्धूना निनङ्क्षुर्विक्रम मुहु ॥ ३३ ॥

अन्वय —असौ दिविष्ठा ( सती ) भयद वपु सन्दर्श्य पर्यशाप्सीत्, निनङ्क्षु ( सती ) बन्धूना विक्रम मुहु अपिस्फवत् च ।

प्रयोगप०—अमुया दिविष्ठया ( सत्या ) पर्यशापि, निनङ्क्षया (सत्या) बन्धूनां विक्रम अस्फायि च ।

व्याख्या—असौ=शूर्पणखा, दिविष्ठा=आकाशस्था (सती), भयद=भयङ्कर, वपु = स्वशरीर, सन्दर्श्य=दर्शयित्वा, पर्यशाप्सीत् = आक्रष्टवती, निनङ्क्षु = नष्टुमिच्छु (विनाशकाले विपरीतबुद्धि सती यथं), बन्धूना=बान्धवाना (खरादीनामित्यर्थ), विक्रम=पराक्रम, मुहु = असकृत् अपिस्फरच्च = वाचा अवीवृधच्च ।

व्युत्पत्ति—दिविष्ठा=दिवि तिष्ठतीति दिविष्ठा, 'सुपि स्थ , इति क , 'तत्पुरुषे कृति बहुलम्' इत्यलुक् 'अम्बाम्बे'त्यादिना षत्व ष्टुत्व च । भयद=भय ददातीति भयद, तत् 'आतोऽनुपसर्गे क' इति क । पर्यशाप्सीत्=परिपूर्वात् 'शप आक्रोशे' इति धातोर्लुङि सिचि हलन्तलक्षणा वृद्धि । निनङ्क्षु=नशे स न्नन्तादुप्रत्यय 'मस्जिनशोर्झलि' इति नुम् । 'विक्रमस्त्वतिशक्तिता ।' इत्यमर । अपिस्फरत्='स्फायी ओप्यायी वृद्धौ' इति धातोर्णिचि स्फायो व' इति वकार , 'णौ चङ्युपधाया ह्रस्व ' इत्युपधाह्रस्व , द्विर्भाव , अभ्यासकार्य, चर्त्वम्, इत्व च ।

भावार्थ—शूर्पणखा आकाशस्था सती भयङ्कर स्ववपु प्रदर्श्य आक्रुष्टवती, विनाशकाले विपरीतबुद्धि सती खरादीना बान्धवाना पराक्रम बार बार वाचा अवीवृधच्च ।

भाषार्थ—शूर्पणखा आकाशमें जाकर अपना भयङ्कर शरीर दिखलाकर आक्रोश करने लगी, विनाशकालमें विपरीत बुद्धिवाली होती हुई खर आदि अपने बन्धुओं के पराक्रमको बार बार प्रकाशित करने लगी ॥ ३३ ॥

खरदूषणयोर्भ्रात्रो पर्यदेविष्ट सा पुर ।
विजिग्राहयिषू राम दण्डकारण्यवासिनम् ॥ ३४ ॥

अन्वय—सा खरदूषणयो भ्रात्रो पुर दण्डकारण्यवासिन राम विजिग्राहयिषु पर्यदेविष्ट ।

प्रयोगप०—तया विजिग्राहयिष्वा पर्यदेवि ।

व्याख्या—सा = शूर्पणखा, खरदूषणयो = खरदूषणनामकयो , भ्रात्रो =सहोदरयो , पुर=अग्रे, दण्डकाऽरण्यवासिन=जनस्थाननिवासिन ('दण्डकारण्यवासिनो' इति पाठे खरदूषणविशेषण बोध्यम् ), राम=दाशरथि, विजिग्राहयिषु = विरोधयितुमिच्छु (सती ), पर्यदेविष्ट=विललाप ।

व्युत्पत्ति—खरदूषणयो =खरश्च दूषणश्च खरदूषणौ, तयो ( द्वन्द्व ) । दण्डकारण्यवासिन = दण्डकस्य अरण्य दण्डकारण्य ( ष० त० ), तस्मिन्वसतीति तच्छीलो दण्डकारण्यवासी, तम् (णिनिप्रत्यय ) । विजिग्राहयिषु = विग्राहयितुम् ( योध-

यितुम् ) इच्छु विजिग्राहयिषु, ग्राहयते ( ग्रहेर्ण्यन्तात् ) सन्नन्तादप्रत्यय । पर्यदेविष्ट=परिपूर्वात् 'देवृ देवने' इति दैवादिकाद्धातोर्लुङि तङि सिचीट्, 'विलाप परिदेवनम्' इत्यमर ।

भावार्थ—शूर्पणखा खरदूषणयो भ्रात्रो पुर दण्डकारण्ये स्थित राम विरोधयितुमिच्छु सती विलाप कृतवती ।

भाषार्थ—शूर्पणखा खर और दूषण नामके अपने भाइयोंके सामने दण्डकारण्यमें रहनेवाले रामसे विरोध करानेकी इच्छासे विलाप करने लगी ॥ ३४ ॥

अथ त्रिभि श्लोकैर्विलापप्रकारमाह—

कृते सौभागिनेयस्य भरतस्य विवासितौ ।
पित्रा दौर्भागिनेयौ यौ, पश्यत चेष्टित तयो ॥ ३५ ॥

अन्वय—दौर्भागिनेयौ यौ सौभागिनेयस्य भरतस्य कृते पित्रा विवासितौ, तयो चेष्टित पश्यतम् ।

प्रयोगप०—दौर्भागिनेयौ यौ पिता विवासितवान्, तयोश्चेष्टित दृश्यताम् ।

व्याख्या—दौर्भागिनेयौ=निर्भाग्यापुत्रौ ( भाग्यरहितयो कौशल्यासुमित्रयो पुत्रौ इत्यर्थ, अन्यथा कथ तयोर्निर्वासनमिति भाव )। यौ=रामलक्ष्मणौ, सौभागिनेयस्य=सुभगासुतस्य (कैकेयीसुतस्येत्यर्थ भर्तुर्वाल्लभ्यात् कैकेय्या सुभगत्वमिति भाव ), भरतस्य=मध्यमदाशरथे, कृते=कार्याय, पित्रा=जनकेन ( दशरथेनेत्यर्थ ), विवासितौ=निष्कासितौ, तयो =रामलक्ष्मणयो, चेष्टित=व्यापार ( मन्नासाच्छेदनरूपमित्यर्थ )। पश्यतम्=अवलोकयतम् ।

व्युत्पत्ति—दौर्भागिनेयौ=दुष्ट भग ( भाग्यम् ) ययोस्ते दुर्भगे ( बहु० ), दुर्भगयोरपत्ये पुमासौ दौर्भागिनेयौ'स्त्रीभ्यो ढक्' इति ढकि 'कल्याण्यादीनामिनङ्' इति इनङादेश 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इत्युभयपदवृद्धि । सौभागिनेयस्य=शोभन भग ( भाग्यम् ) यस्या सा सुभगा ( बहु० ), तस्या अपत्य पुमान् सौभागिनेयस्तस्य ( पूर्ववड्ढक्, इनङ् उभयपदवृद्धिश्च )। कृते=करण कृत्, तस्य 'सम्पदादिभ्य क्विप' इति क्विबन्ताच्चतुर्थी, तादर्थ्ये अव्ययमिति केचित् । पश्यत= 'लोट् च' इति प्रार्थनाया लोट् ।

भावार्थ—निर्भाग्ययो कौशल्यासुमित्रयो पुत्रौ यौ रामलक्ष्मणौ सुभगाया कैकेय्या पुत्रस्य भरतस्य कार्याय निष्कासितौ, तयो मन्नासाच्छेदनरूप व्यापारमवलोकयतम् ।

भाषार्थ—भाग्यरहित कौशल्या और सुमित्राके पुत्र राम और लक्ष्मण सौभाग्ययुक्त कैकेयीके पुत्र भरतके लिए पितासे निर्वासित किये गये हैं, उनकी चेष्टा ( मेरा नासाच्छेदनरूप ) देखो ॥ ३५ ॥

मम रावणनाथाया भगिन्या युवयो पुन ।
अय तापसकाद् ध्वस क्षमध्व यदि च क्षमम् ॥ ३६ ॥

अन्वय —रावणनाथाया पुन युवयो भगिन्या मम तापसकात् अय ध्वस च क्षम यदि ( तदा ) क्षमध्वम् ।

प्रयोगप०—अनेन ध्वसेन च क्षमेण यदि ( भूयते ), क्षम्यताम् ।

व्याख्या—रावणनाथाया = रावणस्वामिकाया ( रावणरक्षिताया इत्यर्थ ), पुन = विशेषत, युवयो = भवतो (खरदूषणयोरित्यर्थ), भगिन्या = स्वसु, मम = शूर्पणखाया, तापसकात् = कुत्सिततपस्विन ( लक्ष्मणादित्यर्थ ), अय = सन्निकृष्टस्थ, ध्वस = वैरूप्य, व = युष्माक ( गुरूणा पूज्यानामिति भाव ), क्षम यदि = क्षन्तु योग्य चेत् ( तदा = तर्हि ), क्षमध्वम् = सहध्वम् ( उपेक्षध्वमित्यर्थ ) ।

व्युत्पत्ति —रावणनाथाया = रावणो नाथो यस्या सा रावणनाथा, तस्या ( बहु० ) भगिन्या = 'भगिनी स्वसा ।' इत्यमर । तापसकात् = तप अस्याऽस्तीति तापस 'अण् च' इत्यणप्रत्यय । 'तपस्वी तापस पारिकाङ्क्षी' इत्यमर । कुत्सित तापस तापसक, तस्मात 'कुत्सिते' इति कन्प्रत्यय । व = 'युष्मदि गुरावेकेषाम्' इति बहुवचननिर्देश । क्षमध्व = 'क्षमूष् सहने' इति धातोर्लोट् ।

भावाऽर्थ —रावणपालितायास्तत्राऽपि युवयो खरदूषणयोर्भगिन्या मम कुत्सितात्तापसात् एतद्वैरूप्य युष्माक मर्षणयोग्य चेत् तर्हि मर्षणीयम् ( सर्वथैवाऽयमपमानो नोपेक्षणीय इति भाव ) ।

भाषाऽर्थ —रावणसे पालित तथा आप दोनोंकी बहन मेरी, कुत्सित तपस्वीसे सम्पादित यह विरूपता आप लोगोंका सहना उचित है तो सहिए ॥ ३६ ॥

असस्कृत्रिमसव्यानावनुप्त्रिमफलाशिनौ ।
अभृत्रिमपरीवारौ पर्यभूता तथाऽपि माम् ॥ ३७ ॥

अन्वय —असस्कृत्रिमसव्यानौ अनुप्त्रिमफलाशिनौ अभृत्रिमपरीवारौ ( तौ ) तथाऽपि मा पर्यभूताम् ।

प्रयोगप०—असस्कृत्रिमसव्यानाभ्याम् अनुप्त्रिमफलाशिभ्याम् अभृत्रिमपरीवाराभ्या ( ताभ्याम् ) तथाऽप्यह पर्यभाविषि ।

व्याख्या—असस्कृत्रिमसव्यानौ = वल्कलधारकौ, अनुप्त्रिमफलाशिनौ = अकृष्टपच्यफलाऽशिनौ, अभृत्रिमपरीवारौ = अभृतपरिजनौ (मृगमात्रपरीवारावित्यर्थ ) । ( तौ = रामलक्ष्मणौ ) तथाऽपि = अतिनीचावपि, मा = शूर्पणखा ( रावणनाथा खर-

दूषणभगिनीं चेत्यर्थः ), पर्यभूताम् = परिभूतवन्तौ (नासिकाच्छेदेन तिरस्कृतवन्ता-विप्यर्थः, कथमेतत्सह्यमिति भावः )।

व्युत्पत्तिः—असंस्कृत्रिमसंव्यानौ = संस्कारेण (कुविन्दव्यापारेण) निर्वृत्ते संस्कृत्रिमे, 'डुकृञ् करणे' इति धातो 'ड्वितः क्त्रिः' इति क्त्रिः, 'क्त्रेर्मम्नित्यम्' इति मप् 'सम्परिभ्यां करोतौ भूषणे' इति सुट्, सम्पूर्वस्य क्वचिदभूषणेऽपि सुट् 'संस्कृतं भक्षाः' इति ज्ञापकात्। न संस्कृत्रिमे असंस्कृत्रिमे ( नञ्० ), ते संव्याने ययोस्तौ असंस्कृत्रिमसंव्यानौ (बहु०)। 'अन्तरीयोपसंव्यानपरिधानान्यधोंऽशुके।' इत्यमरः। अनुप्त्रिमफलाशिनौ=वापेन निर्वृत्तानि उप्त्रिमाणि, 'डुवप् बीजसन्ताने' इति धातोः पूर्ववत् क्त्रिमंप् च। न उप्त्रिमाणि अनुप्त्रिमाणि ( नञ्० ) अनुप्त्रिमाणि च तानि फलानि अनुप्त्रिमफलानि (क० धा०), तानि अश्नीतस्तच्छीलौ अनुप्त्रिमफलाशिनौ ( णिनिः )। अभृत्रिमपरीवारौ = भरणेन निर्वृत्तः भृत्रिमः, 'डुभृञ् धारणपोषणयोः' इति धातोः पूर्ववत्प्रत्ययादिकम्। न भृत्रिमोऽभृत्रिमः ( नञ्० ), स परीवारो ययोस्तौ (बहु०), 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इत्युपसर्गस्य दीर्घः। पर्यभूताम्= परिपूर्वकात् भूधातोर्लुङ्, 'अनादरः परिभवः परिभावस्तिरस्क्रिया।' इत्यमरः।

भावार्थः—रामलक्ष्मणौ कुविन्दनिर्मिते वस्त्रे न धारयतः, अपि तु वल्कलधारकौ स्तः, शाल्यन्नं न भक्षयतः, अपि तु अकृष्टपच्यफलाशिनौ स्तः, तथा परिजनान् न बिभृतः, अपि तु मृगमात्रपरीवारौ स्तः, एवमतिनीचावपि मां रावणपालितां खरदूषणभगिनीं तिरस्कृतवन्तौ।

भावार्थ—राम और लक्ष्मण वल्कल धारण करते हैं, वन्य फल खाते हैं, परिवारोंका भरण नहीं करते हैं, ऐसे होते हुए भी उन्होंने नासिका काटकर मेरा तिरस्कार किया ॥ ३७ ॥

अथ श्लोकद्वयेन प्रत्युत्तरमाह—

श्वः श्रेयसमवाप्तासि भ्रातृभ्यां प्रत्यभाणि सा।
प्राणिवस्तव मानार्थं व्रजाऽऽश्वसिहि मा रुदः ॥ ३८ ॥

अन्वयः—सा भ्रातृभ्यां प्रत्यभाणि—( वत्से ! ) श्वःश्रेयसम् अवाप्तासि तव मानार्थं प्राणिव, आश्वसिहि मा रुदः, व्रज।

प्रयोगप०—ता भ्रातरौ प्रत्यभाणिष्टां—( वत्से ! त्वया ) श्वःश्रेयसम् अवाप्ता, (आवाभ्याम्) तव मानार्थं प्राण्यते, (त्वया) आश्वस्यतां, मा रोदि, त्वया व्रज्यताम्।

व्याख्या—सा = शूर्पणखा, भ्रातृभ्यां = खरदूषणाभ्यां, प्रत्यभाणि = प्रत्युक्ता, ( हे वत्से ! ) श्वःश्रेयसं = कल्याणम्, अवाप्तासि = प्राप्स्यसि, तव = भवत्याः, मानार्थं = सम्मानार्थम्, प्राणिव = जीवावः, आश्वसिहि = आश्वस्ता भव ( उद्वेगं त्यजेरित्यर्थः ), मा रुदः = रोदीः, व्रज=गच्छ ( मार्गं प्रदर्शयेत्यर्थः )।

व्युत्पत्ति —प्रत्यभाणि = प्रतिपूर्वाच्छब्दार्थकभणधातो कर्मणि लुङ् । श्वश्रेयस = शोभन श्रेय श्वश्रेयस, तत् 'मयूरव्यंसकादयश्च' इति समास 'श्वसो वसीय श्रेयस' इति समासान्तोऽच् । श्वस्शब्दउत्तरपदार्थप्रशंसामाशी विषयतामाहेति सिद्धान्तकौमुदी । 'श्वश्रेयस शिव भद्र कल्याण मङ्गल शुभम्' इत्यमर । अवाप्तासि = अवपूर्वात् आप्नोतेरनद्यतने भविष्यति लुटि सिपि तासिप्रत्यय, 'तासस्त्योर्लोप' इति सकारलोप । मानार्थं = मानाय इदम् मानार्थं, तद् यथा-तथा ( च० त० ) । प्राणिम = 'अन प्राणने' इति धातोर्लट्, मस्, शपो लुक् 'रुदादिभ्य सार्वधातुके' इतीट् 'अनितेः' इति णत्वम् । आश्वसिहि = आङ्पूर्वात् 'श्वस प्राणने' इति धातोर्लोट्, पूर्ववदिट् च । मा रुद = रुदे 'माङि लुङ्' इति लुङि सिपि 'इरितो वा' इति च्लेरङादेश 'न माङ्योगे' इति अडभाव ।

भावार्थ —शूर्पणखा भ्रातरौ खरदूषणावूचतु -'हे वत्से ! कल्याण प्राप्स्यसि, तव समानरक्षणार्थमेव वय जीवाम, उद्वेग त्यज, मा रोदी, मार्ग प्रदर्शय' ।

भाषार्थ —शूर्पणखाको भाइयों ( खर और दूषण ) ने कहा—हे वत्से ! कल्याण पाओगी, तुम्हारी समानरक्षाके लिए ही हमलोग प्राणधारण करते हैं, उद्वेगको छोडो, मत रोओ, चलो ( रास्ता दिखलाओ ) ॥ ३८ ॥

यदुक्त क्षमध्वमिति शूर्पणखया तत्रोत्तरमाहतु —

जक्षिमोऽनपराधेऽपि नरान्नक्तन्दिव वयम् ।
कुतस्त्य भीरु ! यत्तेभ्यो द्रुह्यद्भ्योऽपि क्षमामहे ॥ ३९ ॥

अन्वय —वयम् अनपराधे अपि नरान् नक्तन्दिव जक्षिम, हे भीरु ! द्रुह्यद्भ्य तेभ्य क्षमामहे ( इति ) यत् ( तत् ) कुतस्त्यम् ।

प्रयोगप०—अस्माभिरनपराधेऽपि नरा जक्ष्यन्ते, ( अस्माभि ) क्षम्यते ( इति ) येन ( तेन ) कुतस्त्येन ( भूयते ) ।

व्याख्या—वय = राक्षसा, अनपराधे अपि = अपराधाऽभावे अपि, नरान् = मनुष्यान्, नक्तन्दिव = रात्रिन्दिव, जक्षिम = भक्षयाम, हे भीरु=हे भयशीले द्रुह्यद्भ्य = द्रोह कुर्वद्भ्य, तेभ्य = नरेभ्य ( रामादिरूपेभ्य इत्यर्थ ), क्षमामहे=मर्षयाम ( इति = एवम् ), यत् = कार्य ( क्षमारूपमित्यर्थ ), ( तत् = पूर्वोक्तम् ), कुतस्त्य=कुत आगतम् ( न क्षमामहे इत्यर्थ ) ।

व्युत्पत्ति —अनपराधे = अपराधस्य अभाव अनपराध, तस्मिन् 'अव्यय विभक्ती'त्यादिना अर्थाऽभावेऽव्ययीभाव । 'तृतीयासप्तम्योर्बहुलम्' इत्यत्र बहुलत्वात् अभाव । नक्तन्दिव=नक्त च दिवा च नक्तन्दिवम् ( द्वन्द्व ), 'अचतुरे'त्यादिना सप्तम्यर्थवृत्त्योरव्यययोर्द्वन्द्वसमासान्तनिपात । जक्षिम ='जक्ष

भचहसनयो' इति धातोर्लटो मस्, शपो लुक्, रुदादित्वात् सार्वधातुके इट्। भीरु='सञ्ज्ञापूर्वको विधिरनित्य' इति न गुण। 'त्रस्नौ भीरुभीरुकभीलुका।' इत्यमर। द्रुह्यद्भ्य=द्रुह्यन्तीति द्रुह्यन्तस्तेभ्य 'द्रुह जिघांसायाम्' इति धातो शतृप्रत्यय। तेभ्य=क्रियाग्रहणाच्चतुर्थी कुतस्त्य=कुत आगत कुतस्त्यम्, 'अव्ययात्यप्' इति 'अमेहक्वतसित्रेभ्य एव' इति त्यप्।

भावार्थ—वय राक्षसा अपराधरहितानपि नरान् भक्षयाम हे भीरु! साप राधास्तान्किमुत, अत आश्वस्ता भव।

भाषार्थ—हम राक्षसलोग अपराध न करनेपर भी मनुष्योंको खाते है तो द्रोह करनेवाले उन लोगोंको क्षमा करनेकी बात कहाँ से आई ? ॥ ३९ ॥

तौ चतुर्दशसाहस्रबलौ निर्ययतुस्तत ।
पारश्वधिकधानुष्कशाक्तीकप्रासिकाऽन्वितौ ॥ ४० ॥

अन्वय—तत चतुर्दशसाहस्रबलौ तौ पारश्वधिकधानुष्कशाक्तीकप्रासिकाऽन्वितौ ( सन्तौ ) निर्ययतु ।

प्रयोगप०—चतुर्दशसाहस्रबलाभ्या ताभ्या पारश्वधिकधानुष्कशाक्तीकप्रासिकाऽन्विताभ्या ( सद्भ्याम् ) निर्यये।

व्याख्या—तत =शूर्पणखासमाश्वासनाऽनन्तर, चतुर्दशसाहस्रबलौ=चतुर्दशसहस्रपरिमितसैन्यौ, तौ=खरदूषणौ, पारश्वधिकधानुष्कशाक्तीकप्रासिकाऽन्वितौ=कुठारधनु शक्तिकुन्तधारियुक्तौ ( सन्तौ ) निर्ययतु =निर्जग्मतु ( युद्धाऽर्थमिति शेष )।

व्युत्पत्ति—चतुर्दशसाहस्रबलौ=चतुर्दशसहस्राणि परिमाण यस्य तत् चतुर्दशसाहस्र, 'शतमानविंशतिकसहस्रवसनादण्' इत्यण् 'सङ्ख्यापूर्वपदाना तदन्त ग्रहण प्राग्वतेरिष्यते तच्चालुकि' इति तदन्तविधि, 'सङ्ख्याया सवत्सरसङ्ख्यस्य च' इत्युत्तरपदवृद्धि। चतुर्दशसाहस्र बल ( सैन्यम् ) ययोस्तौ ( बहु० )। पारश्वधिका, 'परश्वधाट्ठञ्' इति ठञ् चात् ठक् च, 'परशुश्च परश्वध' इत्यमर। धनु प्रहरणमेतेषा ते धानुष्का, 'प्रहरणम्' इति ठक, 'इसुसुक्तान्तात्क' इति ठस्य क। शक्ति प्रहरणमेषा ते शाक्तीका, 'शक्तियष्ट्योरीकक्' इति ईकक्। प्रास ( कुन्त ) प्रहरणमेषा ते प्रासिका, 'प्रहरणम्' इत्यौत्सर्गिकष्ठक्। पारश्वधिकाश्च धानुष्काश्च शाक्तीकाश्च प्रासिकाश्चेति पारश्वधिकधानुष्कशाक्तीकप्रासिक ( सेनाङ्गत्वात्समाहारद्वन्द्व ) तेन अन्वितौ (तृ० त०)। निर्ययतु =निरुपसर्गपूर्वकात् यातेर्लिट् 'आतो लोप इटि च' इत्याकारलोप।

भावार्थ—शूर्पणखासमाश्वासनाऽनन्तर चतुर्दशसहस्रसैन्यसहितौ तौ खरदूषणौ कुठारधनु शक्तिकुन्तधारिभिर्युक्तौ सन्तौ युद्धाऽर्थं निश्चक्रमतु।

भाषाऽर्थ—शूर्पणखाको आश्वासन देनेके बाद चौदह हजार सैन्योंके साथ वे खर और दूषण फरसा, धनुष, शक्ति और भाला लेनेवालोंसे युक्त होकर लड़नेके लिए निकले ॥ ४० ॥

अथ सम्पततो भीमान्विशिखै रामलक्ष्मणौ ।
बहुमूर्ध्नो द्विमूर्धांश्च त्रिमूर्धांश्चाहतां मृधे ॥ ४१ ॥

अन्वय—अथ रामलक्ष्मणौ सम्पततः भीमान् बहुमूर्ध्नः द्विमूर्धः च त्रिमूर्धांश्च मृधे विशिखैः अहताम् ।

प्रयोगप०—रामलक्ष्मणाभ्यां सम्पतन्तो भीमा बहुमूर्द्धानो द्विमूर्धास्त्रिमूर्द्धाश्च अहन्यन्त ।

व्याख्या—अथ = अनन्तर, रामलक्ष्मणौ = दशरथनन्दनौ, सम्पततः = सम्मुखमागच्छतः, भीमान् = भयङ्करान्, बहुमूर्ध्नः = बहुशिरस्कान्, द्विमूर्धान् = द्विशिरस्कान्, त्रिमूर्धांश्च = त्रिशिरस्कांश्च, मृधे = सङ्ग्रामे, विशिखैः = बाणैः ( करणे ), अहताम् = हतवन्तौ ।

व्युत्पत्ति—रामलक्ष्मणौ = रामश्च लक्ष्मणश्च ( द्वन्द्व ) । सम्पततः = सम्पतन्तीति सम्पतन्तस्तान् ( शतृप्रत्यय ) । बहुमूर्ध्नः = बहवो मूर्धानो येषां ते बहुमूर्धानः, तान् ( बहु० ), 'अल्लोपोऽनः' इत्यल्लोप । द्विमूर्धान् = द्वौ मूर्धानौ येषां ते द्विमूर्धास्तान् ( बहु० ), 'द्वित्रिभ्यां ष मूर्ध्नः' इति समासान्त ष । त्रिमूर्धान् = त्रयो मूर्धानो येषां ते त्रिमूर्धास्तान् (बहु०), पूर्ववत् समासान्त ष । मृधे = मृधमास्कन्दनं सङ्ख्यं समीकं साम्परायिकम् ।' इत्यमर । अहताम् = हन्तेर्लङि तसस्तामादेश, 'अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति' इत्यनुनासिकलोप ।

भावाऽर्थ—अनन्तर रामलक्ष्मणौ युद्धार्थमभिमुखमागच्छतो भयङ्करान् बहुशिरस्कान् द्विशिरस्कान् त्रिशिरस्कांश्च राक्षसान् सङ्ग्रामे हतवन्तौ ।

भाषाऽर्थ—तब राम और लक्ष्मणने युद्धके लिए सम्मुख आते हुए दो शिरवाले, तीन शिरवाले तथा असंख्य शिरवाले भी राक्षसों को सग्राममें मार डाला ॥

तैर्वृकणसृगणसम्भुग्नक्षुण्णभिन्नविपन्नकैः ।
निमग्नोद्विग्नसह्लीणैः पप्रे दीनैश्च मेदिनी ॥ ४२ ॥

अन्वय—वृकणसृगणसम्भुग्नक्षुण्णभिन्नविपन्नकैः निमग्नोद्विग्नसह्लीणैः दीनैश्च तैः मेदिनी पप्रे ।

प्रयोगप०—वृकणसृगणसम्भुग्नक्षुण्णभिन्नविपन्नकानि निमग्नोद्विग्नसह्लीणा दीनाश्च ते मेदिनीं पप्रुः ।

व्याख्या—वृक्णरुग्णसम्भुग्नक्षुण्णभिन्नविपन्नक = छिन्नभग्नवक्रचूर्णितविदारितनष्ट , निमग्नोद्विग्नसह्रीणे =भूमिमग्नभीतलज्जित , दीनैश्च = क्षीणबलैश्च, तै = राक्षसे , मेदिनी = पृथ्वी, पप्रे = पूरिता ('वव्रे' इति मल्लिनाथसम्मतपाठे 'आवृता', इत्यर्थ । 'वृञ आवरणे' इति धातो कर्मणि लिट् ) ।

व्युत्पत्ति —वृक्णरुग्णसम्भुग्नक्षुण्णविपन्नकै =वृश्च्यन्ते स्म इति वृक्णा ' 'ओव्रश्चू छेदने' इति धातो 'निष्ठा' इति क्तप्रत्यये 'ओदितश्च' इति नत्वम्, तस्याऽसिद्धत्वात् 'चो कु' इति कुत्व, 'ग्रहिज्यावयी' त्यादिना सम्प्रसारण, 'स्को सयोगाद्योरन्ते च' इति षकारलोप , ऋकारैकदेशस्य रेफस्य निमित्तत्वात् 'अट्कुप्वाङि' त्यादिना णत्वम् । ऊदित्वेन वेट्कत्वादिह 'यस्य विभाषा' इति नेट् । 'छिन्न छात लून कृत्त दात छित वृक्णम् ।' इत्यमर । रुज्यन्ते स्म इति रुग्णा , 'रुजो भङ्गे' इति धातो नत्व च । सम्भुज्यन्ते स्म इति सम्भुग्ना , सम्पूर्वात 'भुजो कौटिल्ये' इति धातो पूर्ववत्प्रत्ययादिकम् । क्षुद्यन्ते स्म इति क्षुण्णा , 'क्षुदिर् सपेषणे' इति धातो क्त , 'रदाभ्या निष्ठातो न पूर्वस्य च द ' इति दकारतकारयोर्नत्वम् । भिद्यन्ते स्मेति भिन्ना , 'भिदिर विदारणे' इति धातो क्त , पूर्ववद्दकारतकारयोर्नत्वम् । विपद्यन्ते इति विपन्ना , पूर्ववत्प्रत्ययादिकम् । कुत्सिता विपना विपन्नका , 'कुत्सिते' इति कप्रत्यय । वृक्णाश्च रुग्णाश्च सम्भुग्नाश्च क्षुण्णाश्च भिन्नाश्च विपन्नकाश्चेति वृक्णरुग्णसम्भुग्नक्षुण्णभिन्नविपन्नका , तै ( द्वन्द्व ) । निमग्नोद्विग्नसह्रीणै = निमज्ज्यन्ते स्मेति निमग्ना , निपूर्वात् 'टुमस्जो शुद्धौ' इति धातो क्त । उद्विज्यन्ते स्मेति उद्विग्ना , उत्पूर्वकात् 'ओविजी भयचलनयो ' इति धातो क्त, उभयत्राऽपि 'ओदितश्च' इति निष्ठानत्वे तस्याऽसिद्धत्वात्कुत्वम् । समह्रैषुरिति सह्रीणा सम्पूर्वकात् 'ह्री लज्जायाम्' इति धातो क्त , 'नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्' इति निष्ठानत्वम् । निमग्नाश्च उद्विग्नाश्च सह्रीणाश्च निमग्नोद्विग्नसह्रीणा , तै , (द्वन्द्व ) । दीनै = दीयन्ते स्मेति दीना , तै , 'दीङ् क्षये' इति धातो क्त , 'स्वादय ओदित ' इति ओदित्वात् 'ओदितश्च' इति नत्वम् । मेदिनी = कर्मत्वेऽपि 'पप्र' इति तिङन्तपदेन अभिहितत्वात् प्रथमा । पप्रे = 'प्रा पूरणे' इति धातो कर्मणि लिट् ।

भावाऽर्थ —छिन्ना भग्नहस्तपादा प्रहारवेदनया कुटिलिताऽङ्गा सपिष्टशरीरा विदारिता मृता भूमिमग्ना भीता सलज्जिता क्षीणबलाश्च ते राक्षसा स्वशरीरेण पृथ्वीं पूरितवन्त ।

भाषार्थ —काटे गये, हाथ पैर टूटे हुए, प्रहारकी वेदनासे टेढे अङ्गोंवाले, पीसे गये, विदारण किये गये, मरे हुए, जमीनपर पडे हुए, डरे हुए, लज्जित और क्षीणबल उन राक्षसोंने पृथ्वीको अपने शरीरसे पूर्ण किया ॥ ४२ ॥

केचिद्वेपथुमासेदुरन्ये दवथुमुत्तमम् ।
सरक्तवमथुं केचिद् भ्राजथुं न च केचन ॥ ४३ ॥

अन्वयः—केचित् वेपथुम् आसेदुः, अन्ये उत्तमं दवथुम् आसेदुः, केचित् सरक्तवमथुम् आसेदुः भ्राजथुं च केचन न आसेदुः ।

प्रयोगप०—कैश्चिद्वेपथुरासेदे, अन्यैरुत्तमो दवथुरासेदे, कैश्चित् सरक्तो वमथुरासेदे, भ्राजथुश्च कैश्च न आसेदे ।

व्याख्या—केचित्=केऽपि ( राक्षसाः ), वेपथुं=कम्पम्, आसेदुः =प्रापुः, अन्ये=अपरे ( राक्षसाः ), उत्तमं=महान्तं, दवथुं=परितापम्, आसेदुः =प्रापुः, केचित्=केऽपि ( राक्षसाः ), सरक्तं=सलोहितं, वमथुं=वमनम्, आसेदुः =प्रापुः, भ्राजथुं च=दीप्तिं तु, केचन=केऽपि, न आसेदुः=न प्रापुः ।

व्युत्पत्तिः—वेपथुः=वेपनं वेपथुस्तम्, 'टुवेपृ कम्पने' इति धातोः 'ट्वितोऽथुच्' इत्यथुच् । दवथुः=दवनं दवथुस्तं, 'टुदु उपतापे' इति धातोः पूर्वसूत्रेणाऽथुच् । सरक्तः=रक्तेन सहितः सरक्तः, तं ( बहु० ), 'रुधिरेऽसृग्लोहितास्ररक्तक्षतजशोणितम् ।' इत्यमरः । वमथुः=वमनं वमथुः, तं, 'टुवम उद्गिरणे' इति धातोस्तेनैव अथुच् । भ्राजथुः=भ्राजनं भ्राजथुः, तं, 'टुभ्राजृ दीप्तौ' इति धातोः पूर्ववदथुच् ।

भावार्थः—केचिद्राक्षसाः कम्पिता बभूवुः, अन्ये महान्तं परितापं प्रापुः, केचित् रक्तवमनं कृतवन्तः, शोभां तु केऽपि न प्राप्तवन्तः ।

भाषार्थ—कोई राक्षस कांपने लगे, और लोग अत्यन्त परितप्त होने लगे, कोई रक्तवमन करने लगे और शोभा तो किसीने भी नहीं पाई ( सबके सब राक्षस शोभाहीन हो गये ) ॥ ४३ ॥

मृगयूमिव मृगोऽथ दक्षिणेर्मा दिशमिव दाववती मरावुदन्यन् ।
रघुनन्दनमुदाययौ त्रिमूर्धा विषभृदिवोग्रमुखः पतत्रिराजम् ॥ ४४ ॥

अन्वयः—अथ दक्षिणेर्मा मृगः मृगयुम् इव, मरौ उदन्यन् दाववतीं दिशम् इव, विषभृत् उग्रमुखः पतत्रिराजम् इव त्रिमूर्धा रघुनन्दनम् उपाययौ ।

प्रयोगप०—दक्षिणेर्मणा मृगेण मृगयुरिव, मरौ उदन्यता दाववती दिगिव, विषभृता उग्रमुखेन पतत्रिराज इव त्रिमूर्धेन रघुनन्दन उपाययौ ।

व्याख्या—अथ=अस्मिन् अवसरे, दक्षिणेर्मा=व्याधेन व्रणितदक्षिणाङ्गः, मृगः=हरिणः, मृगयुम् इव=व्याधम् इव, मरौ=निर्जलदेशे, उदन्यन्=पिपासुः, दाववतीं=दावाऽग्नियुक्तां दिशम् इव=काष्ठाम् इव, विषभृत्=सर्पः, उग्रमुखः=भयङ्करास्यः, पतत्रिराजम् इव=पक्षिराजम् इव ( गरुडमित्यर्थः ),

त्रिशिरा (राक्षसविशेष), रघुतनयम्=रामम्, उपाययौ=उपाजगाम (अत्र मालोपमाऽलङ्कार, 'मालोपमा यदेकस्योपमानं बहु दृश्यते।' इति तल्लक्षणम्)। अनेनोपमात्रयेणास्य रक्षसः सद्यो मरणं व्यज्यते, इत्यलङ्कारेण वस्तुध्वनिरिति मल्लिनाथ। श्लोकेऽस्मिन् पुष्पिताग्रावृत्तम् 'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा।' इति तल्लक्षणम्।

व्युत्पत्ति—दक्षिणेर्मा=दक्षिणे ईर्मं (व्रणम्) यस्य सोऽस्तीति दक्षिणेर्मा (बहु०), दक्षिणेर्मा लुब्धयोगे' इत्यनिच्प्रत्ययाऽन्तो निपात। 'व्रणोऽस्त्रियामीर्ममरु' इति 'दक्षिणारुर्लुब्धयोगाद्दक्षिणेर्मा कुरङ्गक।' इति चामर। मृगयु=मृगान् यातीति मृगयु, तम्, औणादिक कुप्रत्यय। 'व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि स।' इत्यमर। मरौ='समानौ मरुधन्वानौ' इत्यमर। उदन्यन्=उदकमिच्छन्, उदन्यन्, 'सुप आत्मन क्यच्' इति क्यच 'अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु' इत्युदन्यादेशनिपात, तस्माल्लट शत्रादेश। दाहवतीं=दाहो ऽस्या अस्तीति दाहवती, ताम् (मतुप् ङीप च)। विषभृत्=विषं बिभर्तीति विषभृत् (क्विप)। उग्रमुखम्=उग्रं मुखं यस्य स उग्रमुख, तम् (बहु०)। पतत्त्रिराज=पतत्त्रिणा राजा पतत्त्रिराज, तम् (प० त०, समासाऽन्तष्टच्)। त्रिमूर्ध=त्रयो मूर्धानो यस्य स (बहु०), समासाऽन्त ष।

भावार्थ—अस्मिन्नवसरे यथा व्याधेन व्रणितदक्षिणाऽङ्गो मृगो व्याधमुपागच्छति, निर्जलप्रदेशे जलपानाऽभिलाषी यथा दावाऽग्नियुक्तां दिशमुपागच्छति, सर्पो भयङ्करमुखं गरुडं यथा उपागच्छति तथैव आसन्नमृत्यु स त्रिशिरा नाम राक्षसो राममुपाजगाम।

भाषाऽर्थ—इस अवसरपर व्याधसे दक्षिण अङ्गमे घाव किया गया मृग जैसे व्याधके पास आता है, रेगिस्तानमे जल पीने की इच्छा करनेवाला पुरुष जैसे दावाग्नियुक्त दिशाके सम्मुख आता है, सर्प जैसे भयङ्कर मुखवाले गरुडजीके पास आता है उसी तरह त्रिशिरा नामका राक्षस रामचन्द्र के समीप आ गया॥ ४४॥

शितविशिखनिकृत्तकृत्स्नवक्त्र क्षितिभृदिव क्षितिकम्पकीर्णशृङ्ग।
भयमुपनिदधे स राक्षसानामखिलकुलक्षयपूर्वलिङ्गतुल्य॥ ४५॥

अन्वय—शितविशिखनिकृत्तकृत्स्नवक्त्र क्षितिकम्पकीर्णशृङ्ग क्षितिभृत् इव (स्थित) अखिलकुलक्षयपूर्वलिङ्गतुल्य स राक्षसाना भयम् उपनिदधे।

प्रयोगप०—शितविशिखनिकृत्तकृत्स्नवक्त्रेण क्षितिकम्पकीर्णशृङ्गेण क्षितिभृता इव अखिलकुलक्षयपूर्वलिङ्गतुल्येन तेन राक्षसाना भयम् उपनिदधे।

व्याख्या—शितविशिखनिकृत्तकृत्स्नवक्त्र=तीक्ष्णबाणच्छिन्नसर्वमूर्द्धा, (अत

एव ) क्षितिकम्पकीर्णशृङ्ग =भूमिकम्पविकीर्णशिखर , क्षितिभृत इव= पर्वत इव ( स्थित इति शेष ), अखिलकुलक्षयपूर्वलिङ्गतुल्य =सम्पूर्णराक्षसवशनाशपूर्वचिह्न-समान , स =त्रिशिर' , राक्षसाना = रक्षसाम् ( अवशिष्टराक्षसानामित्यर्थ ), भय= भीतिम, उपनिदधे= उपनिहितवान् ( जनयामासेत्यर्थ ) ।

व्युत्पत्ति —शितविशिखनिकृत्तकृत्स्नवक्त्र =शिताश्च ते विशिखा शितविशिखा ( क० धा० ), निकृत्तानि कृत्स्नानि वक्त्राणि यस्य स निकृत्तकृत्स्नवक्त्र ( बहु० ), 'विश्वमशेष कृत्स्न समस्तनिखिलाऽखिलानि नि शेषम् ।' इत्यमर । शितविशिखै निकृत्तकृत्स्नवक्त्र ( तृ० त० ) । क्षितिकम्पकीर्णशृङ्ग =क्षिते कम्प क्षितिकम्प ( ष० त० ), कीर्णानि शृङ्गाणि यस्य स कीर्णशृङ्ग (बहु०), क्षितिकम्पेन कीर्णशृङ्ग ( तृ० त० ), क्षितिभृत्= क्षितिं बिभर्तीति क्षितिभृत् ( क्विप्० ) । अखिलकुलक्षय-पूर्वलिङ्गतुल्य =अखिल च तत् कुलम अखिलकुलम् ( क० धा० ), तस्य क्षय अखिलकुलक्षय ( ष० त० ), पूर्वं च तत् लिङ्ग पूर्वलिङ्गम् ( क० धा० ), अखिल कुलक्षये पूर्वलिङ्गम् अखिलकुलक्षयपूर्वलिङ्ग (स० त०) तेन तुल्य (तृ० त०) ।

भावाऽर्थ —रामतीक्ष्णबाण छिन्नसकलशिरस्क औत्पातिकभूकम्पेन विकीर्ण-शिखर पर्वत इव स्थित समस्तवशक्षयपूर्वावेदकनिमित्तसदृश स त्रिशिरा अवशिष्ट-राक्षसाना भय जनयामास ।

भाषाऽर्थ —तीखे बाणोंसे तीनों शिर कटा हुआ, औत्पातिक भूकम्पसे बिखरी हुई चोटियोंवाले पर्वतकी तरह स्थित, सम्पूर्ण वशका क्षयज्ञापक पूर्व चिह्न के सदृश उस त्रिशिरा ने अवशिष्ट राक्षसोंके चित्तमें भय पैदा किया ॥ ४५ ॥

इति श्रीभट्टिकाव्ये व्याख्याद्वयोपेते प्रकीर्णकाण्डे शूर्पणखानिग्रहो नाम चतुर्थ सर्ग ॥

---

## अथ पञ्चमः सर्गः

निराकरिष्णू वर्तिष्णू वर्धिष्णू परितो रणम् ।
उत्पतिष्णू सहिष्णू च चेरतु खरदूषणौ ॥ १ ॥

अन्वय —( अथ ) खरदूषणौ निराकरिष्णू वर्तिष्णू वर्धिष्णू उत्पतिष्णू सहिष्णू च ( सन्तौ ) रण परित चेरतु ।

प्रयोगान्तर०—खरदूषणाभ्या निराकरिष्णुभ्या वर्तिष्णुभ्या वर्धिष्णुभ्याम् उत्प-तिष्णुभ्या सहिष्णुभ्या च ( सद्भ्याम् ) चेरे ।

व्याख्या—( अथ = त्रिशिर पाताऽनन्तरम् ) खरदूषणौ = शूर्पणखाभ्रातरौ, निराकरिष्णू= शत्रुनिराकरणशीलौ, वर्तिष्णू=अतिप्रहारेऽपि वर्तनशीलौ (स्थायिना-

त्रिशिराः ( राक्षसविशेषः ), रघुतनयं=रामम्, उपाययौ=उपाजगाम ( अत्र माला लोपमाऽलङ्कारः, 'मालोपमा यदेकस्योपमानं बहु दृश्यते।' इति तल्लक्षणात् )। अनेनोपमात्रयेण अस्य रक्षसः सद्यो मरणं व्यज्यते, इत्यलङ्कारेण वस्तुध्वनिरिति मल्लिनाथः। श्लोकेऽस्मिन् पुष्पिताग्रावृत्तम् 'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा।' इति तल्लक्षणम्।

व्युत्पत्तिः—दक्षिणेर्मा=दक्षिणे ईर्मं ( व्रणम् ) यस्य सः अस्तीति दक्षिणेर्मा ( बहु० ), दक्षिणेर्मा लुब्धयोगे' इत्यनिच्प्रत्ययाऽन्तो निपातः। 'व्रणोऽस्त्रियामीर्ममरुः' इति 'दक्षिणारुर्लुब्धयोगाद्दक्षिणेर्मा कुरङ्गकः।' इति चामरः। मृगयुं= मृगान् यातीति मृगयुः, तम्, औणादिकः कुप्रत्ययः। 'व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि सः।' इत्यमरः। मरौ='समानौ मरुधन्वानौ' इत्यमरः। उदन्यन्= उदकमिच्छन्, उदन्यन्, 'सुप आत्मनः क्यच्' इति क्यच् 'अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु' इत्युदन्यादेशनिपातः, तस्माल्लटः शत्रादेशः। दाहवतीं=दाहो ऽस्या अस्तीति दाहवती, ताम् (मतुप् ङीप् च)। विषभृत्=विषं बिभर्तीति विषभृत् ( क्विप् )। उग्रमुखम्=उग्रं मुखं यस्य स उग्रमुखः, तम् ( बहु० )। पतत्त्रिराजं= पतत्त्रिणां राजा पतत्त्रिराजः, तम् ( ष० त०, समासाऽन्तष्टच् )। त्रिमूर्धः=त्रयो मूर्धानो यस्य सः ( बहु० ), समासाऽन्तः षः।

भावार्थः—अस्मिन्नवसरे यथा व्याधेन व्रणितदक्षिणाऽङ्गो मृगो व्याधमुपागच्छति, निर्जलप्रदेशे जलपानाऽभिलाषी यथा दावाऽग्नियुक्तां दिशमुपागच्छति, सर्पो भयङ्करमुखं गरुडं यथा उपागच्छति तथैव आसन्नमृत्युः स त्रिशिरा नाम राक्षसो राममुपाजगाम।

भाषाऽर्थ—इस अवसरपर व्याधसे दक्षिण अङ्गमें घाव किया गया मृग जैसे व्याधके पास आता है, रेगिस्तानमें जल पीने की इच्छा करनेवाला पुरुष जैसे दावाग्नियुक्त दिशाके सम्मुख आता है, सर्प जैसे भयङ्कर मुखवाले गरुडजीके पास आता है उसी तरह त्रिशिरा नामका राक्षस रामचन्द्र के समीप आ गया ॥ ४३ ॥

शितविशिखनिकृत्तकृत्स्नवक्त्रः क्षितिभृदिव क्षितिकम्पकीर्णशृङ्गः।
भयमुपनिदधे स राक्षसानामखिलकुलक्षयपूर्वलिङ्गतुल्यः ॥ ४४ ॥

अन्वयः—शितविशिखनिकृत्तकृत्स्नवक्त्रः क्षितिकम्पकीर्णशृङ्गः क्षितिभृत् इव ( स्थितः ) अखिलकुलक्षयपूर्वलिङ्गतुल्यः सः राक्षसानां भयम् उपनिदधे।

प्रयोगप०—शितविशिखनिकृत्तकृत्स्नवक्त्रेण क्षितिकम्पकीर्णशृङ्गेण क्षितिभृता इव अखिलकुलक्षयपूर्वलिङ्गतुल्येन तेन राक्षसानां भयम् उपनिदधे।

व्याख्या—शितविशिखनिकृत्तकृत्स्नवक्त्रः=तीक्ष्णबाणच्छिन्नसर्वमूर्धा, ( अत

एव ) क्षितिकम्पकीर्णशृङ्ग =भूमिकम्पविकीर्णशिखर, क्षितिभृत इव—पर्वत इव ( स्थित इति शेष ), अखिलकुलक्षयपूर्वलिङ्गतुल्य =सम्पूर्णराक्षसवंशनाशपूर्वचिह्न-समान, स =त्रिशिरा, राक्षसाना =रक्षसाम् ( अवशिष्टराक्षसानामित्यर्थ ), भय= भीतिम्, उपनिदधे= उपनिहितवान् ( जनयामासेत्यर्थ )।

व्युत्पत्ति —शितविशिखनिकृत्तकृत्स्नवक्त्र =शिताश्च ते विशिखा शितविशिखा ( क० धा० ), निकृत्तानि कृत्स्नानि वक्त्राणि यस्य स निकृत्तकृत्स्नवक्त्र ( बहु० ), 'विश्वमशेष कृत्स्न समस्तनिखिलाऽखिलानि नि शेषम् ।' इत्यमर । शितविशिखै निकृत्तकृत्स्नवक्त्र ( तृ० त० )। क्षितिकम्पकीर्णशृङ्ग =क्षितेः कम्प क्षितिकम्प ( ष० त० ), कीर्णानि शृङ्गाणि यस्य स कीर्णशृङ्ग (बहु०), क्षितिकम्पेन कीर्णशृङ्ग ( तृ० त० ), क्षितिभृत्=क्षिति बिभर्तीति क्षितिभृत् ( क्विप्० )। अखिलकुलक्षय-पूर्वलिङ्गतुल्य =अखिल च तत् कुलम् अखिलकुलम् ( क० धा० ), तस्य क्षय अखिलकुलक्षय ( ष० त० ), पूर्वं च तत् लिङ्ग पूर्वलिङ्गम् ( क० धा० ), अखिल कुलक्षये पूर्वलिङ्गम् अखिलकुलक्षयपूर्वलिङ्ग (स० त०) तेन तुल्य (तृ० त०)।

भावार्थ —रामतीक्ष्णबाण छिन्नसकलशिरस्क औत्पातिकभूकम्पेन विकीर्ण-शिखर पर्वत इव स्थित समस्तवंशक्षयपूर्वाविदकनिमित्तसदृश स त्रिशिरा अवशिष्ट-राक्षसाना भय जनयामास ।

भावार्थ —तीखे बाणोंसे तीनों शिर कटा हुआ, औत्पातिक भूकम्पसे बिखरी हुई चोटियोंवाले पर्वतकी तरह स्थित, सम्पूर्ण वंशका क्षयज्ञापक पूर्व चिह्न के सदृश उस त्रिशिरा ने अवशिष्ट राक्षसोंके चित्तमें भय पैदा किया ॥ ४५ ॥

इति श्रीभट्टिकाव्ये व्याख्याद्वयोपेते प्रकीर्णकाण्डे शूर्पणखानिग्रहो नाम चतुर्थ सर्ग ॥

---

## अथ पञ्चमः सर्गः

निराकरिष्णू वर्तिष्णू वर्धिष्णू परितो रणम् ।
उत्पतिष्णू सहिष्णू च चेरतु खरदूषणौ ॥ १ ॥

अन्वय —( अथ ) खरदूषणौ निराकरिष्णू वर्तिष्णू वर्धिष्णू उत्पतिष्णू सहिष्णू च ( सन्तौ ) रण परित चेरतु ।

प्रयोगप०—खरदूषणाभ्या निराकरिष्णुभ्या वर्तिष्णुभ्या वर्धिष्णुभ्याम् उत्प तिष्णुभ्या सहिष्णुभ्या च ( सद्भ्याम् ) चेरे ।

व्याख्या—( अथ =त्रिशिर पाताऽनन्तरम् ) खरदूषणौ = खरदूषणाख्यौ निराकरिष्णू =शत्रुनिराकरणशीलौ, वर्तिष्णू=अतिप्रहारेऽपि वर्तनशीलौ ( ... [illegible]

विरयर्थ ), वर्धिष्णू = वर्धनशीलौ (युद्धोत्साहिनावित्यर्थ ) उत्पतिष्णू = ऊर्ध्वमुत्प तनशीलौ, सहिष्णू च = शत्रुप्रहारसहनशीलौ च ( सन्तौ ) रण परित = युद्धे सर्वत , चेरतु = बभ्रमतु ( क्रियासमुच्चयाऽलङ्कार )॥

व्युत्पत्ति —खरदूषणौ = खरश्च दूषणश्च ( द्वन्द्व )। निराकरिष्णू = 'अलङ्कृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच' इतीष्णुच्। 'निराकरिष्णु क्षिप्नु स्यात्' इत्यमर । एव सर्वत्र इष्णुच । रण = 'परित ' इत्यनेन योगे 'अभित परित समयानिकषाहाप्रतियोगेऽपि' इति द्वितीया । चेरतु = चरेर्लिटि तसोऽतुस्, 'अत एकहल्मध्येऽनादेशादेर्लिटि' इत्येत्वाऽभ्यासलोपौ ।

भावाऽर्थ —त्रिशिर पाताऽनन्तर खरदूषणौ शत्रुनिराकरणशीलौ स्थायिनौ युद्धोत्साहिनौ ऊर्ध्वमुत्पतनशीलौ शत्रुप्रहारसहनशीलौ च सन्तौ युद्धभूमे सर्वतो बभ्रमतु ॥

भाषाऽर्थ —त्रिशिराके गिरनेके बाद खर और दूषण शत्रुओंके निराकरणशील, अत्यन्त प्रहारमें भी वर्तनशील, युद्धमे उत्साही, ऊपर उत्पतनशील और शत्रप्रहार में सहनशील भी होते हुए युद्धभूमिके चारों तरफ घूमने लगे ॥ १ ॥

तौ खड्गमुसलप्रासचक्रबाणगदाकरौ ।
अकार्ष्टामायुधच्छाय रज सन्तमसे रणे ॥ २ ॥

अन्वय —खड्गमुसलप्रासचक्रबाणगदाकरौ तौ रज सन्तमसे रणे आयुधच्छायम् अकार्ष्टाम् ।

प्रयोगप०—खड्गमुसलप्रासचक्रबाणगदाकराभ्या ताभ्याम् आयुधच्छायम् अकारि ।

व्याख्या—खड्गमुसलप्रासचक्रबाणगदाकरौ = असियोग्रकुन्तचक्रशरगदाहस्तौ, तौ = खरदूषणौ, रज सन्तमसे = धूलिकृतव्यापकाऽन्धकारे (रक्ष सन्तमसे इति मल्लिनाथसमतपाठे रक्षासि राक्षसा एव सन्तमस = निपूचीन तमो यस्मिस्तस्मिन्नित्यर्थ ), रणे = युद्धे, आयुधच्छाय = प्रहरणच्छायम्, अकार्ष्टा = कृतवन्तौ ( आयुधैश्छायां जनयन्तौ इत्यर्थ )।

व्युत्पत्ति —खड्गमुसलप्रासचक्रबाणगदाकरौ = खड्गश्च मुसलश्च प्रासश्च चक्र च बाणश्च गदा च खड्गमुसलप्रासचक्रबाणगदा, अप्राधान्यात् 'जातिरप्राणिनाम्' इत्येकवद्भावाऽभाव । जयमङ्गलस्तु खड्गादीना बाणान्ताना पदाना द्वन्द्वैकवद्भाव कृत्वा पश्चात्तेन सहिता गदेति शाकपार्थिवादित्वात्समास । अन्यथा पूर्वसूत्रविहितेन एकवद्भावेन 'बाणगदम्' इति नपुसकलिङ्गता स्यात्' इत्यब्रवीत् । रज सन्तमसे = सन्तत तम सन्तमसम्, प्रादिसमास 'अवसमन्धेभ्यस्तमस' इति समासाऽन्तोऽच्, 'विष्वक् सन्तमसम्' इत्यमर । रज एव सन्तमस यस्मि

स्तत् रज मन्तमस, तस्मिन् ( वहु० ) । आयुधच्छायम्=आयुधाना छाया आयुधच्छाय, तत् ( ष० त० ) 'छाया वाहुल्ये' इति पूर्वपदाऽर्थवाहुल्ये नपुंसकत्वम् । अकार्ष्टाम्='डुकृञ् करणे' इति धातो कर्तरि लुङि तसस्तमादेश , सिचि वृद्धि ।

भावार्थ —खड्गमुसलकुन्तचक्रशरगदाधारिणौ तौ खरदूषणौ धूल्यन्धकारिते युद्धे शस्त्रबाहुल्य कृतवन्तौ ।

भाषाऽर्थ —खड्ग, मुसल, भाला, चक्र, वाण और गदाको धारण करनेवाले खर और दूषणने धूलिसे अन्धकारपूर्ण युद्धमे शस्त्रोको फैलाया ॥ २ ॥

**अथ तीक्ष्णायसैर्बाणैरधिमर्म रघूत्तमौ ।**
**व्याध व्याधममूढौ तौ यमसाच्चक्रतुर्द्विषौ ॥ ३ ॥**

अन्वय —अथ रघूत्तमौ अमूढौ ( सन्तौ ) द्विषौ तौ तीक्ष्णायसै. वाणै. अधिमर्म व्याध व्याध यमसात् चक्रतु ।

प्रयोगप०—रघूत्तमाभ्याम् ( सद्भ्याम् ) द्विषौ तौ यमसात् चक्राते ।

व्याख्या—अथ=राक्षसविक्रमाऽनन्तर, रघूत्तमौ=रामलक्ष्मणौ, अमूढौ=साऽवधानौ ( सन्तौ ), द्विषौ=द्वेषिणौ खरदूषणौ इत्यर्थ । तीक्ष्णायसै =निशितफलैः, वाणै =शरै , अधिमर्म=मर्मस्थलेषु, व्याध व्याधम्=अभीक्ष्ण विद्ध्वा, यमसात्=अन्तकाऽधीन, चक्रतु =कृतवन्तौ ( अहतामित्यर्थ ) ।

व्युत्पत्ति —रघूत्तमौ=रघुषु (रघुवंश्येषु ) उत्तमौ ( स० त० ) । अमूढौ=न मूढौ ( नञ् ० ) । द्विषौ=द्विषौ द्विष्ट इति द्विषौ, तौ 'सत्सूद्विषे'—त्यादिना क्विप्, 'द्विड्विपक्षाऽहिताऽमित्रदस्युशात्रवशत्रव ।' इत्यमर । तीक्ष्णायसै =तीक्ष्णमायस येषा ते तीक्ष्णायसा , तै ( वहु० ) । अधिमर्म=मर्मसु इति, विभक्त्यर्थे अव्ययीभाव । व्याध व्याधम्='आभीक्ष्ण्ये णमुल् च' इति णमुलि चाद् द्विर्भावश्च । यमसात्='तदधीनवचने' इति सातिप्रत्यय ।

भावार्थ —राक्षसविक्रमाऽनन्तर रामलक्ष्मणौ सावधानौ सन्तौ तीक्ष्णवाणैः खरदूषणयोर्मर्मस्थलेषु अभीक्ष्ण विद्ध्वा अहताम् ।

भाषाऽर्थ —तव राम और लक्ष्मणने सावधान होकर शत्रुओ ( खर और दूषण ) को तीक्ष्ण फलवाले वाणोसे मर्मस्थानोपर निरन्तर वेधन कर यमराजके अधीन कर दिया ॥ ३ ॥

**हतबन्धुर्जगामाऽसौ तत शूर्पणखा वनात् ।**
**पारेसमुद्र लङ्काया वसन्त रावण पतिम् ॥ ४ ॥**

अन्वय —हतबन्धु असौ शूर्पणखा तत वनात् पारेसमुद्र लङ्काया वसन्त रावण पतिं जगाम ।

प्रयोगप०—अमुया शूर्पणखया वसन् रावण पतिर्जग्मे ।

व्याख्या—हतबन्धु =व्यापादितभ्रातृका, असौ=सा, शूर्पणखा=तदाख्या राक्षसी, तत =तस्मात्, वनात्=अरण्यात् ( दण्डकारण्यादित्यर्थ ), पारेसमुद्र = समुद्रस्य पारे ('मध्येसमुद्रम्' इति मल्लिनाथसमत पाठस्तत्र समुद्रस्य मध्ये इत्यर्थ )। लङ्कायां=तदाख्यनगर्यां, वसन्त=निवसन्त, रावणं=तन्नामक राक्षसराज, पतिं= स्वामिन ( रक्षकमित्यर्थ ), जगाम=अगच्छत् ।

व्युत्पत्ति —हतबन्धु =हतौ बन्धू (खरदूषणाख्यौ भ्रातरौ) यस्या सा (बहु०)। शूर्पणखा=शूर्पाणि इव नखा यस्या सा ( बहु० ), 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति प्राप्तस्य ङीष , 'नखमुखात्संज्ञायाम्' इति निषेध 'पूर्वपदात्संज्ञायामग' इति णत्वम् । पारेसमुद्र ='पारे मध्ये षष्ठ्या वा' इत्यव्ययीभाव एदन्तत्वनिपातश्च, 'नाऽव्ययीभावादतोऽम्त्वपञ्चम्या ' इत्यम्भाव । पतिम्='ईश्वर पतिरीशिता ।' इत्यमर ।

भावार्थ —भ्रातृद्वयमरणाऽनन्तर शूर्पणखा तस्मात् दण्डकारण्यात् समुद्रस्य पारे लङ्काया निवसन्त रक्षक रावणमगात् ।

भाषाऽर्थ—दो भाइयोंके मरनेके बाद शूर्पणखा दण्डकारण्यसे समुद्रके पारस्थ लङ्कामे निवास करनेवाले रक्षक रावणके पास चली गई ॥ ४ ॥

**सम्प्राप्य राक्षससभ चक्रन्द क्रोधविह्वला ।**
**नामग्राहमरोदीत्सा भ्रातरौ रावणाऽन्तिके ॥ ५ ॥**

अन्वय —क्रोधविह्वला सा राक्षससभ सम्प्राप्य चक्रन्द, रावणाऽन्तिके भ्रातरौ नामग्राहम् अरोदीत् ।

प्रयोगप०—क्रोधविह्वलया तया चक्रन्दे अरोदि ।

व्याख्या—क्रोधविह्वला=कोपविक्लवा, सा=शूर्पणखा, राक्षससभ=रक्ष परिषद, सम्प्राप्य=आसाद्य, चक्रन्द=क्रन्दन कृतवती, रावणाऽन्तिके=रावणसमीपे, भ्रातरौ=खरदूषणौ, नामग्राह=नाम गृहीत्वा, अरोदीत्=रुदितवती ।

व्युत्पत्ति —क्रोधविह्वला=क्रोधेन विह्वला ( तृ० त० ), 'विक्लवो विह्वल स्यात्' इत्यमर । राक्षससभ=राक्षसाना सभा राक्षससभ तत् ( ष० त० ) 'सभा राजाऽमनुष्यपूर्वा' इति अमनुष्यपूर्वकत्वान्नपुंसकत्वम् । रावणाऽन्तिके= रावणस्य अन्तिको रावणाऽन्तिक , तस्मिन् ( ष० त० ), 'सप्तम्यधिकरणे च' इति चकाराद् 'दूरान्तिकाऽर्थेभ्य ' इति सप्तमी । नामग्राह='नाम्न्यादिशिग्रहो ' इति णमुल् । अरोदीत्='अत्र नामग्रहणविशिष्टाया रोदनक्रियाया व्याप्तुमिष्टत्वाद्रुदि सकर्मक' इति जयमङ्गल ।

भावार्थ —कोपविक्लवा सा शूर्पणखा राक्षसपरिषदमासाद्य क्रन्दितवती, रावणसमीपे हतभ्रात्रो खरदूषणयोर्नामोच्चारणपूर्वकं रुदितवती च ।

भाषार्थ —क्रोधसे विह्वल शूर्पणखा राक्षसोकी सभामे पहुँचकर रोने लगी और रावणके समीपमे भाई खरदूषणका नाम लेकर आँसू गिराने लगी ॥ ५ ॥

**दण्डकानध्यवात्ता यौ वीर ! रक्ष प्रकाण्डकौ ।**
**नृभ्या सख्येऽकृषाता तौ सभृत्यौ भूमिवर्धनौ ॥ ६ ॥**

अन्वय —हे वीर ! यौ रक्ष प्रकाण्डकौ दण्डकान् अध्यवात्ता, तौ सभृत्यौ नृभ्या सख्ये भूमिवर्धनौ अकृषाताम् ।

प्रयोगप० —हे वीर ! याभ्या रक्ष प्रकाण्डकाभ्यां दण्डका अध्यवासिषत, तौ सभृत्यौ नरौ ( कर्तृपदम् ) भूमिवर्द्धनौ अकृषाताम् ( अकार्ष्टा वा ) ।

व्याख्या—हे वीर=हे शूर, यौ, रक्ष प्रकाण्डकौ=प्रशस्तराक्षसौ, दण्डकान्=दण्डकारण्यप्रदेशान् ( 'दण्डकाम्' इति पाठेऽपि दण्डकाऽरण्यमित्यर्थ ), अध्यवात्ताम्=अध्युषितवन्तौ, तौ=पूर्वोक्तौ ( खरदूषणावित्यर्थ ), सभृत्यौ=साऽनुचरौ (सन्तौ), नृभ्या=मनुष्याभ्या, सख्ये=युद्धे, भूमिवर्द्धनौ=शवौ, अकृषाता=कृतौ ।

व्युत्पत्ति —रक्ष प्रकाण्डकौ=प्रकाण्डौ एव प्रकाण्डकौ, स्वार्थे कन्, 'स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' इति नपुसकप्रकृतित्वेऽपि पुल्लिङ्गता । 'मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ । प्रशस्तवाचकान्यमूनि' इत्यमर । प्रकाण्डकौ च ते रक्षसी रक्ष प्रकाण्डकौ, 'प्रशसावचनैश्च' इति समास , रूढशब्दानामाविष्टलिङ्गकत्वेन स्वस्वलिङ्गानामेव सामानाधिकरण्यम् । अथवा 'अस्त्री प्रकाण्ड स्कन्ध स्यात्' इति प्रकाण्डशब्द स्कन्धवचन । रक्षसो प्रकाण्डाविव रक्ष - प्रकाण्डौ, 'उपमित व्याघ्रादिभि सामान्याऽप्रयोगे' इति उपमितसमास । तद्वद्धुरन्धरावित्यर्थ । तत स्वार्थे कन् । दण्डकान्='अध्यवात्ताम्' इति योगे 'उपान्वध्याड्वस ' इत्याधारस्य कर्मत्वम् । दण्डो नाम कश्चिद्राजा तत्पालितो देशोऽपि दण्ड इत्युपचयते । स च शुक्रशापादिदानीमरण्यभूतत्वेन कुत्सितत्वे 'कुत्सिते' इति कप्रत्यये दण्डका इति चोच्यते, लोकतो लिंगवचननियमादिति मल्लिनाथ । अध्यवात्ताम्='वस निवासे' इत्यनिड्धातोर्लुङि सिचि 'वदव्रजहलन्तस्याऽच ' इति वृद्धि । 'स स्यार्धधातुके' इति धातुसकारस्य तकार , 'झलो झलि' इति सिचो लोप । सभृत्यौ भृत्यै सहितौ ( बहु० ) । भूमिवर्द्धनौ=वर्द्धयत इति वर्द्धनौ, 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यच ' इति नन्द्यादित्वाल्ल्यु । भूमेर्वर्धनौ (ष० त०), 'शव स्याद् भूमिवर्द्धन ' इत्यमर । अकृषाता=करोते कर्मणि लुङि आतामि सिचि पक्षे चिण्वदिडभावात् वृद्ध्यभाव ।

भावार्थ —हे वीर ! यौ राक्षसश्रेष्ठौ खरदूषणौ दण्डकारण्यमधिष्ठितौ तौ साऽनुचरौ मनुष्याभ्या युद्धे हतौ ।

भाषाऽर्थ —हे वीर ! जो-जो राक्षसश्रेष्ठ खर और दूषण दण्डकारण्यमे रहते थे वे अनुयायी वीरोके सहित दो मनुष्योसे युद्धमे मारे गये ॥ ६ ॥

अथ रावणमुपालभमाना षोडशभि कथयति—

**विग्रहस्तव शक्रेण बृहस्पतिपुरोधसा ।**
**सार्धं कुमारसेनान्या शून्यश्चाऽसीति को नय ॥ ७ ॥**

अन्वय —( हे स्वामिन् ! ) बृहस्पतिपुरोधसा कुमारसेनान्या शक्रेण सार्धं तव विग्रह ( तथाऽपि ) शून्य असि इति को नय ।

प्रयोगप०—विग्रहेण ( भूयते ), ( त्वया ) शून्येन ( भूयते ), केन नयेन ( भूयते ) ।

व्याख्या—( हे स्वामिन्=हे प्रभो ! ) बृहस्पतिपुरोधसा=वाचस्पतिपुरोहितेन, कुमारसेनान्या-स्कन्दसेनापतिना, शक्रेण=इन्द्रेण, सार्धं=सह, तव=भवत , विग्रह =विरोध,, ( तथापि=तादृग्विरोधेऽपि ) शून्य =निरुद्योग , असि=भवसि, इति=इदम् औदासीन्य, को नय =का नीति ( बलवद्विरोधग्रस्तस्य जयाऽभिलाषिण अनुष्ठेयकार्ये औदासीन्यमनर्थानुबन्धीति भाव ) ।

व्युत्पत्ति —बृहस्पतिपुरोधसा=बृहता पतिर्बृहस्पति (ष० त०), 'तद्बृहतोः करपत्योश्चोरदेवतयो सुट् तलोपश्च' इति सुट्तलोपौ, 'बृहस्पति सुराचार्यो गी पतिर्धिषणो गुरु ।' इत्यमर । पुरोधीयत इति पुरोधा ( असुन् प्रत्यय ), 'पुरोधास्तु पुरोहित' इत्यमर । बृहस्पति पुरोधा यस्य स बृहस्पतिपुरोधा , तेन ( बहु० ) । पुरोधसोऽपि मन्त्राऽधिकारत्वमस्ति, यदुक्त मनुना—'सर्वेषा तु विशिष्टेन, ब्राह्मणेन विपश्चिता । मन्त्रयेत पर मन्त्र राजा षाड्गुण्यसयुत ॥' इति । कुमारसेनान्या=सेना नयतीति सेनानी , 'सत्सूद्विषे'त्यादिना क्विप् । कुमार (स्कन्द ) सेनानीर्यस्य स कुमारसेनानी , तेन ( बहु० ) । शक्रेण='सार्धम्' इति योगे 'सहयुक्तेऽप्रधाने' इति तृतीया । असि=अस्तेर्लटि सिपि 'तासस्त्योर्लोप ' इति सकारलोप ।

भावार्थ —हे स्वामिन् ! यस्य इन्द्रस्य पुरोहितो बृहस्पति सेनापति कुमारस्तेन इन्द्रेण तव विरोधो नित्याऽनुषक्तस्तथाऽपि उद्योगशून्योऽसि, इयमुदासीनता का नीति ( नेय युक्तेति भाव ) ।

भाषाऽर्थ —हे प्रभो ! जिसके पुरोहित बृहस्पति ओर सेनापति कुमार है ऐसे इन्द्रके साथ आपका विरोध है तो भी आप उद्योग-शून्य ह, यह आपकी उदासीनता क्या नीति है ? ॥ ७ ॥

यद्यहं नाथ ! नाऽऽयास्यं विनासा हतबान्धवा ।
नाऽज्ञास्यस्त्वमिदं सर्वं प्रमाद्यंश्चारदुर्बलः ॥ ८ ॥

अन्वयः—हे नाथ ! विनासा हतबान्धवा अहं न आयास्यं यदि (तदा) प्रमाद्यन् चारदुर्बलः त्वं इदं सर्वं न अज्ञास्यः ।

प्रयोगप०—हे नाथ ! विनासया हतबान्धवया मया न आयास्यत यदि, (तदा) प्रमाद्यता चारदुर्बलेन त्वया इदं सर्वं न अज्ञास्यत ।

व्याख्या—हे नाथ=हे प्रभो !, विनासा=छिन्ननासिका ('विनसा' इति पाठे विगतया नासिकया उपलक्षिता इति व्याख्येयम्), हतबान्धवा=व्यापादितभ्रातृका, अहं=शूर्पणखा, न आयास्यं यदि=न आगच्छेयं चेत्, (तदा=तर्हि) प्रमाद्यन्=नित्यप्रमत्तः, चारदुर्बलः=गूढपुरुषरहितः, त्वं=भवान्, इदम्=एतत्, सर्वं=सकलम् (मन्नासाच्छेदनादिकमनर्थसमूहमिति भावः), न अज्ञास्यः=न जानीयाः (चाराऽभावात्सर्वत्र स्वस्यैव प्रसराऽसम्भवादिति भावः)।

व्युत्पत्तिः—विनासा=विगता नासा यस्याः सा (बहु०), 'घोणा नासा च नासिका ।' इत्यमरः । विगता नासिका यस्याः सा इति विग्रहे तु 'उपसर्गाच्च' इति समासाऽन्ताऽच्सहकृतनसादेशं बाधित्वा 'वेर्ग्रो वक्तव्यः' इति नासिकाशब्दस्य ग्रादेशे 'विग्रे'ति स्यात्, 'अञ्नासिकायाः सञ्ज्ञायां नसं चाऽस्थूलात्' इत्यस्य तु सञ्ज्ञाविषयत्वात्प्राप्तिरेव नाऽस्तीत्यवधेयम् । 'विनसा हतबान्धवा' इति भट्टोजिदीक्षितादिसम्मतः पाठस्तत्र तु विगता नासिका विनासिका (प्रादिसमासः), तया विनसा 'इत्थम्भूतलक्षणे' इति तृतीया, 'पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु' इति नसादेशः । हतबान्धवा=बन्धू एव बान्धवौ (स्वार्थे अण्), हतौ बान्धवौ यस्याः सा (बहु०) । आयास्यम्, अज्ञास्यः=यातेर्जानातेश्च क्रियाऽतिपत्तौ लृङ् । क्रियाऽतिपत्तिः=क्रियाया अनिष्पत्तिः । प्रमाद्यन्=प्रमाद्यतीति (शतृप्रत्ययः) । चारदुर्बलः=चरतीति चरः, पचाद्यच् । चर एव चारः 'प्रज्ञादिभ्यश्च' इत्यण्, गूढपुरुषः, 'यथाऽर्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः । चारश्च गूढपुरुषश्च' इत्यमरः । तेन दुर्बलः (तृ० त०)।

भावार्थः—हे प्रभो ! छिन्ननासिकाया व्यापादितभ्रातृकायाश्च ममाऽत्राऽऽगमनं नाऽभविष्यच्चेत्तदा सर्वदा प्रमत्तः प्रणिधिशून्यो भवानिदं सर्वं नाऽज्ञास्यत् ।

भाषाऽर्थ—हे प्रभो ! नासिका और अपने भाइयोंसे रहित मैं, यहाँ पर नहीं आती तो नित्य प्रमत्त और गुप्तचरसे शून्य आप इन सब वृत्तान्तोंको नहीं जानते ॥

करिष्यमाणं विज्ञेयं कार्यं किं नु कृतं परैः ।
अपकारे कृतेऽप्यज्ञो विजिगीषुर्न वा भवान् ॥ ९ ॥

अन्वय —परैः करिष्यमाणं कार्यं विज्ञेयं, कृतं किं नु ? भवान् अपकारे कृते अपि, अज्ञः, वा भवान् विजिगीषुः न ।

प्रयोगप०—परैः करिष्यमाणेन कार्येण विज्ञेयेन ( भूयते ), कृतेन ( विज्ञेयेन भूयते ) किं नु, भवता अज्ञेन ( भूयते ), वा भवता विजिगीषुणा न ( भूयते ) ।

व्याख्या—परैः=शत्रुभिः, करिष्यमाणं=विधास्यमानं ( अपचिकीर्षयेति भावः ), कार्यं=कर्म, विज्ञेयं=वेद्यं ( विजिगीषुणेति शेषः ), कृतं=विहितं कर्म, किं नु=किं वक्तव्यम् ( अवश्यमेव विज्ञेयमित्यर्थः । एतदुभयमपि पर्यालोच्य स्वकर्माऽनुष्ठेयमिति भावः ), भवान्=त्वम्, अपकारे कृते अपि=द्रोहे विहिते अपि, अज्ञः=अनभिज्ञः ( अस्तीति शेषः, ज्ञानमेव नाऽस्ति प्रतीकारस्तु दूरेऽपास्त इति भावः ), वा=अथवा, भवान्=त्वं, विजिगीषुः=विजयाऽभिलाषी, न=नास्ति ( अस्ति चेत् कथमस्य शत्रुकृतद्रोहस्य अज्ञानमिति भावः ) ।

व्युत्पत्तिः—परैः='अभिघातिपराऽरातिप्रत्यर्थिपरिपन्थिनः' । इत्यमरः । करिष्यमाणं=करिष्यत इति करिष्यमाणं, कृधातोः कर्मणि लृटि तस्य 'लृटः सद्वा' इति शत्रादेशः 'आने मुक्' इति मुगागमश्च । विज्ञेयं=विज्ञातुं योग्यं विज्ञेयम्, 'अचो यत्' इति यत् 'ईद्यति' इति आत ईत्, गुणश्च ।

भावाऽर्थः—विजिगीषुणा शत्रुभिर्विधास्यमानं विहितं च कार्यं विज्ञेयं, परं भवांस्तु शत्रुसम्पादिते अपकारेऽपि अनभिज्ञः, अतो भवतो जयाऽभिलाषित्वमपि नाऽस्तीति प्रतीयते ।

भाषाऽर्थ—जयाऽभिलाषी राजाको शत्रुओंसे किया जाने वाला कार्य जानना चाहिए, किया गया कार्य जानना चाहिए यह तो कहना ही क्या ? आप शत्रुओंके अपकार करनेपर भी अनभिज्ञ हैं, अथवा आप विजयाऽभिलाषी ही नहीं हैं ॥९॥

अज्ञतामेवाह—

वृतस्त्वं पात्रेसमितैः खट्वारूढः प्रमादवान् ।
पानशौण्डः श्रियं नेता नात्यन्तीनत्वमुन्मनाः ॥ १० ॥

अन्वय —त्वं पात्रेसमितैः वृतः खट्वारूढः प्रमादवान् पानशौण्डः उन्मनाः ( अतः ) श्रियम् अत्यन्तीनत्वं नेता न ।

प्रयोगप०—त्वां पात्रेसमिताः वृतवन्तः । खट्वारूढेन प्रमादवता पानशौण्डेन उन्मनसा ( त्वया ) नेत्रा न ( भूयते ) ।

व्याख्या—त्वं=भवान्, पात्रेसमितैः=भोजनसङ्गैः, वृतः=वेष्टितः, खट्वारूढः=परतल्पगतः ( उन्मार्गप्रस्थित इत्यर्थः ), प्रमादवान्=नित्याऽनवधानता-

युक्त, पानशौण्ड =मद्यपानव्यसनी, उन्मना =उत्कण्ठितचित्त ( विषयासक्त इत्यर्थं ), ( अत =एभ्यो हेतुभ्य ) श्रियम्=राजलक्ष्मीम्, अत्यन्तीनत्वम्=अत्यन्तगामित्व ( केवलात्मगामित्वमित्यर्थ ), नेता=प्रापणशील, न=न असि ( त्वच्चेष्टितानि सर्वथा राज्यभ्रंशकराणीत्यर्थ ) ।

व्युत्पत्ति —पात्रेसमितै =पात्रे समिता पात्रेसमिता, तै 'पात्रेसमितादयश्च' इति क्षेपे अलुक्समासनिपात, भोजनसमय एव सङ्गतैनतु मन्त्रसमय इत्यर्थ । प्रमादवान्=नित्य प्रमादोऽस्ति यस्य स. ( नित्ययोगे मतुप्प्रत्यय ), 'अत्वसन्तस्य चाऽधातो' इति दीर्घत्वम्, 'प्रमादोऽनवधानता ।' इत्यमर । पानशौण्ड =पाने शौण्ड, 'सप्तमी शौण्डै' इति सप्तमीतत्पुरुष 'मत्ते शौण्डोत्कटक्षीवा' इत्यमर' । उन्मना =उत्कण्ठित मनो यस्य स उन्मना, 'अत्वसन्तस्य चाधातो' इति दीर्घत्वम् । अत्यन्तीनत्वम्=अत्यन्त गामीति अत्यन्तीनम् 'अवारपाराऽत्यन्ताऽनुकाम गामी' इति खप्रत्यय ( खस्येन ), श्रीसम्बन्धेन स्त्रीत्वे विवक्षितेऽपि 'सामान्ये नपुसकम्' इति नपुसकत्वम् । अत्यन्तीनस्य भाव अत्यन्तीनत्व, तत् ( त्वप्रत्यय ) 'नेता' इति पदेन योगे 'न लोकाऽव्ययनिष्ठाखलर्थतृनाम्' इति षष्ठीप्रतिषेध । नेता=नयनशीलो नेता, 'तृन्' इति तृन्प्रत्यय । नयतिर्द्विकर्मक ।

भावार्थ —भवान् भोजनसमय एव सङ्गतैर्जनैर्वेष्टित उन्मार्गप्रस्थित नित्यमेवाऽनवधानतायुक्त मद्यव्यसनी विषयासक्तोऽस्ति, अतो राजलक्ष्मी केवलात्मगामिनी न करिष्यतीति सम्भाव्यते ।

भाषार्थ —आप भोजनसमयमे ही सङ्गत जनोसे घिरे हुए, उन्मार्गप्रस्थित, नित्य प्रमाद करनेवाले, मद्यपानके व्यसनी और विषयासक्त है, अत राजलक्ष्मीको केवल अपने ही अधीन नही रख सकेंगे, यह सम्भावना होती है ॥ १० ॥

अध्वरेष्वग्निचित्वत्सु सोमसुत्वत आश्रमान् ।
अत्तु महेन्द्रिय भागमैति दुश्च्यवनोऽधुना ॥ ११ ॥

अन्वय —अधुना दुश्च्यवन अग्निचित्वत्सु अध्वरेषु महेन्द्रिय भागम् अत्तु सोमसुत्वत आश्रमान् ऐति ।

प्रयोगप०—दुश्च्यवनेन सोमसुत्वत्त आश्रमा एयन्ते ।

व्याख्या—अधुना=अस्मिन् काले, दुश्च्यवन =इन्द्र, अग्निचित्वत्सु=आहिताग्नियुक्तेषु, अध्वरेषु=यज्ञेषु, महेन्द्रिय=महेन्द्रदेवताक, भाग=यज्ञाऽशम्, अत्तु=भक्षयितु, सोमसुत्वत =सोमयाजिमत, आश्रमान्=ऋष्याश्रमान्, ऐति=आगच्छति ( यज्ञवधस्तवाऽस्माज्ञाभङ्ग इति भाव ) ।

व्युत्पत्ति —अधुना='अधुना' इति सप्तम्यन्तस्य कालवाचिन इदम्शब्दस्य अधुनाप्रत्ययान्तो निपात , 'एतर्हि सम्प्रतीदानीमधुना साम्प्रत तथा ।' इत्यमर. । दुश्च्यवन =दुष्ट (स्वर्वैद्याभ्या यज्ञभागदातृत्वाद्दोषयुक्त ) च्यवनो यस्य स (बहु०), यद्वा दुष्ट च्यवते रणादिति दुश्च्यवन , 'च्युङ् गतौ' इति धातो 'चलनशब्दाऽर्था-दकर्मकाद्युच्' इति युच् । 'सक्रन्दनो दुश्च्यवनस्तुराषाण्मेघवाहन ' इत्यमर । अत्र दुश्च्यवनशब्दस्य कोशादो प्रसिद्धत्वेऽपि कविभिरप्रयुक्तत्वादप्रयुक्तत्वे प्राप्तेऽपि योगरूढ्या प्रत्यर्थिन्यूनत्वोद्भावनेन नायकस्योत्कर्षप्रतीतेर्गुणत्वमेव । अग्निचित्वत्सु= अग्नि चितवन्त इति अग्निचित , 'अग्नौ चे ' इति क्विप्, ते सन्ति येषु ते अग्नि-चित्वन्त , तेषु (मतुप्), 'तसौ मत्वर्थे' इति भत्वात् तकारस्य जश्त्वस्याऽभाव:, 'झय' इति मतोर्वत्वम् । महेन्द्रिय=महाश्चाऽसौ इन्द्रो महेन्द्र (क० धा०), स देवता यस्येति महेन्द्रिय , त, 'महेन्द्राद्घौ च' इति घप्रत्यय , 'आयनेया'त्यादिना घस्य इय. । सोमसुत्वत =सोम सुतवन्त इति सोमसुत , सोमोपपदपूर्वकात् 'षुञ् अभि-षवे' इति धातो 'सोमे सुञ ' इति क्विप्, सोमसुत सन्ति येषु ते सोमसुत्वन्त-स्तान्, पूर्ववन्मतुबादि । ऐति=आङ्पूर्वादिणो लट्, 'एत्येधत्यूठ्सु' इति वृद्धि ।

भावाऽर्थ —अधुना इन्द्र आहिताऽग्निभिरनुष्ठितेषु यज्ञेषु माहेन्द्र यज्ञाश भक्षयितु सोमयाजियुक्तान् ऋष्याश्रमान् आगच्छति ।

भाषाऽर्थ —आजकल अग्निहोत्रियोसे अनुष्ठित यज्ञोमे अपने यज्ञाऽशको भक्षण करने के लिए सोमयाजियोसे युक्त ऋषियोके आश्रममे आते है ।। ११ ।।

**आमिक्षीय दधिक्षीर पुरोडाश्यं तथौषधम् ।**
**हविर्हैयङ्गवीन च नाऽप्युपघ्नन्ति राक्षसा ।। १२ ।।**

अन्वय —आमिक्षीय दधिक्षीर तथा पुरोडाश्यम् ओषध हैयङ्गवोन हविश्च राक्षसा न उपघ्नन्ति ।

प्रयोगप०—दधिक्षीरमौषध हैयङ्गवीन हविश्च राक्षसैर्न उपहन्यते ।

व्याख्या—आमिक्षीय=आमिक्षार्थं, दधिक्षीर=दधिदुग्ध, तथा—तेन प्रकारेण, पुरोडाश्यम्=पुरोडाशाऽर्थम्, औषध=व्रीहियवादि, हैयङ्गवीन=ह्योगोदोहविकारं घृत, हविश्च=हवनीयद्रव्य च ( पूर्वोक्त त्रिविधमपि हविरित्यर्थ ), राक्षसा =यातु-धाना , न उपघ्नन्ति=न नाशयन्ति ( त्वयि उदासीने सति राक्षसाना पूर्ववत्पर-पीडनात्मको विक्रमो न दृश्यत इति भाव. ) ।

व्युत्पत्ति —आमिक्षीय=तप्ते दुग्धे दधियोगोत्पन्ना विकृति आमिक्षा, 'आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगत ।' इत्यमर । आमिक्षायै हितमामिक्षीयं तत् 'विभाषा हविरपूपादिभ्य ' इति छप्रत्यय , दधिक्षीर=दधि च क्षीर च दधिक्षीर, तत् 'विभाषावृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वाऽपराऽधरोत्तराणाम्' इति

व्युत्पत्ति —अधुना='अधुना' इति सप्तम्यन्तस्य कालवाचिन इदम्शब्दस्य अधुनाप्रत्ययाऽन्तो निपात , 'एतर्हि सम्प्रतीदानीमधुना साम्प्रत तथा ।' इत्यमर । दुश्च्यवन =दुष्ट (स्ववैद्याभ्या यज्ञभागदातृत्वाद्दोषयुक्त ) च्यवनो यस्य स (बहु०), यद्वा दुष्ट च्यवते रणादिति दुश्च्यवन , 'च्युङ् गतौ' इति धातो 'चलनशब्दार्थादकर्मकाद्युच्' इति युच् । 'सक्रन्दनो दुश्च्यवनस्तुराषाण्मेघवाहन ' इत्यमर । अत्र दुश्च्यवनशब्दस्य कोशादौ प्रसिद्धत्वेऽपि कविभिरप्रयुक्तत्वादप्रयुक्तत्वे प्राप्तेऽपि योगरूढ्या प्रत्यर्थिन्यूनत्वोद्भावनेन नायकस्योत्कर्षप्रतीतेर्गुणत्वमेव । अग्निचित्वत्सु=अग्नि चितवन्त इति अग्निचित , 'अग्नौ चे ' इति क्विप्, ते सन्ति येषु ते अग्निचित्वन्त , तेषु (मतुप्), 'तसौ मत्वर्थे' इति भत्वात् तकारस्य जश्त्वस्याऽभाव', 'झय' इति मतोर्वत्वम् । महेन्द्रिय=महाश्चाऽसो इन्द्रो महेन्द्र (क० धा०), स देवता यस्येति महेन्द्रिय , त, 'महेन्द्राद्धौ च' इति घप्रत्यय , 'आयनेया'त्यादिना घस्य इय. । सोमसुत्वत =सोम सुतवन्त इति सोमसुत , सोमोपपदपूर्वकात् 'षुञ् अभिषवे' इति धातो 'सोमे सुञ ' इति क्विप्, सोमसुत सन्ति येषु ते सोमसुत्वन्तस्तान्, पूर्ववन्मतुवादि । ऐति=आङ्पूर्वादिणो लट्, 'एत्येधत्यूठ्सु' इति वृद्धि ।

भावार्थ —अधुना इन्द्र आहिताऽग्निभिरनुष्ठितेषु यज्ञेषु माहेन्द्र यज्ञाश भक्षयितु सोमयाजियुक्तान् ऋष्याश्रमान् आगच्छति ।

भाषाऽर्थ —आजकल अग्निहोत्रियोसे अनुष्ठित यज्ञोमे अपने यज्ञाऽशको भक्षण करने के लिए सोमयाजियोसे युक्त ऋषियोके आश्रममे आते है ॥ ११ ॥

**आमिक्षीय दधिक्षीर पुरोडाश्य तथौषधम् ।**
**हविर्हैयङ्गवीन च नाऽप्युपघ्नन्ति राक्षसा ॥ १२ ॥**

अन्वय —आमिक्षीय दधिक्षीर तथा पुरोडाश्यम् ओषध हैयङ्गवीन हविश्च राक्षसा न उपघ्नन्ति ।

प्रयोगप०—दधिक्षीरमौषध हैयङ्गवीन हविश्च राक्षसैर्न उपहन्यते ।

व्याख्या—आमिक्षीय=आमिक्षार्थं, दधिक्षीर=दधिदुग्ध, तथा–तेन प्रकारेण, पुरोडाश्यम्=पुरोडाशाऽर्थम्, औषध=व्रीहियवादि, हैयङ्गवीन=ह्योगोदोहविकारं घृत, हविश्च=हवनीयद्रव्य च ( पूर्वोक्त त्रिविधमपि हविरित्यर्थ ), राक्षसा =यातुधाना , न उपघ्नन्ति=न नाशयन्ति ( त्वयि उदासीने सति राक्षसाना पूर्ववत्परपीडनात्मको विक्रमो न दृश्यत इति भाव. ) ।

व्युत्पत्ति —आमिक्षीय=तप्ते दुग्धे दधियोगोत्पन्ना विकृति आमिक्षा, 'आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगत ।' इत्यमर । आमिक्षायै हितमामिक्षीयं तत् 'विभाषा हविरपूपादिभ्य ' इति छप्रत्यय , दधिक्षीर=दधि च क्षीर च दधिक्षीर, तत् 'विभाषावृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वाऽपराऽधरोत्तराणाम्' इति

सवनीय पशुरित्यर्थ, पूर्वसूत्रेण छप्रत्यय । सवनीयस्य इमानि सावनीयानि (पशुसम्बन्धीनीत्यर्थ ), 'तस्येदम्' इत्यण् । रामात्='भीत्रार्थाना भयहेतु' इत्यपादानत्वम् । बिभ्यति='ञिभी भये' इति धातोर्लट शतरि 'नाऽभ्यस्ताच्छतु' इति नुमभाव पक्षे 'वा नपुसकस्य' इति नुमि 'बिभ्यन्ति' इति वा रूपम् ।

भावार्थ —साम्प्रतम् अतिकोमलानि यज्ञसाधनाऽर्थानि मासानि इन्द्रादयो देवा भक्षयन्ति, राक्षसास्तु रामभयात् पलायन्ते ।

भाषार्थ —आजकल अत्यन्त कोमल और यज्ञसाधनके उपयुक्त मास देवतालोग खाते हैं, राक्षस तो रामसे डरते हुए दिशाओ को व्याप्त करते है ( भागते है ) ॥ १४ ॥

कुरु बुद्धि कुशाग्रीयामनुकामीनता त्यज ।
लक्ष्मी परम्परीणा त्व पुत्रपौत्रीणता नय ॥ १५ ॥

अन्वय —त्व बुद्धि कुशाग्रीया कुरु अनुकामीनता त्यज, परम्परीणा लक्ष्मी पुत्रपौत्रीणता नय ।

प्रयोगप०—त्वया बुद्धि कुशाग्रीया क्रियताम्, अनुकामीनता त्यज्यता, परम्परीणा लक्ष्मी पुत्रपौत्रीणता नीयताम् ।

व्याख्या—( हे प्रभो ! ) त्व=भवान्, बुद्धि=मति, कुशाग्रीया = दर्भाग्रसूक्ष्मा, कुरु=विधेहि ( सूक्ष्मदर्शी भवेत्यर्थ ) । अनुकामीनता=यथेच्छगामिता, त्यज=मुञ्च ( यथेष्टचारी मा भूरित्यर्थ ) । परम्परीणा=परम्पराऽऽगता ( पितृपितामहादिक्रमागतामित्यथ ), लक्ष्मी=राजश्रिय, पुत्रपौत्रीणता = पुत्रपौत्राऽनुभाविता, नय = प्रापय ( पुत्रपौत्राद्युत्तरपुरुषगामिनी कुरु, न तूपेक्षया स्वमात्राऽवसिता कुर्वित्यर्थ ) ।

व्युत्पत्ति —कुशाऽग्रीया = कुशस्य अग्र कुशाऽग्रम्, 'अस्त्री कुश कुशो दर्भः पवित्रम्' इत्यमर । कुशाऽग्रमिव बुद्धि कुशाऽग्रीया, ता, 'कुशाऽग्राच्छ' इति छप्रत्यय । 'कुशाग्रीया बुद्धि कुरु' इति मल्लिनाथाऽभ्युपगतोऽन्वयस्तु 'अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत् ।' इति नयेन विधेयाऽविमर्शदोषदुष्टत्वात्परिहरणीय । अनुकामीनताम् अनुकाम गामी अनुकामीन, यथेष्ट गन्तेत्यर्थ । 'अवारपाराऽत्यन्ताऽनुकाम गामी' इति खप्रत्यय । 'काम गाम्यनुकामीन' इत्यमर । अनुकामीनस्य भाव अनुकामीनता, ताम् (तल्प्रत्यय ) । परम्परीणा=पराश्च परतराश्च अनुभवतीति परम्परीणा, ता 'परोवरपरम्परपुत्रपौत्रमनुभवती'ति खप्रत्यय, प्रकृते परम्परभावो निपात्यते । पुत्रपौत्रीणता=पुत्रस्याऽनन्तराऽपत्य पुमान् पौत्र, 'अनृष्यानन्तर्ये विदादिभ्योऽञ्' इत्यञ् । पुत्राश्च पौत्राश्च अनुभवतीति पुत्रपौत्रीणां

जातौ णिनिस्ताच्छील्ये' इति णिनि । महोपाध्यायमल्लिनाथास्तु 'खे विचार खविचार ( स० त० ) । सोऽस्ति एषा ते खविचारिणस्तान् (इनिप्रत्यय ) इति प्रतिपाद्य 'पुन सुब्ग्रहणेन उपसृष्टात् तन्निषेधादेतादृशस्थले न णिनिप्रत्यय ' इति यत् कथयन्ति, तदयुक्त भाष्यविरोधात् । यज्ञद्रुह =यज्ञेभ्यो द्रुह्यन्तीति यज्ञद्रुह , तान्, 'सत्सूद्विषे'त्यादिना क्विप् । कालकल्पै =ईषदसमाप्ता काला कालकल्पा , तै (कल्पप्प्रत्यय ) । शिलीमुखै =शिली ( शल्यम् ) मुख येषा ते शिलीमुखा तै (बहु०), 'अलिबाणौ शिलीमुखौ' इत्यमर । 'कालकल्पशिलीमुख' इति पाठे समाप्तपुनरात्ताऽभिधानो दोष , सुप्तिङन्ताना पदाना परस्पराऽन्वयेन वाक्यपरिसमाप्त्या आकाङ्क्षाशान्तौ पुनर्विशेषणान्तरोपादान हि तत्स्वरूपम् । 'कालकल्पै शिलैमुखै ' इत्यस्य तु कथभावाऽऽकाङ्क्षाया अपहारकत्वान्निर्दोषत्वमिति सर्वं सुस्थम् ।

भावार्थ —तरुणपत्नीसहित कार्मुकहस्तो रामो भूमिस्थितोऽपि आकाशचारिणो राक्षसान् अन्तकोपमबाणैर्व्यापादयति ।

भाषार्थ —तरुणी पत्नीसे युक्त, धनुर्धारी रामचन्द्र पृथ्वीमे रहकर भी आकाशमे विचरण करनेवाले राक्षसोको कालसदृश बाणोसे मारते है ॥ १३ ॥

**मासान्योष्ठाऽवलोप्यानि साधनीयानि देवता ।**
**अश्नन्ति, रामाद्रक्षासि बिभ्यत्यश्नुवते दिश ॥ १४ ॥**

अन्वय —ओष्ठाऽवलोप्यानि साधनीयानि मासानि देवता अश्नन्ति, रक्षासि रामात् बिभ्यति दिश अश्नुवते ।

प्रयोगप०— मासानि देवताभि अश्यन्ते, रक्षोभि रामाद्बिभ्यद्भि (सद्भि ) दिश अश्यन्ते ।

व्याख्या—ओष्ठाऽवलोप्यानि=अधरच्छेदाऽर्हाणि ( अतिकोमलानीत्यथ ), साधनीयानि=यज्ञसाधनहितानि ('सावनीयानि' इति पाठे यज्ञहितानि इत्यर्थ ), मासानि=सस्कृतपशुपल्लानि, देवता =सुरा ( इन्द्रादय इत्यर्थ ), अश्नन्ति=भक्षयन्ति । रक्षासि= राक्षसा , रामात्=रामचन्द्रात्, बिभ्यति=भीतानि सन्ति, दिश = काष्ठा , अश्नुवते=व्याप्नुवन्ति, पलायन्त इति भाव । (प्राग्राक्षसा यज्ञेषु आच्छिद्य मासान्यभक्षयन्, देवता दिशो व्याप्नुवन्, साम्प्रत तु तद्वैपरीत्य जातमित्यर्थ ) ।

व्युत्पत्ति —ओष्ठाऽवलोप्यानि=अवलोप्तु योग्यानि अवलोप्यानि, 'ऋहलोर्ण्यत्' इति ण्यत् । ओष्ठाभ्यामवलोप्यानि ओष्ठाऽवलोप्यानि, तानि 'कृत्यैरधिकाऽर्थवचने' इति करणे तृतीयातत्पुरुष , 'ओष्ठाऽधरौ तु रदनच्छदौ दशनवाससी ।' इत्यमर । साधनीयानि=यज्ञस्य साधनाय हितानि इति साधनीयानि, तानि 'तस्मै हितम्' इति छप्रत्यय । 'सावनीयानि' इतिवा पाठ , तत्र सवन यज्ञ तस्मै हित,

अविश्वासकारणमाह—

**लक्ष्मी पुंयोगमाशंसुः कुलटेव कुतूहलात्।**
**अन्तिकेऽपि स्थिता पत्युश्छलेनाऽन्यं निरीक्षते ॥ १७ ॥**

अन्वय—लक्ष्मी कुलटा इव कुतूहलात् पुंयोगम् आशंसुः (सती) पत्युः अन्तिके स्थिता अपि छलेन अन्यं निरीक्षते।

प्रयोगप०—लक्ष्म्या कुलटयेव आशंस्वा (सत्या) स्थितयाऽपि अन्यो निरीक्ष्यते।

व्याख्या—लक्ष्मीः=श्रीः, कुलटा इव=व्यभिचारिणी इव, कुतूहलात्=कौतुकात्, पुंयोगं=पुरुषसंसर्गम्, आशंसुः=अभिलषन्ती (सती), पत्युः=भर्तुः, अन्तिके=समीपे, स्थिता अपि-उपविष्टा अपि, छलेन=व्याजेन, अन्यम्=अपरं (कान्तमित्यर्थः), निरीक्षते=पश्यति (ईषत्प्रमादेऽपि अन्यमुपगच्छतीत्यर्थः)।

व्युत्पत्ति—लक्ष्मीः—लक्षयति (पश्यति) नीतिज्ञपुरुषमिति लक्ष्मीः 'लक्ष-दर्शनाऽङ्कनयोः' इति धातोः 'लक्षेर्मुट् च' इत्यौणादिकः ईप्रत्ययः, तस्य च मुट् अतो ङीप्प्रत्ययान्तत्वाभावात् 'हल्ङयाब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्' इति सुलोपो न। कुलटा=अटतीति अटा, पचाद्यच्, कुलस्य अटा कुलटा, 'शकन्ध्वादिषु पररूपं वाच्यम्' इति पररूपत्वम्। कुतूहलात्=हेतौ पञ्चमी, 'कौतूहलं कौतुकं च कुतुकं च कुतूहलम्।' इत्यमरः। पुंयोगात्=पुंसा योगः पुंयोगस्तम् (तृ० त०)। आशंसुपदेन योगे 'न लोकाव्यये'त्यादिना षष्ठीप्रतिषेधः। आशंसुः=आशंसत इति आशंसुः, 'सनाशंसभिक्ष उः' इत्युप्रत्ययः।

भावार्थ—लक्ष्मीः स्वैरिणीव कौतुकात् परपुरुषसंसर्गमभिलषन्ती सती पति-समीपोपविष्टाऽपि व्याजेन पुरुषाऽन्तरं पश्यति (अतः सर्वथाऽपि इयं संरक्षणीयेति भावः)।

भाषार्थ—लक्ष्मी कुलटाकी तरह कुतूहलसे पुरुषसंसर्ग चाहती हुई पतिके समीप रहकर भी छलसे परपुरुषको ताकती है ॥ १७ ॥

पूर्वं युवजानिरित्युक्तं साम्प्रतं तद्योषित्प्रलोभनाय आह—

**योषिद्वृन्दारिका यस्य दयिता हंसगामिनी।**
**दूर्वाकाण्डमिव श्यामा न्यग्रोधपरिमण्डला ॥ १८ ॥**

अन्वय—तस्य दयिता योषिद्वृन्दारिका हंसगामिनी दूर्वाकाण्डम् इव (स्थिता) श्यामा न्यग्रोधपरिमण्डला (अस्ति)।

प्रयोगप०—तस्य दयितया योषिद्वृन्दारिकया हंसगामिन्या दूर्वाकाण्डेनैव श्यामया न्यग्रोधपरिमण्डलया (भूयते)।

पूर्वसूत्रेण खप्रत्यय , लक्ष्मीसम्बन्धेन स्त्रीलिङ्गत्वे प्राप्ते 'सामान्ये नपुंसकम्' इति नपुंसकत्व, पुत्रपौत्रीणस्य भाव पुत्रपौत्रीणता, ताम् ( तल् ) ।

भावार्थ —हे प्रभो ! त्व सूक्ष्मदर्शी भव, यथेष्टचारी मा भू , पितृपितामहादिक्रमागताया राजश्रिय पुत्रपौत्राद्युत्तरपुरुषेषु अपि स्थिरता सम्पादय ।

भाषार्थ —हे प्रभो ! आप बुद्धिको कुशके अग्रभागकी तरह सूक्ष्म कीजिए, यथेच्छाचारी मत बनिए, पितृ-पितामह आदि पूर्वपुरुषोंके क्रमसे आयी हुई लक्ष्मीको पुत्र-पौत्र आदियोंके समय तक टिकनेवाली बनाइये ॥ १५ ॥

ननु मद्धस्तप्राप्ताया लक्ष्म्या कथ विपर्ययकथेत्याशङ्क्याह—

**सहायवन्त उद्युक्ता बहवो निपुणाश्च याम् ।**
**श्रियमाशासते, लोला ता हस्तेकृत्य मा श्वसी ॥ १६ ॥**

अन्वय —लोला या श्रिय सहायवन्त उद्युक्ता बहव निपुणा आशासते, ता हस्तेकृत्य मा श्वसी ।

प्रयोगप०—लोला या श्री सहायवद्भि उद्युक्तैर्बहुभिर्निपुणैराशास्यते, मा श्वसि।

व्याख्या—लोला=चञ्चला ( अस्थिरामित्यर्थ ), या=त्वदीया, श्रिय—राजलक्ष्मी, सहायवन्त =कोशदण्डसपन्ना ( प्रभुशक्तिमन्त इत्यर्थ ), उद्युक्ता =उत्साहयुक्ता , बहव =अनेके ( विदुषोऽपि एकस्य अनिर्णायकत्वादित्यर्थ ), निपुणा =मन्त्रकुशला ( एव प्रभूत्साहमन्त्रात्मकशक्तित्रयोपेता अपि ) आशासते=इच्छन्ति; ता=श्रिय, हस्तेकृत्य=स्वीकृत्य, मा श्वसी =मा विश्वसी (मा विश्वास कार्षीरित्यर्थ )

व्युत्पत्ति —श्रिय='सम्पत्ति श्रीश्च लक्ष्मीश्च' इत्यमर । सहायवन्त =सह अयन्ते इति सहाया , सहोपपदात् 'अय गतौ' इति धातो पचाद्यच्, सहाया सन्ति येषा ते सहायवन्त (मतुप् ) । आशासते='आङ शासु इच्छायाम्' इत्यादादिकस्य आत्मनेपदिनो लटि रूपम् । शपो लुक्, 'आत्मनेपदेष्वनत ' इति झस्यादन् । हस्तेकृत्य=हस्ते कृत्वा इति हस्तेकृत्य, 'नित्यह स्तेपाणावुपयमने' इति हस्तेशब्दस्य गतित्वात् 'कुगतिप्रादय.' इति समास , तत क्त्वो ल्यप् । मा श्वसी =माङ्पूर्वात् श्वसेर्लुङि सिचि 'ह्यन्तक्षणश्वसजागृणिश्व्येदिताम्' इति वृद्धिप्रतिषेध , 'इट ईटि' इति सिचो लोप ।

भावार्थ —चञ्चला या लक्ष्मी प्रभुमन्त्रोत्साहात्मकशक्तित्रयोपेता बहवो नीतिज्ञा जना कामयन्ते, ता स्वीकृत्य 'इय मद्वशमापन्ना' इति विचार्य मा विश्वास कार्षी ।

भाषार्थ —हे प्रभो ! चञ्चला जिस लक्ष्मीको प्रभुशक्ति, मन्त्रशक्ति और उत्साहशक्तिमे सम्पन्न बहुतेरे नीतिज्ञ पुरुष पानेकी इच्छा करते है, उस लक्ष्मीको हस्तगत करके भी विश्वास मत कीजिए ॥ १६ ॥

अविश्वासकारणमाह—

**लक्ष्मी पुंयोगमाशंसु कुलटेव कुतूहलात् ।**
**अन्तिकेऽपि स्थिता पत्युश्छलेनान्यं निरीक्षते ॥ १७ ॥**

अन्वय —लक्ष्मी कुलटा इव कुतूहलात् पुंयोगम् आशंसु ( सती ) पत्युः अन्तिके स्थिता अपि छलेन अन्यं निरीक्षते ।

प्रयोगप०—लक्ष्म्या कुलटयेव आशंस्वा (सत्या) स्थितयाऽपि अन्यो निरीक्ष्यते ।

व्याख्या—लक्ष्मी =श्री , कुलटा इव=व्यभिचारिणी इव, कुतूहलात्=कौतुकात्, पुंयोग=पुरुषसंसर्गम्, आशंसु =अभिलषन्ती (सती), पत्यु =भर्तु , अन्तिके=समीपे, स्थिता अपि–उपविष्टा अपि, छलेन=व्याजेन, अन्यम् = अपर ( कान्तमित्यर्थ ), निरीक्षते–पश्यति ( ईषत्प्रमादेऽपि अन्यमुपगच्छतीत्यर्थ ) ।

व्युत्पत्ति —लक्ष्मी –लक्षयति ( पश्यति ) नीतिज्ञपुरुषमिति लक्ष्मी 'लक्षदर्शनाऽङ्कनयो ' इति धातो 'लक्षेर्मुट् च' इत्यौणादिक ईप्रत्यय , तस्य च मुट् अतो ङीप्प्रत्ययान्तत्वाभावात् 'हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्' इति सुलोपो न । कुलटा=अटतीति अटा, पचाद्यच्, कुलस्य अटा कुलटा, 'शकन्ध्वादिषु पररूपं वाच्यम्' इति पररूपत्वम् । कुतूहलात्=हेतौ पञ्चमी, 'कौतूहलं कौतुकं च कुतुकं च कुतूहलम् ।' इत्यमर । पुंयोगात्=पुंसा योग पुंयोगस्तम् (तृ० त० ) । आशंसुपदेन योगे 'न लोकाव्यये'त्यादिना षष्ठीप्रतिषेध । आशंसु =आशंसत इति आशंसु , 'सनाशंसभिक्ष उ ' इत्युप्रत्यय ।

भावार्थ —लक्ष्मी स्वैरिणीव कौतुकात् परपुरुषसंसर्गमभिलषन्ती सती पतिसमीपोपविष्टाऽपि व्याजेन पुरुषाऽन्तरं पश्यति ( अत सर्वथाऽपि इयं संरक्षणीयेति भाव ) ।

भाषार्थ —लक्ष्मी कुलटाकी तरह कुतूहलसे पुरुषसंसर्ग चाहती हुई पतिके समीप रहकर भी छलसे परपुरुषको ताकती है ॥ १७ ॥

एवं युवजानिरित्युक्तं साम्प्रतं तद्योषित्प्रलोभनाय आह—

**योषिद्वृन्दारिका यस्य दयिता हंसगामिनी ।**
**दूर्वाकाण्डमिव श्यामा न्यग्रोधपरिमण्डला ॥ १८ ॥**

अन्वय —तस्य दयिता योषिद्वृन्दारिका हंसगामिनी दूर्वाकाण्डम् इव ( स्थिता ) श्यामा न्यग्रोधपरिमण्डला ( अस्ति ) ।

प्रयोगप०—तस्य दयितया योषिद्वृन्दारिकया हंसगामिन्या दूर्वाकाण्डेनैव श्यामया न्यग्रोधपरिमण्डलया ( भूयते ) ।

व्याख्या—तस्य=पूर्वोक्तस्य राक्षसनाशकस्य ( रामस्येत्यर्थ ), दयिता=प्रिया ( सीतेति भाव ), योषिद्वृन्दारिका=ललनामुख्या, हंसगामिनी=हंसगति, ( 'हंसनादिनी'ति पाठो भरतमल्लिकमत, हंसशब्देति तदर्थ । यद्वा—'गजेन्द्र-गमना तन्वी कोकिलालापसंयुता । नितम्बे गुर्विणी या सा कथ्यते हंसनादिनी ।' इति शब्दमालास्थलक्षणलक्षितेत्यर्थ ), दूर्वाकाण्डम् इव=अनन्तास्तम्बम् इव ( स्थितेति शेष, कृशाङ्गीत्यर्थ, दूर्वाकाण्डम् इव श्यामा=कृष्णवर्णा इत्युक्तौ तु रामायणविरोध ), श्यामा=यौवनमध्यस्था अप्रसूता वा, न्यग्रोधपरिमण्डला=वटपत्रवद्वर्तुला ( उदरे इति शेष, अनुपूर्वोदरेत्यर्थ, यद्वा 'स्तनौ सुकठिनौ यस्या नितम्बे च विशालता । मध्ये क्षीणा भवेद्या सा न्यग्रोधपरिमण्डला ॥' इति शब्दमालालक्षणलक्षिता । अस्तीति शेष ) ।

व्युत्पत्ति—योषिद्वृन्दारिका=वृन्द गुणवृन्दमस्ति यस्या सा वृन्दारिका, 'शृङ्गवृन्दाभ्यामारकन्' इत्यारकन्प्रत्यय, 'वृन्दारकौ रूपिमुख्यौ' इत्यमर । तत-ष्टापि 'प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुप' इति कात्पूर्वस्येत्वम् । योषिच्च सा वृन्दारिका योषिद्वृन्दारिका 'वृन्दारकनागकुञ्जरै पूज्यमानम्' इति समास । हंस-गामिनी=हंस इव गच्छतीति हंसगामिनी, 'कर्त्र्युपमाने' इति णिनि । तत स्त्री-त्वविवक्षायाम् 'ऋन्नेभ्यो ङीप्' इति ङीप् । 'हंसनादिनी'ति पाठेऽपि हंस इव नदतीति, तथैव णिन्यादि । दूर्वाकाण्ड=दूर्वाया काण्ड ( ष० त० ), 'दूर्वा तु शतपर्विका । सहस्रवीर्याभार्ग्व्यौ रुहाऽनन्ता' इत्यमर । न्यग्रोधपरिमण्डला=लक्षणया न्यग्रोधपत्रमपि 'न्यग्रोधम्' इत्युच्यते, न्यग्रोधमिव परिमण्डला (वर्तुला) 'उपमानानि सामान्यवचनै' इति समास ।

भावार्थ—रामस्य प्रिया ललनामुख्या हंसगति कृशाङ्गी यौवनमध्यस्था वटपत्रवर्तुलोदरा वर्तते ।

भाषार्थ—रामकी प्रिया स्त्रियोमे मुख्य, हंसगामिनी, दूर्वाकाण्डकी तरह कृशाङ्गी, यौवनमध्यस्था और वटपत्रकी नाईं गोल उदरवाली है ॥ १८ ॥

**नाऽऽस्यं पश्यति यस्तस्या निन्दते दन्तच्छद न वा ।**
**सम्शृणोति न चोक्तानि मिथ्याऽऽसौ विहितेन्द्रिय ॥ १९ ॥**

अन्वय—य तस्या आस्य न पश्यति, दन्तच्छद न निन्दते वा, उक्तानि न सम्शृणोति च, असौ मिथ्याविहितेन्द्रिय ।

प्रयोगप०—येन तस्या आस्य न दृश्यते, दन्तच्छदो वा न निन्द्यते, उक्तानि न सश्रूयन्ते च, अमुना मिथ्याविहितेन्द्रियेण ( भूयते ) ।

व्याख्या—य =पुरुष , तस्या =रामदयिताया ( सीताया इत्यर्थ ) आस्य=मुख, न पश्यति=न अवलोकयति, दन्तच्छदम्—अधर, न निंस्ते वा=न चुम्बति वा, उक्तानि=भाषितानि, न सम्भृणोति च=न समाकर्णयति च, असौ=तादृश पुरुष , मिथ्या=वृथैव, विहितेन्द्रिय =निर्मितकरण ( तादृशपुरुषस्य इन्द्रियसृष्टिर्निष्फलैवेत्यर्थ ) ।

व्युत्पत्ति —आस्य=‘वक्त्राऽऽस्ये वदन तुण्डमानन लपन मुखम्’ इत्यमर । दन्तच्छद=छाद्यते अनेनेति छद , ‘पुसि सज्ञाया घ प्रायेण’ इति घप्रत्यय ‘छादेर्घेऽद्व्युपसर्गस्य’ इति ह्रस्वत्वम् । निंस्ते-‘णिसि चुम्बने’ इति आदादिकधातोर्लटि तङ् शपो लुक्, इदित्त्वान्नुम् च । सम्भृणोति=सकर्मकत्वात् ‘समो गम्यृच्छिभ्याम्’ इति नात्मनेपदम् । विहितेन्द्रिय.=विहितानि इन्द्रियाणि यस्य स ( बहु० ) ।

भावार्थ —य पुरुषो रामदयिताया मुख न विलोकयति, अधर न चुम्बति वा, भाषितानि न आकर्णयति च, तस्य इन्द्रियनिर्माण निष्फलमेव ।

भाषार्थ —जो पुरुष रामकी प्रियाका मुख नही देखता है, उसका अधर नही चूमता है, अथवा भाषण नही सुनता है, उस पुरुषकी इन्द्रियसृष्टि निष्फल ही है ॥

**साराेऽसाविन्द्रियार्थाना यस्याऽसौ तस्य नन्दथु ।**
**तल्पे कान्ताऽन्तरैः सार्धं मन्येऽह धिङ्निमज्जथुम् ॥२०॥**

अन्वय —असौ इन्द्रियार्थाना सार , असौ यस्य तस्य नन्दथु कान्तान्तरै सार्धं तल्पे निमज्जथु धिक् ( इति ), अह मन्ये ।

प्रयोगप०—अमुया सारेण ( भूयते ), नन्दथुना ( भूयते ), मया मन्यते ।

व्याख्या—असौ=स्त्री, इन्द्रियार्थाना—रूपरसादिविषयाणा सार =एकत्र सगृहीतसर्वविषयसार , अथवा स्थिराऽश ( श्रेष्ठ इत्यर्थ ) असौ=स्त्री, यस्य-यत्सम्बन्धिनी, तस्य=पुरुषस्य, नन्दथु =आनन्द । कान्तान्तरै =अन्यस्त्रीभि , सार्धं=सह, तल्पे=पर्यङ्के, निमज्जथु=निमज्जन, धिक्=कष्टम् (इति=एवम्), अह=शूर्पणखा, मन्ये=जाने ।

व्युत्पत्ति —इन्द्रियार्थानाम्=इन्द्रियाणाम् अर्था इन्द्रियार्था , तेषाम् ( ष० त० ) । नन्दथु –‘टुनदि समृद्धौ’ इति धातो ‘ट्वितोऽथुच्’ इत्यथुच् । कान्तान्तरै =अन्या कान्ता कान्तान्तराणि, तै , (रूपकसमास ), ‘सहयुक्तेऽप्रधाने’ इति तृतीया, निमज्जथुं=निपूर्वात् ‘टुमस्जो शुद्धौ’ इति धातो पूर्वसूत्रेण अथुच्, धिग्योगे तदन्ताद् द्वितीया ।

भावार्थ —असौ रामदयिता रूपरसादिविषयाणा श्रेष्ठा, असौ यस्य प्रिया तस्य आनन्द , एतस्या सत्यामन्याभि कान्ताभि शयनीये निमज्जन धिक् इति मन्ये।

भाषार्थ —वह रामकी प्रिया रूप-रस आदि विषयोमे श्रेष्ठ ह, वह जिसकी है उसको आनन्द ह, उसकी विद्यमानतामे पलगपर और प्रियाओके साथ सोनेको धिक्कार हे, मै ऐसा मानता हू ॥ २०॥

**न त पश्यामि, यस्याऽसौ भवेन्नोदेजया मते ।**
**त्रैलोक्येनाऽपि विन्दस्त्व ता क्रीत्वा सुकृती भव ॥ २१ ॥**

अन्वय —असा यस्य मते उदेजया न भवेत्, त न पश्यामि, ( अत ) त्व ता त्रैलोक्येन अपि क्रीत्वा विन्द ( सन् ) सुकृती भव ।

प्रयोगप०—अमुया उदेजयया न भूयते स न ( मया ) दृश्यते, त्वया विन्देन ( सता ) सुकृतिना भूयताम् ।

व्याख्या—असौ = स्त्री, यस्य = पुरुषस्य, मते = मानसस्य, उदेजया = कम्पनी, न भवेत् = न स्यात्, त = पुरुष, न पश्यामि = न अवलोकयामि ( तादृग्धीर कश्चिदपि नाऽस्तीत्यर्थ ), (अत = अस्मात्कारणात्), त्व = रावण , ता = सुन्दरी, त्रैलोक्येन अपि = लोकत्रयेण अपि ( स्वर्गमर्त्यपाताऌात्मकेनाऽपीत्यर्थ ), क्रीत्वा = क्रय कृत्वा ( लब्ध्वेत्यर्थ ), विन्द = लभमान ( सन् ), सुकृती = सुपण्डित , पुण्यवान् सुकृतकृत्यो वा, भव = एधि ( लोकोत्तरस्त्रीरत्नलाभादिति भाव ) ।

व्युत्पत्ति —मते = कृद्योगे कर्मणि षष्ठी । उदेजया = उदेजयते कम्पयतीति उदेजया, उत्पूर्वात् ण्यन्तात् 'एजृ कम्पने' इति धातो 'अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च' इति शप्रत्यय , तत 'अजाद्यतष्टाप्' इति टाप्प्रत्यय । त्रैलोक्येन = त्रयो लोका एव त्रैलोक्य, तेन 'चतुर्वर्णादीना स्वाऽर्थ उपसंख्यानम्' इति स्वाऽर्थे ष्यञ्, स्वार्थिकत्वात्प्रकृतितो लिङ्गवचनाऽतिक्रम । विन्द = विन्दतीति विन्द , विदॢ लाभे' इति धातो पूर्वसूत्रेण श , 'शे मुचादीनाम्' इति नुम् । सुकृती = प्रशस्त सुकृतम् (सुकर्म) अस्याऽस्तीति सुकृती, 'अत इनिठनौ' इतीनि . शोभन कृतमनेनेति सुकृती 'इष्टादिभ्यश्च' इति कर्तरि इनिर्वा । 'धीमान्सूरि कृती कृष्टिर्लब्धवर्णो विचक्षण ।' इति, 'सुकृती पुण्यवान् धन्य' इति चाऽमर ।

भावाऽर्थ —इय रामदयिता यस्य मनसि क्षोभकरिणी न भवेत् त जन नाऽवलोकयामि, भवास्त्रैलोक्यमूल्येनाऽपि ता लब्ध्वा कृतकृत्यो भवतु ।

भाषार्थ —यह रामकी प्रिया जिसके मनमे क्षोभ नही करेगी, उस पुरुषको ही नही देखती हूँ, अत आप त्रैलोक्य देकरभी उसे खरीदकर कृतकृत्य हो जाइये ॥

ननु इन्द्राण्यादीना विद्यमानत्वे केय सवर्ण्यते इति चेत्तत्राह—

**नैवेन्द्राणी, न रुद्राणी, न मनावी, न रोहिणी ।**
**वरुणानी न, नाऽग्नायी [illegible] समा । २२॥**

अन्वय —इन्द्राणी तस्याः समा सीमन्तिनी न, रुद्राणी तस्याः समा सीमन्तिनी न, मनावी तस्याः समा सीमन्तिनी न, रोहिणी तस्याः समा सीमन्तिनी न, वरुणानी तस्याः समा सीमन्तिनी न, अग्नायी (च) तस्याः समा सीमन्तिनी न एव।

प्रयोगप०—इन्द्राण्या रुद्राण्या मनाव्या रोहिण्या वरुणान्या अग्नाय्या च तस्याः समया सीमन्तिन्या न ( भूयते )।

व्याख्या—इन्द्राणी = शची ( इन्द्रपत्नीत्यर्थः ), तस्याः = रामदयितायाः, समा = तुल्या, सीमन्तिनी = स्त्री, न = नाऽस्ति। रुद्राणी = पार्वती, तस्याः समा सीमन्तिनी न, मनावी = शतरूपा (मनुपत्नीत्यर्थ), तस्याः समा सीमन्तिनी न, रोहिणी = चन्द्रपत्नी, तस्याः समा सीमन्तिनी न, वरुणानी = वरुणपत्नी, तस्याः समा सीमन्तिनी न, अग्नायी = स्वाहा ( च। अग्निपत्नी च ), तस्याः समा सीमन्तिनी न एव = निश्चयेन।

व्युत्पत्ति —इन्द्राणी = इन्द्रस्य स्त्री इन्द्राणी, 'इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक्' इत्यानुगागमः, तस्याः = 'तुल्याऽर्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्' इति षष्ठी, पक्षे तृतीया च। सीमन्तिनी = सीम्नः अन्तः सीमन्तः ( केशवेशः ), 'शकन्ध्वादिषु पररूपं वाच्यम्' इति पररूपत्वम्। सीमन्तोऽस्ति अस्याः सा सीमन्तिनी (इनिस्तदन्ताड्डीप् च) 'स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः।' इत्यमरः। रुद्राणी = रुद्रस्य स्त्री, पूर्वसूत्रेण आनुक् ङीप् च। मनावी = मनोः स्त्री मनावी 'मनोरौ वा' इति औकारादेशो ङीप् च, उदात्तोकारपक्षे मनायी। वरुणानी = वरुणस्य स्त्री वरुणानी ( ङीष् आनुगागमश्च )। अग्नायी = अग्नेः स्त्री अग्नायी, 'वृषाकप्यग्निकुसितकुसिदानामुदात्तः' इत्यैकारादेशो ङीप् च।

भावार्थ —इन्द्राणी, रुद्राणी, मनुपत्नी, चन्द्रपत्नी, वरुणानी, अग्निपत्नी च कापि रामदयितया सदृशी न ( लोकाऽतिशायि तत्सौन्दर्यमस्तीति भावः )।

भाषाऽर्थ —इन्द्राणी, रुद्राणी, मनुपत्नी, चन्द्रपत्नी, वरुणानी और अग्निपत्नी कोई भी स्त्री रामचन्द्र की पत्नी के तुल्य रूपवती नहीं है॥ २२॥

**प्रत्यूचे राक्षसेन्द्रस्तामाश्वसिहि, बिभेषि किम्?**
**त्यज नक्तञ्चरि! क्षोभं वाचाटे! रावणो ह्यहम्॥ २३॥**

अन्वय —राक्षसेन्द्रः तां प्रत्यूचे—'हे नक्तञ्चरि! आश्वसिहि, किं बिभेषि, हे वाचाटे! क्षोभं त्यज, हि अहं रावणः'।

प्रयोगप०—राक्षसेन्द्रेण सा प्रत्यूचे-'हे नक्तञ्चरि! ( त्वया ) आश्वस्यताम्, किं भीयते। क्षोभस्त्यज्यताम्, मया रावणेन ( भूयते )'।

व्याख्या—राक्षसेन्द्र = रक्षोऽधिपति (रावण इत्यर्थ ), ता = शूर्पणखा, प्रत्यूचे = प्रत्युवाच । हे नक्तञ्चरि=हे रात्रिचरि ! आश्वसिहि-आश्वस्ता भव । किं=किमर्थं, बिभेषि=भीता भवसि । हे वाचाटे=हे बहुगर्ह्यभाषिणि !, क्षोभ-चित्तचाञ्चल्य, त्यज =मुञ्च । हि=यत , अहं=वक्ता, रावण =रावणनामधेय ( अस्मीति शेष ) ।

व्युत्पत्ति —राक्षसेन्द्र =राक्षसानामिन्द्र ( ष० त० ) । प्रत्यूचे=ब्रू व कर्तरि लिटि तङ् । नक्तञ्चरि=नक्त चरतीति नक्तञ्चरी, तत्सम्बुद्धौ, 'चरेष्ट' इति टप्रत्ययष्टित्वात् 'टिड्ढाणजि'त्यादिना ङीप् । 'यू स्त्र्याख्यौ नदी' इति नदीसञ्ज्ञकत्वात् 'अम्बार्थनद्योर्ह्रस्व ' इति सम्बुद्धौ ह्रस्वत्वम् । आश्वसिहि= श्वसेर्लोटि सिपि 'रुदादिभ्य सार्वधातुके' इति इट् सेर्हिरादेश । 'अपि माष मष कुर्याच्छन्दोभङ्ग न कारयेत् ।' इति शास्त्राद्ध्रस्वाऽन्तपाठे दीर्घ इति केचित् । अमात्रावृत्तत्वादक्षरसङ्ख्ययैवाऽत्र यथा—'ऋग्यजुषमधीयानान्' इत्यादावित्यन्ये इति मल्लिनाथ । वस्तुतस्तु श्लोकाख्य छन्द इद 'श्लोके षष्ठ गुरु ज्ञेय सर्वत्र लघु पञ्चमम् । द्विचतुष्पादयोर्ह्रस्व सप्तम दीर्घमन्ययो ॥' इति लक्षणादतोऽत्र न छन्दोभङ्ग , अपि त्वत्र श्लथत्वश्रुते हतवृत्ताऽभिधानो दोष इति वय ब्रूम । वाचाटे=वाच सन्ति अस्या सा वाचाटा, तत्सम्बुद्धौ, 'आलजाटचौ बहुभाषिणि' इति सूत्रेण 'कुत्सित इति वक्तव्यम्' इति वार्तिकानुरोधात् कुत्सितार्थे आटच् , अत एव 'वाचाटो बहुगर्ह्यवाक्' इत्यमर । रावण = रावयति लोकानिति रावण , णिजन्तात् 'रु शब्दे' इति धातो 'कृत्यल्युटो बहुलम्' इति बाहुल्येन कर्तरि ल्युट्, रावणस्याऽपत्य पुमान् रावण 'शिवादिभ्योऽण्' इत्यण् वा ।

भावार्थ —रावण शूर्पणखा प्रत्यब्रवीत्—हे राक्षसि ! आश्वस्ता भव मा भैषी हे बहुगर्ह्यवादिनि ! चित्तचाञ्चल्य मुञ्च, यतोऽह रावण इति नाम्ना विख्यातोऽस्मि ।

भाषार्थ—राक्षसराज रावणने शूर्पणखाको उत्तर दिया—हे राक्षसि ! आश्वस्त हो जा, क्यो डरती है ! हे वाचाटे (बकवक करनेवाली) ! मत क्षुब्ध हो, क्योकि मै रावण ( लोकको सतानेवाला ) हू ॥ २३ ॥

यदुक्त 'विग्रहस्तव शक्रेणे'ति, तत्रोत्तरमाह—

**मामुपास्त दिदृक्षावान् याष्टीकव्याहतो हरि ।**
**आज्ञालाभोन्मुखो दूरात् काक्षेणाऽनादरेक्षित ॥ २४ ॥**

अन्वय —दिदृक्षावान् याष्टीकव्याहत ( अपि ) हरि आज्ञालाभोन्मुख दूरात् काक्षेण अनादरेक्षित ( सन् ) माम् उपास्त ।

प्रयोगप०—दिदृक्षावता याष्टीकव्याहतेनाऽपि हरिणा आज्ञालाभोन्मुखेन अनादरेक्षितेन ( सता ) अहम् उपास्ये ।

व्याख्या—दिदृक्षावान्=दर्शनेच्छु, याष्टीकव्याहत अपि=वेत्रपाणिप्रतिनिषिद्ध अपि, हरि=इन्द्र, आज्ञालाभोन्मुख=आदेशप्राप्त्युत्कण्ठित ('आज्ञादानोत्सुक' इति मल्लिनाथसम्मत पाठ, तत्र दर्शनाऽभ्यनुज्ञानोत्कण्ठित इत्यर्थः कार्य)। दूरात्=विप्रकृष्टप्रदेशात्। काक्षेण=कुदृष्ट्या (अप्रसन्नदृष्ट्या इत्यर्थ), अनादरेक्षित=तिरस्काराऽवलोकित (सन्), मा=रावणम्, उपास्त=असेवत (ईदृगवस्थ इन्द्र उपेक्षमाणमपि मा किं करिष्यतीति भाव)।

व्युत्पत्ति—दिदृक्षावान्=द्रष्टुमिच्छा दिदृक्षा, सन्नन्तात् दृशधातो 'अ प्रत्ययात्' इत्यप्रत्ययस्ततष्टाप्। दिदृक्षाऽस्ति यस्य स दिदृक्षावान् (मतुप्)। याष्टीकव्याहत=यष्टि प्रहरण येषा ते याष्टीका, 'शक्तियष्ट्योरीकक्' इति ईकक्प्रत्यय। याष्टीकैर्व्याहत (तृ० त०)। आज्ञालाभोन्मुख=आज्ञाया लाभ आज्ञालाभ (ष० त०), तस्मिन् उन्मुख (स० त०)। दूरात्='स्याद् दूर विप्रकृष्टकम्।' इत्यमर। काक्षेण=कुत्सितमक्ष काक्ष, 'कुगतिप्रादय' इति समास, इन्द्रियवाचिनाऽक्षशब्देन तद्विशेषचक्षुर्लक्ष्यते, 'का पथ्यक्षयो' इति कुशब्दस्य तत्पुरुषे कादेश, 'अथाऽक्षमिन्द्रियम्।' इत्यमर। यद्वा कुत्सिते अक्षिणी यस्य स काक्षस्तेन काक्षेण (मयेत्यर्थ), न्यासकारमतेन पूर्वसूत्रेणैव को कादेश, 'बहुव्रीहौ सक्थ्यक्ष्णो स्वाङ्गात्षच्' इति समासाऽन्त षच्। अनादरेक्षित=न आदर अनादर (नञ्)। तेन ईक्षित (तृ० त०)। उपास्त=उपपूर्वात् आसेर्लङि तङ्, शपो लुक्।

भावार्थ—इन्द्रो मद्दर्शनाऽर्थ द्वारि दौवारिकनिषिद्धोऽपि आज्ञाप्राप्त्युत्कण्ठितो भूत्वा दूरदेशात् अप्रसन्नदृष्ट्या मया तिरस्कारावलोकित सन् मामसेवत।

भाषार्थ—इन्द्र भी मेरे दर्शनके लिए द्वारपालसे रोके जाने पर भी आज्ञा पानेको उत्कण्ठित होकर दूर देशसे अप्रसन्न दृष्टिसे अनादरपूर्वक देखे जाकर भी मेरी सेवा करते है॥ २४॥

**विरुग्णोदग्रधाराऽग्र कुलिशो मम वक्षसि।**
**अभिन्न शतधाऽऽत्मान मन्यते बलिन बली॥ २५॥**

अन्वय—वली कुलिश मम-वक्षसि विरुग्णोदग्रधाराऽग्र (सन्) शतधा अभिन्नम् आत्मान वलिन मन्यते।

प्रयोगप०—वलिना कुलिशेन विरुग्णोदग्रधाराऽग्रेण (सता) शतधा अभिन्न आत्मा वलो मन्यते।

व्याख्या—बली=बलवान् (दृढ इत्यर्थ), कुलिश=वज्र, मम=रावणस्य वक्षसि=उर स्थले, विरुग्णोदग्रधाराऽग्र=भग्नोच्चतरकोटिमुख (कुण्ठितमुख

सन्नित्यर्थः ) शतधा—शतप्रकारेण, अभिन्नम्=अवदीर्णम्, आत्मानं=स्वं, बलिनं=दृढं, मन्यते=विचारयति ।

व्युत्पत्तिः—बली=बलमस्याऽस्तीति बली ( इनि )। कुलिशं='अस्त्रियां वज्रकुलिशौ' इति यादवः। विरुग्णोदग्रधाराऽग्रः=धाराणामग्राणि धाराऽग्राणि ( ष० त० ), विरुग्णानि उदग्राणि धाराऽग्राणि यस्य सः ( बहु० )। शतधा= शतेन प्रकारैः शतधा, 'सङ्ख्याया विधाऽर्थे धा' इति धाप्रत्ययः। अभिन्नः=न भिन्नः अभिन्नस्तम्, ( नञ् ० )।

भावार्थः—यो नाम इन्द्रायुधः वज्रो बहुराक्षसप्रमापणे प्रसिद्धः सोऽपि मदुरःस्थले प्रहृतो भूत्वा कुण्ठितमुखः सन्नपि 'अहो ! अहं शतधा भिन्नो नास्मी'ति विचार्यात्मानं दृढं मन्यते ।

भाषाऽर्थ—इन्द्रका दृढ अस्त्र वज्र मेरे छातीमे कुण्ठित मुख होकर भी सैकडो जगहोमे विदीर्ण नही होनेसे ही ( मुझको मारकर नही ) अपनेको मजबूत समझता है ॥ २५ ॥

कृत्वा लङ्काद्रुमाऽऽलानमहमैरावतं गजम् ।
बन्धनेऽनुपयोगित्वान्न तं तृणवदत्यजम् ॥ २६ ॥

अन्वयः—अहम् ऐरावतं गजं लङ्काद्रुमाऽऽलानं कृत्वा बन्धने अनुपयोगित्वात् तं तृणवत् न अत्यजम् ?

प्रयोगप०—मया सः तृणवत् न अत्यज्यत ?

व्याख्या—अहं=रावणः, ऐरावतम्=ऐरावतनामकं, गजं=हस्तिनं ( इन्द्र-हस्तिनमित्यर्थः ) लङ्काद्रुमाऽऽलानं=लङ्कावृक्षबन्धनस्तम्भं, कृत्वा=विधाय (लङ्का-वृक्षे बद्ध्वेत्यर्थः ), बन्धने=बन्धविषये, अनुपयोगित्वात्=उपयोगशून्यत्वात् ( स्वयं वशीभूतत्वात्तस्य बन्धनप्रयोजनाऽभावादित्यर्थः ), तम्=ऐरावतं, तृणवत्=तृणेन तुल्यं न अत्यजं=न अत्याक्षम् ? ( काकुश्रुत्या अत्याक्षमेवेत्यर्थः )। जयमङ्गलस्तु—नतं=नम्रमुखमैरावतं तृणवत् तृणमिव मत्वा, अत्यजं=त्यक्तवानित्याह ।

व्युत्पत्तिः—ऐरावतम्=इरा ( जलम् ) अस्ति यस्य स इरावान् ( समुद्र इत्यर्थः मतुप्प्रत्ययः, ) तत्र भवः ऐरावतस्तम् ( अण् )। गजं='मतङ्गजो गजो नागः कुञ्जरो वारणः करी' इत्यमरः । लङ्काद्रुमाऽऽलानं=लङ्काया द्रुमो लङ्का-द्रुमः (ष० त०), स एव आलानं यस्य स लङ्काद्रुमालानस्तम् (बहु०)। अनुपयो-गित्वात्=उपयोगः अस्याऽस्तीति उपयोगी (इनि ), न उपयोगी अनुपयोगी (नञ् ०), तस्य भावः अनुपयोगित्वं, तस्मात् ( त्वप्रत्ययः )। तृणवत्=वतिप्रत्ययः ।

भावार्थः—अहमैरावताख्यमिन्द्रगजं लङ्कावृक्षे बद्ध्वा स्वयं वशीभूतस्य तस्य

बन्धनोपयोगाऽभावेन तृणवत् न अत्याक्षम् ? ( अत्याक्षमेवेत्यर्थ )।

भाषार्थ — मैंने ऐरावतनामक इन्द्रके हाथीको लङ्काके वृक्षकी शाखामें बाँधकर उसके स्वयम् वशीभूत होनेसे बन्धनका कोई उपयोग न देखकर तृणके सदृश नहीं छोडा ? ( छोडा ) ॥ २६ ॥

आहोपुरुषिका पश्य मम यद् रत्नकान्तिभिः ।
ध्वस्ताऽन्धकारेऽपि पुरे पूर्णेन्दोः सन्निधिः सदा ॥ २७ ॥

अन्वय — मम आहोपुरुषिकां पश्य, यद् रत्नकान्तिभिः ध्वस्ताऽन्धकारे अपि पुरे सदा पूर्णेन्दोः सन्निधिः (अस्ति)।

प्रयोगप०—मम आहोपुरुषिका दृश्यताम्, सन्निधिना ( भूयते )।

व्याख्या—मम=रावणस्य, आहोपुरुषिकां=स्वपुरुषकारं, पश्य=अवलोकय, यत्, रत्नकान्तिभिः=मणिप्रभाभिः, ध्वस्ताऽन्धकारे अपि=नाशिततिमिरे अपि, पुरे=नगरे, सदा=सर्वदा, पूर्णेन्दोः=पूर्णचन्द्रस्य, सन्निधिः=सन्निधानम् ( अस्तीति शेषः )।

व्युत्पत्तिः—आहोपुरुषिकाम्='अहोपुरुष इति यस्यां क्रियायां सा आहोपुरुषिका' इति काशिका। मत्वर्थीयठन्प्रत्ययः, 'मयूरव्यंसकादयश्च' इत्यस्य आकृतिगणत्वात्समासः। केचित्तु अहोपुरुषस्य भाव आहोपुरुषिका=आश्चर्यपुरुषत्वम्, मनोज्ञादित्वाद् वुञिति व्याचक्षते, किन्तु मनोज्ञादिषु मृग्यमेतदिति मल्लिनाथः। इत्युद्गारबीजं तु मनोज्ञादिगणे अहोपुरुषशब्दाऽनुपलब्धिरेवेति बोध्यम्। 'आहोपुरुषिका दर्पाद्या स्यात्सम्भावनाऽऽत्मनि' इत्यमरः। रत्नकान्तिभिः=रत्नानां कान्तयो रत्नकान्तयस्ताभिः, (ष० त०)। ध्वस्ताऽन्धकारे=ध्वस्तोऽन्धकारो यस्मिंस्तत् ध्वस्ताऽन्धकारं तस्मिन् (ब० व्री०)। पूर्णेन्दोः=पूर्णश्चाऽसौ इन्दुः पूर्णेन्दुस्तस्य (क० धा०)। अत्र 'रत्नकान्तिभिः ध्वस्ताऽन्धकारे' इति लोकाऽतिशयसम्पत्तिवर्णनादुदात्तालङ्कारः। तल्लक्षणं यथा—'लोकाऽतिशयसम्पत्तिवर्णनोदात्तमुच्यते। यद्वाऽपि प्रस्तुतस्याऽङ्गं महतां चरितं भवेत् ॥' इति साहित्यदर्पणः।

भावार्थः—हे अर्पणखे! रत्नच्छविभिरेव निरस्ततिमिरे मत्पुरे प्रयोजनशून्यस्याऽपि चन्द्रमसः पूर्णरूपेण सन्निधानं केवलं मदीयाज्ञानुष्ठानसिद्ध्यर्थमेवेत्यहो! मे पुरुषार्थं पश्य।

भाषार्थ —मेरा पुरुषार्थ देखो, रत्नोंकी कान्ति से ही अन्धकारके नाश होने पर भी मेरे शहरमें पूर्णचन्द्र (आवश्यकता न रहने पर भी) सदा रहते हैं ॥२७॥

हृतरत्नश्च्युतोद्योगो रक्षोभ्यः करदो दिविः।
पुलकतामीमभ्येति त्वत्रपः किं न गोत्रभित् ॥ २८ ॥

अन्वय —हृतरत्न च्युतोद्योग. रक्षोभ्य करद गोत्रभित् सत्रप ( सन् ) दिवि पूतक्रतायी न अभ्येति किम् ?

प्रयोगप०—हृतरत्नेन च्युतोद्योगेन करदेन गोत्रभिदा सत्रपेण ( सता ) दिवि पूतक्रतायी न अभीयते किम् ?

व्याख्या—हृतरत्न =अपहृतोत्कृष्टपदाऽर्थ , च्युतोद्योग =नष्टव्यवसाय , रक्षोभ्य'=राक्षसेभ्य ( अस्मभ्यमित्यर्थ. ), करद =बलिप्रद , गोत्रभित्=इन्द्र , सत्रप = सलज्ज. ( सन् ), दिवि=स्वर्गे, पूतक्रतायी=शची, न अभ्येति किं=न उपसर्पति किम् ? ( उपसर्पत्येवेत्यर्थ )।

व्युत्पत्ति.—हृतरत्न =हृतानि रत्नानि यस्य स ( बहु० ), 'रत्न स्वजातिश्रेष्ठेऽपि' इत्यमर । च्युतोद्योग =च्युत उद्योगो यस्य स ( बहु० ), करद =कर ( राजग्राह्य भागम् ) ददातीति करद. ( कप्रत्यय ), गोत्रभित्=गा त्रायन्ते इति गोत्रा (कप्रत्यय ), तान् भिनत्तीति गोत्रभित् 'सत्सूद्विषे'त्यादिना क्विप् । सत्रप = त्रपया सहित ( बहु० ) । पूतक्रतायी=पूता क्रतवो यस्य स पूतक्रतु ( बहु० ), तस्य स्त्री पूतक्रतायी, ताम् 'पूतक्रतोरै च' इत्यैकारादेशो ङीप् च ।

भावार्थ —ऐरावतादिस्वरत्नरहितोऽनुत्साहेन व्यवसायशून्य , अत एव अस्मभ्य करप्रद इन्द्रो लज्जित सन् अन्त पुरे निलीय इन्द्राणीसमीपे न तिष्ठति किम् ?

भाषाऽर्थ —ऐरावत आदि रत्नोसे रहित, व्यवसायशून्य, अतएव हम राक्षसोको कर देनेवाला इन्द्र लज्जित होता हुआ स्वगमे इन्द्राणीके पास छिपकर नही रहता है क्या ? ॥ २८ ॥

**अतुल्यमहसा सार्धं रामेण मम विग्रह ।**
**त्रपाकरस्तथाऽप्येष यतिष्ये तद्विनिग्रहे ॥ २९ ॥**

अन्वय —अतुल्यमहसा रामेण साध विग्रह मम त्रपाकर , तथाऽपि एष तद्विनिग्रहे यतिष्ये ।

प्रयोगप०— विग्रहेण मम त्रपाकरेण ( भूयते ) एतेन ( मया ) यतिष्यते ।

व्याख्या—अतुल्यमहसा=असमानतेजसा, रामेण=दाशरथिना, सार्धं=सह, विग्रह =विरोधः, मम=रावणस्य, त्रपाकर =लज्जाकर तथाऽपि=लज्जाकरत्वेऽपि ( त्वत्प्रार्थनयेति शेप ), एष =अह, तद्विनिग्रहे= रामस्य विशेषदण्डे ( विषये ), यतिष्ये= यत्न करिष्यामि ( त्वन्निमित्तमिति भाव ) ।

व्युत्पत्ति —अतुल्यमहसा= तुलया समित तुल्य, 'नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसम्मितेपु' इति यत् । न तुल्यमतुल्य ( नञ् ० ),

पदेन योगे 'सहयुक्तेऽप्रधाने' इति तृतीया । त्रपाकर =त्रपा करोतीति तद्योः 'कृञो हेतुताच्छील्यानुलोम्येषु' इति टप्रत्यय । 'मन्दाक्ष ह्रीस्त्रपा व्रीडा लज्जा' इत्यमर । तद्विनिग्रहे विशिष्टो निग्रहो विनिग्रह (प्रादिसमास), तस्य विनि-ग्रहस्तद्विनिग्रहस्तस्मिन् (ष० त०), यतिष्ये='यती प्रयत्ने' इति धातो 'वर्तमानसामीप्ये वर्तमानवद्वा' इति विकल्पेन लटो विधानात् लृट् ।

भावार्थ —यद्यपि रामो मत्तुल्यबलो न, अतस्तेन सह मम विरोधो लज्जावह-स्तथाऽपि त्वत्प्रियार्थं रामस्य विशेषदण्डे यत्नं करिष्यामि ।

भाषाऽर्थ —यद्यपि राम मेरे समान बलशाली नही है, अत उसके साथ मेरा विरोध करना लज्जाजनक है, तो भी तुम्हारी प्रीतिके लिये मैं उसके विशेष दण्डमे यत्न ( कोशिश ) करूँगा ॥ २९ ॥

उत्पत्य खं दशग्रीवो मनोयायी शिताऽस्त्रभृत् ।
समुद्रसविधावासं मारीचं प्रति चक्रमे ॥ ३० ॥

अन्वय — ( अथ ) मनोयायी शिताऽस्त्रभृत् दशग्रीव खम् उत्पत्य समुद्रस-विधावासं मारीचं प्रति चक्रमे ।

प्रयोगप०—मनोयायिना शिताऽस्त्रभृता दशग्रीवेण चक्रमे ।

व्याख्या—(अथ=वाक्यसमाप्त्यनन्तरम् ) मनोयायी=मनोवेगी, शितास्त्रभृत्= तीक्ष्णायुधधारी, दशग्रीव=रावण , खम्=आकाशम्, उत्पत्य=उद्गम्य, समुद्रसवि-धावासं = रत्नाकरनिकटवासिनम्, मारीचं=ताडकासुत, प्रति=उद्दिश्य, चक्रमे= जगाम ।

व्युत्पत्ति —मनोयायी=मन इव यातीति मनोयायी, 'कर्तर्युपमाने' इति णिनिप्रत्यय 'आतो युक् चिण्कृतो' इति युगागम । शिताऽस्त्रभृत्-शितानि च तानि अस्त्राणि शिताऽस्त्राणि ( क० धा० ), तानि बिभर्तीति शिताऽस्त्रभृत् (क्विप्) दशग्रीव =दश ग्रीवा यस्य स ( बहु० ), 'अथ ग्रीवायां शिरोधि कन्धरेत्यपि ।' इत्यमर । समुद्रसविधावास=समुद्रस्य सविध समुद्रसविध ( ष० त० ), तस्मिन् आवासो यस्य स समुद्रसविधावासस्तम् ( व्यधिकरणबहुव्रीहि ) । चक्रमे='अनुप-सर्गाद्वा' इति क्रमेर्लिटि आत्मनेपदम् ।

भावार्थ —तदनन्तर मन सदृशवेगयुक्तस्तीक्ष्णायुधधारी रावण आकाशमुद्-गत्य समुद्रतीरवासिनं मारीचं जगाम ।

भाषाऽर्थ —तब मन के तुल्य वेगसे युक्त, तीक्ष्ण अस्त्र धारण करनेवाला रावण आकाशमे कूदकर समुद्रके तीरके समीप रहनेवाले मारीच नामक राक्षसके पास पहुँचा ॥ ३० ॥

सपत्य तत्सनीडेऽसौ त वृत्तान्तमशिश्रवत् ।
त्रस्नुनाऽथ श्रुताऽर्थेन तेनाऽगादि दशानन ॥ ३१ ॥

अन्वय —असौ तत्सनीडे सम्पत्य त वृत्तान्तम् अशिश्रवत्, अत श्रुतार्थेन त्रस्नुना तेन दशानन अगादि ।

प्रयोगप०—अमुना स वृत्तान्तोऽश्रावि । श्रुताऽर्थस्त्रस्नु स दशाऽऽननमगादीत् ।

व्याख्या—असौ=रावण , तत्सनीडे=मारीचसमीपे, सम्पत्य=निपत्य, त= शूर्पणखाकथित, वृत्तान्तम्=उदन्तम्, अशिश्रवत्=श्रावितवान् । अथ=श्रवणानन्तर, श्रुताऽर्थेन=आकर्णितवृत्तान्तेन, त्रस्नुना=भीरुणा, तेन=मारीचेन, दशाऽऽनन = रावण , अगादि=कथित ।

व्युत्पत्ति —तत्सनीडे=तस्य सनीडस्तत्सनीडस्तस्मिन् ( ष० त० ), 'समीपे निकटासन्नसन्निकृष्टसनीडवत्' इत्यमर । अशिश्रवत्=ण्यन्तस्य 'श्रु श्रवणे' इति धातोर्लुङ् 'णौ चङ्युपधाया ह्रस्व ' इति ह्रस्वत्व, सन्वद्भावे 'स्रवतिशृणोतिद्रवति-प्रवतिप्लवतिच्यवतीना वा' इति विकल्पादभ्यासस्येत्वम् । श्रुताऽर्थेन=श्रुत अर्थ येन स श्रुताऽर्थस्तेन ( व० व्री० ) । त्रस्नुना=त्रस्यतीति त्रस्नुस्तेन 'त्रसी उद्वेगे' इति धातो 'त्रसिगृधिधृषिक्षिपे क्नु ' इति क्नुप्रत्यय । दशानन =दश आननानि यस्य स ( बहु० ) । अगादि='गद व्यक्ताया वाचि' इति धातो कर्मणि लुङ् ।

भावार्थ —रावणो मारीचसमीप गत्वा शूपणखोक्त समस्त वृत्तान्त श्रावितवान् । श्रवणाऽनन्तर भीरुर्मारीचो रावण जगाद ।

भाषाऽर्थ —रावणने मारीचके पास जाकर शूर्पणखासे कहे गये सब वृत्तान्त-को सुनाया, तब रामसे डरनेवाले मारीचने रावणसे कहा ॥ ३१ ॥

अन्तर्धत्स्व रघुव्याघ्रात्तस्मात्त्व राक्षसेश्वर ।
यो रणे दुरुपस्थानो हस्तरोध दधद्धनु ॥ ३२ ॥

अन्वय —हे राक्षसेश्वर ! त्व तस्मात् रघुव्याघ्रात् अन्तधत्स्व, रणे हस्त-रोध धनु दधत् य दुरुपस्थान ( अस्ति ) ।

प्रयोगप०—हे राक्षसेश्वर ! त्वया रघुव्याघ्रात् अन्तर्धीयता, धनुर्दधता येन दुरुपस्थानेन ( भूयते ) ।

व्याख्या—हे राक्षसेश्वर=हे रक्षोऽधीश्वर !, त्व=रावण , तस्मात्=प्रसिद्धात्, रघुव्याघ्रात्=रघूत्तमात् ( रामादित्यर्थ ), अन्तर्धत्स्व=अन्तर्हितो भव ( नाऽत्मान दर्शयेत्यर्थ ), रणे=सङ्ग्रामे, हस्तरोध=दृढमुष्टिगृहीत, धनु =कार्मुक, दधत्=

दधान , य =राम , दुरुपस्थान =दुरासद ( अस्तीति शेषः । रामस्य समीपे गमनमपि अशक्यं युद्धस्य का कथेति भाव ) ।

व्युत्पत्ति —राक्षसेश्वर रक्षांसि एव राक्षसा ( स्वार्थे अण ), राक्षसानामीश्वरो राक्षसेश्वरस्तत्सम्बुद्धौ (ष० त०) । रघुव्याघ्रात्=रघुषु (रघुवंश्येषु राजसु) व्याघ्र ( श्रेष्ठ ) रघुव्याघ्रस्तस्मात् (स० त०), 'अन्तर्द्धौ येनाऽदर्शनमिच्छति' इत्यपादानत्वात् पञ्चमी, 'स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जरा । सिंह-शार्दूलनागाद्या पुंसि श्रेष्ठाऽर्थगोचरा ॥' इत्यमर । अन्तधत्स्व=दधाते कर्तरि लोटि तडि 'थास से' इति थास सेभाव , 'सवाभ्यां वाऽमौ' इति एकारस्य वभाव 'श्नाऽभ्यस्तयोरात ' इत्याकारलोप 'दधस्तथोश्च' इत्यभ्यासस्य भष्भाव 'श्रदन्तरोरुपसर्गवद्वृत्ति ' इत्युपसर्गवद्भावादन्त शब्दस्य धातो प्राक्प्रयोग । हस्तरोध-हस्तेन रोध ( पीडनम् ) यस्य तत् हस्तरोध, तत् ( व्य० बहु० ) । हस्तेन रुद्ध्वा इति हस्तरोध, 'सप्तम्यां चोपपीडरुधकर्षः ' इति णमुल् इति जयमङ्गलादयस्तत्र उपोपसर्गव्यभिचारश्चिन्त्य व्याकरणान्तरे वा द्रष्टव्य इति महोपाध्यायो मल्लिनाथ । दधत्=दधातीति दधत् ( शतृप्रत्यय ), 'उभे अभ्यस्तम्' इति अभ्यस्तत्व 'नाऽभ्यस्ताच्छतु ' इति नुम्प्रतिषेध । दुरुपस्थान =दु खेनोपस्थीयते ( उपगम्यते ) इति दुरुपस्थान , 'अतो युच्' इति खलोऽपवादो युच् ।

भावार्थ —हे राक्षसाऽधिपते । त्व युद्धप्रसिद्धात् रामचन्द्रात् निलीनो भव, युद्धे दृढमुष्टिगृहीत धनुर्धारयन् य शत्रुभिर्दुरुपगम्योऽस्ति ।

भाषाऽर्थ —हे राक्षसराज । आप युद्धप्रसिद्ध रामचन्द्रके सम्मुख मत रहे, संग्राममे दृढ मुष्टिसे धनुको पकडकर जब राम खडे होते ह, तब उनके पास कोई नही जा सकता ॥ ३२ ॥

**भवन्त कार्तवीर्यो यो हीनसन्धिमचीकरत् ।**
**जिगाय तस्य हन्तार स राम सार्वलौकिकम् ॥ ३३ ॥**

अन्वय —य कार्तवीर्य भवन्त हीनसन्धिम् अचीकरत्, सार्वलौकिक तस्य हन्तार स राम जिगाय ।

प्रयोगप०—येन कार्तवीर्येण भवान् हीनसन्धिमकारि, सार्वलौकिकस्तस्य हन्ता तेन रामेण जिग्ये ।

व्याख्या—य , कार्तवीर्य =हैहयाऽधीश्वर , भवन्त=रावण, हीनसन्धि=निकृष्टसन्धानम्, अचीकरत्=कारितवान् ( कार्तवीर्य पराक्रमाधिक्यात् भवता हीनसन्धि कारितवानित्यर्थ ), सार्वलौकिक=सर्वलोकप्रसिद्ध ( 'सार्वलौकिक' इति पाठे रामविशेषणम् ), तस्य=कार्तवीर्यस्य, हन्तार=घातुक ( परशुराममित्यर्थ स -पूर्वोक्त , राम =रामचन्द्र , जिगाय=जितवान् ।

व्युत्पत्ति —कार्तवीर्य =कृतवीर्यस्याऽपत्य पुमान् कार्तवीय , 'तस्याऽपत्यम्' इत्यण् 'तद्धितेष्वचामादे ' इत्यादिवृद्धिश्च । भवन्त= 'हृक्रोरन्यतरस्याम्' इति अणि कर्तु कमत्वम् । हीनसन्धि=हीनश्चाऽसौ सन्धि हीनसन्धिस्तम् ( क० धा० ), अचीकरत्= 'डुकृञ् करणे' इति धातोर्णिजन्तात् लुङ्, 'णौ चङ्युपधाया ह्रस्व ' इत्युपधाह्रस्वत्व 'दीर्घो लघो ' इत्यभ्यासदीर्घत्वम् । सार्वलौकिक=सर्वस्मिन् लोके विदित सार्वलौकिकस्त, 'लोकसर्वलोकाट्ठञ् ' इति ठञ् 'ठस्येक' इति ठस्येकादेश- 'अनुशतिकादीना च' इत्युभयपदवृद्धिश्च । तस्य= 'हन्तारम्' इति कृदन्तपदयोगात् 'कर्तृकर्मणो कृति' इति कर्मणि षष्ठी । जिगाय= 'जि जये' इति धातोर्लिट् 'सन्लिटोर्जे ' इत्यभ्यासात्परस्य धातुजकारस्य कुत्वम् ।

भावार्थ —य कार्तवीर्योऽर्जुनो भवन्त स्ववशवर्तिनमकरोत्, तस्य हन्तार जगत्प्रसिद्ध परशुराममपि स रामो विजितवान् ।

भाषाऽर्थ —जिस कार्तवीर्य अर्जुनने आपको भी अपने साथ सन्धि करनेको विवश किया, उसको मारनेवाले जगत्प्रसिद्ध परशुरामको भी रामचन्द्रजीने जीत लिया ॥ ३३ ॥

**यमाऽऽस्यदृश्वरी तस्य ताडका वेत्ति विक्रमम् ।**
**शूरम्मन्यो रणाच्चाह निरस्त सिहनर्दिना ॥ ३४ ॥**

अन्वय —यमाऽऽस्यदृश्वरी ताडका तस्य विक्रम वेत्ति, सिहनर्दिना ( तेन ) शूरम्मन्य अह च रणात् निरस्त ।

प्रयोगप०—यमाऽऽस्यदृश्वर्या ताडकया तस्य विक्रमो विद्यते । सिहनर्दी ( स ) शूरम्मन्य मा च रणात् निरस्तवान् ।

व्याख्या—यमाऽऽस्यदृश्वरी=अन्तकमुख दृष्टवती ( रामेण यमालय प्रापिता इत्यर्थ ), ताडका=ताडकाऽऽख्या राक्षसी, तस्य=रामस्य, विक्रम=पराक्रम, वेत्ति=जानाति । सिहनर्दिना=मृगेन्द्रनादिना (तेन=रामेण), शूरम्मन्य =शूरमानी, अह च=मारीचश्च, रणात्=युद्धात्, निरस्त =बहिष्कृत ।

व्युत्पत्ति —यमाऽऽस्यदृश्वरी=यमस्य आस्य यमास्य (ष० त०), 'वक्त्राऽऽस्ये वदन तुण्डमानन लपन मुखम्' इत्यमर । यमाऽऽस्य दृष्टवनीति यमाऽऽस्यदृश्वरी, भूताऽर्थे कर्मोपपदात् 'दृशे क्वनिप्' इति क्वनिप् प्रत्यय , तत स्त्रीत्वविवक्षाया 'वनो र च' इति ङीप् रेफादेशश्च । सिहनर्दिना=सिह इव नर्दतीति सिहनर्दी, तेन, 'कर्तर्युपमाने' इति णिनि । शूरम्मन्य =शूरमात्मानमन्यत इति शूरम्मन्य , 'आत्ममानेखश्च' इति मन्यते खश्प्रत्यय , खित्वात् 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागम ।

भावार्थ —ताडकाऽऽख्या राक्षसी रामस्य विक्रमेण यमलोकमगच्छत्, शूरमानी अह चरणाऽङ्गणाद्बहिष्कृत (अतो रामपराभवे मा साहस कार्षीरिति भाव )।

भाषार्थ—यमराजका मुख देखनेके बाद ताडका नामका पराक्रम जाननी है, सिंहनाद करनेवाले रामने ही गुणमानी मुझको भी युद्ध-स्थलसे दूर फेंक दिया ॥३४॥

**न त्वं तेनाऽन्वभाविष्ठा, नाऽन्वभावि त्वयाऽप्यसौ ।**
**अनुभूतो मया चाऽसौ, तेन चाऽन्वभविष्यहम् ॥ ३५ ॥**

अन्वय—त्वं तेन न अन्वभाविष्ठा, त्वया अपि असौ न अन्वभावि, मया च असौ अनुभूतः, तेन च अहम् अन्वभविषि ।

प्रयोगप०—त्वां स न अन्वभूत्, त्वमपि अमुं न अन्वभूः । अहं च अमुमनुभूतवान्, स च मामन्वभूत् ।

व्याख्या—त्वं=रावण, तेन=रामेण, न अन्वभाविष्ठा=अनुभूतः (न ज्ञात इत्यर्थः)। त्वया अपि=भवता अपि, असौ=रामः, न अन्वभावि=न अनुभूतः (अतस्तच्छक्तिं त्वं न जानासीत्यर्थः)। मया च=मारीचेन च, असौ=रामः, अनुभूतः=ज्ञातः। तेन च=रामेण च, अहं=मारीचः, अन्वभविषि=अनुभूतः (अतस्तच्छक्तिमहं जानामीत्यर्थः)।

व्युत्पत्ति—त्वम्=उक्ते कर्मणि प्रथमा। अन्वभाविष्ठा=अनूपसर्गपूर्वकात् भूधातोः कर्मणि लुङि थासि सिचि 'स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च' इति चिण्वदिष्टि वृद्धिः। अन्वभावि='चिण् भावकर्मणोः' इति चिण्। अन्वभविषि=चिण्वदिडभावे वलादिलक्षणे इटि सिचि वृद्ध्यभावाद् गुण एव।

भावार्थ—स त्वां न ज्ञातवान्, त्वमपि तं न ज्ञातवान्, अहं तद्बलमनुभूतवानस्मि, सोऽपि मामनुभूतवान्।

भाषार्थ—राम आपको नहीं जानते हैं, आप भी रामको नहीं जानते हैं। पर मैं रामको जानता हूँ और वे भी मुझे जानते हैं ॥ ३५ ॥

**अध्यङ् शस्त्रभृतां रामो न्यञ्चस्तं प्राप्य मद्विधाः ।**
**स कन्याशुल्कमभनङ् मिथिलायां मखे धनुः ॥ ३६ ॥**

अन्वय—रामः शस्त्रभृताम् अध्यङ्, मद्विधाः तं प्राप्य न्यञ्चः। स मिथिलायां मखे कन्याशुल्कं धनुः अभनक्।

प्रयोगप०—रामेण अध्यञ्चा (भूयते), मद्विधैः न्यग्भिर्भूयते, तेन कन्याशुल्कं धनुरभज्यत।

व्याख्या—रामः=रामचन्द्रः, शस्त्रभृताम्=आयुधधारिणाम्, अध्यङ् धिकः। मद्विधाः=मादृशाः, तं=रामं, प्राप्य=आसाद्य (योद्धुमिति शेषः),

हीना । स = राम , मिथिलायां = जनकपुरे, मखे = धनुर्यज्ञे, कन्याशुल्क = कुमारीपण, धनु = हरकार्मुकम्, अभनक् = बभञ्ज (अत सर्वाऽधिको राम इति भाव ) ।

व्युत्पत्ति —शस्त्रभृता=शस्त्र बिभ्रतीति शस्त्रभृतस्तेषाम् ( क्विप् ) । अध्यङ् = अध्यञ्चति ( आधिक्येन वर्तते ) इति अध्यङ्, अधिपूर्वकात् 'अञ्चु गतिपूजनयो ' इति धातो 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चा च' इति क्विन्, सर्वाऽपहारी लोप , 'अनिदिता हल उपधाया क्ङिति' इति अनुनासिकलोपे प्राप्ते अत्र धातो पूजार्थकत्वात् 'नाञ्चे पूजायाम्' इति निषेध , 'उगिदचा सर्वनामस्थानेऽधातो 'इति अलुप्तनकारत्वाच्च नुम, हल्ङ्यादिसंयोगान्तलोपौ । नकारस्य 'क्विन्प्रत्ययस्य कु ' इति कुत्वेन ङकार । मद्विधा =मम इव विधा (प्रकार ) येषा ते (व्यधि० बहु०) । न्यञ्च =नीचमञ्चन्तीति न्यञ्च , निपूर्वादञ्चुधातो पूर्ववत् क्विन् 'अनिदिता'मित्यादिनाऽनुनासिकलोपे 'उगिदचा'मित्यादिना अनुस्वारपरसवर्णादिकार्ये च प्राप्त्यभावात्कुत्वाद्यभाव । कन्याशुल्क=कन्याया शुल्क, तत् ( कन्याशुल्कभूतमित्यर्थ ) । 'कन्या कुमारी' इत्यमर । अभनक्='भञ्जो आमर्दने' इति धातोर्लङ्, 'श्नान्नलोप ' इति नलोप कुत्वचर्त्वे च ।

भावार्थ —राम शस्त्रधारिणा सर्वाऽधिक , मादृशा शूरम्मन्या अपि तेन सह युद्धे हीना , स रामो मिथिलाया धनुर्यज्ञे कन्यापणभूत हरकार्मुक बभञ्ज ।

भाषार्थ —रामचन्द्र वीरोमे सबसे अधिक है, मेरे जैसे वीर भी उनके सामने तुच्छ है। उन रामने मिथिलामे धनुयज्ञमे कन्याका शुल्कभूत धनु तोड दिया ॥३६॥

**सविक्त सहयुध्वानौ तच्छक्ति खरदूषणौ ।**
**यज्वानश्च ससुत्वानो यानगोपीन्मखेषु स ॥ ३७ ॥**

अन्वय —सहयुध्वानौ खरदूषणौ तच्छक्ति सविक्त , ससुत्वान यज्वानश्च ( य विदन्ति ), स यान् मखेषु अगोपीत् ।

प्रयोगप०—सहयुध्वभ्या खरदूषणाभ्या तच्छक्ति सविद्यते, ससुत्वभि यज्वभिश्च ( तच्छक्ति सविद्यते ), तेन ये मखेषु अगोपिषत ।

व्याख्या—सहयुध्वानौ=सहयोधितवन्तौ, खरदूषणौ=खरदूषणनामकौ राक्षसौ, तच्छक्ति=रामपराक्रम, सविक्त =सम्यग्जानीत । ससुत्वान =सोमसुत्सहिता , यज्वानश्च=आहिताग्नयश्च (सविदन्ति=सम्यग्जानन्ति) । स =राम, यान्=यज्वन , मखेषु=यज्ञेषु, अगोपीत्=अरक्षीत् ।

व्युत्पत्ति —सहयुध्वानौ=सह योधितवन्तौ इति सहयुध्वानौ, सहोपपदपूर्वकात् 'युध सम्प्रहारे' इति धातो 'सहे च' इति क्वनिप् । खरदूषणौ=खरश्च दूषणश्च (द्वन्द्व ) । तच्छक्ति=तस्य शक्तिस्तच्छक्तिस्ताम् ( ष० त० ) सविक्त =सम्पूर्वकात् 'विद ज्ञाने' इति धातो 'वर्तमानसामीप्ये वर्तमानवद्वा' इति भूते लटि तसि शपो

लुक्। सकर्मकत्वात् 'नमो गम्यृच्छिभ्याम्' इति न तङ, तस्य अकर्मकाऽधिकारात्। ससुत्वान =सुतवन्त इति सुत्वान, 'षुञ् अभिषवे' इति धातो। 'सुयजोर्ङ्वनिप्' इति ङ्वनिप् 'ह्रस्वस्य पिति कृति तुक्' इति तुगागमश्च। सुत्वभि सहिता ससुत्वान (बहु०)। यज्वान =इष्टवन्त इति यज्वान, पूर्वसूत्रेण ङ्वनिप्, 'यज्वा तु विधिनेष्टवान्' इत्यमर। अगोपीत्= 'गुपू रक्षणे' इति धातोर्लुङ्।

भावार्थ —रामेण सह योधितवन्तौ खरदूषणौ रामबल सम्यग् जानीत, सोमयाजिसहिता ते आहिताग्नयश्च रामपराक्रम सम्यग्जानन्ति, राम यान् आहिताग्नीन् यज्ञरक्षणेन अरक्षीत्।

भाषाऽर्थ —रामसे लडनेवाले खर और दूषण उनका बल जानते है। रामने जिन विधिपूर्वक यज्ञ करनेवालोकी यज्ञोमे रक्षा की थी, वे भी सोमयाजियोके साथ रामकी शक्ति जानते है ॥ ३७ ॥

**सुखजात सुरापीतो नृजग्धो माल्यधारय।**
**अधिलङ्क स्त्रियो दीव्य माऽऽरब्धा बलिविग्रहम् ॥ ३८ ॥**

अन्वय —सुखजात सुरापीत नृजग्ध माल्यधारय (सन्) अधिलङ्क स्त्रिय दीव्य, बलिविग्रह मा आरब्धा।

प्रयोगप०—सुखजातेन सुरापीतेन नृजग्धेन माल्यधारयेण (सता) स्त्रियो दीव्यन्ताम्, बलिविग्रहो मा आरम्भि।

व्याख्या—सुखजात =जातसुख (उत्पन्नाऽनन्द इत्यर्थ), सुरापीत = पीतसुर (पीतमदिर इत्यर्थ), नृजग्ध =जग्धनृक (भक्षितमनुष्य इत्यर्थ), माल्यधारय =धृतमाल (सन्), अधिलङ्क=लङ्कायाम्, स्त्रिय दीव्य=स्त्रीभि (करणै) क्रीड। बलिविग्रह=बलवद्विरोध, मा आरब्धा =मा कार्षी (अन्यथा मरिष्यसीत्यर्थ)।

व्युत्पत्ति —सुखजात =जात सुख यस्य स सुखजात (बहु०), 'जातिकालसुखादिभ्य परा निष्ठा वाच्या' इति सुखशब्दस्य पूर्वनिपात। 'प्रायिक चेदम्' इति कथनात्क्वचित् जातसुखो वा। सुरापीत =पीता सुरा येन स, (बहु०), 'वाऽऽहिताग्न्यादिषु' इति वैकल्पिको निष्ठाया परनिपात। नृजग्ध =ना जग्धो येन स (बहु०) अत्राऽपि पूर्ववन्निष्ठाया परनिपात। 'अदो जग्धिर्ल्यप्ति किति' इत्यदो जग्धिरादेश। माल्यधारय =माला एव माल्यानि (स्वार्थे ष्यञ्)। धारयतीति धारय 'अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च' इति धारे: कर्तरि शप्रत्यये गुणाऽयादेशौ। माल्याना धारय (ष० त०)। अधिलङ्क=लङ्कायाम् इति (विभक्त्यर्थेऽव्ययीभाव)। स्त्रिय'='दिव कर्म च' इति कर्मसज्ञा। बलिविग्रह=

हीना । स = राम , मिथिलायां = जनकपुरे, मखे = धनुर्यज्ञे, कन्याशुल्क = कुमारीपण, धनु = हरकार्मुकम्, अभनक् = बभञ्ज (अत सर्वाधिको राम इति भाव ) ।

व्युत्पत्ति —शस्त्रभृता=शस्त्र बिभ्रतीति शस्त्रभृतस्तेषाम् ( क्विप् ) । अध्यङ् = अध्यञ्चति ( आधिक्येन वर्तते ) इति अध्यङ्, अधिपूर्वकात् 'अञ्चु गतिपूजनयो' इति धातो 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च' इति क्विन्, सर्वापहारी लोप , 'अनिदितां हल उपधाया क्ङिति' इति अनुनासिकलोपे प्राप्ते अत धातो पूजार्थकत्वात् 'नाञ्चे पूजायाम्' इति निषेध , 'उगिदचां सर्वनामस्थानेऽधातो' इति अलुप्तनकारत्वान्न नुम्, हल्ङ्यादिसंयोगान्तलोपौ । नकारस्य 'क्विन्प्रत्ययस्य कु' इति कुत्वेन ङकार । मद्विधा =मम इव विधा (प्रकार ) येषां ते (व्यधि० बहु०) । न्यञ्च =नीचमञ्चन्तीति न्यञ्च , निपूर्वादञ्चुधातो पूर्ववत् क्विन् 'अनिदिता'मित्यादिनाऽनुनासिकलोपे 'उगिदचा'मित्यादिना अनुस्वारपरसवर्णादिकार्ये च प्राप्त्यभावात्कुत्वाद्यभाव । कन्याशुल्क=कन्याया शुल्क, तत् ( कन्याशुल्कभूतमित्यर्थ ) । 'कन्या कुमारी' इत्यमर । अभनक्='भञ्जो आमर्दने' इति धातोर्लङ्, 'श्नान्नलोप' इति नलोप कुत्वचर्त्वे च ।

भावार्थ —राम शस्त्रधारिणा सर्वाधिक , मादृशा शूरम्मन्या अपि तेन सह युद्धे हीना , स रामो मिथिलाया धनुर्यज्ञे कन्यापणभूत हरकार्मुक बभञ्ज ।

भाषार्थ —रामचन्द्र वीरोमे सबसे अधिक है, मेरे जैसे वीर भी उनके सामने तुच्छ है । उन रामने मिथिलामे धनुर्यज्ञमे कन्याका शुल्कभूत धनु तोड दिया ॥३६॥

**सवित्त सहयुध्वानौ तच्छक्ति खरदूषणौ ।**
**यज्वानश्च ससुत्वानो यानगोपीन्मखेषु स ॥ ३७ ॥**

अन्वय —सहयुध्वानौ खरदूषणौ तच्छक्ति सवित्त , ससुत्वान यज्वानश्च ( य विदन्ति ), स यान् मखेषु अगोपीत् ।

प्रयोगप०—सहयुध्वभ्या खरदूषणाभ्या तच्छक्ति सविद्यते, ससुत्वभि यज्वभिश्च ( तच्छक्ति सविद्यते ), तेन ये मखेषु अगोपिषत ।

व्याख्या—सहयुध्वानौ=सहयोधितवन्तौ, खरदूषणौ=खरदूषणनामकौ राक्षसौ, तच्छक्ति=रामपराक्रम, सवित्त =सम्यग्जानीत । ससुत्वान =सोमसुत्सहिता , यज्वानश्च=आहिताग्नयश्च (सविदन्ति=सम्यग्जानन्ति) । स =राम, यान्=यज्वन , मखेषु=यज्ञेषु, अगोपीत्=अरक्षीत् ।

व्युत्पत्ति —सहयुध्वानौ=सह योधितवन्तौ इति सहयुध्वानौ, सहोपपदपूर्वकात् 'युध सम्प्रहारे' इति धातो 'सहे च' इति क्वनिप् । खरदूषणौ=खरश्च दूषणश्च (द्वन्द्व ) । तच्छक्ति=तस्य शक्तिस्तच्छक्तिस्ताम् ( ष० त० ) सवित्त =सम्पूर्वकात् 'विद ज्ञाने' इति धातो 'वर्तमानसामीप्ये वर्तमानवद्वा' इति [illegible] तसि [illegible]

वलमस्याऽस्तीति वली ( इनिप्रत्यय ), तेन विग्रहो वलिविग्रहस्तम् ( तृ० त० ), 'अस्त्रिया समराऽनीकरणा कलहविग्रहौ ।' इत्यमर । मा आरब्धा.=रभेराड् पूर्वान्माडि लुडि थासि 'झलो झलि' इति सिचो लोप 'झषस्तथोर्धोऽध.' इति थस्य धस्तत 'झला जश् झशि' इति भस्य ब ।

भावार्थ —जाताऽऽनन्द मदिरा पीत्वा नर भक्षयित्वा माला धृत्वा लङ्कायां स्त्रीभि क्रीड, पर बलवत्तरेण रामेण विरोध मा कृथा ।

भाषाऽर्थ —हे रावण ! आनन्दित होकर, सुरापानकर मनुष्य भक्षणकर और माला पहनकर लङ्कामे स्त्रियोके साथ क्रीडा करो, परन्तु बलवान् रामसे विरोध मत करो ॥ ३८ ॥

**त भीतङ्कारमाक्रुश्य रावण प्रत्यभाषत ।**
**यातयाम विजितवान् स राम यदि किं तत ॥ ३९ ॥**

अन्वय —रावण त भीतङ्कारमाक्रुश्य प्रत्यभाषत, स यातयाम राम विजितवान् यदि, तत किम् ? ।

प्रयोगप०—रावणेन स आक्रुश्य प्रत्यभाष्यत, तेन यातयामो रामो विजितो यदि, तत केन ( भूयते ) ।

व्याख्या—रावण =दशानन , त=मारीच, भीतङ्कारम् आक्रुश्य=भीरुत्वमिति निर्भर्त्स्य, प्रत्यभाषत=प्रत्यब्रवीत् । स =राम , यातयाम=गतवयस (वृद्धमित्यर्थ ), राम=परशुराम, विजितवान् यदि=विजिग्ये चेत्, तत =तर्हि, किं=किं जातम् (वृद्धजयात् क उत्कर्ष इत्यर्थ ) ।

व्युत्पत्ति —भीतङ्कार=भीत कृत्वा भीतङ्कर, 'कर्मण्याक्रोशे कृञ खमुञ्' इति खमुञ् । यातयाम=याता यामा यस्य स यातयामस्तम् ( बहु० ) ।

भावार्थ —रावणो मारीच 'त्व भीतोऽसी'ति निर्भर्त्स्य प्रत्यवदत्—राम वृद्ध परशुराम विजिग्ये यदि, तेन किं स शूर सञ्जात ? ।

भाषाऽर्थ —रावणने मारीचको 'तुम डरपोक हो' ऐसा कहकर घुडककर उत्तर दिया—रामने बुड्ढे परशुरामको यदि जीत ही लिया तो भी इससे क्या ? ( इतने से ही रामको वीर नही कह सकेंगे ) ॥ ३९ ॥

**अघानि ताडका तेन लज्जाभयविभूषणा ।**
**स्त्रीजने यदि तच्छ्लाघ्य धिग्लोक क्षुद्रमानसम् ॥ ४० ॥**

अन्वय —लज्जाभयविभूषणा ताडका तेन अघानि, स्त्रीजने तत् श्लाघ्य यदि, क्षुद्रमानस लोक धिक् ।

प्रयोगप०—लज्जाभयविभूषणा ताडका साऽघानि, स्त्रीजने तेन श्लाघ्येन (भूयते) यदि, क्षुद्रमानसं लोकं धिक्।

व्याख्या—लज्जाभयविभूषणा=त्रपाभीत्यलङ्कारा, ताडका=ताडकाऽऽख्या स्त्री, तेन=रामेण, अघानि=हता। स्त्रीजने=अबलाजने (कर्मामिति शेषः), तत्=कर्म (वधात्मकमित्यर्थः), श्लाघ्यं यदि=प्रशंसनीयं चेत्, (तर्हि) क्षुद्रमानसं=लघुचित्तं (स्त्रीवधरूपं गर्ह्यं कर्म शौर्यं मन्यमानामित्यर्थः), लोकं=जनसमाजं, धिक्। (निन्दनीयो लोक इत्यर्थः)।

व्युत्पत्तिः—लज्जाभयविभूषणा=लज्जा च भयं च लज्जाभये, ते एव विभूषणे यस्याः सा (बहु०)। अघानि=हन्तेः कर्मणि लुङि 'चिणो लुक्' इति तस्य लुक्, 'हो हन्तेर्ञ्णिन्नेषु' इति कुत्वम्। स्त्रीजने=स्त्री चासौ जनः स्त्रीजनस्तस्मिन्, (क० धा०)। क्षुद्रमानसं=मन एव मानसम् (स्वार्थे अण्), 'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः' इत्यमरः। क्षुद्रं मानसं यस्य स क्षुद्रमानसस्तम् (बहु०), लोकं=धिग्योगे 'उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु। द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्राऽपि दृश्यते।' इति द्वितीया।

भावार्थः—त्रपाभीत्यलङ्कारायास्ताडकायाः स्त्रियाः रामकर्तृकं हननं लोकेन प्रशस्यते यदि, तर्हि तादृशं लघुचित्तं लोकं धिक्।

भाषार्थः—लज्जा और भय ही जिसके भूषण हैं ऐसी ताडका नामकी स्त्रीको रामने मारा, रामसे की गई ऐसी स्त्रीहिंसाकी लोक प्रशंसा करता है तो क्षुद्र चित्त-वाले उसे धिक्कार है॥ ४०॥

**यद् गेहेनर्दिनमसौ शरैर्भीरुमभाययत्।**
**कुब्रह्मयज्ञके रामो भवन्तं, पौरुषं न तत्॥ ४१॥**

अन्वयः—असौ रामः, गेहेनर्दिनं भीरुं भवन्तं कुब्रह्मयज्ञके शरैः यत् अभाययत्, तत् पौरुषं न (अस्ति)।

प्रयोगप०—अमुना रामेण गेहेनर्दी भीरुर्भवान् शरैर्यत् अभाय्यत, तेन पौरुषेण न (भूयते)।

व्याख्या—असौ=दूरवर्ती, रामः=रामचन्द्रः, गेहेनर्दिनं=गृहेशूरं, भीरुं=भीलुकं, भवन्तं=त्वां, कुब्रह्मयज्ञके=ब्राह्मणाभासः (विश्वामित्र) कुयज्ञे, शरैः=बाणैः (करणैः), यत्, अभाययत्=अत्रासयत्, तत् भीरुत्रासनं, पौरुषं पुरुषकारः, न=न भवति।

व्युत्पत्तिः—गेहेनर्दिनं=गेहे एव नर्दतीति तच्छीलः गेहेनर्दी, तं (णिनिः) 'पात्रेसमितादयश्च' इति समासः। 'गेहेनर्दी गृहेशूरः पिण्डीमारश्च कथ्यते।' इति

हलायुध । कुब्रह्मयज्ञके कुत्सितो ब्रह्मा (ब्राह्मण ) कुब्रह्मो ब्राह्मणाभास विश्वामित्र इत्यर्थस्तस्य जन्मना क्षत्रियत्वादिति भाव । 'कुगतिप्रादय' इति समास , 'कुमहद्भ्यामन्यतरस्याम्' इति विकल्पेन समासान्तष्टच् । कुत्सितो यज्ञो यज्ञक , 'कुत्सिते' इति कप्रत्यय । कुब्रह्मस्य यज्ञक कुब्रह्मयज्ञकस्तस्मिन् ( ष० त० ) । अभाययत् णिजन्तात् 'ञिभी भये' इति धातोर्लङि शपि वृद्ध्यायादेशौ, पुगात्मने पदे न भवत , भयहेतोरभावात् । पौरुष=पुरुषस्य कर्म पौरुष, 'हायनान्तयुवादिभ्योऽण्' इत्यण् ।

भावार्थ —रामो गेहेशूर भीलुक भवन्त ब्राह्मणाभासस्य विश्वामित्रस्य यज्ञे बाणैरयत् त्रासितवान्, तत्पौरुष न (शूरत्रासन पुरुषकारो न भीरुत्रासनमिति भाव ) ।

भाषार्थ —रामने घरमे ही शूरता दिखानेवाले डरपोक आपको, कुत्सित ब्राह्मण विश्वामित्रके यज्ञमे बाणोसे जो त्रास दिया, वह पुरुषार्थ नही है ॥ ४१॥

**चिरकालोषित जीर्ण कीटनिष्कुषित धनु ।**
**किं चित्र यदि रामेण भग्न क्षत्रियकान्तिके ? ॥ ४२ ॥**

अन्वय —चिरकालोषित जीर्ण कीटनिष्कुषित धनु रामेण क्षत्रियकाऽन्तिके भग्न यदि, किं चित्रम् ( अस्ति ? ) ।

प्रयोगप०—धनु रामो भग्नवान् यदि, केन चित्रेण ( भूयते )।

व्याख्या—चिरकालोषित=बहुसमयस्थित ( पुराणमित्यर्थ ), जीर्ण=नि -सार, कीटनिष्कुषित=घुणादिक्षत, धनु =चाप ( शिवस्येति शेष ), रामेण=रामचन्द्रेण, क्षत्रियकाऽन्तिके=जनकादिकुत्सितक्षत्रसमीपे, भग्न यदि=खण्डित चेत्, तर्हि ) किं चित्र=किमाश्चर्यम् ? ( जीर्णकाष्ठभङ्गस्य सुकरत्वादिति भाव ) ।

व्युत्पत्ति —चिरकालोषित=चिर काल चिरकाल, 'सुप्सुपा' इति समास । चिरकालम् उषित चिरकालोषित, 'कालाऽध्वनोरत्यन्तसयोगे' इति द्वितीया तत 'अत्यन्तसयोगे च' इति द्वितीयातत्पुरुष. । उषितमित्यत्र 'वस निवासे' इति धातो क्तप्रत्यय:, सम्प्रसारणम् 'वसतिक्षुधोरिट्' इति इडागम । 'शासिवसिघसीनां च' इति षत्व च । जीर्ण='जॄ वयोहानौ' इति 'धातो ' क्त , 'ॠत इद्धातो ' इतीत्वे 'हलि च' इति इको दीर्घ. 'रदाभ्या निष्ठातो न पूर्वस्य च द.' इति निष्ठानत्वम् । कीटनिष्कुषित—कीटैर्निष्कुषितम् ( तृ० त० ) । निष्कुषितमित्यत्र निरुपसर्गपूर्वकात् 'कुष निष्कर्षे' इति धातो. क्त , 'इण्निष्ठायाम्' इति इट् । क्षत्रियकाऽन्तिके=क्षत्रस्याऽपत्य पुमान् क्षत्रिय , 'क्षत्राद्घ ' इति घप्रत्यय । 'मूर्द्धाभिषिक्तो राजन्यो बाहुज क्षत्रियो विराट् ' इत्यमर । कुत्सित क्षत्रिय क्षत्रियक ( कुत्साया कन् ) क्षत्रियकस्य अन्तिक क्षत्रियकाऽन्तिकस्तस्मिन्, 'दूराऽन्तिकार्थै षष्ठ्यन्यतरस्याम्' इति

षष्ठी विभक्तिस्तत 'षष्ठी' इति षष्ठीतत्पुरुष 'सप्तम्यधिकरणे च' इति चकारेण दूराऽन्तिकार्थग्रहणात् 'अन्तिके' इति सप्तमी। ( अत्र अचिरत्वस्य विशेषणगत्या चिरकालोपिनादिपदाऽर्थहेतुकत्वात् पदार्थहेतुक काव्यलिङ्गमलङ्कार । 'हेतोर्वाक्यपदाऽर्थत्वे काव्यलिङ्गमुदाहृतम्' । इति तल्लक्षणम् )।

भावार्थ —पुरातनमसार घुणादिकीटक्षत शिवकार्मुक रामेण क्षान्तिनाना जनकादीना समीपे खण्डित चेत्, तर्हि किमाश्चर्यम् ?

भाषार्थ —पुराना, साररहित और घुन आदि कीडोसे क्षत एस शिवधनु । रामने पराक्रमहीन जनक आदि क्षत्रियोके समीप तोडा तो इसमे आश्चर्य क्या है ?॥

**वनतापसके वीरौ विपक्षे गलितादरौ।**
**किं चित्रं यदि साऽवज्ञौ मम्रतु खरदूषणौ ॥ ४३ ॥**

अन्वय —वनतापसके विपक्षे गलितादरौ साऽवज्ञौ वीरौ खरदूषणौ मम्रतुर्यदि, किं चित्रम् ( अस्ति ) ?।

प्रयोगप०—गलितादराभ्या साऽवज्ञाभ्या वीराभ्या खरदूषणाभ्या मम्रे यदि, केन चित्रेण ( भूयते )।

व्याख्या—वनतापसके=अरण्यकुत्सिततपस्विनि, विपक्षे=शत्रौ (रामे इत्यर्थ ), गलिताऽऽदरौ=प्रयत्नरहितौ ( अय किं करिष्यतीति अनास्थया प्रयत्नशून्यावित्यर्थ ), ( अत एव ) साऽवज्ञौ=तिरस्कारसहितौ ( 'क्षुद्रोऽय'मिति मत्वा अगणितवन्तावित्यर्थ ), वीरौ=शूरौ, खरदूषणौ=खरदूषणनामकौ राक्षसौ, मम्रतुर्यदि=मृतौ चेत्, ( तर्हि ) किं चित्रम्=किमाश्चर्यम् ( प्रमत्तवधस्य सुकरत्वादिति भाव )।

व्युत्पत्ति —वनतापसके=कुत्सितस्तापसस्तापसक ( कुत्साया कन् ) वने तापसको वनतापसकस्तस्मिन् ( स० त० ) विपक्षे=विरुद्ध पक्षो यस्य स विपक्षस्तस्मिन् ( बहु० )। गलितादरौ='शूरो वीरश्च विक्रान्त' इत्यमर । खरदूषणौ=खरश्च दूषणश्च ( द्वन्द्व )। मम्रतु ='मृङ् प्राणत्यागे' इति धातोर्लिट् 'म्रियतेर्लुङ्लिङोश्च' इति नियमाल्लिटि न तङ् ( पूर्ववदलङ्कार )।

भावार्थ —वनस्थकुत्सिततपस्विनि शत्रौ रामे निष्प्रयत्नौ अत एव क्षुद्रोऽयमिति मत्वा तिरस्कारयुक्तौ शूरौ खरदूषणौ हतौ चेत्तर्हि किमाश्चर्यम् शत्रौ प्रयत्नरहितस्य तिरस्कारेण अवधानरहितस्यापि वधे न किमपि आश्चर्यमिति भाव )।

भाषार्थ —वनस्थ कुत्सित तपस्वी शत्रु राममे 'यह क्या करेगा' ऐसा विचारकर प्रयत्नशून्य तथा तिरस्कारसे शत्रुको कुछ भी न गिननेवाले खर और दूषण जो मर गये इसमे क्या आश्चर्य है ? ॥ ४३ ॥

त्वं तु भीरु सुदुर्बुद्धे ! नित्यं शरणकाम्यसि ।
गुणांश्चाऽपह्नुषेऽस्माकं, स्तौषि शत्रूँश्च नः सदा ॥ ४४ ॥

अन्वयः—हे सुदुर्बुद्धे ! त्वं भीरुः नित्यं शरणकाम्यसि, अस्माकं गुणान् अपह्नुषे च, नः शत्रूँश्च सदा स्तौषि ।

प्रयोगप०—हे सुदुर्बुद्धे ! त्वया तु भीरुणा शरणकाम्यते, गुणा अपह्नूयन्ते च, नः शत्रवश्च सदा स्तूयन्ते ।

व्याख्या—हे सुदुर्बुद्धे=हे सुदुर्मते ! त्वं तु=मारीचस्तु, भीरुः=भयशील (अत एव) नित्यं=सदा, शरणकाम्यसि=आत्मनः शरणमिच्छसि, (अतो रामकृतस्तव पराजयोऽपि न पराक्रम इति भावः, 'रणकाम्यसि' इति भरतमल्लिकसम्मते पाठे भीरुर्भूत्वा आत्मनो रणमिच्छसीत्यर्थः)। अस्माकं=रावणादीनां राक्षसानां गुणान्=शौर्यादीन्, अपह्नुषे च=अपनयसि च (अपलपसीत्यर्थः)। नः=अस्माकं, शत्रूँश्च=रामादींश्च, सदा=नित्यं, स्तौषि=प्रशंससि ।

व्युत्पत्तिः—सुदुर्बुद्धे=दुष्टा बुद्धिर्यस्य स दुर्बुद्धिः (बहु०)। अत्यन्तं दुर्बुद्धिः सुदुर्बुद्धिस्तत्सम्बुद्धौ 'कुगतिप्रादयः' इति समासः। शरणकाम्यसि=शरणमात्मन इच्छसि, 'काम्यच्च' इति काम्यच् । अपह्नुषे='ह्नुङ् अपनयने' इत्यादादिकाद्धातोर्लट् । 'थासः से' इति थासः सेभावः शपो लुक् । स्तौषि='ष्टुञ् स्तुतौ' इत्यादादिकाद्धातोर्लटि सिपि शपो लुक्, 'उतो वृद्धिर्लुकि हलि' इति वृद्धिः ।

भावार्थः—हे दुर्मतितर ! त्वं तु भयशीलोऽतएवाऽजस्रमात्मनो रक्षकं वाञ्छसि, अस्माकं शौर्यादीनां गुणानामपलापं करोषि च, एवं नो वैरिणश्च सर्वदा प्रशंससि ।

भाषाऽर्थ—हे अतिशयदुर्बुद्धे ! तुम तो डरपोक हो, इस लिए ही हमेशा अपने रक्षकको ढूँढते हो, तथा हमलोगोंके गुणोंको छिपाते हो, एवम् हमलोगोंके शत्रुओंकी सदा बडाई करते हो ॥ ४४ ॥

शीर्षच्छेद्यमतोऽहं त्वां करोमि क्षितिवर्द्धनम् ।
कारयिष्यामि वा कृत्यं निजिघृक्षुर्वनौकसौ ॥ ४५ ॥

अन्वयः—अतः अहं शीर्षच्छेद्यं त्वां क्षितिवर्द्धनं करोमि, वा वनौकसौ निजिघृक्षुः कृत्यं त्वां कारयिष्यामि ।

प्रयोगप०—मया शीर्षच्छेद्यस्त्वं क्षितिवर्द्धनः क्रियसे, निजिघृक्षुणा (मया) कृत्यं त्वं कारयिष्यसे ।

व्याख्या—अतः=अस्मादपराधात्, अहं=रावणः, शीर्षच्छेद्यं=शिरश्छेदयोग्यं, त्वां=भवन्तं (मारीचमित्यर्थः), क्षितिवर्द्धनं=मृतं, करोमि=करिष्यामि,

वा=अथ वा, वनौकसौ=अरण्यवासिनौ ( राज्यभ्रष्टौ रामलक्ष्मणौ इत्यर्थ ), निजिघृक्षु=निग्रहीतुमिच्छु ( सन् ) कृत्य=तन्निग्रहोपायात्मक कर्म, त्वा=त्वया, कारयिष्यामि=कारयितास्मि ।

व्युत्पत्ति—शीर्षच्छेद्य=शीर्षस्य छेद ( ष० त० ), 'उत्तमाङ्ग शिर शीर्ष मूर्धा ना मस्तकोऽस्त्रियाम् ।' इत्यमर । शीर्षच्छेदमर्हतीति 'शीर्षच्छेद्यस्त, 'शीर्षच्छेदाद्यच्च' इति यत्, चाट्ठका 'शैर्षच्छेदिक' इत्यपि । क्षितिवर्द्धन=वर्द्धयतीति वर्द्धन नन्द्यादित्वाल्ल्युरित्युक्तम् । क्षितेर्वर्द्धन क्षितिवर्द्धनस्तम् ( ष० त० ) । करोमि=सामीप्ये वर्तमानप्रत्यय । वनौकसौ=वनमोको ययोस्तौ वनौकसौ, तौ ( बहु० ), 'निजिघृक्षु' इति कृदन्तपदेन योगे 'न लोकाऽव्ययनिष्ठाखलर्थतृनाम्' इति कर्मणि षष्ठ्या प्रतिषेध । निजिघृक्षु=सन्नन्तात् 'ग्रह उपादाने' इति धातो 'सनाशसभिक्ष उ' इत्यु, 'सनि ग्रहगुहोश्च' इतीट्प्रतिषेध, 'रुदविदमुषग्रहिस्वपिप्रच्छ सश्च' इति सन किस्वे 'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीना ङ्किडति च' इति सम्प्रसारण, 'हो ढ' इति हस्य ढत्वे 'एकाचो बशो भष् झषन्तस्य स्ध्वो' इति भष्भाव 'षढो क सि' इति ढस्य षत्व च । 'विजिघृक्षु' इति जयमङ्गलसम्मत पाठस्तत्र विगहीतुमिच्छु इत्यर्थ । कृत्य=कर्तुं योग्य कृत्य, तत्, 'विभाषा कृवृषो' इति क्यप्, पित्त्वात् तुक् च । त्वा='हृक्रोरन्यतरस्याम्' इत्यणि कर्तु कर्मत्वम् ।

भावार्थ—हे मारीच ! अस्मादपराधादह वध्य त्वा हन्मि, अथवा रामलक्ष्मणयोर्निग्रहोपाय त्वया कारयिष्यामि' ।

भाषार्थ—इस अपराधसे मैं तुमको मारूँगा वा राम और लक्ष्मणको दण्ड देनेका उपाय तुमसे कराऊँगा ॥ ४५ ॥

**तमुद्यतनिशातासि प्रत्युवाच जिजीविषु ।**
**मारीचोऽनुनयस्त्रासादभ्यमित्र्यो भवामि ते ॥ ४६ ॥**

अन्वय—जिजीविषु मारीच उद्यतनिशातासि त त्रासात् अनुनयन् 'ते अभ्यमित्र्येण भवामि' इति प्रत्युवाच ।

प्रयोगप०—जिजीविषुणा मारीचेन अनुनयता ( सता ) '( मया ) ते अभ्यमित्र्येण भूयते' इति प्रत्यूचे ।

व्याख्या—जिजीविषु=जीवनेच्छु, मारीच=तदाख्यो राक्षस, उद्यतनिशातासिम्=उत्क्षिप्ततीक्ष्णखड्ग, त=रावण, त्रासात्=भयात्, अनुनयन्=प्रार्थयमान ( सन् ), ते=तव, अभ्यमित्र्य=शत्रुसमीपगामी, भवामि=अस्मि, इति=इत्थ, प्रत्युवाच=प्रत्यब्रवीत्, ( रावणहस्तमरणात् रामहस्तमरण श्रेय इति विचार्य प्रत्यवादीदित्यर्थ ) ।

व्युत्पत्ति —जिजीविषु=जीवितुमिच्छु, सन्नन्तात् 'जीव प्राणधारणे' इति धातो उप्रत्यय । उद्यतनिशातासिम्=उद्यतो निशातोऽसिर्येन स उद्यतनिशाताऽसिस्तम् ( बहु० ) । निशात इत्यत्र 'शो तनूकरणे' इति धातोर्निष्ठायाम् 'आदेच उपदेशेऽशिति' इत्यात्व 'शाच्छोरन्यतरस्याम्' इति विकल्पादित्वाऽभाव । अनुनयन्=अनुनयतीति ( शतृप्रत्यय ) । अभ्यमित्र्य=न मित्रममित्र ( नञ्० ), अत्र असुरादिवत् विरोधार्थे नञ् । अमित्रस्य अभिमुखमभ्यमित्र, 'लक्षणेनाऽभिप्रती आभिमुख्ये' इत्यव्ययीभाव । अभ्यमित्रमल गच्छतीति अभ्यमित्र्य, 'अभ्यमित्राच्छ च' इति चात् यत्, पक्षे छखप्रत्ययाभ्याम् 'अभ्यमित्रीय, 'अभ्यमित्रीण' इत्यपि, अमित्राऽभिमुख सुष्ठु गच्छतीत्यर्थ । 'यो गच्छत्यल विद्विषत प्रति । सोऽभ्यमित्र्योऽभ्यमित्रीयोऽप्यभ्यमित्रीण इत्यपि ।' इत्यमर ।

भावार्थ —जीवितेच्छुर्मारीचो हननोद्यत रावण भयात् प्रार्थयमान सन् 'हे रावण ! अह वै शत्रुसम्मुख सुष्ठु गच्छामी'ति प्रत्यब्रवीत् ।

भाषार्थ —जीनेकी इच्छा रखनेवाले मारीचने डरकर म्यानसे तीक्ष्ण तलवार निकालते हुए रावणसे प्रार्थनाकर 'मै तुम्हारे शत्रुके सम्मुख जाऊँगा' ऐसा कहा ॥

**हरामि रामसौमित्री मृगो भूत्वा मृगद्युवौ ।**
**उद्योगमभ्यमित्रीणो यथेष्ट त्व च सन्तनु ॥ ४७ ॥**

अन्वय —मृगद्युवौ रामसौमित्री मृगो भूत्वा हरामि, त्व च अभ्यमित्रीण- ( सन् ) यथेष्टम् उद्योग सन्तनु ।

प्रयोगप०—रामसौमित्री मृगेण ( मया ) ह्रियेते, त्वया तु अभ्यमित्रीणेन ( सता ) उद्योग. सन्तन्यताम् ।

व्याख्या—मृगद्युवौ=मृगयासक्तौ, रामसौमित्री=रामलक्ष्मणौ, मृगो भूत्वा=हरिणो भूत्वा ( मृगाऽऽकार गृहीत्वेत्यर्थ ), हरामि=देशान्तर प्रापयामि । त्व च=रावणश्च, अभ्यमित्रीण =शत्रुसम्मुखाऽलङ्गामी ( सन् ), यथेष्टम्=इच्छानुरूपम्, उद्योग=प्रयत्न, सन्तनु=कुरु ।

व्युत्पत्ति —मृगद्युवा=मृगैर्दीव्यत इति मृगद्युवौ, दिव क्विप् 'च्छ्वो शूडनुनासिके च' इति चकारत् क्वौ च ऊठ्, यणुवडादेशौ । रामसौमित्री=रामश्च सौमित्रिश्च रामसौमित्री (द्वन्द्व ), तौ (कर्म) । अभ्यमित्रीण =अभ्यमित्रमल गच्छतीति अभ्यमित्रीण 'अभ्यमित्राच्छ च' इति चात् खप्रत्यय । यथेष्टम्=इष्टमनतिक्रम्य (अव्ययीभाव ) । सन्तनु=सम्पूर्वात् 'तनु विस्तारे' इति धातोर्लोटि सिपि 'उतश्च प्रत्ययादसयोगपूर्वात्' इति हेर्लुक् ।

भावार्थ —अह मृगो भूत्वा मृगयासक्तौ रामलक्ष्मणौ देशान्तर प्रापयामि- त्व च अमित्राऽभिमुख सुष्ठु गामी ( सन् ) इच्छाऽनुरूप प्रयत्न कुरु ।

भाषार्थः—मैं (मारीच) मृग होकर मृगया में आसक्त राम और लक्ष्मणको दूसरी जगह पहुँचाता हूँ, तुम ( रावण ) शत्रुके सम्मुख जाकर रुचिके अनुसार प्रयत्न करो ॥ ४७ ॥

**ततश्चित्रीयमाणोऽसौ हेमरत्नमयो मृग ।**
**यथामुखीन सीताया पुप्लुवे बहु लोभयन् ॥ ४८ ॥**

अन्वय —तत असौ हेमरत्नमय मृग ( सन् ) चित्रीयमाण, सीताया, यथामुखीन बहु लोभयन् पुप्लुवे ।

प्रयोगप०—अमुना हेमरत्नमयेन मृगेण ( सता ) चित्रीयमाणेन सीताया यथामुखीनेन बहु लोभयता पुप्लुवे ।

व्याख्या—तत =रावणाऽनुनयाऽनन्तरम्, असौ=मारीच , हेमरत्नमय = सुवर्णमणिमय , मृग =हरिण ( सन् ), ( अतएव ) चित्रीयमाण =चित्रीभवन्, सीताया =जानक्या , यथामुखीन =सम्मुखीन ( सन् ) बहु-अधिक, लोभयन्= लोभ जनयन्, पुप्लुवे=प्लुतवान् ( अभ्रमदित्यर्थ ) ।

व्युत्पत्ति —हेमरत्नमय —हेम्नो रत्नाना च विकारो हेमरत्नमय 'मयड्वै-तयोर्भाषायामभक्ष्याच्छादनयो ' इति मयट् । मृग ='मृगे कुरङ्गवातायुहरिणाऽजिनयोनय ।' इत्यमर , चित्रीयमाण =चित्रीयत इति चित्रीयमाण , 'चित्रङ् आश्चर्ये' इति धातो 'नमोवरिवश्चित्रङ क्यच्' इति क्यच् 'अवयवे कृतलिङ्ग समुदाये पर्यवस्यति' इति क्यजन्तादात्मनेपद, तत शानच् । यथामुखीन =मुखस्य सदृश यथा-मुख= प्रतिबिम्ब, निपातनात्सादृश्येऽव्ययीभाव । यथामुख दर्शन , यथामुखीन , 'यथामुखसमुखस्य दर्शन ख ' इति खप्रत्यय । पुप्लुवे='प्लुङ्गतौ' इति धातोर्लिट् ।

भावार्थ —तदनन्तर मारीच सुवर्णमणिनिर्मितशरीरो मृग सन् चित्रीभवन् सीताया पुरत स्थित्वा अधिक लोभ जनयन् परितो भ्रमति स्म ।

भाषार्थ —तब मारीच, सुवर्ण और रत्नोसे निर्मित शरीरवाला मृग होकर आश्चर्य पैदा करता हुआ सीताके सामने उन्हे प्रलोभित कर घूमने लगा ॥ ४८ ॥

**तेनाऽदुद्यूषयद्राम मृगेण मृगलोचना ।**
**मैथिली विपुलोरस्क प्रावुवूर्षुर्मृगाऽजिनम् ॥ ४९ ॥**

अन्वय —मृगलोचना मैथिली मृगाऽजिन प्रावुवूर्षु विपुलोरस्क राम तेन मृगेण अदुद्यूषयत् ।

प्रयोगप०—मृगलोचनया मैथिल्या प्रावुवूर्ष्वा विपुलोरस्को राम अदुद्यूष्यत ।

व्याख्या—मृगलोचना =हरिणनेत्रा, मैथिली= सीता, मृगाऽजिन=हरिणचर्म,

प्रावुवूर्षू =प्रावरितुमिच्छु , (सती), विपुलोरस्क=विशालवक्षस, राम=रामचन्द्र ,तेन= पूर्वोक्तेन, मृगेण=हरिणेन, अदुद्यूषयत्=देवितुमैच्छयत् (मृगवधे प्रावर्तयदित्यथ ) ।

व्युत्पत्ति —मृगलोचना=मृगस्येव लोचने यस्या सा ( व्यधि० बहु० ) । मृगाऽजिन=मृगस्य अजिन मृगाऽजिन, तत् ( ष० त० ) 'अजिन चर्म कृत्ति स्त्री' इत्यमर । प्रावुवूर्षु =प्राड् पूर्वाद् वृञ , सन्नन्तादुप्रत्यय , इट् सनि वा इति विकल्पादिडभावपक्षे 'अज्झनगमा सनि' इति दीर्घे 'उदोष्ठ्यपूर्वस्य' इति दन्त्योष्ठ्यस्याऽपि ग्रहणादुत्वे रपरत्वे च 'र्वोरुपधाया दीर्घ इक' इति दीर्घत्वे द्विर्वचनादि । विपुलोरस्क=विपुलमुरो यस्य स विपुलोरस्कस्त (बहु०), 'उर प्रभृतिभ्य कप्' इति समासान्त कप् । मृगेण=करणे तृतीया । अदुद्यूषयत्=दीव्यते सनि 'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्' इति विकल्पादनिट्, पक्षे 'च्छ्वो शूडनुनासिके च' इति ऊठादेशे यणादेश , तत सन्नन्ताण्णिचि लङ् ।

भावार्थ —हरिणाक्षी सीता मृगचर्माच्छादनेच्छु सती विशालवक्षस रामं मृगवधे प्रावर्तयत् ।

भाषार्थ —मृगाक्षी सीताने मृगचर्म पहननेकी इच्छासे चौडी छातीवाले रामचन्द्रको मृगवधमे प्रवृत्त किया ॥ ४९ ॥

**योगक्षेमकर कृत्वा सीताया लक्ष्मण तत ।**
**मृगस्याऽनुपदी रामो जगाम गजविक्रम ॥ ५० ॥**

अन्वय —ततो गजविक्रमो रामो लक्ष्मण सीताया योगक्षेमकर कृत्वा मृगस्य, अनुपदी ( सन् ) जगाम ।

प्रयोगप०—गजविक्रमेण मृगस्य अनुपदिना ( सता ) ।

व्याख्या—तत =दुद्यूषाऽनन्तर, गजविक्रम =कुञ्जरगति कुञ्जरपराक्रमो वा, राम =रामचन्द्र , लक्ष्मण=स्वाऽवरज, जानक्या =सीताया , योगक्षेमकर=स्थितिरक्षणकर, कृत्वा=विधाय, मृगस्य=हरिणस्य, अनुपदी=अन्वेष्टा ( सन् ), जगाम =अगमत् ।

व्युत्पत्ति —गजविक्रम =गजस्येव विक्रमो यस्य स (बहु०) । 'मतङ्गजो गजो नाग कुञ्जरो वारण करी ।' इत्यमर । योगक्षेमकर=योगश्च क्षेमश्च योगक्षेमौ(द्वन्द्व ), तौ करोतीति योगक्षेमकरस्त, 'कृञो हेतुताच्छील्याऽनुलोम्येषु' इति हेत्वर्थे टप्रत्यय । भरतमते फलपुष्पादेरलब्धस्य साधन योग , शरीरादेर्लब्धस्य पालन क्षेम । मृगस्य= सम्बन्धसामान्ये षष्ठी, 'अनुपदी'त्यस्य तद्धितत्वात् 'कर्तृकर्मणो कृति' इत्यस्याऽप्राप्ते । गम्यमानाऽन्वेषणक्रियाऽपेक्षया कर्मणि षष्ठी वा । तदपेक्षयाऽपि कारकोत्पत्ति-

शामनात्' इति तु मल्लिनाथ । अनुपदी=पदस्य पश्चादनुपदम्, पश्चादर्थेऽव्ययीभाव । अनुपदमन्वेष्टा अनुपदी 'अनुपद्यन्वेष्टा' इति निपातनात्साधुत्वम् ।

भावार्थ —अनन्तर हस्तिगती राम। लक्ष्मण जानकीरक्षण आदिश्य मृगानुसारी सन् अगमत् ।

भाषार्थ —इसके बाद हाथीकी तरह चलनेवाले रामचन्द्रजी लक्ष्मणको सीताजीके रक्षणमे नियुक्त कर मृगका अनुसरण करते हुए चले ॥ ५० ॥

**स्थाय स्थाय क्वचिद्यान्त क्रान्त्वा क्रान्त्वा स्थित क्वचित् ।**
**वीक्षमाणो मृग रामश्चित्रवृत्ति विसिष्मिये ॥ ५१ ॥**

अन्वय —क्वचित् स्थाय स्थाय यान्त, क्वचित् क्रान्त्वा क्रान्त्वा स्थित, चित्रवृत्ति मृग वीक्षमाणो रामो विसिष्मिये ।

प्रयोगप०—वीक्ष्माणेन रामेण विसिष्मिये ।

व्याख्या—कुत्रचित् प्रदेशे, स्थाय स्थाय=पुन पुन स्थित्वा, यान्त-गच्छन् ( प्लवमानमित्यर्थ ) क्वचित्=कुत्रचित्, क्रान्त्वा क्रान्त्वा=उत्प्लुत्य उत्प्लुत्य, स्थितम्=तिष्ठन्त, ( अत एव ) चित्रवृत्तिम्=अद्भुतव्यापार, मृग=हरिण, वीक्षमाण = पश्यन्, राम =रामचन्द्र , विसिष्मिये=विस्मितवान् ।

व्युत्पत्ति —स्थाय स्थायम्='आभीक्ष्ण्ये णमुल् च' इति णमुल्, द्विर्वचन चोपसख्यानात् । पौन पुन्यमाभीक्ष्ण्यम् । यान्त=यातीति यान्, तम्, ( शतृ० ) । क्रान्त्वा क्रान्त्वा='आभीक्ष्ण्ये णमुल च'ेति चकारात् क्त्वाप्रत्यय । चित्रवृत्ति-चित्रा वृत्तिर्यस्य स चित्रवृत्तिस्तम् ( बहु० ) । वीक्षमाण -वीक्षते इति ( शानच् ) । विसिष्मिये-विपूर्वात् 'स्मिङ् ईषद्धसने' इति धातोर्लिट् ङित्वादात्मनेपदम् । उपसर्गयोगेन धातोरर्थान्तरत्वम् ।

भावार्थ —कुत्रचित्स्थाने स्थित्वा प्लवमान कुत्रचिच्च उत्प्लुत्य तिष्ठन्तमत एव अद्भुतकर्माण मृग विलोकयन् रामो विस्मितो बभूव ।

भाषार्थ —कही पर रुक रुककर उछलता हुआ तथा कही पर उछल-उछलकर रुकता हुआ, अत एव अद्भुत चेष्टासे युक्त उस मृगको देखकर राम विस्मित हुए ॥ ५१ ॥

**चिर क्लिशित्वा मर्माविद्रामो विलुभितप्लवम् ।**
**शब्दायमानमव्यात्सीद्भयद क्षणदाचरम् ॥ ५२ ॥**

अन्वय —मर्मावित् राम चिर क्लिशित्वा विलुभितप्लव शब्दायमान भयद क्षणदाचरम् अव्यात्सीत् ।

प्रयोगप०—मर्माविधा रामेण विलुभितप्लव शब्दायमान भयद क्षणदाचर अव्याधि ।

व्याख्या—मर्मावित्=मर्मवेधी, राम =रामचन्द्र , चिर=चिरकाल, क्लिशित्वा=क्लिष्ट्वा ( प्रयास कृत्वेत्यर्थ ), विलुभितप्लव=व्याकुलितगमन शब्दायमान=शब्द कुर्वाण ( हा लक्ष्मणेत्युच्चै क्रन्दन्नमित्यर्थ ), भयद=भयङ्कर ( पदमिद शब्दविशेषण वा बोध्यम् ), क्षणदाचर=रात्रिचरम् (मारीचमित्यर्थ ), अन्यात्सीत्=विद्धवान् ।

व्युत्पत्ति—मर्मावित्=मर्माणि विध्यतीति 'व्यध ताडने' इति धातो क्विप् सम्प्रसारण च, 'नहिवृती'त्यादिना पूर्वस्य दीर्घ । चिरम्='कालाऽध्वनोरत्यन्तसंयोगे' इति द्वितीया । क्लिशित्वा='क्लश उपतापे' इति धातो क्त्वा, 'क्लिश क्त्वानिष्ठयो ' इति विकल्पादिडागम । विलुभितप्लव=विलुभिताः प्लवा यस्य स विलुभितप्लवस्तम् ( बहु० ), 'लुभो विमोहने' इतीट् । शब्दायमान शब्दायते इति शब्दायमानस्त, 'शब्दवैरकलहाऽभ्रकण्वमेघेभ्य करणे' इति क्यङ् । भयद=भय ददातीति भयदस्तम् ( कप्रत्यय ) । क्षणदाचर=क्षणदासु ( रात्रिषु ) 'रात्रिस्त्रियामाक्षणदा क्षपा ।' इत्यमर , चरतीति क्षणदाचरस्त, रात्रिञ्चरो रात्रिचर कर्बुरो निकषात्मज ।' इत्यमर । अन्यात्सीत्=विध्यतेर्लुङि सिचि 'वदव्रजहलन्तस्याऽच ' इति वृद्धि ।

भावार्थ—मर्मभेदी रामश्चिरसमय प्रयस्य व्याकुलितगमन 'हा लक्ष्मणे'-त्युच्चै शब्द कुर्वन्त भीत्युत्पादक राक्षसम् ( मारीचम् ) विद्धवान् ।

भाषार्थ—मर्मवेधी रामने बहुत कालतक प्रयास करके श्रमसे व्याकुलित गमनवाले तथा 'हा लक्ष्मण !' इस तरह का ऊँचा शब्द करनेवाले भयङ्कर उस राक्षस ( मारीच ) को बाणो से वेधन किया ॥ ५२ ॥

**श्रुत्वा विस्फूर्जथुप्रख्य निनाद परिदेविनी ।**
**मत्वा कष्टश्रित राम सौमित्रि गन्तुमैजिहत् ॥ ५३ ॥**

अन्वय—( अथ सीता ) विस्फूर्जथुप्रख्य निनाद श्रुत्वा राम कष्टश्रित मत्वा परिदेविनी ( सती ) सौमित्रि गन्तुम् ऐजिहत् ।

प्रयोगप०—( अथ सीतया ) परिदेविन्या ( सत्या ) ऐहि ।

व्याख्या—( अथ=अनन्तर, सीता=मैथिली ), विस्फूर्जथुप्रख्य=वज्रघोषसदृश, निनाद-निनद (मारीचशब्दमित्यर्थ ), श्रुत्वा=आकर्ण्य, राम=पति, कष्टश्रित=कृच्छ्रप्राप्त, मत्वा=बुद्ध्वा, परिदेविनी=विलापशीला ( सती ), सौमित्रि=लक्ष्मण गन्तु=राम प्रति यातुम्, ऐजिहत्=ईहयामास ।

व्युत्पत्ति—विस्फूर्जथुप्रख्य=स्फूर्जन स्फूर्जथु , 'टुओ स्फूर्जा वज्रनिर्घोषे' इति धातो 'ट्वितोऽथुच्' इत्यथुच् । 'स्फूर्जथुवज्रनिर्घोषे' इत्यमर । विशिष्ट स्फूर्ज-

थुर्विस्फूर्जथु 'कुगतिप्रादयः' इति समासः। विस्फूर्जथुः प्रख्या (सादृश्यम्) यस्य स विस्फूर्जथुप्रख्यस्तम् (बहु०)। निनाद-'णौ गदनदपठस्वनः' इत्यत्रिविकल्पात् पक्षे नल्। कष्टश्रित=कष्टं श्रितः कष्टश्रितस्तं, 'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः' इति द्वितीयातत्पुरुषः। 'स्यात्कष्टं कृच्छ्रमाभीलम्' इत्यमरः। परिदेविनी=परिदेवत इति परिदेविनी, परिपूर्वकात् 'देवृ देवने' इति भौवादिकाद्धातोः 'सम्पृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च' इति घिनुण्। गन्त=गम्धातोः 'समानकर्तृकेषु तुमुन्' इति तुमुन् प्रत्ययः। ऐजिहत्=ईहतेर्णौ लुङि 'द्वचनेऽचि' इति णिलोपस्य स्थानिवद्भावात् 'अजादेर्द्वितीयस्य' इति हेद्विर्भावे कुत्वाद्यभ्यासकार्यम्।

भावार्थः—तत सीता वज्रनिर्घोषोपमं मारीचशब्दमाकर्ण्य रामस्याऽनिष्टमाशङ्क्य विलपन्ती सती रामसमीपगमनाऽय लक्ष्मणं प्रैरयत्।

भाषार्थः—तब सीताजीने वज्रघोषतुल्य मारीचके शब्दको सुनकर रामके अनिष्टकी आशङ्कासे विलापकर लक्ष्मणको रामके समीप जानेके लिए प्रेरणा की ॥५३

**एष प्रावृषिजाम्भोदनादी भ्राता विरौति ते।**
**ज्ञातेयं कुरु सौमित्रे! भयात् त्रायस्व राघवम् ॥ ५४ ॥**

अन्वयः—हे सौमित्रे! प्रावृषिजाऽम्भोदनादी एष ते भ्राता विरौति, ज्ञातेयं कुरु, राघवं भयात् त्रायस्व।

प्रयोगप०—हे सौमित्रे! प्रावृषिजाऽम्भोदनादिना एतेन ते भ्रात्रा विरूयते, ज्ञातेयं क्रियताम्, राघवो भयात् त्रायताम्।

व्याख्या—हे सौमित्रे=हे लक्ष्मण, प्रावृषिजाऽम्भोदनादी=वार्षिकमेघनादी, एषः=अयं (प्रणयातिशयाद्रामस्य सीताचित्तवृत्तिसन्निकृष्टत्वादेतच्छब्देन निर्देशः) ते=तव, भ्राता=अग्रजः (रामः इत्यर्थः), विरौति=क्रोशति। ज्ञातेयं=बन्धुकृत्यं, कुरु=विधेहि। राघवं=रामं, भयात्=भीतिहेतोः, त्रायस्व=रक्ष।

व्युत्पत्तिः—प्रावृषिजाऽम्भोदनादी=प्रावृषि जातः प्रावृषिजः, 'सप्तम्यां जनेर्डः' इति डप्रत्ययः। 'प्रावृट्शरत्कालदिवां जे' इति सप्तम्या अलुक्। अम्भो ददातीति अम्भोदः (कप्रत्ययः)। प्रावृषिजश्चाऽसौ अम्भोदः प्रावृषिजाऽम्भोदः (क० धा०), स इव नदतीति प्रावृषिजाऽम्भोदनादी, 'कर्तर्युपमाने' इति णिनिः। विरौति='उतो वृद्धिर्लुकि हलि' इति वृद्धिः। ज्ञातेयं=ज्ञातेः कर्म ज्ञातेयं, तत् 'कपिज्ञात्योर्ढक्' इति ढक्, 'ज्ञातेयं बन्धुता तेषां क्रमाद्भावसमूहयोः' इत्यमरः। भयात्='भीत्रार्थानां भयहेतुः' इत्यपादानत्वात्पञ्चमी।

भावाऽर्थ —हे लक्ष्मण ! वार्षिकमेघनादी एष ते भ्राता रामः तारस्वरं शब्दायते । बन्धुकार्यं कुरु । रामं भीतिकारणाद्रक्ष ।

भाषाऽर्थ —हे लक्ष्मण ! वर्षा ऋतुमे होनेवाले मेघकी नाईं शब्द करनेवाले ये आपके भाई (रामचन्द्र) ऊँचे स्वरसे चिल्लाते हैं । बन्धुकार्य कीजिए । रामचन्द्रजीको भय के कारणसे बचाइए ॥ ५४ ॥

**'रामसघुषितं नैतन्मृगस्यैव विवञ्चिषो ।**
**रामस्वनितसङ्काशं स्वानः' इत्यवदत्स ताम् ॥ ५५ ॥**

अन्वय —( हे आर्ये ! ) 'एतत् रामसघुषितं न, विवञ्चिषो मृगस्य एव रामस्वनितसङ्काशं स्वानः' इति स ताम् अवदत् ।

प्रयोगप०—'( हे आर्ये ! ) एतेन रामसघुषितेन न ( भूयते )। रामस्वनितसङ्काशेन स्वानेन ( भूयते ), इति तेन सा अवादि ।

व्याख्या—( हे आर्ये=हे पूजनीये ! ) एतत्='हा लक्ष्मण'त्याकारकं, रामसघुषितं न=रामशब्दितं न, विवञ्चिषो =प्रलोभनेच्छो , मृगस्य एव=हरिणस्य एव, रामस्वनितसङ्काशं =रामस्वरसदृशं , स्वानः =स्वरः , इति=इत्थं, सः =लक्ष्मणः , तां=सीताम्, अवदत्=अब्रवीत् ।

व्युत्पत्ति —रामसघुषितं=रामस्य सघुषितम् ( ष० त० ) 'घुषिरविशब्दने' इति धातो 'नपुंसके भावे क्त ' इति क्तप्रत्ययः , 'रुष्यमत्वरे'त्यादिना विकल्पेनेट् । विवञ्चिषो =विवञ्चितुम् इच्छु विवञ्चिषुस्तस्य, 'वञ्चु गतौ' इति भौवादिकादनेकार्थाद्धातो 'वञ्च प्रलोभने' इति चोरादिकाद्वा धातो सन्नन्तादु । रामस्वनितसङ्काशं =रामस्य स्वनितं रामस्वनितं ( ष० त० ), तेन सदृशं रामस्वनितसङ्काशं ( तृ० त० ), 'स्युरुत्तरपदे त्वमी । निभसङ्काशनीकाशप्रतीकाशोपमादय ।' इत्यमर । स्वानः ='स्वनहसोर्वा' इति विकल्पाद्घञ् ।

भावाऽर्थ —'हे आर्ये ! एतत्क्रोशनं रामशब्दितं न, प्रलोभनेच्छोमृगस्यैव रामशब्दाऽनुकारी शब्द ' इति लक्ष्मण सीतामब्रवीत् ।

भाषाऽर्थ —'हे आर्ये ! यह रामकी चिल्लाहट नहीं है, छलनेकी इच्छा करनेवाले मृगका ही रामके शब्दका अनुकरण करनेवाला शब्द है' लक्ष्मणने सीताको ऐसा कहा ॥ ५५ ॥

**आप्यानस्कन्धकण्ठाऽसं रुषितं सहितुं रणे ।**
**प्रोर्णुवन्तं दिशो बाणैः काकुत्स्थं भीरु ! कः क्षमः ? ॥५६॥**

अन्वय —हे भीरु ! आप्यानस्कन्धकण्ठाऽसं रुषितं बाणैः दिशः प्रोर्णुवन्तं काकुत्स्थं रणे सहितुं कः क्षमः ? ।

प्रयोगप०—काकुत्स्थ रणे सहितुं केन क्षमेण ( भूयते )।

व्याख्या—हे भीरु=हे भयशीले ! आप्यानस्कन्धकण्ठांसम्=स्थूलस्कन्धगलांसम् ( कर्मसमर्थाङ्गमित्यर्थः ), रुषितम्=रुष्टम्, बाणैः=शरैः, दिशः=आशाः, प्रोर्णुवन्तम्=आच्छादयन्तं, काकुत्स्थम्=रामं, रणे=युद्धे, सहितुं=सोढुं, कः=जनः, क्षमः=शक्तः ? ( रणे रामस्य पुरतः कोऽपि स्थातुं न समर्थ इति भावः )।

व्युत्पत्ति—भीरु=सञ्ज्ञापूर्वकस्य विधेरनित्यत्वान्न गुण इति मल्लिनाथः। आप्यानस्कन्धकण्ठांसम्=स्कन्धश्च कण्ठश्च असश्च स्कन्धकण्ठांसं, 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' इति समाहारद्वन्द्वः, 'स्कन्धो भुजशिरोंऽसोऽस्त्री' इत्यमरानुशासनेऽपि बाहुशिखरमंसस्तस्य पश्चिमो भागः ( ककुत्प्रदेशः ) स्कन्ध इति विवेकः। आप्यानं स्कन्धकण्ठांसं यस्य स आप्यानस्कन्धकण्ठांसस्तम् ( बहु० ), आप्यानमित्यत्र आङ्पूर्वात् 'प्यैङ् वृद्धौ' इति धातोः आत्वे 'संयोगादेरातो धातोर्यण्वतः' इति निष्ठानत्वम्, 'ओप्यायी वृद्धौ' इत्यस्य तु 'ओदितश्च' इति निष्ठानत्वं यलोपश्च। 'आङ्पूर्वस्यान्धूधसोः स्यादेव' इति नियमात् 'प्यायः पी' इति पीभावोऽपि न भवति। रुषितम्='रुष रोषे' इति धातोः क्तः, 'रुष्यमत्वरसंघुषास्वनाम्' इति विकल्पादिट्। प्रोर्णुवन्तम्=प्रपूर्वात् 'ऊर्णुञ् आच्छादने' इति धातोः शतरि उवङादेशः। सहितुम्='षह मर्षणे' इति धातोः क्षमे शक्त्यर्थत्वात् तदुपपदे 'शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन्' इति तुमुन्, 'तीषसहलुभरुषरिषः' इति विकल्पादिट्।

भावार्थ—हे भयशीले ! कर्मक्षमाङ्गं बाणैर्दिशः आच्छादयन्तं रामं युद्धे सोढुं कः समर्थः ?।

भाषार्थ—हे भयशीले ! जिनके स्कन्ध, कण्ठ और अंस ये स्थूल अर्थात् दृढ है, क्रुद्ध और बाणोंने दिशाओंको आच्छादित करनेवाले ऐसे रामका संग्राममें कौन मुकाबला कर सकता है ? ॥ ५६ ॥

**देहं बिभ्रक्षुरस्त्राऽग्नौ मृगः प्राणैर्दिदेविषन्।**
**ज्याघुष्टकठिनाऽङ्गुष्ठं राममायान्मुमूर्षया ॥ ५७ ॥**

अन्वय—मृगः अस्त्राऽग्नौ देहं बिभ्रक्षुः प्राणैः दिदेविषन् मुमूर्षया ज्याघुष्टकठिनाऽङ्गुष्ठं रामम् आयात्।

प्रयोगप०—मृगेण बिभ्रक्षुणा दिदेविषता ( सता ) ज्याघुष्टकठिनाङ्गुष्ठो रामः आयायत।

व्याख्या—मृगः=हरिणः, अस्त्राऽग्नौ=शराऽग्नौ, देहं=शरीरं, बिभ्रक्षुः=भ्रष्टुमिच्छुः, प्राणैः=असुभिः, दिदेविषन्=देवितुम् ( क्रीडितुम् ) इच्छन्, मुमूर्षया=

केशे' इति यादव । सम्भाण्ड्य='तुच्छभाण्डचीवराण्णिड्' इति 'भाण्डात्समाचयने' इति समाचयनेऽर्थे णिङन्तात् क्त्वो ल्यप् । दण्डवान्=दण्डाऽस्याऽस्तीति ( मतुप् ), एकदण्डिन शिखाऽभावादत्र दण्डवत्पदेन त्रिदण्डिग्रहण भवतीति मल्लिनाथ. ।

भावाऽथ —जाणकमण्डलुना शुद्धियुक्तेन मूर्ध्ना चोपलक्षित लाक्षारक्ते उत्तरीयाऽधरीये परिधाय कमण्डल्वादिक पदार्थं समाहृत्य त्रिदण्डी रावण समागत्य सीतामूचे ।

भाषाऽथ —जाण कमण्डलुसे और शुद्धिसम्पन्न शिरसे उपलक्षित, लाक्षाके रससे रगाये गये उत्तरीय अधरीयको पहनकर कमण्डलु आदि सामग्रीको इकट्ठा करके त्रिदण्डी रावण आकर सोताजीको कहने लगा ॥ ६२ ॥

**अधीयन्नात्मविद्विद्या धारयन्मस्करिव्रतम् ।**
**वदन्बह्वङ्गुलिस्फोट भ्रूक्षेप च विलोकयन् ॥ ६३ ॥**

अन्वय —आत्मविद्विद्याम् अधीयन् मस्करिव्रत धारयन् बहु अङ्गुलिस्फोट वदन् भ्रूक्षेप विलोकयन् ( रावण समागत्य सीतामूचे ) ।

प्रयोगप०—अधीयता धारयता वदता विलोकयता ( रावणेन सीता ऊचे ) ।

व्याख्या—आत्मविद्विद्या=योगिविद्याम् ( उपनिषदमित्यर्थ ), अधीयन्=पठन्, मस्करिव्रत=परिव्राजकनियम, धारयन्=अकृच्छ्रेण दधानम्, बहु=प्रचुरम् (यथा तथा), अङ्गुलिस्फोटम्=अङ्गुलि चालयित्वा, वदन्=कथयन् (प्रायेणाऽङ्गुलिसञ्ज्ञयैव स्वाऽभिप्राय प्रकाशयन्नित्यर्थ , ) भ्रूविक्षेप=भ्रुव विक्षिप्य, विलोकयन्=पश्यन् (सरलतया कटाक्षाद्यभावेन पश्यन्नित्यर्थ ), (रावण समागत्य सीतामूचे) ।

व्युत्पत्ति —आत्मविद्विद्याम्=आत्मान विदन्तीति आत्मविद. ( क्विप् ), तेषा विद्या, ताम् ( ष० त० ) । अधीयन्-अधीत इति अधिपूर्वात्='इङ् अध्ययने' इति धातो 'इङ्धार्यो. शत्रकृच्छ्रिणि' इति शतृप्रत्यय. । मस्करिव्रत 'मा कृत कर्माणि शान्ति श्रेयसी'त्येव घोषयन्तीति मस्करिण. ( परिव्राजका , 'मस्करमस्करिणौ वेणुपरिव्राजकयो.' इति सुट् इनिश्च निपात्यते ) 'भिक्षु परिव्राट् कर्मन्दा पाराशर्यपि मस्करी ।' इत्यमर । मस्करिणा व्रत मस्करिव्रत, तत् ( ष० त० ) । धारयन्=अकृच्छ्रेण धारयतीति 'इङ्धार्यो'रित्यादिना शतृप्रत्यय । अङ्गुलिस्फोटम्=अङ्गुलि स्फोटयित्वा 'स्वाऽङ्गेऽध्रुवे' इति णमुल् । भ्रूविक्षेप=भ्रुव विक्षिप्य, पूर्वसूत्रेणैव णमुल् ।

भावाऽथ —उपनिषद पठन्परिव्राजकविद्या धारयन् प्रायेण अङ्गुलिसञ्ज्ञयैव, स्वाऽभिप्राय प्रकाशयन् सरलतया पश्यश्च रावण समागत्य सीतामूचे ।

भाषाऽथ —उपनि ` पढता हुआ, परिव्राजकव्रतको धारण करता हुआ, प्राय.

व्युत्पत्ति —जलशुचि =जलेन शुचि (तृ० त०)। शुद्धदन्=शुद्धा दन्ता यस्य स (बहु०), 'अग्राऽन्तशुद्धशुभ्रवृषवराहेभ्यश्च' इति दन्तशब्दस्य विभाषया दत्रादेश । शिखी=शिखा अस्याऽस्तीति 'व्रीह्यादिभ्यश्च' इतीनि । जञ्जपूक =गर्हितं जपतीति, 'जप व्यक्तायां वाचि' इति धातो 'लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम्' इति भावगर्हायां यङ् 'जपजभदहदशभञ्जपशां च' इति अभ्यासस्य नुगागम 'यजजपदशां यङ' इत्यूकप्रत्यय । अक्षमालावान्=अक्षाणां माला अक्षमाला (ष० त०), सा अस्याऽस्तीति (संसर्गे मतुप्) मृदलाबुन =अलाब्वा विकार फलमलाबु 'ओरञ्' इत्यञ्, तस्य 'फले लुक्' इति लुक् 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वत्वम् । 'तुम्ब्यलावूरुभे समे' इत्यमर, मृच्च अलावु च मृदलाबु, तस्य 'जातिरप्राणिनाम्' इति समाहारद्वन्द्व, 'धारयिता' इति कृदन्तपदेन योगे कर्मणि षष्ठी । धारय =धारयतीति, 'अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च' इति श ।

भावार्थ —लक्ष्मणगमनाऽनन्तरं कृतस्नान शुक्लदशन शिखावान् जपशील, अक्षसूत्रयुक्तस्तीर्थमृत्तिकायास्तुम्बीपात्रस्य च धारको रावण (समागत्य सीतामूचे)।

भाषार्थ —लक्ष्मणके जानेपर स्नानसे पवित्र, सफेद दन्तोंसे युक्त, शिखाधारी, जपशील, अक्षमाला लिया हुआ तथा तीर्थमृत्तिका और तुम्बी पात्रको रखने वाला रावण आकर सीताजीको कहने लगा ॥ ६१ ॥

**कमण्डलुकपालेन शिरसा च मृजावता ।**
**सवस्त्र्य लाक्षिके वस्त्रे मात्रा सम्भाण्डच दण्डवान् ॥६२॥**

अन्वय —कमण्डलुकपालेन मृजावता शिरसा च (उपलक्षित) लाक्षिके वस्त्रे सवस्त्र्य मात्रा सम्भाण्ड्य दण्डवान् (रावण समागत्य सीताम् ऊचे)।

प्रयोगप०—(उपलक्षितेन) दण्डवता (रावणेन सीता ऊचे)।

व्याख्या—कमण्डलुकपालेन=जीर्णकमण्डलुना, मृजावता=शुद्धियुक्तेन, शिरसा च=मूर्ध्ना च (उपलक्षित), लाक्षिके=लाक्षारक्ते, वस्त्रे=वाससी (उत्तरीयाऽधरीय इत्यर्थ), सवस्त्र्य=समाच्छाद्य, मात्रा=कमण्डल्वादिका सामग्री, सम्भाण्ड्य=समाहृत्य, दण्डवान्=त्रिदण्डी (रावण समागत्य सीतामूचे)।

व्युत्पत्ति —कमण्डलुकपालेन=कमण्डलुरेव कपाल कमण्डलुकपाल, तेन (रूपक०)। मृजावता=मार्जन मृजा 'मृजू शुद्धौ' इति धातो 'षिद्भिदादिभ्योऽङ्' इत्यङ्, मृजाऽस्ति यस्य तत् मृजावत्, तेन (मतुप्)। शिरसा='इत्थंभूतलक्षणे' इति तृतीया । लाक्षिके=लाक्षया रक्ते लाक्षिके, ते 'लाक्षारोचनाट्ठक्' इति ठक् । सवस्त्र्य='मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच्' 'वस्त्रात्समाच्छादने' इति समाच्छादनाऽर्थे णिजन्तात् क्त्वो ल्यप् । मात्रा='मात्रा परिच्छदे

प्रयोगप०— ह्रेपयन्त्या शुचिस्मितया ( त्वया कया भूयते )।

व्याख्या—( हे सुन्दरि=हे रूपवति ! ) तिथिप्रण्य=चन्द्रस्य, सायन्तनी=सायङ्कालभवा, कान्ति=शोभा, पङ्कजाना=कमलाना, दिवातनी=दिवसस्थायिनी, कान्ति=शोभा, सदातन्या=सर्वकालस्थितया, कान्त्या=शोभया, ह्रेपयन्ती=लज्जायन्ती, शुचिस्मिता=शुक्लमन्दहासा (त्व=भवती, का=ललनाजनेषु कतमा, किनामधेयाऽसीत्यर्थ )।

व्युत्पत्ति—तिथिप्रण्य =तिथी ( शुक्लकृष्णपक्षतिथीः ) प्रणयति ( पञ्चदशानामपि कलानामेकैकवृद्धिह्रासक्रमेण पञ्चदश पञ्चदश ) प्रवर्तयतीति तिथिपणीश्चन्द्र, 'सत्सूद्विषे'त्यादिना क्विप्, 'उपसर्गादसमासेऽपि णोपदेशस्य' इति णत्वम्, तस्य तिथिप्रण्य 'एरनेकाचोऽसयोगपूर्वस्य' इति यणादेश । सायन्तनी—साये साय वा भवा सायन्तनी, ता, सायशब्दात् 'षोऽन्तकर्मणि' इति धातोर्घञन्तादस्मादेव निपातनान्मान्तात्सायशब्दाद्वा अव्ययात् 'सायचिर'मित्यादिना ट्युप्रत्यये तुट् । दिवातनी=दिवा भवा दिवातनी, ता, स एव प्रत्यय । सदातन्या=सदा भवा सदातनी, तया पूर्ववत्प्रत्यय । ह्रेपयन्ती='ह्री लज्जायाम्' इति धातो. 'अर्तिह्री'-त्यादिना णौ पुक् । शुचिस्मिता=शुचि स्मित यस्या सा ( बहु० )। अत्र उपमानादुपमेयस्याधिक्यकथनाद्व्यतिरेकाऽलङ्कार., 'आधिक्यमुपमेयस्योपमानान्न्यूनताऽथवा । व्यतिरेक ' इति तल्लक्षणम् ।

भावार्थ —हे सुन्दरि ! चन्द्रमस कान्ति सायन्तन्येव न तु दिवातनी तथैव पद्मस्य कान्तिर्दिवातन्येव न तु सायङ्कालस्थायिनी, परः त्वत्कान्तिस्तु सदातनी वर्तते अत स्वकान्त्या चन्द्रपद्मकान्ती त्रपयन्ती त्व का ?

भाषार्थ —हे सुन्दरि ! चन्द्रकी सायङ्कालमे होनेवाली और कमलोकी दिनमे होनेवाली कान्तिको नित्य (सायङ्काल और दिनमे) रहनेवाली अपनी कान्तिसे लज्जित करती हुई एवम् शुक्ल मन्द हास्यवाली तुम कौन हो ? ॥ ६५ ॥

**का त्वमेकाकिनी भीरु ! निरन्वयजने वने ।**
**क्षुध्यन्तोऽप्यघसन्व्यालास्त्वामपाला कथ न वा ॥ ६६ ॥**

अन्वय —हे भीरु ? एकाकिनी निरन्वयजने वने (स्थिता) त्व का ? क्षुध्यन्त व्याला अपाला त्वा कथ वा न अघसन् अपि ।

प्रयोगप०—हे भीरु ! एकाकिन्या ( स्थितया ) त्वया कया ( भूयते ), क्षुध्यद्भिर्व्यालैरपाला त्व कथ वा न अघत्सथा अपि ।

व्याख्या—हे भीरु=हे त्रस्नो ! एकाकिनी=असहाया, निरन्वयजने=निरस्वन्वजने ( मनुष्यासञ्चारशून्य इत्यर्थ ), वने=अरण्ये ( स्थिता=विद्यमाना )

अड्गुलीकी सञ्ज्ञा ( इशारा ) से ही अपने अभिप्राय को जनाता हुआ और सरलता से देखता हुआ रावण आकर सीताजीको कहने लगा ॥ ६३ ॥

**सन्दिदर्शयिषु साम निजुह्नूषु क्षपाटताम् ।**
**चङ्क्रमावान् समागत्य सीतामूचे सुखाभव ॥ ६४ ॥**

अन्वय —साम सन्दिदर्शयिषु क्षपाटता निजुह्नूषु चङ्क्रमावान् ( सन् ) समागत्य सीता 'सुखाभव' ( इति ) ऊचे ।

प्रयोगप०—सदिदर्शयिषुणा निजुह्नूषुणा चङ्क्रमावता (सता) सीता 'सुखाभव' ( इति ) ऊचे ।

व्याख्या—साम=सान्त्व, सन्दिदर्शयिषु =सन्दर्शयितुमिच्छु , क्षपाटता= निशाचरत्व, निजुह्नूषु =निह्नोतुमिच्छु (निज कौर्यमाच्छाद्य शान्ति नाटयन्नित्यर्थ ), चङ्क्रमावान्=कुटिलगतिमान् ( जरानाटितकेन कुटिल गच्छन्नित्यर्थ ), ( सन् ), समागत्य=समीपमागत्य, सीता=मैथिलीं, सुखाभव=अनुकूलाभव ( मत्प्रार्थनीये प्रतिकूला न भवेति भाव ), ( इति=इत्थम् ), ऊचे=अब्रवीत् ।

व्युत्पत्ति —सन्दिदर्शयिषु =दर्शयते ( णिजन्ताद् दृशे ) सन्नन्तादुप्रत्यय. । क्षपाटता=क्षपाटस्य भाव क्षपाटता, ताम् ( तल्प्रत्यय ) । निजुह्नूषु ='ह्नुङ् अपनयने' इति सन्नन्ताद्धातो उप्रत्यय । चङ्क्रमावान्=कुटिल क्रमण ( गति० ) चङ्क्रमा, 'क्रमु पादविक्षेपे' इति धातो 'नित्य कौटिल्ये गतौ' इति यङि 'नुगतोऽनुनासिकाऽन्तस्य' इति नुकि 'अ प्रत्ययात्' इत्यऽप्रत्यये टाप्, 'अतो लोप ' इत्यलोप 'यस्य हल ' इति यकारलोप । चङ्क्रमाऽस्ति यस्य स चङ्क्रमावान् ( मतुप् ) । सुखाभव='सुखप्रियादानुलोम्ये' इति कृ+वस्तियोगे डाच् । 'सुखाकुरु' इति मल्लिनाथसमत पाठस्तत्र अस्मच्चित्ताराधन कुर्वित्यर्थ ।

भावार्थ —रावण सान्त्वप्रदर्शनेच्छु राक्षसभावस्य गोपनाऽभिलाषी कुटिलगति सन् समीपमागत्य सीता 'मदनुकूला भव' इत्यब्रवीत् ।

भाषार्थ —शान्ति दिखानेकी इच्छा करनेवाला, राक्षसत्वको छिपानेवाला, बुढापेकी नकल करनेसे टेढी गति दिखलाता हुआ रावण, समीप आकर सीताजीको 'मेरी अनुकूल हो जाओ' यह कहने लगा ॥ ६४ ॥

**सायन्तनीं तिथिप्रण्य पङ्कजाना दिवातनीम् ।**
**कान्ति कान्त्या सदातन्या ह्रेपयन्ती शुचिस्मिता ॥ ६५ ॥**

अन्वय —( हे सुन्दरि ! ) तिथिप्रण्य सायन्तनी कान्ति पङ्कजाना दिवातनी कान्ति सदातन्या कान्त्या ह्रेपयन्ती शुचिस्मिता ( त्व केति उत्तरश्लोकेन सम्बन्ध ) ।

प्रयोगप०— ह्रेपयन्त्या शुचिस्मितया ( त्वया कया भूयते )।

व्याख्या—( हे सुन्दरि=हे रूपवति ! ) तिथिप्रण्यः=चन्द्रस्य, सायन्तनी=सायङ्कालभवा, कान्ति=शोभा, पङ्कजाना=कमलाना, दिवातनी=दिवसस्थायिनी, कान्ति=शोभा, सदातन्या=सर्वकालस्थितया, कान्त्या=शोभया, ह्रेपयन्ती=लज्जायन्ती, शुचिस्मिता=शुक्लमन्दहासा (त्व=भवती, का=ललनाजनेषु कतमा, किंनामधेयाऽसीत्यर्थ )।

व्युत्पत्तिः—तिथिप्रण्य =तिथी ( शुक्लकृष्णपक्षतिथी ) प्रणयति ( पञ्चदशानामपि कलानामेकैकवृद्धिह्रासक्रमेण पञ्चदश पञ्चदश ) प्रवर्तयतीति तिथिपणीश्चन्द्र , 'सत्सूद्विषे'त्यादिना क्विप्, 'उपसर्गादसमासेऽपि णोपदेशस्य' इति णत्वम्, तस्य तिथिप्रण्य 'एरनेकाचोऽसयोगपूर्वस्य' इति यणादेश । सायन्तनी—साये साय वा भवा सायन्तनी, ता, सायशब्दात् 'षोऽन्तकर्मणि' इति धातोर्घञन्तादस्मादेव निपातनान्मान्तात्सायशब्दाद्वा अव्ययात् 'सायचिर'मित्यादिना टयुप्रत्यये तुट्। दिवातनी=दिवा भवा दिवातनी, ता, स एव प्रत्यय । सदातन्या=सदा भवा सदातनी, तया पूर्ववत्प्रत्यय । ह्रेपयन्ती='ह्री लज्जायाम्' इति धातो 'अर्तिह्री'-त्यादिना णौ पुक्। शुचिस्मिता=शुचि स्मित यस्या सा ( बहु० )। अत्र उपमानादुपमेयस्याधिक्यकथनाद्व्यतिरेकाऽलङ्कार , 'आधिक्यमुपमेयस्योपमानान्न्यूनताऽथवा। व्यतिरेक ' इति तल्लक्षणम्।

भावार्थ —हे सुन्दरि ! चन्द्रमस कान्ति सायन्तन्येव न तु दिवातनी तथैव पद्मस्य कान्तिर्दिवातन्येव न तु सायङ्कालस्थायिनी, परं त्वत्कान्तिस्तु सदातनी वर्तते अत स्वकान्त्या चन्द्रपद्मकान्ती त्रपयन्ती त्व का ?

भाषार्थ —हे सुन्दरि ! चन्द्रकी सायङ्कालमे होनेवाली और कमलोकी दिनमे होनेवाली कान्तिको नित्य (सायङ्काल और दिनमे) रहनेवाली अपनी कान्तिसे लज्जित करती हुई एवम् शुक्ल मन्द हास्यवाली तुम कौन हो ? ॥ ६५ ॥

**का त्वमेकाकिनी भीरु ! निरन्वयजने वने।**
**क्षुध्यन्तोऽप्यघसन्व्यालास्त्वामपालां कथ न वा ॥ ६६ ॥**

अन्वय —हे भीरु ? एकाकिनी निरन्वयजने वने (स्थिता) त्व का ? क्षुध्यन्त व्याला अपाला त्वा कथ वा न अघसन् अपि।

प्रयोगप०—हे भीरु ! एकाकिन्या ( स्थितया ) त्वया कया ( भूयते ), क्षुध्यद्भिर्व्यालैरपाला त्व कथ वा न अवत्सया अपि।

व्याख्या—हे भीरु=हे त्रस्नो ! एकाकिनी=असहाया, निरन्वयजने=नि -सम्बन्वजने ( मनुष्यासञ्चारशून्य इत्यर्थ ), वने=अरण्ये ( स्थिता=विद्यमाना )

त्व=भवती, का=कतमा । क्षुध्यन्त.=बुभुक्षमाणा , व्याला.=श्वापदा ( हिंस्रजन्तव इत्यर्थ ), अपालाम्=अरक्षका, त्वाम्=भवती, कथ वा=केन प्रकारेण वा, न अघसन् अपि=न भक्षितवन्त अपि ( अहो महच्चित्रमिति भाव. ) ।

व्युत्पत्ति —एकाकिनी='एकादाकिनिच्चाऽसहाये' इति एकशब्दादाकिनिच्प्रत्ययस्तदन्तात् स्त्रीत्वविवक्षाया डीप्, 'एकाकी त्वेक एकक ' इत्यमर. । निरन्वयजने=निर्गत अन्वय येषा ते निरन्वया (बहु०), ते जना यस्मिस्तत् निरन्वयजन, तस्मिन् (बहु०) । क्षुध्यन्त ='क्षुध बुभूक्षायाम्' इति दैवादिकाद्धातो ल्ट शत्रादेश , व्याला ='व्याल श्वापदसर्पयो.' इति विश्व । अपालाम्=पालयतीति पाल , पचाद्यच् । अविद्यमान पालो यस्या सा अपाला, ताम् (बहु०) । अघसन्=अदधातोर्लुङि 'लुङ्सनोर्घस्लृ' इत्यदेर्घस्लादेशे ऌदित्वादङ् ।

भावार्थ —हे भयशीले । असहाया नरसञ्चाररहिते वने विद्यमाना त्व का ? हिंस्रजन्तवो रक्षकरहिता त्वा कथ वा न भक्षितवन्त ? ।

भाषार्थ —हे भयशीले । अकेली, निर्जन वनमे रहनेवाली तुम कौन हो ? हिंस्र जन्तुओंने रक्षकसे रहित तुम्हे कैसे नही खाया ॥ ६६ ॥

**हृदयङ्गममूर्तिस्त्वं सुभगम्भावुक वनम् ।**
**कुर्वाणा भीममप्येतद्वदाऽभ्यै केन हेतुना ॥ ६७ ॥**

अन्वय —( हे सौम्ये । ) हृदयङ्गममूर्ति. त्व भीमम् अपि एतत् वन सुभगम्भावुक कुर्वाणा केन हेतुना अभ्यै. वद ।

प्रयोगप०—हृदयङ्गममूर्त्या त्वया कुर्वाणया अभ्यैयत, उद्यताम् ।

व्याख्या—( हे सौम्ये । ) हृदयङ्गममूर्ति.=हृद्यदेहा, त्व=सुन्दरी, भीमम् अपि=भयङ्करम् अपि, एतत्=इद, वनम्=अरण्य, सुभगम्भावुक=सौम्य, कुर्वाणा=विदधती, केन हेतुना=केन कारणेन, अभ्यै =अभ्यगच्छ, वद=कथय ।

व्युत्पत्ति.—हृदयङ्गममूर्त्ति =हृदय गच्छतीति हृदयङ्गमा, 'गमश्च' इति खचि मुम्, हृदयङ्गमा मूर्तिर्यस्या सा ( बहु० ), 'मूर्ति. काठिन्यकाययो. ।' इत्यमरः । सुभगम्भावुक=असुभग सुभग भवतीति सुभगम्भावुक, तत्, 'कर्तरि भुव खिष्णुच्खुकञौ' इति च्व्यर्थे भुव खुकञ्, मुमागम. । अभ्यै =अभिपूर्वादिणो लङि मध्यमपुरुषैकवचने 'आडजादीनाम्' इत्याट् 'आटश्च' इति वृद्धिश्च ।

भावार्थ —हे सौम्ये । मनोहरदेहा त्व भयङ्करमप्येतद्वन सौम्य कुर्वाणा केन हेतुना आगताऽसि ? कथय ।

भाषार्थ —हे सौम्ये । मनोहर शरीरवाली तुम भयङ्कर इस वनको भी सौम्यतासम्पन्न करती हुई किस कारणसे आई हो ? बतलाओ ॥ ६७ ॥

सुकृत प्रियकारी त्वं क रहस्युपतिष्ठसे ।
पुण्यकृच्चाटुकारस्ते किङ्कर सुरतेषु क ॥ ६८ ॥

अन्वयः—( हे सुभगे ! ) त्व रहसि प्रियकारी क सुकृतम् उपतिष्ठसे ? सुरतेषु ते चाटुकार किङ्कर पुण्यकृत् क ?

प्रयोगप०—त्वया प्रियकार्या क सुकृत् उपस्थीयते, ते चाटुकारेण किङ्करेण पुण्यकृता केन ( भूयते ) ।

व्याख्या—( हे सुभगे ! ) त्व=भवती, रहसि=एकान्ते, प्रियकारी=प्रियकारिणी ( अनुकूलवर्तिनी सती ), क=कतम, सुकृत=पुण्यकारिणम्, उपतिष्ठसे=सङ्गच्छसि । सुरतेषु=शोभनरतेषु, ते=तव, चाटुकार =प्रियवादी, किङ्कर =दास , पुण्यकृत्=कृतसुकृत , क =कतम ( अकृतपुण्येन दुर्लभत्वादीदृक्फलस्येति भाव । कस्ते पतिरिति प्रश्नाऽर्थ ) ।

व्युत्पत्ति —प्रियकारी=प्रिय करोतीति, 'क्षेमप्रियमद्रेऽण्च' इत्यणि 'टिड्ढाणञि'-त्यादिना ङीप् । सुकृत=शोभन कृतवानिति सुकृत्, त 'सुकर्मपापमन्त्रपुण्येषु कृञ.' इति क्विपि 'ह्रस्वस्ये'त्यादिना तुक् । उपतिष्ठसे=सङ्गतिकरण आत्मनेपदम् । चाटुकार.=चाटु करोतीति, 'न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु' इति टप्रतिषेधे 'कर्मण्यण्' इत्यण् । 'अस्त्री चाटु चटु श्लाघा प्रेम्णा मिथ्याविकत्थनम्' । इत्यमर । किङ्कर =किञ्चित् कुत्सित वा करोतीति किङ्कर 'कृञो हेत्वि'त्यादिना हेत्वाद्यर्थविवक्षाया ट एव 'जाति किङ्करी'त्यादिङीबन्तप्रयोगदर्शनात् । तदविवक्षाया तु 'दिवे'त्यादिसूत्रप्राप्तटप्रत्ययबाधेन 'कियत्तद्बहुषु कृञोऽज्विधानम्' इत्यजेव, 'किङ्करा यत्करे'त्यादिटाबन्तप्रयोगदर्शनात् । यत्तु 'दिवे'त्यादिनैव टप्रत्यय, 'अज्विधान तु स्त्रीलिङ्गमात्रविषयम्' इति जयमङ्गलाकारव्याख्यान, तद्वृत्तावच्प्रत्ययान्तत्वाऽभिव्यक्त्यर्थं 'किङ्करा यत्करे'ति टाबन्तोदाहरणदर्शनाद् भ्रान्तमित्युपेक्ष्यम् इति मल्लिनाथ. । पुण्यकृत्=पुण्य करोतीति, सुकर्मेत्यादिना क्विप् ।

भावार्थ —हे सुभगे ! त्वमेकान्ते अनुकूला सती क पुण्यवन्तमनुगृह्णासि ? शोभनरतेषु ते प्रियवादी दास सुकृती क ?

भाषार्थ —हे सुभगे ! तुम एकान्तमे अनुकूल होती हुई किस पुण्यवान्‌से मिलती हो ? सुरतकममे तुम्हारा प्रियवादी दास कौन पुण्यवान् ह ? ॥ ६८ ॥

परिपर्युदधे रूपमा द्युलोकाच्च दुर्लभम् ।
भावत्क दृष्टवत्स्वेतदस्मास्वधि सुजीवितम् ॥ ६९ ॥

अन्वय —उदधे परिपरि ( स्थितम् ) आ द्युलोकाच्च दुर्लभ भावत्कम् एतत् रूप दृष्टवत्सु अस्मासु अधि सजीवितम् ।

त्व=भवती, का=कतमा । क्षुध्यन्तः=बुभुक्षमाणा , व्यालाः=श्वापदाः ( हिंस्रजन्तव इत्यर्थः ), अपालाम्=अरक्षका, त्वाम्=भवतीं, कथं वा=केन प्रकारेण वा, न अघसन् अपि=न भक्षितवन्तः अपि ( अहो महच्चित्रमिति भावः ) ।

व्युत्पत्तिः—एकाकिनी='एकादाकिनिच्चाऽसहाये' इति एकशब्दादाकिनिच्प्रत्ययस्तदन्तात् स्त्रीत्वविवक्षायां ङीप्, 'एकाकी त्वेक एकक' इत्यमरः । निरन्वयजने=निर्गतः अन्वयः येषां ते निरन्वयाः (बहु०), ते जनाः यस्मिंस्तत् निरन्वयजनं, तस्मिन् (बहु०) । क्षुध्यन्तः='क्षुध बुभुक्षायाम्' इति दैवादिकाद्धातो लटः शत्रादेशः, व्यालाः='व्यालः श्वापदसर्पयोः' इति विश्वः । अपालाम्=पालयतीति पालः, पचाद्यच् । अविद्यमानः पालो यस्याः सा अपाला, ताम् (बहु०) । अघसन्=अदधातोर्लुङि 'लुङ्सनोर्घस्लृ' इत्यदेर्घस्लादेशे लृदित्वादङ् ।

भावार्थः—हे भयशीले ! असहाया नरसञ्चाररहिते वने विद्यमाना त्वं का ? हिंस्रजन्तवो रक्षकरहितां त्वां कथं वा न भक्षितवन्तः ? ।

भाषार्थ—हे भयशीले ! अकेली, निर्जन वनमें रहनेवाली तुम कौन हो ? हिंस्र जन्तुओंने रक्षकसे रहित तुम्हे कैसे नहीं खाया ॥ ६६ ॥

**हृदयङ्गममूर्तिस्त्वं सुभगम्भावुकं वनम् ।**
**कुर्वाणा भीममप्येतद्वदाऽभ्यैः केन हेतुना ॥ ६७ ॥**

अन्वयः—( हे सौम्ये ! ) हृदयङ्गममूर्तिः त्वं भीमम् अपि एतत् वनं सुभगम्भावुकं कुर्वाणा केन हेतुना अभ्यैः वद ।

प्रयोगप०—हृदयङ्गममूर्त्या त्वया कुर्वाणया अभ्ययत, उद्यताम् ।

व्याख्या—( हे सौम्ये ! ) हृदयङ्गममूर्तिः=हृद्यदेहा, त्वं=सुन्दरी, भीमम् अपि=भयङ्करम् अपि, एतत्=इदं, वनम्=अरण्यं, सुभगम्भावुकं=सौम्यं, कुर्वाणा=विदधती, केन हेतुना=केन कारणेन, अभ्यैः=अभ्यगच्छः, वद=कथय ।

व्युत्पत्तिः—हृदयङ्गममूर्तिः=हृदयं गच्छतीति हृदयङ्गमा, 'गमश्च' इति खचि मुम्, हृदयङ्गमा मूर्तिर्यस्याः सा ( बहु० ), 'मूर्तिः काठिन्यकाययोः ।' इत्यमरः । सुभगम्भावुकम्=असुभगं सुभगं भवतीति सुभगम्भावुकं, तत्, 'कर्तरि भुवः खिष्णुच्खुकञौ' इति च्व्यर्थे भुवः खुकञ्, मुमागमः । अभ्यैः=अभिपूर्वादिणो लङि मध्यमपुरुषैकवचने 'आडजादीनाम्' इत्याट् 'आटश्च' इति वृद्धिश्च ।

भावार्थः—हे सौम्ये ! मनोहरदेहा त्वं भयङ्करमप्येतद्वनं सौम्यं कुर्वाणा केन हेतुना आगताऽसि ? कथय ।

भाषार्थ—हे सौम्ये ! मनोहर शरीरवाली तुम भयङ्कर इस वनको भी सौम्यतासम्पन्न करती हुई किस कारणसे आई हो ? बतलाओ ॥ ६७ ॥

सुकृतं प्रियकारी त्वं कं रहस्युपतिष्ठसे ।
पुण्यकृच्चाटुकारस्ते किङ्करः सुरतेषु कः ॥ ६८ ॥

अन्वयः—( हे सुभगे ! ) त्वं रहसि प्रियकारी कं सुकृतम् उपतिष्ठसे ? सुरतेषु ते चाटुकारः किङ्करः पुण्यकृत् कः ?

प्रयोगप०—त्वया प्रियकार्या कः सुकृत् उपस्थीयते, ते चाटुकारेण किङ्करेण पुण्यकृता केन ( भूयते ) ।

व्याख्या—( हे सुभगे ! ) त्वं=भवती, रहसि=एकान्ते, प्रियकारी=प्रियकारिणी ( अनुकूलवर्तिनी सती ), कं=कतमं, सुकृतं=पुण्यकारिणम्, उपतिष्ठसे=सङ्गच्छसि । सुरतेषु=शोभनरतेषु, ते=तव, चाटुकारः=प्रियवादी, किङ्करः=दासः, पुण्यकृत्=कृतसुकृतः, कः=कतमः ( अकृतपुण्येन दुर्लभत्वादीदृक्फलस्येति भावः । कस्ते पतिरिति प्रश्नार्थः ) ।

व्युत्पत्तिः—प्रियकारी=प्रियं करोतीति, 'क्षेमप्रियमद्रेऽण्च' इत्यणि 'टिड्ढाणञि'त्यादिना ङीप् । सुकृतं=शोभनं कृतवानिति सुकृत्, तं 'सुकर्मपापमन्त्रपुण्येषु कृञः' इति क्विपि 'ह्रस्वस्ये'त्यादिना तुक् । उपतिष्ठसे=सङ्गतिकरणे आत्मनेपदम् । चाटुकारः=चाटु करोतीति, 'न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु' इति टप्रतिषेधे 'कर्मण्यण्' इत्यण् । 'अस्त्री चाटु चटु श्लाघा प्रेम्णा मिथ्याविकत्थनम्' । इत्यमरः । किङ्करः=किञ्चित् कुत्सितं वा करोतीति किङ्करः 'कृञो हेत्वि'त्यादिना हेत्वाद्यर्थविवक्षायां टः एव 'जातिं किङ्करी'त्यादिङीबन्तप्रयोगदर्शनात् । तदविवक्षायां तु 'दिवे'त्यादिसूत्रप्राप्तटप्रत्ययबाधेन 'किंयत्तद्बहुषु कृञोऽज्विधानम्' इत्यजेव, 'किङ्करा यत्करे'त्यादिटाबन्तप्रयोगदर्शनात् । यत्तु, 'दिवे'त्यादिनैव टप्रत्ययः, 'अज्विधानं तु स्त्रीलिङ्गमात्रविषयम्' इति जयमङ्गलाकारव्याख्यानं, तद्वृत्तावच्प्रत्ययान्तत्वाऽभिव्यक्त्यर्थं 'किङ्करा यत्करे'ति टाबन्तोदाहरणदर्शनाद् भ्रान्तमित्युपेक्ष्यम् इति मल्लिनाथः । पुण्यकृत्=पुण्यं करोतीति, सुकर्मेत्यादिना क्विप् ।

भावार्थः—हे सुभगे ! त्वमेकान्ते अनुकूला सती कं पुण्यवन्तमनुगृह्णासि ? शोभनरतेषु ते प्रियवादी दासः सुकृती कः ?

भाषार्थ—हे सुभगे ! तुम एकान्तमे अनुकूल होती हुई किस पुण्यवान्से मिलती हो ? सुरतकममे तुम्हारा प्रियवादी दास कौन पुण्यवान् है ? ॥ ६८ ॥

परिपर्युदधे रूपमा द्युलोकाच्च दुर्लभम् ।
भावत्कं दृष्टवत्स्वेतदस्मास्वधि सुजीवितम् ॥ ६९ ॥

अन्वयः—उदधेः परिपरि ( स्थितम् ) आ द्युलोकाच्च दुर्लभं भावत्कम् एतद् रूपं दृष्टवत्सु अस्मासु अधि सुजीवितम् ।

अपु स्का=अविद्यमानपुरुषा ( अविद्यमानपुरुषसम्पर्केत्यर्थ , उपभोगदर्शनादिति भाव ) न असि=न भवसि, इति=इत्थ, मे=मम, मति =बुद्धि ।

व्युत्पत्ति —आपीतमधुका=आपीत मधु यस्या सा ( बहु० ), 'शेषाद्विभाषा' इति कप् । सुदिवा=शोभन दिवा यस्या सा ( बहु० ) 'सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रेणीपदाऽजपदप्रोष्ठपदा ' इत्यच्प्रत्ययाऽन्तो निपात । शोभनत्व चाऽत्र नीहाराद्यभाववत्त्वम् । अरविन्दिनी=अरविन्दाना समूह , 'खलादिभ्य इनिर्वक्तव्य ' इति इनि , खलादिराकृतिगण । सत्परिमललक्ष्मीका=परिमलस्य लक्ष्मी परिमललक्ष्मी , 'विमर्दोत्थे परिमलो गन्धे जनमनोहरे ।' इत्यमर । सती परिमललक्ष्मीर्यस्या सा ( बहु० ), एकवचनाऽन्तस्य लक्ष्मीशब्दस्य उर - प्रभृतिषु पाठात् 'उर प्रभृतिभ्य कप्' इति समासाऽन्त कप् । अपु स्का=अविद्यमान पुमान् यस्या सा ( नञ्बहु० ), लक्ष्मीशब्दवत् पु शब्दस्यैकवचनस्य उर - प्रभृतिपाठात्कप् । 'पुम खय्यम्परे' इति पु सो रुत्व विसर्जनीयस्य 'सपु काना सो वक्तव्य ' इति स ।

भावाऽर्थ —भ्रमरैर्निपीतपुष्परसा सूर्यकिरणसम्पर्कशालिनी कमलिनीव स्थिता विमर्दगन्धसम्पत्तिसहिता त्व पुरुषसम्पर्करहिता नाऽसीति मे प्रतिपत्ति ।

भाषाऽर्थ —जिसका पुष्परस भौंरोने खूब पी लिया है ऐसी तथा सूर्यकिरणोंके सम्पर्कसे शोभित कमलिनीकी सदृश और परिमल ( विमर्दसे उत्पन्न गन्ध ) की शोभासे सम्पन्न होनेवाली पुरुषके सम्बन्धसे रहित नही हो यह मेरा विचार है ॥

**मिथ्यैव श्री. श्रियम्मन्या, श्रीमन्मन्यो, मृषा हरि ।**
**साक्षात्कृत्याऽभिमन्येऽह त्वा हरन्तीं श्रियं श्रिय ॥ ७१ ॥**

अन्वय —श्रिय श्रिय हरन्ती त्वा साक्षात्कृत्य अह श्रियम्मन्या श्री मिथ्या-एव, श्रीमन्मन्य हरि मृषा एव ( इति ) अभिमन्ये ।

प्रयोगप०—मया 'श्रियम्मन्यया श्रिया मिथ्या, श्रीमन्मन्येन हरिणा मृषा एव ( भूयते )' इति अभिमन्यते ।

व्याख्या—श्रिय =लक्ष्म्या , श्रिय=शोभा, हरन्ती=जयन्ती ( लक्ष्म्या अधिकशोभामित्यर्थ ), त्वां=भवती, साक्षात्कृत्य=दृष्ट्वा, अह=भिक्षु , श्रियम्मन्या=श्रीमानिनी, श्री =लक्ष्मी , मिथ्या एव=मृषा एव ( न श्रीरित्यर्थ ), श्रीमन्मन्य =श्रीमन्मानी, हरि =विष्णु , मृषा एव=मिथ्या एव ( न श्रीमानित्यर्थ ), ( इति=इत्थ त्वमेव श्रीस्त्वदीय एव श्रीमानिति भाव. ), अभिमन्ये=जानामि ।

व्युत्पत्ति —साक्षात्कृत्य=असाक्षात् साक्षात् यथा सपद्यते तथा कृत्वा

प्रयोगप०— सुजीवितेन ( भूयते )।

व्याख्या—उदधे परिपरि=समुद्रं वर्जयित्वा ( स्थितं=विद्यमानम् ), ( तत्राऽपि दुर्लभमित्यर्थः ), आ द्युलोकाच्च=आ स्वर्गाच्च, दुर्लभं=दुष्प्राप्यं, भावत्कं=भवत्या, एतत्=समीपतरवर्ति, रूपं=सौन्दर्यं, दृष्टवत्सु=अवलोकितवत्सु, अस्मासु अधि=अस्मदधिकरणम् अस्मत्स्वामिकं वा, सुजीवितं=शोभनं जीवनम् ( वर्तते इति शेषः )।

व्युत्पत्तिः—उदधेः=‘परिपरि’ इति योगे ‘अपपरी वर्जने’ इति कर्मप्रवचनीयत्वाद् द्वितीयाप्राप्तौ ‘पञ्चम्यपाङ्परिभिः’ इति तदपवादिनी पञ्चमी। परिपरि=असमासे ‘परेर्वर्जने’ इति विकल्पाद् द्विवचनम्। आ द्युलोकात्=द्युः चाऽसौ लोको द्युलोकस्तस्मात् ‘आङ् मर्यादावचने’ इति वचनग्रहणादभिविधावपि कर्मप्रवचनीयत्वेऽपि पूर्ववत्पञ्चमी। ‘आङ् मर्यादाऽभिविध्योः’ इति विकल्पादसमासः। भावत्कं=भवत्या इदं भावत्कं, तत् ‘भवतष्ठक्छसौ’ इति ठकि ‘ठक्छसोश्च’ इति पुंवद्भावः। वस्तुतस्तु अनेन न पुंवद्भावः ‘सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः’ इति भाष्यकारेष्ट्या गताऽर्थत्वात्। ततः ‘इसुसुक्तान्तात्कः’ इति ठस्य कः। अस्मासु अधि=‘अधिपरी अनर्थकौ’ इति कर्मप्रवचनीयसञ्ज्ञाया गत्युपसर्गसञ्ज्ञाबाधेन ‘गतिर्गतौ’ इति निघाताऽभावादेव चारितार्थ्यात् तद्योगेपि न द्वितीया। यद्वा ‘यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी’ इति स्वामिनि पक्षान्तरे सप्तमी। सुजीवितं शोभनं जीवितं ‘कुगतिप्रादयः’ इति समासः।

भावाऽर्थः—मर्त्यलोके स्वर्गे च दुर्लभं भवत्याः सौन्दर्यं दृष्टवतामस्माकं जीवनं सफलं वर्तते।

भाषाऽर्थः—समुद्रपर्यन्त विस्तीर्ण पृथ्वीमें और स्वर्गमें भी दुर्लभ आपके इस सौन्दर्यको देखकर हमलोगोंका जीवन सफल है॥ ६९॥

**आपीतमधुका भृङ्गैः सुदिवेवाऽरविन्दिनी।**
**सत्परिमललक्ष्मीका नाऽपुंस्काऽसीति मे मतिः॥ ७०॥**

अन्वयः—आपीतमधुका सुदिवा अरविन्दिनी इव ( स्थिता ) सत्परिमललक्ष्मीका ( त्वम् ) अपुंस्का न असि इति मे मतिः।

प्रयोगप०—‘आपीतमधुकया सुदिवया अरविन्दिन्या इव ( स्थितया ) सत्परिमललक्ष्मीकया ( त्वया ) अपुंस्कया न भूयते इति मे मत्या ( भूयते )।

व्याख्या—भृङ्गैः=भ्रमरैः, अपीतमधुका=निपीतपुष्परसा, सुदिवा=शोभनदिना (रविकिरणसम्पर्कशालिनीत्यर्थः), अरविन्दिनी इव=कमलिनी इव (स्थिता=विद्यमाना ), सत्परिमललक्ष्मीका=विद्यमानविमर्दगन्धसम्पत्तिः, ( त्वं=भवती ),

भाषार्थ—कामदेव तुम्हे देखते तो रतिके लिए अधिक उत्कण्ठित न होते और निरन्तर क्रीडाकर रतिको सहचरी बनाकर भी नही रहते ॥ ७२ ॥

**वल्गूयन्ती विलोक्य त्वा स्त्री न मन्तूयतीह का ।**
**कान्ति नाऽभिमनायेत को वा स्थाणुसमोऽपि ते ? ॥ ७३॥**

अन्वय—वल्गूयन्ती त्वा विलोक्य इह का स्त्री न मन्तूयति ? स्थाणुसम अपि क. ते कान्ति विलोक्य न अभिमनायेत ?

प्रयोगप०— कया स्त्रिया न मतूय्यते । स्थाणुसमेनाऽपि केन न अभिमनाय्येत ।

व्याख्या—वल्गूयन्ती=शोभमाना, त्वा=भवती, विलोक्य=दृष्ट्वा, इह=अस्मिन् लोके, का स्त्री=का नारी, न मन्तूयति=न कुप्यति ? ( नेर्ष्यतीत्यर्थ ) । स्थाणुसम =काष्ठतुल्यः ( अत्यन्तमूढ हरतुल्यो वा जितेन्द्रिय ), अपि, क.=नर , ते=तव, कान्ति=लावण्य, विलोक्य=दृष्ट्वा, न अभिमनायेत=न उत्सुकायेत ?

व्युत्पत्ति—वल्गूयन्ती=वल्गूयतीति वल्गूयन्ती, ता 'वल्गु पूजामाधुर्ययो' इति कण्ड्वादियगन्ताद्धातोर्लट शत्रादेश । 'अकृत्सार्वधातुकयोर्दीर्घ' इति दीर्घत्वम् । मन्तूयति='मन्तु रोषे' इति कण्ड्वादियगन्ताद्धातोर्लट्, पूर्ववद्दीर्घत्वम् । स्थाणुसम =स्थाणुना सम ( तृ० त० ) अभिमनायेत=अनभिमना अभिमना भवेत्, 'भृशादिभ्यो भुव्यच्वेर्लोपश्च हल ' इति भृशादित्वात्क्यङ् सलोपश्च । सम्भावनाया लिङ् ।

भावार्थ—शोभमाना भवती दृष्ट्वा अस्मिल्लोके का स्त्री नेर्ष्यति ? अतिमूढोऽपि जितेन्द्रियोऽपि वा को नरस्ते कान्ति विलोक्य उत्कण्ठितो न भवेत् ?

भाषार्थ—शोभासम्पन्न तुम्हे देखकर इस ससारमे कौन स्त्री ईर्ष्या नही करती ह ? काष्ठतुल्य अत्यन्त मूढ वा शिवतुल्य जितेन्द्रिय भी कौन पुरुष तुम्हारी कान्तिको देखकर उत्सुक न होगा ? ॥ ७३ ॥

**दु खायते जन. सर्व स एवैक सुखायते ।**
**यस्योत्सुकायमाना त्व न प्रतीपायसेऽन्तिके ॥ ७४ ॥**

अन्वय—सर्व जन दु खायते, स एक एव सुखायते, यस्य अन्तिके त्वम् उत्सुकायमाना न प्रतीपायसे ।

प्रयोगप०—सर्वेण जनेन दु खाय्यते । तेन एकेनैव सुखाय्यते । त्वया उत्सुकायमानया न प्रतीपाय्यते ।

व्याख्या—सर्व =सकल , जन =पुरुष., दु.खायते=दु खमनुभवति । स.,

साक्षात्कृत्य, 'विभाषा कृञि' इत्यनुवर्तमाने 'साक्षात्प्रभृतीनि च' इति सूत्रेण 'च्व्यर्थ-इति वाच्यम्' इति च्व्यर्थे गतित्वात् समासे क्त्वो ल्यप् । श्रियम्मन्या=श्रियमात्मानं मन्यमाना, 'आत्ममाने खश्च' इति खश्, 'मन्'धातोर्दैवादिकत्वात् श्यन्, 'इच एकाचोऽम्प्रत्ययवच्च' इत्यम्भाव । तस्याम् प्रत्ययत्वात् 'न विभक्तौ तुस्माः' इति मलोपप्रतिषेध । क्विबन्तानां धातुत्वाऽनपायादियङादेश । श्रीमन्मन्य =श्रीमन्तमात्मानं मन्यमान , पूर्ववत्खश् ।

भावार्थ —अहं लक्ष्म्या अपि अधिकतरशोभां त्वां दृष्ट्वा श्रीमानिनीं श्रीं न श्रीरपि तु त्वमेव श्रीरसि, एवं श्रीपतिमानी हरि न श्रीपतिरपि तु त्वत्पतिरेव श्रीपतिरिति विचारयामि ।

भाषार्थ —मैं लक्ष्मीकी शोभाको हरण करनेवाली तुम्हे देखकर अपनेको लक्ष्मी माननेवाली लक्ष्मीको और अपनेको लक्ष्मीपति माननेवाले विष्णुको भी मिथ्याभूत लक्ष्मी और लक्ष्मीपति मानता हूँ ( वास्तवमे तुम ही लक्ष्मी हो और तुम्हारे पति ही लक्ष्मीवान् है ) ॥ ७१ ॥

**नोदकण्ठिष्यताऽत्यर्थं त्वामैक्षिष्यत चेत्स्मर ।**
**खेलायन्ननिशं नाऽपि सजूकृत्य रतिं वसेत् ॥ ७२ ॥**

अन्वय —स्मर त्वाम् ऐक्षिष्यत चेत् ( रतिं प्रति ) अत्यर्थं न उदकण्ठिष्यत, अनिशं खेलायन् रतिं सजूकृत्य अपि न वसेत् ।

प्रयोगप०—स्मरेण त्वम् ऐक्षिष्यथाश्चेत् न उदकण्ठिष्यत खेलायता न उष्येत ।

व्याख्या—स्मर=काम , त्वा=भवतीम्, ऐक्षिष्यत चेत्=ईक्षेत चेत् ( रतिं प्रति=स्वप्रियां प्रति ), अत्यर्थम्=अधिक, न उदकण्ठिष्यत=न उत्कण्ठेत । अनिशं=निरन्तर, खेलायन्=क्रीडन्, रतिं=स्वप्रियां, सजूकृत्य अपि=सहचरीकृत्य अपि, न वसेत्=न अवतिष्ठेत ।

व्युत्पत्ति —ऐक्षिष्यत='ईक्ष दर्शने' इति धातो 'लिङ्निमित्ते लृङ् क्रियाऽतिपत्तौ' इति क्रियाऽतिपत्तौ लृङ् । उदकण्ठिष्यत=उत्पूर्वात् 'कठि शोके' इति धातो पूर्ववल्लृङ् । खेलायन्=खेलायतीति, 'खेला विलासे' कण्ड्वादियगन्ताद्धातोर्लट शत्रादेश । सजूकृत्य ='ऊर्यादिच्विडाचश्च' इति गतित्वात्समासे क्त्वो ल्यप् । 'सजूं करोत्यात्मनेऽपि साह्ये सत्राकरोति च ।' इति भट्टमल्ल ।

भावार्थ —कामस्त्वामद्रक्ष्यच्चेत्तदा रतिं प्रति अधिकमुत्कण्ठितो नाऽभविष्यत्, निरन्तरं क्रीडन् रतिं सहचरीकृत्याऽपि नाऽवतिष्ठेत ( रतेरप्यधिकं त्वदीयं सौन्दर्यमिति भाव ) ।

प्रयोगप०—ओजायमानया जनकाऽऽत्मजया सादरया दशमूर्धा गद्गद वच ऊचे ।

व्याख्या—ओजायमाना=तेजस्विनी भवन्ती, जनकाऽऽत्मजा=सीता, तस्य=रावणस्य ( सम्प्रदानत्वेऽपि सम्बन्धसामान्ये षष्ठी ), अर्घ्यं=पूजाद्रव्य, प्रणीय=दत्त्वा ( प्रदायेति मल्लिनाथसम्मत पाठ , पूर्ववदर्थ ), सादरा=आदरयुक्ता (सती), दशमूर्धानं=रावण, गद्गदम्=असुव्यक्त ( लज्जया भयेन वेति भाव ), वच =वचनम् ( वक्ष्यमाणरूपमित्यर्थ ), उवाच=अकथयत् ।

व्युत्पत्ति —ओजायमाना=ओज इव आचरतीति ओजायते, ओज शब्दो वृत्तिविषये तद्वति' इति कथनात् 'कर्तु क्यङ् सलोपश्च' इति क्यङ् नित्य सलोपश्च 'ओजसोऽप्सरसो नित्यमितरेषा विभाषया' इति वचनात् । ओजायते इति ओजायमाना, क्यङन्तात् शानच् । अर्घ्यम्=अर्घार्थमिदमर्घ्यं, तत् 'मूल्ये पूजाविधावर्घ ' इत्यमर । 'पादार्घाभ्या च' इति यत् । सादरा=आदरेण सहिता (बहु०] । दशमूर्धानं=दश मूर्धानो यस्य स दशमूर्धा, तम्, ब्रूञ् धातोर्द्विकर्मकत्वात् 'अकथित च' इति कर्मत्वाद् द्वितीया ।

भावार्थ —भिक्षुरय मा माऽभिभूदिति तेजस्विनी भवन्ती सीता तस्मै पूजाद्रव्य दत्त्वा आदरयुक्ता सती रावण लज्जया भयेन वा असुव्यक्त वचनमकथयत् ।

भाषार्थ —सीता तेजस्विनी होती हुई रावणको अर्घ्यदानकर आदरपूर्वक भय वा लज्जाके कारणसे अस्पष्ट वचन कहने लगी ॥ ८६ ॥

**महाकुलीन ऐक्ष्वाके वंशे दाशरथिर्मम ।**
**पितु प्रियङ्करो भर्ता क्षेमकारस्तपस्विनाम् ॥ ७७ ॥**
**निहन्ता वैरकाराणा सता बहुकर सदा ।**
**पारश्वधिकरामस्य शक्तेरन्तकरो रणे ॥ ७८ ॥**
**अध्वरेष्विष्टिना पाता पूर्ती कर्मसु सर्वदा ।**
**पितुर्नियोगाद्राजत्व हित्वा योऽभ्यागमद्वनम् ॥ ७९ ॥**

सन्दानितकम्

अन्वय —महाकुलीन ऐक्ष्वाके वंशे दाशरथि मम भर्ता पितु प्रियङ्कर , तपस्विना क्षेमकार , वैरकाराणा निहन्ता, सदा सता बहुकर , पारश्वधिकरामस्य शक्ते रणे अन्तकर , अध्वरेषु इष्टिना पाता, कर्मसु सर्वदा पूर्ती य पितु नियोगात् राजत्व हित्वा वनम् अभ्यागमत् ।

प्रयोगप०—महाकुलीनेन दाशरथिना भर्त्रा प्रियङ्करेण, क्षेमकारेण, निहन्त्रा, बहुकरेण, अन्तकरेण, पात्रा, पूर्तिना येन वनम् अभ्यगामि ।

एक एव=एकमात्रक एव, सुखायते=सुखमनुभवति। यस्य=पुरुषस्य, अन्तिके=निकटे, त्वं=भवती, उत्सुकायमाना=उत्सुकीभवन्ती ( सती ), न प्रतीपायसे=अप्रतिकूला भवसि ( अनुकूला भवसीत्यर्थः )।

व्युत्पत्ति—दुःखायते='सुखादिभ्यः कर्तृवेदनायाम्' इति क्यङ्। सुखायते=पूर्वसूत्रेणैव क्यङ्। उत्सुकायमाना=भृशादित्वात्क्यङ्। प्रतीपायसे=पूर्ववत्क्यङ्।

भावार्थः—यस्य समीपे त्वमुत्कण्ठया अनुकूला भवसि, स एक एव सुखमनुभवति, अन्यः सर्वोऽपि जनो दुःखमनुभवति।

भाषार्थ—जिसके समीपमे तुम उत्कण्ठासे अनुकूल होती हो, वह एक ही सुखका अनुभव करता है और सब मनुष्य दुःखका अनुभव करते हैं॥ ७४ ॥

**कः पण्डितायमानस्त्वामादायामिषसन्निभाम्।**
**त्रस्यन्वैरायमाणेभ्यः शून्यमन्ववसद्वनम्॥ ७५॥**

अन्वयः—पण्डितायमानः कः आमिषसन्निभां त्वाम् आदाय वैरायमाणेभ्यः त्रस्यन् शून्यं वनम् अन्ववसत्।

प्रयोगप०—पण्डितायमानेन केन त्रस्यता शून्यं वनम् अन्वौष्यत।

व्याख्या—पण्डितायमानः=अपण्डितः पण्डितो भवन् ( वस्तुतस्तु दुर्बुद्धिरित्यर्थः ), कः=नरः। आमिषसन्निभां=मांसपिण्डसदृशीं ( तद्वत्कोमलाङ्गीमित्यर्थः ), त्वां=भवतीम्, आदाय=गृहीत्वा, वैरायमाणेभ्यः=वैरं कुर्वाणेभ्यः, त्रस्यन्=बिभ्यत्, शून्यं=निर्जनं, वनम्=अरण्यम्, अन्ववसत्=अध्यवसत् ( वने उषितवानित्यर्थः )।

व्युत्पत्ति—पण्डितायमानः=भृशादित्वात्क्यङ्। आमिषसन्निभाम्=आमिषेण सदृशी आमिषसन्निभा, ताम् (तृ० त०)। वैरायमाणेभ्यः=वैरं कुर्वन्तीति वैरायन्ते 'शब्दवैरकलहाऽभ्रकण्वमेघेभ्यः करणे' इति क्यङ्, वैरायन्ते इति वैरायमाणास्तेभ्यः ( शानच् ), 'भीत्रार्थानां भयहेतुः' इत्यपादानत्वात्पञ्चमी। वनम्='अन्ववसत्' इति योगे 'उपान्वध्याङ्वसः' इत्यधिकरणस्य कर्मत्वम्।

भावार्थः—कः पण्डितमानी कोमलाङ्गीं त्वामानीय वैरमाचरद्भ्यो बिभ्यन्निर्जने वने उषितवान्।

भाषार्थ—कौन पण्डितमानी, कोमलाङ्गी तुमको लेकर दुश्मनी करनेवालोंसे डरकर निर्जन वनमे रहता है॥ ७५ ॥

**ओजायमाना तस्याऽर्घ्यं प्रणीय जनकाऽऽत्मजा।**
**उवाच दशमूर्धानं साऽऽदरा गद्गदं वचः॥ ७६ ॥**

अन्वयः—ओजायमाना जनकाऽऽत्मजा तस्य अर्घ्यं प्रणीय सादरा दशमूर्धानं गद्गदं वचः उवाच।

मूर्च्छिमदाम्' इति निष्ठानत्वप्रतिषेध । पूर्तमनेनेति पूर्ववत्कर्तरीनि । राजत्व= राज्ञ। भावो राजत्व तत् ( त्वप्रत्यय ) । अभ्यागमत्=गमेर्लुङि ऌदित्त्वादङ् ।

भावार्थ — महाकुलप्रसून इक्ष्वाकुवशाऽवतसो मत्पति पितुर्दशरथस्य प्रिय-कारी तापसाना कल्याणकर्ता शत्रुनाशक सदा सज्जनाना बहूपकर्ता परशुराम-सामर्थ्यस्य नाशकर यज्ञेपु यज्वरक्षक खातश्राद्धादिकर्माऽनुष्ठाताऽस्ति, य पित्रा-देशेन राज्य त्यक्त्वा वनमभ्यागतो वतते ।

भाषार्थ —महाकुलमे उत्पन्न, इक्ष्वाकुवशके भूषण मेरे पति [ रामचन्द्र ], पिताके प्रिय कर्म करनेवाले, तपस्वियोका कल्याण करनेवाले शत्रुओके नाशक, सदा सज्जनोका बहुत उपकार करनेवाले, परशुरामके सामर्थ्यके नाशक, यज्ञोमे यज्ञाऽनुष्ठाताओके रक्षक और खात ( तालाब खुदवाना ) ओर श्राद्ध आदि कर्मोका अनुष्ठान करनेवाले है, जो कि पिता की आज्ञासे राज्य छोडकर अभी वनमे आये हुए ह ॥ ७७—७९ ॥

**पतत्रिक्रोष्टुजुष्टानि रक्षांसि भयदे वने ।**
**यस्य बाणनिकृत्तानि श्रेणीभूतानि शेरते ॥ ८० ॥**

अन्वय —भयदे वने यस्य बाणनिकृत्तानि पतत्रिक्रोष्टुजुष्टानि रक्षांसि श्रेणीभूतानि शेरते ।

प्रयोगप०—बाणनिकृत्तै पतत्रिक्रोष्टुजुष्टै रक्षोभि श्रेणीभूतै शय्यते ।

व्याख्या—भयदे= भयङ्करे, वने= कानने, यस्य= मद्वल्लभस्य, बाणनिकृत्ता-नि= शरभिन्नानि, पतत्रिक्रोष्टुजुष्टानि=पक्षिशृगालभक्षितानि, रक्षांसि= राक्षसा , श्रेणीभूतानि= राशीभूतानि (सन्ति), शेरते= स्वपन्ति (दीर्घं निद्रान्तीत्यर्थ ) ।

व्युत्पत्ति —भयदे= भय ददातीति भयद, तस्मिन् [क ] । बाणनिकृत्तानि= बाणै (करणै ) निकृत्तानि (तृ० त०), पतत्रिक्रोष्टुजुष्टानि= पतत्रिणश्च क्रोष्टारश्च पतत्रिक्रोष्टार [द्वन्द्व ], तैर्जुष्टानि [तृ० त०] । श्रेणीभूतानि= अश्रेणय श्रेणयो भूतानि इति विग्रहे 'ऊर्यादिच्विडा' इति गतित्वात् 'कुगतिप्रादय' इति समासे 'च्वौ च' इति दीर्घ । 'श्रेणिभूतानि' इति पाठे तु 'श्रेण्यादिपु च्व्यर्थवचन कर्तव्यम्' इत्यत. च्व्यर्थे समास । शेरते= 'शीडो रुट्' इति रुट् ।

भावार्थ —भयङ्करे वने यस्य बाणैश्छिन्ना. पक्षिशृगालै खण्डशो भक्षिता राक्षसा राशीभूता सन्त दीर्घनिद्रामनुभवन्ति ।

भाषार्थ —भयङ्कर वनमे जिनके बाणोसे काटे गये और गृध्र आदि पक्षी तथा स्यारोसे भक्षण किये गये राक्षस इकट्ठे होते हुए सोते है ॥ ८० ॥

**दीव्यतान शितान्बाणानस्यमान महागदा ।**
**निघ्नान शात्रवान् राम कथ त्वं नाऽवगच्छसि ॥ ८१ ॥**

व्याख्या—यन्दृष्ट, 'सुकृत प्रियकारी'त्यत्र 'कस्ते भर्ते'ति, तत्रास्माह्—महाकुलीन इत्यादिना । महाकुलीन =महाकुलोत्पन्न, ऐक्ष्वाके=इक्ष्वाकुसम्बन्धिनि ( इक्ष्वाकोरित्यर्थ ), वशे=कुले, दाशरथि =दशरथपुत्र, मम=सीताया, भर्ता=पति, पितु =जनकस्य ( दशरथस्येत्यर्थ ), प्रियङ्कर =प्रियकारी, तपस्विना=तापसाना, क्षेमकार =कल्याणकर्ता, वैरकाराणा=शत्रूणा, निहन्ता=नाशक, सदा=नित्य, सता=सज्जनाना, बहुकर =बहूपकर्ता, पारश्वधिकरामस्य=परशुरामस्य, शक्ते =सामर्थ्यस्य, रणे=सग्रामे, अन्तकर =नाशकर, अध्वरेषु=यज्ञेषु, इष्टिना=यज्वना, पाता=रक्षिता, कर्मसु=कार्येषु, सर्वदा=सदा, पूर्ती=पूरणकर ( खातश्राद्धादिकर्माऽनुष्ठातेत्यर्थ, 'पूतकर्मसु' इति मल्लिनाथसम्मत पाठस्तत्र खातश्राद्धादिकर्मसु इत्यर्थ ), य =मत्पति ( राम इत्यर्थ ), पितु =दशरथस्य, नियोगात्=आदेशात् ( न तु राज्यभारोद्वहनाऽयोग्यतया इत्यर्थ ), राजत्व=राज्य, हित्वा=त्यक्त्वा, वन=काननम्, अभ्यागमत्=अभ्यागतवान् ।

व्युत्पत्ति —महाकुलीन =महच्च तत् कुल महाकुल ( क० धा० ), तत्र भवो महाकुलीन 'महाकुलादञ् खञौ' इति विकल्पादनुवृत्त खप्रत्यय, 'माहाकुलीन' इति पाठे सोत्र खञ् प्रत्यय । ऐक्ष्वाके=इक्ष्वाकूणामयमैक्ष्वाकस्तस्मिन्, 'दाण्डिनायने'त्यादिना निपातनादुकारलोप । दाशरथि =दशरथस्याऽपत्य पुमान् 'अत इञ्' इति इञ् । प्रियङ्कर =प्रिय करोतीति, 'क्षेमप्रियमद्रेऽण्च' इति खच् । तपस्विना=तपोऽस्ति येषा ते तपस्विन तेषा, 'तप सहस्राभ्या विनीनी' इति विनि । क्षेमकार =क्षेम करोतीति, पूर्वसूत्रेणैव अण्प्रत्यय । वैरकाराणा=वैर कुर्वन्तीति वैरकारास्तेषा 'न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु' इति टप्रतिषेधे 'कर्मण्यण्' इत्यण्, 'निहन्ता' इति पदेन योगे कर्मणि षष्ठी । निहन्ता=निहन्तीति (तृच्) । बहुकर =बहून् ( उपकारान् ) करोतीति तच्छील, 'कृञो हेतु'त्यादिना ताच्छील्ये ट, शेष किङ्करवत् । पारश्वधिकरामस्य=परश्वध प्रहरणमस्य पारश्वधिक 'परश्वधाट्ठञ्च' इति ठञ् । 'द्वयो कुठार स्वधिति परशुश्च परश्वध ।' इत्यमर । पारश्वधिकश्चाऽसौ राम (भार्गव) पारश्वधिकरामस्तस्य (क० धा०), अन्तकर =अन्त करोतीति, 'दवाविभे'त्यादिना ट । अध्वरेषु='इष्टिनाम्' इति पदेन योगे 'क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्' इति सप्तमी । इष्टिनाम्=इष्टमेभिरिति इष्टिनस्तेषाम् 'इष्टादिभ्यश्च' इति कर्तरि इनिप्रत्यय । कर्मणि षष्ठी कृद्योगे । सर्वदा=सर्वस्मिन्काले सर्वदा, 'सर्वैकान्यकियत्तद काले दा' इति दाप्रत्यय । कर्मसु='पूर्ती'ति पदेन योगे 'क्तस्येन्विषयस्ये'त्यादिना पूर्ववत्कर्मणि सप्तमी । पूर्ती=पूरण पूर्तं 'पॄ पालनपूरणयो ' इति धातोर्भावे क्त, 'उदोष्ठ्यपूर्वस्य' इत्युत्व 'न ध्याख्या-

परिचर्यापरिसर्यामृगयाऽऽटयानामुपसंख्यानम्' इति शप्रत्ययान्तो निपात , 'आखेटो मृगया स्त्रियाम्' इत्यमर । एषितुम्='इषु गतौ' इति धातोस्तुमुन् नित्यमिडागमश्च । 'ये गत्यर्थास्ते ज्ञानाऽर्था' इति न्यायादत्र तस्य ज्ञानाऽर्थत्व, भावाऽर्थानुसरणे तु अन्वेषणाऽर्थत्वम् । अनुज =अनु (पश्चात्) जायत इति व्युत्पत्त्या अन्येष्वपि दृश्यते' इति ड । प्रेषित =पूर्ववदिडागम ।

भावाऽर्थ —हरिणवेधी रामो मद्रक्षाऽर्थं लक्ष्मणमादिश्य मृगयाऽर्थं गत, साम्प्रत तमन्वेष्टु रामाऽनुजो लक्ष्मणो मया वन प्रेषितोऽस्ति ।

भाषाऽर्थ.—मृगवेधी राम मुझे (रक्षाके लिए) भाई (लक्ष्मण) को सौंपकर शिकार खेलनेको गये हैं, उनको ढूढनेके लिए मैंने लक्ष्मणको बनमे भेजा ह ॥८२॥

**अथाऽऽयस्यन्कषायाऽक्ष स्यन्नस्वेदकणोल्बण ।**
**सन्दर्शिताऽऽन्तराऽऽकूतस्तामवादीद्दशानन ॥ ८३ ॥**

अन्वय —अथ आयस्यन् कषायाऽक्ष स्यन्नस्वेदकणोल्बण दशाऽऽनन सन्दर्शिताऽऽन्तराऽऽकूत ( सन् ) ताम् अवादीत् ।

प्रयोगप०—आयस्यता कषायाऽक्षेण स्यन्नस्वेदकणोल्बणेन दशाऽऽननेन सन्दर्शिताऽऽन्तराऽऽकूतेन ( सता ) सा अवादि ।

व्याख्या—अथ=सीतावाक्यश्रवणाऽनन्तरम्, आयस्यन्=प्रयस्यन् (रामयश श्रवणेन क्रोधादुच्चलन्निति भाव ), कषायाक्ष =रक्तनेत्र , स्यन्नस्वेदकणोल्बण = प्रस्रुतघर्मोदकबिन्दुव्याप्त , दशानन =रावण , सन्दर्शिताऽऽन्तराऽऽकूत =प्रदर्शिताऽन्तर्गताऽभिप्राय (सन्), तां=सीताम्, अवादीत्=अकथयत् ।

व्युत्पत्ति —आयस्यन्=आयस्यतीति, आङ्पूर्वकात् 'यसु प्रयत्ने' इति दैवादिकाद्धातोर्लट शत्रादेश । कषायाऽक्ष.=कषाये अक्षिणी यस्य स (बहु०), 'बहुव्रीहौ सक्थ्यक्ष्णो स्वाङ्गात्षच्' इति समासाऽन्त षच् । 'रागे क्वाथे कषायोऽस्त्री' इति यादव । स्यन्नस्वेदकणोल्वण =स्वेदाना कणा स्वेदकणा (ष० त०), स्यन्नाश्च ते स्वेदकणा स्यन्नस्वेदकणा (क० धा०) । 'स्यन्ना ' इत्यत्र 'स्यन्दू प्रस्रवणे' इति धाता क्त । स्यन्नस्वेदकणैरुल्बण (तृ० त०) । दशाऽऽनन =दश आननानि यस्य स (बहु०) । सन्दर्शिताऽऽन्तराऽऽकूत =अन्तरे भवमान्तरम् (अण्) । सन्दर्शितमान्तरमाकूत येन स (बहु०) । अवादीत्=वदधातोर्लुङि 'वदव्रजहलन्तस्याऽच ' इति सिचि वृद्धि ।

भावाऽर्थ —सीतावाक्यश्रवणाऽनन्तरं रामयश श्रवणेन जातात्क्रोधादुच्चलन् रक्तनेत्र प्रस्रुतस्वेदबिन्दू रावण प्रकटीकृताऽन्तर्गतनिजाऽभिप्राय सन् सीतामभ्रनी—

अन्वय —शितान् बाणान् दीव्यमानं महागदा अस्यमानं शात्रवान् निघ्नानं राम त्वं कथं न अवगच्छसि ?

प्रयोगप०—दीव्यमानोऽस्यमानो निघ्नानो रामस्त्वया कथं नाऽवगम्यते ।

व्याख्या—शितान्=तीक्ष्णान्, बाणान्=शरान् (तीक्ष्णैर्बाणैरित्यर्थः), दीव्यमानं=देवनशील (क्रीडाशील विजिगीषाशील वा), महागदा =महान्ति अस्त्रविशेषाणि, अस्यमानं=क्षिपमाण ( तद्योग्यवयस्कमित्यर्थः ) शात्रवान्=शत्रून्, निघ्नानं=निहननसमर्थं, रामं=मत्पतिं, त्वं=भवान्, कथं=केन प्रकारेण, न अवगच्छसि=न जानासि ।

व्युत्पत्ति —बाणान्='दीव्यमानम्' इति पदेन योगे 'दिवः कर्म च' इति करणस्य कर्मत्वम् । दीव्यमानं=दीव्यतीति तच्छीलो दीव्यमानस्तं, 'ताच्छील्यवयोवचनशक्तिषु चानश्' इति ताच्छील्ये चानश् । महागदा =महत्यश्च ता गदा महागदास्ता (क० धा०), अस्यमानम्=अस्यतीति तच्छील अस्यमानस्तं, पूर्वसूत्रेण वयोवचने चानश् । शात्रवान्=शत्रव एव शात्रवास्तान् 'प्रज्ञादिभ्यश्च' इति स्वार्थेऽण् । निघ्नानं=निहन्तीति निघ्नानस्तं, पूर्वसूत्रेण शक्त्यर्थे चानश् । 'गमहने'-त्यादिना उपधालोप ।

भावार्थ —तीक्ष्णशरैः क्रीडाशीलं महागदाप्रहारयोग्ये वयसि वर्तमानं शत्रुहननसमर्थं राम त्वं कथं न जानासि ?

भाषार्थ —तीक्ष्ण बाणोंसे क्रीडाशील, बड़ी गदाओं (अस्त्रविशेषों) से प्रहार करनेवाले और शत्रुओंको नाश करनेमें समर्थ, आप रामको कैसे नहीं जानते हैं ? ॥

**भ्रातरि न्यस्य यातो मां मृगाविन्मृगयामसौ ।**
**एषितुं प्रेषितो यातो मया तस्याऽनुजो वनम् ॥ ८२ ॥**

अन्वय —मृगावित् असौ मां भ्रातरि न्यस्य मृगयां यातः । (तम्) एषितुं तस्य अनुजः मया वनं प्रेषितः यातः ।

प्रयोगप०—मृगाविधा अमुना मृगया याता । अनुजेन प्रेषितेन यातम् ।

व्याख्या—मृगावित्=हरिणवेधी, असौ=रामः, मां=सीतां, भ्रातरि=अनुजे (लक्ष्मण इत्यर्थः), न्यस्य=समर्प्य (रक्षार्थमिति शेषः), मृगयाम्=आखेटं, यातः = गतः । (तं=रामम्) एषितुं=ज्ञातुं, तस्य=रामस्य, अनुजः=अवरजः (लक्ष्मणः), मया=सीतया, वनम्=अरण्यं (प्रति), प्रेषितः=प्रेरितः (सन्), यातः=गतः ।

व्युत्पत्ति —मृगावित्=मृगान्विध्यतीति (क्विप्), 'नहिवृती'त्यादिना पूर्वपदस्य दीर्घत्वम् । मृगया=मृग्यन्ते (अन्विष्यन्ते) मृगा अस्यामिति मृगया, तस्या,

व्याख्या—यदुक्त सीतया—'अध्वरेष्वविघ्निना पाते'ति तत्रोत्तरमाह—असौ=राम , वटुयज्ञेषु=कुब्रह्मयज्ञकेषु, पिण्डीशूरान्=भोजनशूरान् ( न तु रणशूरानिति भाव ), राक्षसान्=यातुधानान्, निरस्तवान्, यदि=हतवाश्चेत्, हे कूपमाण्डूकि=हे अन्धुभेकि ! ( कूपमण्डूकतुल्यबुद्धे इति भाव ), तव=भवत्या , एतावति=एतावन्मात्रे ( भोजनशूराणा राक्षसाना वधात्मके कार्ये इति भाव ), क स्मय =को गर्व (यथा कूपमाण्डूकी कूपमेव महान्त जलाशय मन्यते न समुद्रादिकमज्ञाना-त्तथा त्वमपि राममेव शूरवर जानासि नाऽस्मानिति भाव )।

व्युत्पत्ति —वटुयज्ञेषु—वटूना यज्ञा वटुयज्ञास्तेषु ( ष० त० ), पिण्डीशूरान्—पिण्ड्यामेव शूरा पिण्डीशूरास्तान्, 'पात्रेसमितादयश्च' इति समास । 'गेहेनर्दी गृहेशूर पिण्डीशूरश्च कथ्यते ।' इति हलायुध । कूपमाण्डूकि—मण्डूकस्याऽपत्य स्त्री माण्डूकी 'ढक्च मण्डूकात्' इति चकारादण् वापत्ये । कूपे माण्डूकी ( इव ) कूप-माण्डूकी, तत्सम्बुद्धौ । पूर्वसूत्रेणैव क्षेपे समास ।

भावाऽर्थ —राम कुब्रह्मयज्ञकेषु अन्नशूरान् राक्षसान् जघान चेत्, हे कूप-माण्डूकि ! एतादृशे तुच्छकार्ये कोऽय तवाऽहङ्कार ?

भाषाऽर्थ —रामने कुत्सित ब्राह्मणोके यज्ञोमे, खानेमे ही शूर (न कि लडनेमे) राक्षसोको मारा है, तो हे कूपमाण्डूकि ! इतनेमे ही तुम्हे क्यो गर्व होता है ? ॥

**मत्पराक्रमसङ्क्षिप्तराज्यभोगपरिच्छद ।**
**ममैव किं वक्तुं दरिद्राति यथा हरि ॥ ८६ ॥**

अन्वय —मत्पराक्रमसङ्क्षिप्तराज्यभोगपरिच्छद हरि यथा दरिद्राति, (तत्) मम एव वक्तु युक्त किम् ?

प्रयोगप०—मत्पराक्रमसङ्क्षिप्तराज्यभोगपरिच्छदेन हरिणा यथा दरिद्रयते, ( तेन ) युक्तेन ( भूयते ) किम् ?

व्याख्या—मत्पराक्रमसङ्क्षिप्तराज्यभोगपरिच्छद =मद्विक्रमाऽपहृतराजकर्म-भोगसाधन ( मदपहृतसर्वस्व इत्यर्थ ), हरि =इन्द्र , यथा=येन प्रकारेण, दरिद्राति=दरिद्रो भवति, ( तत् = वृत्तम् ) मम एव=रावणस्य एव, वक्तु =कथयितु , युक्त किम्=उचित किम् ? ( नोचितमित्यर्थ । आत्मश्लाघाया सर्वत्र निन्दितत्वादिति भाव. ) ।

व्युत्पत्ति —मत्पराक्रमसङ्क्षिप्तराज्यभोगपरिच्छद =मम पराक्रमो मत्परा-क्रम (ष०त०)।भोगस्य परिच्छदा भोगपरिच्छदा (ष०त०)।मत्पराक्रमेण सङ्क्षिप्ता मत्पराक्रमसङ्क्षिप्ता (तृ० त०) । राज्य च भोगपरिच्छदाश्च राज्यभोगपरिच्छदा.

भाषार्थ—सीताका वाक्य सुननेके अनन्तर रामका यश सुननेसे उत्पन्न क्रोधसे उज्ज्वलित होता हुआ, क्रोधसे लाल नेत्रवाला और स्वेद बिन्दुओंसे व्याप्त रावण अन्तर्गत अभिप्रायको प्रकट करता हुआ सीताजीसे कहने लगा ॥८३॥

**कृते कानिष्ठिनेयस्य ज्यैष्ठिनेयं विवासितम् ।**
**को नग्नमुषितप्रख्यं बहु मन्येत राघवम् ? ॥ ८४ ॥**

अन्वय—कानिष्ठिनेयस्य कृते विवासितं नग्नमुषितप्रख्यं ज्यैष्ठिनेयं राघवं को बहु मन्येत ?

प्रयोगप०—विवासितो नग्नमुषितप्रख्यो ज्यैष्ठिनेयो राघवः केन बहु मन्येत ।

व्याख्या—कानिष्ठिनेयस्य=कनिष्ठापुत्रस्य (भरतस्येत्यर्थः), कृते=कार्यार्थं, विवासितं=प्रवासितम्, ( अत एव ) नग्नमुषितप्रख्यं=हृतधनदिगम्बरसदृशं, ज्यैष्ठिनेयं=ज्येष्ठापुत्रं ( ज्येष्ठमिति भावः ), राघवं=रामं, कः=नरः, बहु=अधिकं, मन्येत=मन्यताम् ? ( पूजयेदिति भावः ) ।

व्युत्पत्तिः—कानिष्ठिनेयस्य=कनिष्ठाया अपत्यं पुमान् कानिष्ठिनेयस्तस्य, 'कल्याण्यादीनामिनङ्' इतीनङादेशो ढक्च । कृते=करणं कृत्, तस्यै, सम्पदादित्वात्क्विप्, अव्ययमिति केचित् । नग्नमुषितप्रख्यं=प्राक् मुषितः पश्चात् नग्नः नग्नमुषितः 'पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाऽधिकरणेन' इति समासे राजदन्तादित्वात् 'राजदन्तादिषु परम्' इति पूर्वकालस्य परनिपातः । नग्नमुषितेन प्रख्या ( सादृश्यम् ) यस्य स नग्नमुषितप्रख्यस्तम् ( व्यधि० बहु० ) । ज्यैष्ठिनेयं=ज्येष्ठाया अपत्यं पुमान् ज्यैष्ठिनेयस्तं, कल्याण्यादित्वादिनङादेशो ढक्च । बहु=क्रियाविशेषणम् ।

भावार्थ—कनिष्ठराज्ञ्याः कैकेय्याः पुत्रस्य भरतस्य कृते प्रवासितं हृतधनदिगम्बरतुल्यं ज्येष्ठराज्ञ्याः पुत्रं रामं कः पूजयेत् ? ।

भाषार्थ—छोटी रानीके लडके भरतके लिए निर्वासित, अत एव धन छीने जानेसे दिगम्बर (नग्न) पुरुषके तुल्य, बडी रानी कौशल्याके लड़के रामचन्द्रका कौन सत्कार करेगा ? ॥ ८४ ॥

**राक्षसान्वटुयज्ञेषु पिण्डीशूरान्निरस्तवान् ।**
**यद्यसौ कूपमाण्डूकि ! तवैतावति कः स्मयः ॥ ८५ ॥**

अन्वय—असौ वटुयज्ञेषु पिण्डीशूरान् राक्षसान् निरस्तवान् यदि, हे कूपमाण्डूकि ! तव एतावति कः स्मयः ?

प्रयोगप०—अमुना पिण्डीशूरा राक्षसा निरस्ता यदि, तव केन स्मयेन ( भूयते ) ?

व्याख्या—यदुक्तं सीतया—'अध्वरेष्विष्टिना पाते'ति तत्रोत्तरमाह—असौ=राम, बटुयज्ञेषु=कुब्रह्मयज्ञकेषु, पिण्डीशूरान्=भोजनशूरान् ( न तु रणशूरानिति भाव ), राक्षसान्=यातुधानान्, निरस्तवान्, यदि=हतवाश्चेत्, हे कूपमाण्डूकि=हे अन्धुभेकि ! ( कूपमण्डूकतुल्यबुद्धे इति भाव ), तव=भवत्या, एतावति=एतावन्मात्रे ( भोजनशूराणा राक्षसाना वधात्मके कार्ये इति भाव ), क स्मय = को गर्व (यथा कूपमाण्डूकी कूपमेव महान्त जलाशय मन्यते न समुद्रादिकमज्ञानात्तथा त्वमपि राममेव शूरवर जानासि नाऽस्मानिति भाव )।

व्युत्पत्ति —बटुयज्ञेषु—बटूना यज्ञा बटुयज्ञास्तेषु ( ष० त० ), पिण्डीशूरान्—पिण्ड्यामेव शूरा पिण्डीशूरास्तान्, 'पात्रेसमितादयश्च' इति समास । 'गेहेनर्दी गृहेशूर पिण्डीशूरश्च कथ्यते ।' इति हलायुध । कूपमाण्डूकि—मण्डूकस्याऽपत्य स्त्री माण्डूकी 'टक्च मण्डूकात्' इति चकारादण् वापत्ये । कूपे माण्डूकी ( इव ) कूपमाण्डूकी, तत्सम्बुद्धौ । पूर्वसूत्रेणैव क्षेपे समास ।

भावार्थ —राम कुब्रह्मयज्ञकेषु अन्नशूरान् राक्षसान् जघान चेत्, हे कूपमाण्डूकि ! एतादृशे तुच्छकार्ये कोऽय तवाऽहङ्कार ?

भाषार्थ —रामने कुत्सित ब्राह्मणोके यज्ञोमे, खानेमे ही शूर (न कि लडनेमे) राक्षसोको मारा है, तो हे कूपमाण्डूकि ! इतनेमे ही तुम्हे क्यो गर्व होता है ? ॥

**मत्पराक्रमसङ्क्षिप्तराज्यभोगपरिच्छद ।**
**किं वक्तुं दरिद्राति यथा हरि ॥ ८६ ॥**

अन्वय —मत्पराक्रमसङ्क्षिप्तराज्यभोगपरिच्छद हरि यथा दरिद्राति, (तत्) मम एव वक्तु युक्त किम् ?

प्रयोगप०—मत्पराक्रमसङ्क्षिप्तराज्यभोगपरिच्छदेन हरिणा यथा दरिद्रयते, ( तेन ) युक्तेन ( भूयते ) किम् ?

व्याख्या—मत्पराक्रमसङ्क्षिप्तराज्यभोगपरिच्छद =मद्विक्रमाऽपहृतराजकभोगसाधन ( मदपहृतसर्वस्व इत्यर्थ ), हरि =इन्द्र , यथा=येन प्रकारेण, दरिद्राति=दरिद्रो भवति, ( तत्=वृत्तम् ) मम एव=रावणस्य एव, वक्तु =कथयितु, युक्त किम्=उचित किम् ? ( नोचितमित्यर्थ । आत्मश्लाघाया सर्वत्र निन्दितत्वादिति भाव )।

व्युत्पत्ति —मत्पराक्रमसङ्क्षिप्तराज्यभोगपरिच्छद =मम पराक्रमो मत्पराक्रम (ष०त०)।भोगस्य परिच्छदा भोगपरिच्छदा (ष०त०)।मत्पराक्रमेण सङ्क्षिप्ता मत्पराक्रमसङ्क्षिप्ता (तृ० त०) । राज्य च भोगपरिच्छदाश्च राज्यभोगपरिच्छदा

(द्वन्द्व)। मत्पराक्रममण्डिताभ्यां राज्यभोगपरिच्छदा यस्य स (बहु०)। दरिद्राति= 'दरिद्रा दुर्गतौ' इति धातोर्लटि आदादिकत्वाच्छपो लुक्।

भावार्थः—मयाऽपहृतसर्वस्व इन्द्रो यथा दरिद्रोऽस्ति, तस्य ममाऽग्रदानस्य मयैव प्रतिपादनमनुचितमित्यतो विरमामि।

भाषार्थः—मेरे पराक्रमसे राज्य और भोगसामग्रीका अपहरण होनेसे इन्द्र जिस तरह दरिद्र हो गये हैं, उस बातको मुझे स्वयम् ही (आत्मश्लाघाके डरसे) नहीं कहना चाहिए॥ ८६॥

निर्लङ्को विमदः स्वामी धनानां हृतपुष्पकः।
अध्यास्तेऽन्तर्गिरं यस्मात्कस्तन्नाऽवैति कारणम्?॥ ८७॥

अन्वयः—यस्मात् धनानां स्वामी निर्लङ्कः हृतपुष्पकः विमदः (सन्) अन्तर्गिरम् अध्यास्ते, तत् कारणं कः न अवैति?।

प्रयोगः०— स्वामिना निर्लङ्केन हृतपुष्पकेण विमदेन (सता) अन्तर्गिरमध्यास्यते, तत्कारणं केन न अवेयते।

व्याख्या—यस्मात्=मत्पराक्रमलक्षणात्कारणात्, धनानां स्वामी=द्रव्याणां पतिः (कुबेर इत्यर्थः), निर्लङ्कः=लङ्कानिर्गतः, हृतपुष्पकः=अपहृतविमानः, (अत एव) विमदः=अपगतदर्पः (सन्), अन्तर्गिरं=कैलासम्, अध्यास्ते= अधितिष्ठति, तत्=मत्पराक्रमलक्षणं, कारणं=हेतुं, कः=पुरुषः, न अवैति=न जानाति, (मत्पराक्रमादेव कुबेरो लङ्कां त्यक्त्वा अपहृतपुष्पको भूत्वा कैलासे तिष्ठतीति वार्तां सर्वेऽपि जानन्तीति भावः)।

व्युत्पत्तिः—निर्लङ्कः=निष्क्रान्तो लङ्काया इति विग्रहे 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति समासः, 'द्विगुप्राप्तापन्नाऽलम्पूर्वगतिसमासेषु प्रतिषेधो वाच्यः' इति परलिङ्गताप्रतिषेधाद्विशेष्यलिङ्गता, 'एकविभक्ति चाऽपूर्वनिपाते' इति लङ्काशब्द-स्योपसर्जनत्वात् 'गोस्त्रियोरुपसर्जनस्य' इत्युपसर्जनह्रस्वत्वम्। हृतपुष्पकः=हृतं पुष्पकं यस्मात् सः (बहु०)। विमदः=विगतो मदो यस्य सः (बहु०)। अन्त-र्गिरम्=गिराविति अन्तर्गिरं तत्, विभक्त्यर्थेऽव्ययीभावः, 'गिरेश्च सेनकस्य' इति विकल्पादव्ययीभावसमासाऽन्तष्टच्। 'अधिशीङ्स्थासां कर्म' इति कर्मत्वाद् द्वितीया, 'अव्ययीभावश्च' इति अव्ययत्वम्।

भावार्थः—मत्पराक्रमात्कुबेरो लङ्कां त्यक्त्वा अपहृतविमानो गर्वशून्यो भूत्वा कैलासमधितिष्ठति, इमां वार्तां सर्वेऽपि जानन्त्येव।

भाषार्थः—जिस कारणसे कुबेर लङ्कासे निकल कर पुष्पक विमानके छीने जानेसे गर्वरहित होकर कैलास पर्वतमें रहते हैं, उस (मेरे पराक्रमरूप) कारणको कौन नहीं जानता?॥ ८७॥

**भिन्ननौक इव ध्यायन्मत्तो बिभ्यद्यम स्वयम् ।**
**कृष्णिमान दधानेन मुखेनाऽऽस्ते निरुद्यति ॥ ८८ ॥**

अन्वय —यम स्वय मत्त बिभ्यत् भिन्ननौक इव ध्यायन् कृष्णिमान दधानेन मुखेन ( उपलक्षित ) निरुद्यति आस्ते ।

प्रयोगप०—यमेन बिभ्यता भिन्ननौकेन इव ध्यायता निरुद्यतिना आस्यते ।

व्याख्या—यम =यमराज , स्वय=साक्षात्, मत्त =मत्सकाशात्, बिभ्यत्=त्रस्यन् , भिन्ननौक इव=विपन्नपोत ( वणिक् ) इव, ध्यायन्=चिन्तयन् , कृष्णिमान=मलिनता, दधानेन=धारयता, मुखेन=आननेन ( उपलक्षित सन् ), निरुद्यति =उद्योगरहित , आस्ते=तिष्ठति ( न तु किञ्चिदपि करोतीत्यर्थ , सामर्थ्याऽभावादिति भाव ) ।

व्युत्पत्ति —बिभ्यत्=बिभेतीति, 'ञिभी भये' इति धातोर्लट शत्रादेश । भिन्ननौक =भिन्ना नौर्यस्य स ( बहु० ), 'उर-प्रभृतिभ्य कप्' इति समासाऽन्त कप् । 'स्त्रिया नौस्तरणिस्तरि ।' इत्यमर । कृष्णिमान=कृष्णस्य भाव कृष्णिमा, त, 'वर्णदृढादिभ्य ष्यञ्च' इति चादिमनिच् । मुखेन='इत्थम्भूतलक्षणे' इति तृतीया । निरुद्यति =उद्यमनमुद्यति , उत्पूर्वाद्यमे 'स्त्रिया क्तिन्' इति क्तिन्, अनुनासिकलोप ।

भावार्थ —यमराज स्वय मद्बिभ्यत् विपन्नपोतो वणिक् द्रव्यनाशाद्यथा चिन्तयति, तथैव सामर्थ्यनाशात् चिन्तयन् विवर्णमुख सन् उद्योगशून्यत्वेन समय यापयति ।

भाषार्थ —यमराज स्वय मुझसे डरकर जहाज डूबनेपर जिस तरह व्यापारी चिन्ता करता हे, उसी तरह चिन्ता करते हुए विवर्ण मुख लेकर उद्योगशून्य होकर रहते है ॥ ८८ ॥

**समुद्रोपत्यका हैमी पर्वताऽधित्यका पुरी ।**
**रत्नपारायण नाम्ना लङ्केति मम मैथिलि ! ॥ ८९ ॥**

अन्वय —हे मैथिलि ! समुद्रोपत्यका पर्वताऽधित्यका हैमी रत्नपारायण नाम्ना लङ्का इति मम पुरी ।

प्रयोगप०—समुद्रोपत्यकया पर्वताऽधित्यकया हैम्ना रत्नपारायणेन मम पुर्या ( भूयते ) ।

व्याख्या—हे मैथिलि=हे सीते !, समुद्रोपत्यका=सागराऽऽसन्ना ( समुद्रपरिखेत्यर्थ ), पर्वताऽधित्यका=त्रिकूटपर्वतोपरिस्थिता, हैमी=सुवर्णमयी, रत्नपारायण=मणिसमाप्तिस्थान (सर्वरत्नाकर इत्यर्थ ), नाम्ना=अभिधानेन, लङ्का इति=लङ्का इति ख्याता, मम=रावणस्य, पुरी=नगरी ( अस्तीति शेष ) ।

(द्वन्द्व)। मत्पराक्रममण्डि ्छ्ना राज्यभोगपरिच्छदा यस्य स (बहु०)। दरिद्राति= 'दरिद्रा दुर्गतौ' इति धातोर्लटि आदादिकत्वाच्छपो लुक्।

भावार्थ—मयाऽपहृतसर्वस्व इन्द्रो यथा दरिद्रोऽस्ति, तस्य ममाऽवदानस्य मयैव प्रतिपादनमनुचितमित्यतो विरमामि।

भाषार्थ—मेरे पराक्रमसे राज्य और भोगसामग्रीका अपहरण होनेसे इन्द्र जिस तरह दरिद्र हो गये है, उस बातको मुझे स्वयम् ही (आत्मश्लाघाके डरसे) नहीं कहना चाहिए ॥ ८६ ॥

**निर्लङ्को विमद स्वामी धनाना हृतपुष्पक।**
**अध्यास्तेऽन्तर्गिर यस्मात्कस्तन्नाऽवैति कारणम्? ॥ ८७ ॥**

अन्वय—यस्मात् धनाना स्वामी निर्लङ्क हृतपुष्पक विमद (सन्) अन्तर्गिरम् अध्यास्ते, तत् कारण को न अवैति?।

प्रयोगप०— स्वामिना निर्लङ्केन हृतपुष्पकेण विमदेन (सता) अन्तर्गिरमध्यास्यते, तत्कारण केन न अवेयते।

व्याख्या—यस्मात्=मत्पराक्रमलक्षणात्कारणात्, धनाना स्वामी=द्रव्याणा पति (कुबेर इत्यर्थ), निर्लङ्क=लङ्कानिर्गत, हृतपुष्पक=अपहृतविमान, (अत एव) विमद=अपगतदर्प (सन्), अन्तर्गिर=कैलासम्, अध्यास्ते= अधितिष्ठति, तत्=मत्पराक्रमलक्षण, कारण=हेतु, क=पुरुष, न अवैति=न जानाति, (मत्पराक्रमादेव कुबेरो लङ्का त्यक्त्वा अपहृतपुष्पको भूत्वा कैलासे तिष्ठतीति वार्ता सर्वेऽपि जानन्तीति भाव।

व्युत्पत्ति—निर्लङ्क=निष्क्रान्तो लङ्काया इति विग्रहे 'निरादय क्रान्ताद्यर्थे पञ्चम्या' इति समास, 'द्विगुप्राप्तापन्नाऽलम्पूर्वगतिसमासेषु प्रतिषेधो वाच्य' इति परलिङ्गताप्रतिषेधाद्विशेष्यलिङ्गता, 'एकविभक्ति चाऽपूर्वनिपाते' इति लङ्काशब्दस्योपसर्जनत्वात् 'गोस्त्रियोरुपसर्जनस्य' इत्युपसर्जनह्रस्वत्वम्। हृतपुष्पक=हृत पुष्पक यस्मात् स (बहु०)। विमद=विगतो मदो यस्य स (बहु०)। अन्तर्गिरम्=गिराविति अन्तर्गिर तत्, विभक्त्यर्थेऽव्ययीभाव, 'गिरेश्च सेनकस्य' इति विकल्पादव्ययीभावसमासाऽन्तष्टच्। 'अधिशीङ्स्थासा कर्म' इति कर्मत्वाद् द्वितीया, 'अव्ययीभावश्च' इति अव्ययत्वम्।

भावार्थ—मत्पराक्रमात्कुबेरो लङ्का त्यक्त्वा अपहृतविमानो गर्वशून्यो भूत्वा कैलासमधितिष्ठति, इमा वार्ता सर्वेऽपि जानन्त्येव।

भाषार्थ—जिस कारणसे कुबेर लङ्कासे निकल कर पुष्पक विमानके छीने जानेसे गर्वरहित होकर कैलास पर्वतमे रहते है, उस (मेरे पराक्रमरूप) कारणको कौन नहीं जानता? ॥ ८७ ॥

भाषार्थ —हे सीते ! उस लङ्का पुरीमें सुगन्धि जलसे सिक्त और सम्मार्जित भवनमें तुम सुगन्धित द्रव्यों का उपयोगकर प्रचुर सुगन्धि मालाओंको पहनती हुई मेरे साथ रहो ॥ ९० ॥

**सगच्छ पौंस्नि ! स्त्रैणं मा युवान तरुणी शुभे ।**
**राघव प्रोष्यपापीयाञ्जहीहि तमकिञ्चनम् ॥ ९१ ॥**

अन्वय —हे शुभे ! हे पौस्नि ! तरुणी स्त्रैण युवान मा (त्व) सगच्छ, राघवः प्रोष्यपापीयान् ( अस्ति ), अकिञ्चन त जहीहि ।

प्रयोगप०—तरुण्या त्वया स्त्रैणो युवाऽह सगम्यै, राघवेण प्रोष्यपापीयसा ( भूयते ) अकिञ्चन स हीयताम् ।

व्याख्या—हे शुभे=हे शोभने ! हे पौस्नि=पुहिते पुयोग्ये वा, तरुणी=युवति, त्व=सीता, स्त्रैण=स्त्रीहित स्त्रीयोग्य वा, युवान=तरुण, मा=रावण, सगच्छ= प्राप्नुहि । राघव =राम , प्रोष्यपापीयान्=राज्यात्प्रभ्रश्य ( मृगयाव्याजेन त्वत्परित्यागेन देशान्तर गत्वा वा ) पापवत्तर ( अस्तीति शेष ), अकिञ्चन=निर्धन, त=राम, जहीहि=त्यज ।

व्युत्पत्ति —शुभे=शोभते इति शुभा, तत्सम्बुद्धा, 'शुभ दीप्तौ' इति धातो 'इगुपधज्ञाप्रीकिर. क 'इति क । पौस्नि=पुमासमर्हति पुसे हिता वा पौस्नी, तत्सम्बुद्धौ, 'स्त्रीपुसाभ्या नञ्स्नञौ भवनात्' इति स्नञ् 'नञ्स्नञीकक्ख्युँस्तरुणतलुनानामुपसख्यानम्' इति ङीप् । तरुणी=पूर्ववार्तिकेनैव ङीप् । स्त्रैण=स्त्रीरर्हति स्त्रीभ्यो हितो वा स्त्रैणस्त, 'स्त्रीपुसाभ्यामि'त्यादिना नञ् । सगच्छ=प्रार्थनायाँ लोट्, 'इषुगमियमा छ' इति छत्वम् । सकर्मकत्वात् 'समो गम्यृच्छिभ्याम्' इति नाऽऽत्मनेपदम् । प्रोष्यपापीयान्=अतिशयेन पाप पापीयान्, 'अथ त्रिपु द्रव्ये पाप पुण्य सुखादि च ।' इति विशेष्यलिङ्गत्वात्पापशब्दादीयसुन् । प्रोष्य पापीयान् 'मयूरव्यसकादयश्च' इति समास. । अकिञ्चन=नाऽस्ति किञ्चन यस्य स अकिञ्चनस्त, पूर्वसूत्रेणैव समास । जहीहि='ओहाक् त्यागे' इति धातो प्राप्तकाले लोट्, सेर्हित्वे 'आ च हौ' इति चकाराद्वैकल्पिक ईकार ।

भावार्थ —हे सीते ! युवतिस्त्व युवान मा प्राप्नुहि, रामो राज्यात्प्रभ्रश्य मृगयाऽपदेशेन त्वत्परित्यागेन देशान्तर गत्वा वा पापीयानस्ति, अतो निधन त त्यज ।

भाषार्थ —हे शुभे ! हे पुरुषयोग्ये ! तरुणी तुम, स्त्रियों के योग्य और तरुण मेरे पास रहो । रामचन्द्र राज्य से भ्रष्ट होकर भाग्यहीन हैं, अत एव निर्धन उनको छोड दो ॥ ९१ ॥

**अश्नीतपिबतीयन्ती प्रसिता स्मरकर्मणि ।**
**वशीकृत्य दशग्रीव मोदस्व वरमन्दिरे ॥ ९२ ॥**

व्युत्पत्तिः—समुद्रोपत्यका=पर्वतस्य आसन्ना भूरुपत्यका, 'उपाधिभ्यां त्यकन्नासन्नाऽऽरूढयोः' इति त्यकन्प्रत्ययः 'त्यकनश्च निषेधः' इति निषेधात् 'प्रत्ययस्थात्कात्पूर्वस्याऽत इदाप्यसुपः' इतीत्वाऽभावः। 'उपत्यकाऽद्रेरासन्ना भूमिरूर्ध्वमधित्यका।' इत्यमरः। समुद्रस्योपत्यका (ष०त०)। अत्रोपत्यकाशब्दो लक्षणया आसन्नवाचकः। पर्वताऽधित्यका=पर्वतस्योर्ध्वा भूरधित्यका, उपत्यकाशब्दवत्प्रक्रिया ज्ञेया। अत्र पौनरुक्त्यपरिहाराय अधित्यकाशब्दस्य उपरिस्थितेति लक्ष्यार्थः। पर्वतस्याऽधित्यका (ष०त०), हैमी=हेम्नो विकारो हैमी, 'प्राणिरजतादिभ्योऽञ्' इत्यञ्, 'नस्तद्धिते' इति टिलोपश्च। रत्नपारायण=रत्नानां पारं (समाप्तिः) रत्नपारं (ष० त०), तस्य अयनम् (स्थानम्) रत्नपारायणम् (ष० त०) नाम्ना-'प्रकृत्यादिभ्य उपसंख्यानम्' इति प्रकृत्यादेराकृतिगणत्वात्तृतीया।

भावार्थः—हे सीते! समुद्रपरिखा त्रिकूटपर्वतोपरिस्थिता सुवर्णमयी सर्वरत्नानामाकरभूता लङ्कानामधेया मम पुरी अस्ति।

भाषार्थ—हे सीते! समुद्र ही जिसकी परिखा ( खाई ) है, त्रिकूट पर्वतके ऊपर स्थित, सुवर्णमयी और रत्नोंका आकार ( उत्पत्तिस्थान ) भूत लङ्का नामकी मेरी पुरी है ॥ ८९ ॥

**आवासे सिक्तसमृष्टे गन्धैस्त्वं लिप्तवासिता।**
**अर्पितोरुसुगन्धिस्रक् तस्यां वस मया सह ॥ ९० ॥**

अन्वयः—( हे सीते! ) तस्यां सिक्तसमृष्टे आवासे त्वं गन्धैः लिप्तवासिता अर्पितोरुसुगन्धिस्रक् ( सती ) मया सह वस।

प्रयोगप०—त्वया लिप्तवासितया अर्पितोरुसुगन्धिस्रजा ( सत्या ) उष्यताम्।

व्याख्या—( हे सीते! ) तस्यां=लङ्कायां पुर्यां, सिक्तसमृष्टे=गन्धोदकसिक्ते शोधनीशोधिते च, आवासे=गृहे, त्वं=सीता, गन्धैः=यक्षकर्दमादिभिः (सुरभिद्रव्यैः), लिप्तवासिता=अनुलिप्ताधिवासिता, अर्पितोरुसुगन्धिस्रक्=न्यस्तप्रभूतसुरभिमाला ( सती ), मया=रावणेन, सह=साकं, वस=तिष्ठ।

व्युत्पत्तिः—सिक्तसमृष्टे=पूर्वं सिक्तः पश्चात्समृष्टः सिक्तसमृष्टस्तस्मिन्, स्नाताऽनुलिप्तवत् 'पूर्वकालैके'त्यादिना समासः। आवासे=आवसत्यस्मिन्निति आवासः, तस्मिन् ( अधिकरणे घञ् )। लिप्तवासिता=पूर्वं लिप्ता पश्चाद्वासितेति विग्रहे पूर्ववत्समासः। अर्पितोरुसुगन्धिस्रक्=शोभना गन्धा यासां ताः सुगन्धयः ( बहु० ) 'गन्धस्येदुत्पूतिसुसुरभिभ्यः' इति समासान्त इकारः। अर्पिता उरवः सुगन्धयः स्रजो यस्याः सा ( बहु० )। वस=प्रार्थनायां लोट्।

भावार्थः—हे सीते! तस्यां लङ्कायां गन्धोदकसिक्ते शोधनीशोधिते च भवने त्वमुपयुक्तसुरभिद्रव्या धृतसुगन्धिमाल्या च सती मया सह तिष्ठ।

भ्यो ङीप्' इति ङीप् । मा स्म भू= 'स्मोत्तरे लङ् च' इति चकारात् लुङ् । उत्साहिनी=उत्सहत इति विग्रहे पूर्ववत् णिनि 'उद्भामिनी=उद्भासत इति विग्रहे पूर्वसूत्रेणैव णिनि । वक्ष सर्मर्दिनी=समदत इति सर्मर्दिनी सपूर्वकात् 'मृद मर्दने' इति धातो णिन्यादिप्रक्रिया पूर्ववत् । वक्षस सर्मर्दिनी (ष०त०) ।

भावार्थ —हे भीरु ! आग्रहयुक्ता मा भू , गन्तुमुत्साह कुरु, शोभमाना च भूत्वा मामालिङ्ग ।

भाषार्थ— हे भीरु ! आग्रहशीला मत हो, लङ्का मे जानेके लिए उत्साह करो, शोभित होकर मुझे आलिङ्गन करो ॥९३॥

**तां प्रातिकूलिकीं मत्वा जिहीर्षुर्भीमविग्रह ।**
**बाहूपपीडमाश्लिष्य जगाहे द्या निशाचर ॥ ९४ ॥**

अन्वय —निशाचर ता प्रातिकूलिकी मत्वा जिहीर्षु भीमविग्रह (सन्) बाहूपपीडम् आश्लिष्य द्या जगाहे ।

प्रयोगप०—निशाचरेण जिहीर्षुणा भीमविग्रहेण (सता) द्यौर्जगाहे ।

व्याख्या—निशाचर =राक्षस (रावण ), ता=सीता, प्रातिकूलिकी=प्रतिकूलवर्तिनीम् (अनुनयाऽसाध्यामित्यर्थ ), मत्वा=ज्ञात्वा, जिहीर्षु =बलात् हरणेच्छु, भीमविग्रह =भयङ्करशरीर (भयोत्पादनाय प्रकटीकृतनिजाकार सन्नित्यर्थ ), बाहूपपीड=बाहुभ्यामुपपीड्य, आश्लिष्य=आलिङ्ग्य (गृहीत्वेत्यर्थ ), द्या=दिवम् (आकाशम्), जगाहे=जगाम ।

व्युत्पत्ति —प्रातिकूलिकी = प्रतिकूल वर्तत इति प्रातिकूलिकी ता 'तत्प्रत्यनुपूर्वमीपलोमकूलम्' इति ठक् । जिहीर्षु = हर्तुमिच्छु (सन्नन्तादु ) । भीमविग्रह = भीमो विग्रहो यस्य स (बहु०) । बाहूपपीड=बाहुभ्यामुपपीड्येति विग्रहे 'सप्तम्या चोपपीडरुधकर्ष ' इति णमुल् । द्या = दिव्शब्दादन्य ओकारान्तो द्योशब्दस्तस्याऽमि 'औतोऽम्शसो ' इत्यात्वम्, 'द्योदिवौ द्वे स्त्रियामभ्र व्योम पुष्करमम्बरम् ।' इत्यमर ।

भावार्थ —रावण सीता स्वेच्छाया प्रतिकूलवर्तिनी ज्ञात्वा बलाद्धरणे च्छु सन् स्वाकार प्रकाश्य बाहुभ्यामुपपीड्य गृहीत्वाऽऽकाशमार्गेण जगाम ।

भाषार्थ—रावण सीताको अनुनयसे वशमे न होने वाली जानकर हरणकी इच्छा से अपने भयङ्कर शरीरको प्रकटकर बाहुको पीडितकर उन्हे पकड आकाशमार्गसे चला ॥९४॥

**त्रस्यन्ती ता समादाय यातो रात्रिञ्चराऽऽलयम् ।**
**तूष्णीम्भूय भयादासाञ्चक्रिरे मृगपक्षिण ॥९५ ॥**

अन्वयः—अश्नीतपिबतीयन्ती स्मरकर्मणि प्रसिता ( सती ) दशग्रीवं वशीकृत्य वरमन्दिरे मोदस्व ।

प्रयोगप०—अश्नीतपिबतीयन्त्या प्रसितया ( त्वया ) मुद्यताम् ।

व्याख्या—अश्नीतपिबतीयन्ती=स्वामिनी ( सती ), स्मरकर्मणि=कामव्यापारे, प्रसिता=तत्परा (सुरताऽऽसक्ता सतीत्यर्थः) दशग्रीवं=रावणं (मामित्यर्थः), वशीकृत्य=स्वाऽधीनं कृत्वा, वरमन्दिरे=सुन्दरभवने, मोदस्व=हर्षं जनय ।

व्युत्पत्तिः—अश्नीतपिबतीयन्ती=अश्नीत पिबतेत्येव सततं यस्याम् ( क्रियायाम् ) अभिधीयते सा अश्नीतपिबता ( क्रिया ), सर्वनियामकत्वं स्वाम्यमिति यावत्, मयूरव्यंसकादिषु 'आख्यातमाख्यातेन क्रियासातत्ये' इति समासः । अश्नीतपिबतामात्मन इच्छन्ती अश्नीतपिबतीयन्ती, 'सुप आत्मनः क्यच्' इति क्यच्, ततो लटः शतरि ङीप् । स्मरकर्मणि=स्मरस्य कर्म स्मरकर्म, तस्मिन् (ष० त०) । प्रसिता='तत्परे प्रसिताऽऽसक्तौ' इत्यमरः । दशग्रीवं=दश ग्रीवा यस्य स दशग्रीवस्तम् ( बहु० ) । वशीकृत्य=वशे कृत्वेति विग्रहे 'साक्षात्प्रभृतीनि च' इति गतिसंज्ञायां समासे क्त्वो ल्यप् । वरमन्दिरे=वरं च तन्मन्दिरं वरमन्दिरं तस्मिन् ( क० धा० ) ।

भावार्थः—हे सीते ! त्वं स्वामिनी भूत्वा सुरताऽऽसक्ता सती मां रावणमधीनं विधाय श्रेष्ठभवने आनन्दमनुभव ।

भाषार्थ—हे सीते ! तुम स्वामिनी होकर सुरतमें आसक्त होती हुई मुझ रावणको अपने वशमें कर उत्तम भवनमें आनन्दका अनुभव करो ॥ ९२ ॥

**मा स्म भूर्ग्राहिणी भीरु ! गन्तुमुत्साहिनी भव ।**
**उद्भासिनी च भूत्वा मे वक्षःसमर्दिनी भव ॥ ९३ ॥**

अन्वयः—हे भीरु ! ग्राहिणी मा स्म भूः, गन्तुम् उत्साहिनी भव, उद्भासिनी च भूत्वा मे वक्षःसमर्दिनी भव ।

प्रयोगप०—( त्वया ) ग्राहिण्या मा स्म भावि, उत्साहिन्या भूयताम्, उद्भासिन्या मे वक्षःसमर्दिन्या भूयताम् ।

व्याख्या—हे भीरु=हे भयशीले !, ग्राहिणी=आग्रहयुक्ता ( 'नाऽहं गमिष्यामि'इत्युक्त्वा प्रतिकूलेत्यर्थः ), मा स्म भूः=न भव, गन्तुं=यातुम्, उत्साहिनी=उत्साहशालिनी, भव=एधि, उद्भासिनी च=शोभमाना च, भूत्वा, मे=मम, वक्षःसमर्दिनी=उरःपीडयित्री, भव=एधि ( आलिङ्गेत्यर्थः ) ।

व्युत्पत्तिः—गृह्णातीति ग्राहिणी, 'ग्रह उपादाने' इति धातोः 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इति ग्रहादित्वात्कर्तरि णिनिस्ततः स्त्रीत्वविवक्षायाम् 'ऋन्ने-

व्युत्पत्ति —कर्मकरोपम =कर्म करोतीति कमकर 'कर्मणि भृतौ' इति भृतौ ट, तद्भिन्नार्थे तु कर्मकार 'भरण्यभुक्कर्मकर कर्मकारस्तु तत्क्रिय ।' इत्यमर । कर्मकरेण उपमा यस्य स. (व्यधि० बहु०) । नेय =नेतु योग्य 'अचो यत्' इति यत् । दिवाकर =दिवा करोतीति विग्रहे 'दिवाविभे'त्यादिना टप्रत्यय । अन्तकर =अन्त करोतीति विग्रहे पूर्वसूत्रेण ट ।

भावार्थ —हे रावण । अहं रामस्य भृत्यतुल्यो वश्योऽस्मि, अतो यथा सूर्योऽन्धकार नाशयति तथैवाऽहमपि नून त्वा नाशयामि ।

भाषार्थ —हे रावण । मै रामके भृत्यके सदृश वशवर्ती हूँ, अत जैसे सूर्य अन्धकारका नाश करते है, निश्चय उसी तरह तेरा भी नाश करता हूँ ॥ ९९ ॥

**सतामरुष्कर पक्षी वैरकार नराशिनम ।**
**हन्तुं कलहकारोऽसौ शब्दकार पपात खम् ॥ १०० ॥**

अन्वय —सताम् अरुष्कर वैरकार नराशिन हन्तु कलहकार असौ पक्षी शब्दकार ( सन् ) खम् उत्पपात ।

प्रयोगप०— कलहकारेण अमुना पक्षिणा शब्दकारेण ( सता ) खम् उत्पेते ।

व्याख्या—सता=सज्जनानाम्, अरुष्कर=व्रणकर (पीडाकरमित्यर्थ ), वैरकार= सीताहरणेन वैरायमाण, नराशिन=मनुष्यभक्षक ( रावणम् ) हन्तु=नाशयितु, कलहकार =युद्धकर , असौ-अय, पक्षी=विहङ्ग ( जटायुरित्यर्थ ) शब्दकार = सिंहनादकर ( सन् ), खम्=आकाशम् , उत्पपात=उज्जगाम ।

व्युत्पत्ति —अरुष्करम्=अरु करोतीति अरुष्करस्त 'दिवाविभे'त्यादिना ट । वैरकार=वैर करोतीति वैरकारस्त, 'न शब्दे'त्यादिना टप्रतिषेधात् 'कर्मण्यण्' इत्यण् । कलहकार =पूर्ववत् टप्रत्ययनिषेधादण् । शब्दकार =पूर्ववत्प्रक्रिया । 'शब्दकार'मित्यत्र 'द्वितीयाया च' इति णमुल् इति केचित् । पक्षी शब्दकार ( सिंहनाद कृत्वा ) खमुत्पपातेति साधीयानेवाऽयमर्थ , किन्तु 'न शब्दे'त्यादिसूत्रोदाहरणप्रक्रमभङ्गदोष सोढव्य स्यादिति मल्लिनाथ । 'शब्दपातम्' इति जयमङ्गलसम्मत पाठस्तत्र शब्दस्य पातो यस्मिन्निति विग्रहेण व्यधिकरणबहुव्रीहि । यावति दूरे शब्दपातस्तावत्खमित्यर्थ ।

भावार्थ —सज्जनपीडक सीताहरणेन वैरायमाण रावण हन्तु जटायु सिंहनाद कृत्वा आकाशमुज्जगाम ।

भाषार्थ —सज्जनोके पीडक, सीताहरणसे वैर करनेवाले रावणको मारनेके लिए युद्ध करनेवाले जटायु सिंहनाद करके आकाशमे उडे ॥ १०० ॥

इति टाऽधिकार ।

अन्वय.—त्रस्यन्ती ता समादाय रात्रिञ्चराऽऽलय यात. ( रावणात् ) भयात् मृगपक्षिण तूष्णीभूय आसाञ्चक्रिरे ॥

प्रयोगप०—मृगपक्षिभिरासाञ्चक्रे ॥

व्याख्या—त्रस्यन्ती=बिभ्यती ( रावणरूपदर्शनादिति भाव ), ता=सीता, समादाय=गृहीत्वा, रात्रिञ्चराऽऽलय=राक्षसवासस्थान ( लङ्कामित्यर्थ ), यात = गच्छत, (रावणात्=दशमुखात्), भयात्=भीते (इव), मृगपक्षिण =पशुपक्षिण , तूष्णीभूय=मौनीभूय, आसाञ्चक्रिरे=आसितवन्त ( न तु न्यवारयन्नित्यर्थ. । तेन निवारकान्तराऽभावो व्यज्यत इत्यलङ्कारेण वस्तुध्वनि ) ।

व्युत्पत्ति —त्रस्यन्ती=त्रस्यतीति त्रस्यन्ती, ता, 'त्रसी उद्वेगे' इति धातोर्लट् शत्रादेश । रात्रिञ्चराऽऽलय=रात्रौ चरन्तीति रात्रिञ्चरा , 'चरेष्ट' इति ट , 'रात्रे कृति विभाषा' इति पक्षे मुमागम , 'रात्रिञ्चरो रात्रिचर कर्बुरो निकषात्मज ।' इत्यमर । रात्रिञ्चराणामालयो रात्रिञ्चरालयस्तम् (प० त०) । यात = यातीति यान्, तस्मात्, याते शत्रन्तात् 'भीत्राऽर्थाना भयहेतु ' इत्यपादानत्वात्पञ्चमी । मृगपक्षिण =मृगाश्च पक्षिणश्च ( द्वन्द्व ) । तूष्णीभूय=तूष्णी भूत्वा इति विग्रहे 'तूष्णीमि भुव ' इति पक्षे क्त्वाप्रत्यय. 'क्त्वा च' इति पक्षे समासे ल्यबादेश , 'मौने तु तूष्णी तूष्णीकाम्' इत्यमर । आसाञ्चक्रिरे='आस उपवेशने' इति धातोर्लिट् 'दयायासश्च' इत्याम् ।

भावाऽर्थ —बिभ्यती सीतामादाय लङ्का गच्छतो रावणात् भीतया इव पशुपक्षिणो मौनिनो भूत्वा स्थितवन्त ।

भाषाऽर्थ —डरती हुई सीताको लेकर जाते हुए रावणसे पशु-पक्षी डरे हुए की तरह चुपचाप होकर रहे ॥ ९५ ॥

**उच्चै रारस्यमाना ता कृपणा रामलक्ष्मणौ ।**
**जटायु प्राप पक्षीन्द्र परुष रावणं वदन् ॥ ९६ ॥**

अन्वय —उच्चै रामलक्ष्मणौ रारस्यमाना कृपणा ता जटायु पक्षीन्द्रो रावण परुष वदन् प्राप ।

प्रयोगप०—रारस्यमाना कृपणा सा जटायुषा पक्षीन्द्रेण वदता प्रापे ।

व्याख्या—उच्चै =उच्चस्वर, रामलक्ष्मणौ=पतिदेवरौ, रारस्यमाना=हा राम हा लक्ष्मणेति आह्वयमाना, कृपणा=दीना, ता=सीता, जटायु =जटायुनामक , पक्षीन्द्र =विहङ्गराज (गृध्रराज ), रावण=दशानन, परुष=रे रे चोर दुरात्मन् ! क्व यासीत्यादि निष्ठुर, वदन्=कथयन्, प्राप=प्राप्तवान् ।

व्याख्या—( जटायु ) आघ्नान =स्वयमेव पर ( रावणम् ) घ्नन् , विध्यमान अपि=परेण ( रावणेन ) व्याहन्यमान अपि, न विभाय=न अभैषीत् ( शूरत्वादिति भाव ), न जिह्राय=न लज्जितवान् ( अपराजितत्वादिति भाव ) न चक्लाम=न क्लान्तवान् ( जितश्रमत्वादिति भाव ), न विव्यथे=न व्यथते स्म, रणात् च=सङ्ग्रामात् च, न निववृते=न उपरराम ( रणादनिवर्तन च विजयावधिक स्वप्राणत्यागावधिक वाऽऽसीदिति भाव ) ।

व्युत्पत्ति —आघ्नान =आङ्पूर्वकादकर्मकाद्धन्ते 'आङो यमहन.' इत्यात्मनेपदम् । 'गमहने'त्यादिना उपधालोप । विध्यमान ='व्यध ताडने' इति धातो. कर्मणि यकि सम्प्रसारणम् । न विभाय, न जिह्राय='ञिभी भये' 'ह्री लज्जायाम्' इति धातुभ्या लिटि तिपो णलि वृद्ध्यायादेशौ । विव्यथे='व्यथ भयसञ्चलनयो ' इति धातोर्लिटि 'व्यथो लिटि' इत्यभ्यासस्य सम्प्रसारणम् ।

भावार्थ —जटायू रावण स्वयमेव प्रहरन् तेन व्याहन्यमानोऽपि शूरत्वान्न लज्जित , जितश्रमत्वान्न क्लान्त , मनस्वित्वात् व्यथा न गत सङ्ग्रामाच्च न निवृत्त ।

भाषार्थ —जब जटायुने रावणको पहार किया, तब रावणसे चोट खाकर भी न नहीं डरे, लज्जित, क्लान्त और व्यथित नहीं हुए और युद्धस्थलसे भी नहीं हटे ॥

**पिशाचमुखधौरेय सच्छत्रकवच रथम् ।**
**युधि कद्रथवद्भीमं बभञ्ज ध्वजशालिनम् ॥ १०३ ॥**

अन्वय —( जटायु ) युधि पिशाचमुखधौरेय सच्छत्रकवच ध्वजशालिन भीम रथ कद्रथवत् बभञ्ज ।

प्रयोगप०—(जटायुषा ) पिशाचमुखधौरेय सच्छत्रकवचो ध्वजशाली भीमो रथ कद्रथवत् बभञ्जे ।

व्याख्या—( जटायु ) युधि=सङ्ग्रामे, पिशाचमुखधौरेय=पिशाचाननाऽश्व , सच्छत्रकवच=आतपत्रवर्मसहित, ध्वजशालिन=पताकाशोभिन, भीम=भयङ्कर ( महान्तमपीति भाव. ), रथ=स्यन्दन ( रावणस्येति शेष ), कद्रथवत्=क्षुद्रस्यन्दनमिव, बभञ्ज=भग्नवान् ।

व्युत्पत्ति —पिशाचमुखधौरेय=धुर ( भारम् ) वहन्तीति धौरेया ( अश्वा ) 'धुरो यड्ढकौ' इति ढक् । पिशाचस्येव मुख येषा ते पिशाचमुखा (व्यधि० बहु०), ते धौरेया यस्य स पिशाचमुखधौरेयस्तम् (बहु०) । सच्छत्रकवच=छत्र च कवचञ्च छत्रकवचौ (द्वन्द्व ) छत्रकवचाभ्या सहित सच्छत्रकवचस्त, 'तेन सहेति तुल्ययोगे' इति बहुव्रीहि । अथवा ऽलमते सन्तौ (शोभनौ) छत्रकवचौ यस्मिन्स सच्छत्रकवचस्तम् (बहु०) । ध्वजशालिन=ध्वजेन शालत इति ध्वजशाली, त, 'शाड् श्लाघायाम्'

अत पर प्रकीर्णका ।

**धुन्वन् सर्वपथीन खे वितान पक्षयोरसौ ।**
**मासशोणितसन्दर्शं तुण्डघातमयुध्यत ॥ १०१ ॥**

अन्वय —असौ खे सर्वपथीन पक्षयो वितान धुन्वन् मासशोणितसन्दर्शं तुण्डघातम् अयुध्यत ।

प्रयोगप०—अमुना धुन्वता अयुध्यत ।

व्याख्या—असौ=जटायु, खे=आकाशे, सर्वपथीन=सकलमार्गव्यापक, पक्षयो = पतत्रयो, वितान=विस्तार, धुन्वन्=कम्पयन् ( विततौ पक्षौ धुन्वनित्यर्थ ), मासशोणितसन्दर्शं=सर्वे मासशोणिते सन्दर्श्य, तुण्डघात=चञ्चुप्रहारपूर्वकम् ( यथा तथा ), अयुध्यत=युद्ध कृतवान् ।

व्युत्पत्ति —सर्वपथीन=सर्वे च ते पन्थान सर्वपथा, 'पूर्वकालैके'त्यादिना समास 'ऋक्पूरब्धू पथामानक्षे' इति समासान्त अ । सर्वपथान् व्याप्नोतीति सर्वपथीनस्त, 'तत्सर्वादे पथ्यङ्गकर्मपत्रपात्र व्याप्नोति' इति खप्रत्यय, 'आयनेयी'-त्यादिना खस्येन । मासशोणितसन्दर्शं=मास च शोणित च मासशोणिते (द्वन्द्व), साकल्येन मासशोणिते सन्दर्श्येति विग्रहे 'कर्मणि दृशिविदो साकल्ये' इति णमुल्, दृशिरन्तर्भावितण्यर्थ । 'अमैवाऽव्ययेन' इति समास । तुण्डघात=हनन घात, 'हन हिंसायाम्' इति धातो 'भावे' इति घञ् 'हनस्तोऽचिण्णलो' इति हन्तेस्तकारादेश 'हो हन्तेर्ञ्णिन्नेषु' इति कुत्वम् । तुण्डेन घातो यस्मिन् ( कर्मणि ) तद्यथा तथा ( व्यधि० बहु० ), करणे हन' इति णमुलन्तत्वे पादघात हन्तीतिवत् 'कषादिषु यथाविध्यनुप्रयोग' इति यथाविध्यनुप्रयोग स्यात् । न च 'हिंसाऽर्थाना च समानकर्मकाणाम्' इति णमुल, अनुप्रयोगस्य युधेरकर्मकत्वेन समानकर्मकत्वाऽभावात् । अयुध्यत=युधेर्दैवादिकाल्लङि तङ् ।

भावार्थ—जटायुराकाशे विततौ पक्षौ धुन्वन् साकल्येन मासरक्ते सन्दर्श्य चञ्चुप्रहारपूर्वक युद्ध कृतवान् ।

भाषाऽर्थ —जटायु आकाशमे फैले हुए परो को कम्पित करते हुए मास-रक्त प्रदर्शनपूर्वक चञ्चुप्रहार कर लडने लगे ॥ १०१ ॥

**न बिभाय, न जिह्राय, न चक्लाम, न विव्यथे ।**
**आघ्नानो विध्यमानोऽपि रणान्निववृते न च ॥ १०२ ॥**

अन्वय —आघ्नान विध्यमान अपि न बिभाय, न जिह्राय, न चक्लाम, न विव्यथे रणाच्च न ववृते ।

प्रयोगप०—आघ्नानेन विध्यमानेनाऽपि ( तेन ) न बिभ्ये, न जिह्रिये, न चक्लमे, न विव्यथे, न निववृते ।

अन्वय —असीत रावण शस्त्रै निराकुल ( सन् ) कासाञ्चक्रे, खग नख-तुण्डायुध ( सन् ) भूय त वेभिदाञ्चक्रे ।

प्रयोगप०—असीतेन रावणेन निराकुलेन ( सता ) कासाञ्चक्रे, खगेन नख-तुण्डायुधेन ( सता ) स बेभिदाञ्चक्रे ।

व्याख्या—( अथ=अनन्तरम् ) असीत =त्यक्तसीतक , रावण =दशमुख , अस्त्रै =आयुधै ( साधनै ), निराकुल =अनाकुल ( सन् ) कासाञ्चक्रे=कुत्सित मभिहितवान् ( रे मूर्ख ! विहगाऽधम ! हतोऽसीति प्रललापेत्यर्थ ) खग =पक्षी ( जटायु ) नखतुण्डायुध =नखरमुखशस्त्र ( सन् ), भूय =पुनरपि, त=रावण, वेभिदाञ्चक्रे=भृश भिन्नवान् ।

व्युत्पत्ति —असीत =अविद्यमाना सीता यस्य स ( नञ् बहु० ) कासाञ्चक्रे= 'कासृ शब्दकुत्सायाम्' इति धातोर्लिटि 'कास्प्रत्ययादाममन्त्रे लिटि' इत्याम्प्रत्यय । खग =खे गच्छतीति विग्रहे 'अन्येभ्योऽपि दृश्यते' इति ड । नखतुण्डायुध = नखाश्च तुण्ड च नखतुण्ड, 'द्वन्द्वश्च प्राणितूर्यसेनाऽङ्गानाम्' इति प्राण्यङ्गत्वात्समा-हारद्वन्द्व । नखतुण्डमेव आयुध यस्य स ( बहु० ) । वेभिदाञ्चक्रे = 'भिदिर् विदारणे' इति यङन्ताद्धातोर्लिट् 'कास्प्रत्ययादाममन्त्रे लिटि' इत्याम्, यङो ङित्वात्तङि तद्वदनुप्रयोगात्कृञोऽपि तङ्, 'गुणो यङ्लुको' इत्यभ्यासस्य गुण अल्लोपयलोपौ ।

भावार्थ —परित्यक्तसीतो रावण शत्रुनाशसाधनभूतै शस्त्रैरनाकुलो भूत्वा 'रे मूर्ख ! विहगाऽधम !' इति प्रललाप, जटायुरपि नखैश्चञ्चुभ्या च त भृश भिन्नवान् ।

भाषार्थ —रावण सीताको परित्याग कर शस्त्ररूप साधनोंसे आकुलतारहित होकर 'हे मूर्ख ! अधमपक्षिन् ! अब तू मारा जायगा' ऐसा कहने लगा । जटायुने भी नाखून और चोंचोंसे फिर उस पर प्रहार किया ॥ १०५ ॥

**हन्तुं क्रोधवशादीहाञ्चक्राते तौ परस्परम् ।**
**न वा पलायाञ्चक्रे विर्दयाञ्चक्रे न राक्षस ॥ १०६ ॥**

अन्वय —तौ क्रोधवशात् परस्पर हन्तुम् ईहाञ्चक्राते । विर्न पलायाञ्चक्रे राक्षसो वा न दयाञ्चक्रे ।

प्रयोगप०—ताभ्याम् ईहाञ्चक्रे । विना न पलायाञ्चक्रे राक्षसेन वा न दयाञ्चक्रे ।

व्याख्या—तौ=पक्षिराक्षसौ ( जटायूरावणौ ), क्रोधवशात्=कोपाऽधीन-त्वात्, परस्पर=अन्योन्य, हन्तु =हिंसितुम्, ईहाञ्चक्राते=चेष्टा कृतवन्तौ, वि = पक्षी (जटायु ), न पलायाञ्चक्रे=न पलायित , राक्षसो वा=रावणश्च, न दया-ञ्चक्रे=न अनुचकम्पे ।

इति धातो ( डलयोरभेदात् ) 'सुप्यजातौ णिनिस्ताच्छील्ये' इति ताच्छील्ये णिनिः। कद्रथवत्=कुत्सितो रथः कद्रथ, 'कुगतिप्रादयः' इति समासः 'रथवदयोश्च' इति का कदादेश। कद्रथेन तुल्यमिति विग्रहे 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिः।

भावार्थ —जटायुः पिशाचमुखैरश्वैर्वाहितं छत्रकवचयुक्तं पताकाशोभितं महान्तमपि रावणरथं क्षुद्ररथमिव भग्नवान्।

भाषार्थ —जटायुने संग्राममें पिशाचकी तरह मुखवाले घोड़ोंसे वाहित, छत्र और कवचसे युक्त, पताकासे शोभित रावणके भयङ्कर रथको भी क्षुद्र रथकी तरह भग्न कर दिया ॥ १०३ ॥ इति प्रकीर्णकाः।

अतः परमामधिकारः।

**सन्त्रासयाञ्चकारारिं सुरान्पिप्राय पश्यतः।**
**सन्त्याजयाञ्चकाराऽथ सीतां विंशतिबाहुना ॥ १०४ ॥**

अन्वय —( जटायुः ) अरिं सन्त्रासयाञ्चकार, पश्यतः सुरान् पिप्राय, अथ विंशतिबाहुना सीतां सन्त्याजयाञ्चकार।

प्रयोग० —( जटायुषा ) अरिः सन्त्रासयाञ्चक्रे, पश्यन्तः सुराः पिप्रियिरे विंशतिबाहुना सीता सन्त्याजयाञ्चक्रे।

व्याख्या —( जटायुः ) अरिं=रावणं, सन्त्रासयाञ्चकार=भीषयाञ्चक्रे, पश्यतः= अवलोकयतः, सुरान्=देवान्, पिप्राय=प्रीणयामास ( रावणस्य सन्त्रासनाद्देवाः प्रीता अभवन्निति भावः ), अथ=देवप्रीणनाऽनन्तरं, विंशतिबाहुना=दशाननेन ( रावणेन ), सीतां=मैथिलीं, सन्त्याजयाञ्चकार=त्याजितवान्।

व्युत्पत्ति —सन्त्रासयाञ्चकार=णिजन्तात् 'त्रसी उद्वेगे' इति धातोर्लिटि 'कास्प्रत्ययादाममन्त्रे लिटि' इत्याम् 'अयामन्ताल्वाय्येत्न्विष्णुषु' इति णेरयादेशः 'कृञ्चाऽनुप्रयुज्यते लिटि' इति कृञोऽनुप्रयोगः। पिप्राय=प्रीणाते ( 'प्रीञ् तर्पणे कान्तौ च' इति धातो ) लिटि तिपो णलि वृद्धयायादेशौ। विंशतिबाहुना=विंशतिर्बाहवो यस्य स विंशतिबाहुस्तेन ( बहु० )। सन्त्याजयाञ्चकार='सन्त्रासयाञ्चकार' इत्यत्रैव प्रक्रिया।

भावार्थ —जटायू रावणं भीषयाञ्चक्रे स्वपौरुषं विलोकयतो देवान्प्रीणितवान्, तदनन्तरं रावणेन सीतां त्याजितवान्।

भाषार्थ —जटायुने रावणको त्रस्त किया, अपने पराक्रमको देखनेवाले देवताओंको प्रसन्न किया और रावणसे सीताका परित्याग कराया ॥ १०४ ॥

**असीलो रावणः कासाञ्चक्रे शस्त्रैर्निराकुलः।**
**भूयस्तं बेभिदाञ्चक्रे नखतुण्डायुधः खगः ॥ १०५ ॥**

अन्वय.—( अथ ) दशवदन कृत्त अवनौ प्रलुठित खचरोत्तम विलोक्य प्रहृष्यन् रामकान्ता परिगृह्य भीमधुय रथवरम् अधिरुह्य स्वपुरम् अगात् ।

प्रयोगप०—दशवदनेन प्रहृष्यता स्वपुरम् अगायि ।

व्याख्या—( अथ=जटायुपक्षच्छेदनाऽनन्तरम् ) दशवदन =रावण , कृत्त = छिन्नपक्षम्, अवना=भूमौ, प्रलुठित=निपत्य लुठन्त, खचरोत्तम=पक्षिश्रेष्ठ ( जटायुषम् ), विलोक्य=दृष्ट्वा, प्रहृष्यन्=हृष्टा भवन्, रामकान्ता=सीता, परिगृह्य=आदाय, भीमधुर्यं=भयङ्कराऽश्व, रथवर=स्यन्दनश्रेष्ठन्, अधिरुह्य= आरुह्य, स्वपुर=लङ्काम्, अगात्=गतवान् ।

व्युत्पत्ति —दशवदन =दश वदनानि यस्य स ( बहु० ) । खचरोत्तम=खे चरन्तीति खचरा 'चरेट' इति ट । खचरेषु उत्तम खचरोत्तमस्तम् (स० त०) । भीमयुध=धुर वहन्तीति धुर्या धुरो 'यड्ढकौ' इति यत् । भीमा धुर्या यस्मिन्स भीमधुर्यस्तम् ( बहु० ) । 'भीमयुग्यम्' इति मल्लिनाथसमत पाठ । तत्रापि स एवाऽथ । युग वहन्तीति युग्या ( अश्वा ), 'तद्वहति रथयुगप्रासङ्गम्' इति यत्प्रत्यय । रथवर=रथेषु वरा रथवरस्तम् (स० त०) । स्वपुर=स्वस्य पू स्वपुर, तत् (ष० त०), 'ऋक्पूरब्धू पथामानक्षे' इति समासान्त अप्रत्यय । पुष्पिताग्रावृत्तम्, 'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा ।' इति लक्षणात् ।

भावाऽर्थ —रावणश्छिन्नपक्ष पृथिव्या निपत्य लुठन्त जटायुष दृष्ट्वा हर्षयुक्तो भूत्वा सीतामादाय भयङ्कराऽश्ववाहित श्रेष्ठरथमारुह्य लङ्का जगाम ।

भाषाऽर्थ —तब रावण पङ्ख कटे हुए और जमीन मे गिरकर फडफडाते हुए जटायुको देख प्रसन्न हो सीताजीको लेकर भयानक घोडोसे युक्त रथपर चढ कर अपनी नगरी लङ्कामे गया ॥ १०८ ॥

इति श्रीभट्टिकाव्ये व्याख्याद्वयोपेते सीताहरणो नाम पञ्चम सर्ग

---

## षष्ठः सर्गः

आमधिकार ( पूर्वागत ) ।

**ओषाञ्चकार कामाऽग्निर्दशवक्त्रमहर्निशम् ।**
**विदाञ्चकार वैदेही ... उत्सुका**

अन्वय.—कामाऽग्नि अहर्निश दशवक्त्रम् ओषाञ्चकार । ( रामात् अन्यनिरुत्सुका विदाञ्चकार ।

प्रयोगप०—कामाऽग्निना दशवक ... ( रावणेन निरुत्सुका विदाञ्चक्रे ।

व्युत्पत्ति —ईहाञ्चक्राते='ईह चेष्टायाम्' इति धातोर्लिटि 'इजादेश्च गुरुमतोऽनृच्छः' इत्याम्प्रत्ययः। वि=वयतीति विः, 'वा गतौ' इति धातोः 'वातेर्डिच्च' इतीण्, 'विविष्किरपतत्रयः' इत्यमरः। पलायाञ्चक्रे=परोपसर्गपूर्वकात् 'अय गतौ' इति धातोर्लिट्, 'उपसर्गस्यायतौ' इति लत्वम्। 'दयायासश्च' इत्याम्प्रत्ययः। दयाञ्चक्रे='दय दानगतिरक्षणहिंसादानेषु' इति धातोर्लिटि, पूर्वसूत्रेणैव आम्।

भावार्थः—जटायुरावणौ कोपपूर्वकमन्योन्यं हिंसितुं चेष्टितवन्तौ, जटायुर्न पलायितः, रावणो वा न अनुचकम्पे।

भाषार्थ —जटायु और रावण क्रोधके वशवर्ती होकर एक दूसरेको मारनेकी चेष्टा करने लगे, जटायु नही भागे और न रावणने ही दया की ॥ १०६ ॥

**उपासाञ्चक्रिरे द्रष्टुं देवगन्धर्वकिन्नराः।**
**छलेन पक्षौ लोलूयाञ्चक्रे क्रव्यात्पतत्रिणः ॥ १०७ ॥**

अन्वयः—देवगन्धर्वकिन्नराः द्रष्टुम् उपासाञ्चक्रिरे, क्रव्यात् छलेन पतत्रिणः पक्षौ लोलूयाञ्चक्रे।

प्रयोगप०—देवगन्धर्वकिन्नरैरुपासाञ्चक्रे। क्रव्यादा पक्षौ लोलूयाञ्चक्राते।

व्याख्या—देवगन्धर्वकिन्नराः=सुरगन्धर्वकिम्पुरुषाः, द्रष्टुं=युद्धदर्शनाऽर्थम्, उपासाञ्चक्रिरे=समीपे स्थिताः, क्रव्यात्=राक्षसः (रावणः) छलेन=कपटेन ('भल्लेने'ति पाठान्तरं, तत्र आयुधविशेषेणेत्यर्थः), पतत्रिणः=पक्षिणः (जटायुषः), पक्षौ=पतत्रे, लोलूयाञ्चक्रे=भृशं लुलाव।

व्युत्पत्ति —देवगन्धर्वकिन्नराः=देवाश्च गन्धर्वाश्च किन्नराश्चेति विग्रहे 'चार्थे द्वन्द्वः' इति द्वन्द्वः। उपासाञ्चक्रिरे=उपपूर्वकात् 'आस उपवेशने' इति धातोर्लिट्, 'दयायासश्च' इत्याम्प्रत्ययः। क्रव्यात्=क्रव्यमत्तीति विग्रहे 'क्रव्ये च' इति विट्, 'राक्षसः कौणपः क्रव्यात्' इत्यमरः। लोलूयाञ्चक्रे='लूञ् छेदने' इति यङन्ताद्धातोर्लिटि 'कास्प्रत्ययादाममन्त्रे लिटि' इत्याम्प्रत्ययः।

भावार्थः—देवादयो युद्धदर्शनाऽर्थं समीपमागताः, अस्मिन्नेवाऽन्तरे रावणो विक्रमेण जटायुर्वधोऽसम्भव इति निश्चित्य माययाऽस्य पक्षौ भृशं लूनवान्।

भाषार्थ —देवता, गन्धर्व और किन्नर युद्ध देखने के लिए उन दोनो के समीप आये, इसी बीच मे रावण ने छल से जटायु के पङ्ख काट लिए ॥ १०७ ॥

**प्रलुठितसवनौ विलोक्य कृत्त दशवदनः खचरोत्तमं प्रहृष्यन्।**
**रथवरमधिगृह्य भीमधुर्यं स्वपुरमगात्परिगृह्य रामकान्ताम् ॥१०८॥**

यादेशौ च । प्रोपसर्गव्यवधान तूक्षाम्प्रचक्रुरितिवत्समाधेय 'प्रविभयाञ्चकाराऽसौ' इति जयमङ्गलभरतमल्लिकाऽभ्युपगतपाठे तु पूर्ववच्छन्दोभङ्ग सोढव्य ।

भावार्थ —रावणो रामभीत्या रामोद्योगेषु निरन्तरमप्रमत्तोऽभवत् ।

भाषार्थ —रावण रामके डरसे 'अब राम क्या करते हैं' ऐसा विचार कर सावधान रहने लगा ॥ २ ॥

**न जिह्रयाञ्चकाराऽथ सीतामभ्यर्थ्य तर्जित॰ ।**
**नाऽप्यूर्जां बिभरामास वैदेह्या प्रसितो भृशम् ॥ ३ ॥**

अन्वय —अथ (अयम्) सीताम् अभ्यर्थ्य तर्जित (तथाऽपि) न जिह्रयाञ्चकार । वैदेह्या भृश प्रसित ऊर्जाम् अपि न बिभरामास ।

प्रयोगप॰—(अनेन) तर्जितेन (बभूवे), न जिह्रयाञ्चक्रे, प्रसितेन ऊर्जां बिभरामासे ।

व्याख्या—अथ=सीताया अन्यनिरुत्सुकत्वज्ञानानन्तर (अय=रावण), सीता=मैथिलीम्, अभ्यर्थ्य=अनुनीय, तर्जित॰=भर्त्सित । (तथाऽपि) न जिह्रयाञ्चकार=न जिह्राय । वैदेह्या=सीताया, भृशम्=अत्यर्थं, प्रसित॰=आसक्त॰ (सन्), ऊर्जाम् अपि=बलमपि, न बिभरामास=न बभार ।

व्युत्पत्ति —जिह्रयाञ्चकार='ह्री लज्जायाम्' इति धातो 'भीह्री'त्यादिना आम् । प्रसित ='तत्परे प्रसितासक्तौ' इत्यमर । बिभरामास='डुभृञ् धारण-पोषणयो' इति धातो पूर्ववदाम् । 'कृञ्चाऽनुप्रयुज्यते लिटि' इत्यत्र 'कृञ्' इति प्रत्याहारग्रहणात् अस्तेरप्यनुप्रयोग॰ ।

भावार्थ —रावण सीतामनुनीय तया भर्त्सितोऽभूत्तथाऽपि न जिह्राय, सीतायामत्यासक्त्या दुर्बलश्च सञ्जात ।

भाषार्थ —जब रावणने सीतासे प्रार्थना की तब उन्होने उसकी भर्त्सना की, तो भी वह लज्जित न हुआ । रावण सीतामे अत्यन्त आसक्त होकर दुर्बल भी हो गया ॥ ३ ॥

**विदाङ्कुर्वन्तु रामस्य वृत्तमित्यवदत् स्वकान् ।**
**रक्षांसि रक्षितुं सीतामाशिषच्च प्रयत्नवान् ॥ ४ ॥**

अन्वय —रामस्य वृत्त विदाङ्कुर्वन्तु इति स्वकान् अवदत्, प्रयत्नवान् (सन्) सीतां रक्षितु रक्षांसि आशिषत् च ।

प्रयोगप॰—'वृत्त विदाङ्क्रियताम्' इति स्वका औद्यन्त, प्रयत्नवता (सता) रक्षांसि अशासिषत च ।

व्याख्या—(रावण) रामस्य=रामचन्द्रस्य, वृत्त=व्यापार, विदाङ्कुर्वन्तु=

व्याख्या—कामाऽग्निः = मदनानलः, अहर्निशं=रात्रिन्दिवं, दशवदनं=रावणम् ओषाञ्चकार = ददाह । ( रावण = दशानन ) वैदेही=सीता, रामात् = रामचन्द्रात्, अन्यनिरुत्सुका=रामाऽतिरिक्ताऽनुत्कण्ठिता, विदाञ्चकार=विवेद ( ज्ञानवानित्यर्थः ) ।

व्युत्पत्ति—कामाऽग्निः=काम एवाऽग्निः ( रूपक० ) । अहर्निशम् = अहश्च निशा च अहर्निशं, तत् 'सर्वो द्वन्द्वो विभाषैकवद्भवती'ति समाहारद्वन्द्वः । 'कालाऽध्वनोरत्यन्तसंयोगे' इति द्वितीया । दशवक्त्रं=दश वक्त्राणि यस्य स दशवक्त्रस्तम् (बहु०) । ओषाञ्चकार='उष दाहे' इति धातोर्लिटि 'उषविदजागृभ्योऽन्यतरस्याम्' इति विकल्पादाम्प्रत्ययस्ततो लघूपधगुणः, पक्षान्तरे 'उवोष' इत्यपि । रामात्='अन्यनिरुत्सुकाम्' इति पदस्थेन अन्यपदेन वैवक्षिकसम्बन्धात् 'अन्याऽरादितरर्त्ते दिक्शब्दाञ्चूत्तरपदाजाहियुक्ते' इति पञ्चमी । अन्यनिरुत्सुकाम्=अन्यस्मिन्निरुत्सुका, अन्यनिरुत्सुका, ताम् ( स०त० ) । विदाञ्चकार=पूर्वसूत्रेणैवाऽऽम्प्रत्ययस्तत्र सूत्रे 'विद' इत्यकाराऽन्तनिपातनान्न लघूपधगुणः ।

भावाऽर्थ—रावणो यदा सीतां रामाऽतिरिक्तपुरुषेऽनुत्सुकां विवेद, तदा मन्मथाऽनलः एनं रात्रिन्दिवं ददाह ।

भाषाऽर्थ—कामाऽग्निने रावणको दिन-रात जलाया और रावणने सीताको रामसे अतिरिक्त पुरुषमें उत्कण्ठारहित जाना ॥१॥

**प्रजागराञ्चकाराऽरेरीहास्वनिशमादरात् ।**
**बिभयाम्प्रचकाराऽसौ काकुत्स्थादभिशङ्कितः ॥ २ ॥**

अन्वय—असौ काकुत्स्थात् अभिशङ्कितः अरेः ईहासु अनिशम् आदरात् प्रजागराञ्चकार बिभयाम्प्रचकार ( च ) ।

प्रयोगप०—अमुना अभिशङ्कितेन प्रजागराञ्चक्रे बिभयाम्प्रचक्रे ( च ) ।

व्याख्या—असौ=रावणः, काकुत्स्थात्=रामात्, अभिशङ्कितः=सजाताऽभिशङ्कः (बलवद्विरोधिताया दुरन्तत्वेन किं भविष्यतीत्युत्प्रेक्षमाण इत्यर्थः), अरेः = शत्रोः ( रामस्य ), ईहासु=चेष्टासु ( उद्योगेषु विषये ), अनिशं=निरन्तरम्, आदरात्=अभिनिवेशात्, प्रजागराञ्चकार=जागरितवान् ( अप्रमत्तः स्थित इत्यर्थः ), बिभयाम्प्रचकार=अतिमात्रं बिभाय च ।

व्युत्पत्ति—काकुत्स्थात्='भीत्राऽर्थानां भयहेतुः' इत्यपादानत्वम् । आदरात्=आदरं विधायेति ल्यबर्थे 'ल्यब्लोपे कर्मण्यधिकरणे च' इति कर्मणि पञ्चमी हेतौ वा । प्रजागराञ्चकार='उषविदे'त्यादिना विकल्पादाम्प्रत्ययः । बिभयाम्प्रचकार='भीह्रीभृहुवां श्लुवच्च' इति विकल्पादाम्प्रत्ययः 'श्लौ' इति द्विर्भावो

यादेशौ च। प्रोपसर्गव्यवधान तूक्षाम्प्रचक्रुरितिवत्समाधेय 'प्रबिभयाञ्चकाराऽसौ' इति जयमङ्गलभरतमल्लिकाऽभ्युपगतपाठे तु पूर्ववच्छन्दोभङ्ग सोढव्य ।

भावाऽर्थ —रावणो रामभीत्या रामोद्योगेषु निरन्तरमप्रमत्तोऽभवत् ।

भाषाऽर्थ —रावण रामके डरसे 'अब राम क्या करते हैं' ऐसा विचार कर सावधान रहने लगा ॥ २ ॥

**न जिह्रयाञ्चकाराऽथ सीतामभ्यर्थ्य तर्जित ।**
**नाऽप्यूर्जां बिभरामास वैदेह्या प्रसितो भृशम् ॥ ३ ॥**

अन्वय —अथ (अयम्) सीताम् अभ्यर्थ्य तर्जित (तथाऽपि) न जिह्रयाञ्चकार। वैदेह्या भृश प्रसित ऊर्जाम् अपि न बिभरामास ।

प्रयोगप०—(अनेन) तर्जितेन (बभूवे), न जिह्रयाञ्चक्रे, प्रसितेन ऊर्जा बिभरामासे।

व्याख्या—अथ=सीताया अन्यनिरुत्सुकत्वज्ञानानन्तर (अय=रावण), सीता=मैथिलीम्, अभ्यर्थ्य=अनुनीय, तर्जित=भर्त्सित । (तथाऽपि) न जिह्रयाञ्चकार=न जिह्राय। वैदेह्या=सीताया, भृशम्=अत्यर्थं, प्रसित=आसक्त (सन्), ऊर्जाम् अपि=बलमपि, न बिभरामास=न बभार।

व्युत्पत्ति —जिह्रयाञ्चकार='ह्री लज्जायाम्' इति धातो 'भीह्री'त्यादिना आम्। प्रसित='तत्परे प्रसितासक्तौ' इत्यमर। बिभरामास='डुभृञ् धारण-पोषणयो' इति धातो पूर्ववदाम्। 'कृञ्चाऽनुप्रयुज्यते लिटि' इत्यत्र 'कृञ्' इति प्रत्याहारग्रहणात् अस्तेरप्यनुप्रयोग ।

भावाऽर्थ —रावण सीतामनुनीय तया भर्त्सितोऽभूत्तथाऽपि न जिह्राय, सीतायामत्यासक्त्या दुर्बलश्च सञ्जात ।

भाषाऽर्थ —जब रावणने सीतासे प्रार्थना की तब उन्होने उसकी भर्त्सना की, तो भी वह लज्जित न हुआ। रावण सीतामे अत्यन्त आसक्त होकर दुर्बल भी हो गया ॥ ३ ॥

**विदाङ्कुर्वन्तु रामस्य वृत्तमित्यवदत् ान्।**
**रक्षांसि रक्षितुं सीतामाशिषच्च प्रयत्नवान् ॥ ४ ॥**

अन्वय —रामस्य वृत्त विदाङ्कुर्वन्तु इति स्वकान् अवदत्, प्रयत्नवान् (सन्) सीतां रक्षितु रक्षांसि आशिषत् च ।

प्रयोगप०—'वृत्त विदाङ्क्रियताम्' इति स्वका ओद्यन्त, प्रयत्नवता (सता) रक्षांसि अशासिषत च ।

व्याख्या—(रावण) रामस्य=रामचन्द्रस्य, वृत्त=व्यापार, विदाङ्कुर्वन्तु=

जानन्तु, इति=इत्थ, स्वकान्=आत्मीयान् ( शुकसारणादीन् गूढपुरुषानित्यर्थः ), अवदत्=अकथयत्, प्रयत्नवान्=प्रयत्नपरः ( सावधानः सन्नित्यर्थः ), सीता= मैथिली, रक्षितु=गोपायितु, रक्षांसि=राक्षसान्, आशिषच्च=आदिष्टवांश्च ( 'योषिद्वृन्दारिके'त्यादिना एतदन्तेन सन्दर्भेणाऽवस्थादशके उन्मादादर्वाचीना सप्ताऽपि सुव्यक्तमुक्तास्ते च यथा—'नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ सङ्कल्पः । निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः । उन्मादो मूर्च्छा मृतिरित्येताः स्मरदशा दशैव स्युः ।' इति ।

व्युत्पत्तिः—विदाङ्कुर्वन्तु=विदेर्विध्यर्थे लोटि 'विदाङ्कुर्वन्त्वित्यन्यतरस्याम्' इत्याम्प्रत्ययगुणाऽभावादिनिपातनात्साधुत्वम् । आशिषत्='शासु अनुशिष्टौ' इति धातोर्लुङि 'सर्तिशास्त्यर्तिभ्यश्च' इति च्लेरङादेशः 'शास इदङ्हलोः' इति शासेरुपधाया इत्वं 'शासिवसिघसीनां च' इति षत्वं च ।

भावार्थः—रावणेन रामव्यापारपरिज्ञाने सीतारक्षणे च राक्षसा आज्ञप्ताः ।

भाषार्थ—रावणने रामकी चेष्टा जाननेके लिये आत्मीयोंको तथा सावधान होकर सीताकी रक्षाके लिए और राक्षसोंको आदेश दिया ॥ ४ ॥

अथ प्रकीर्णकाः—

**रामोऽपि हतमारीचो निवर्त्स्यन् खरनादिनः ।**
**क्रोष्टून् समश्रृणोत् क्रूरान् रसतोऽशुभशंसिनः ॥ ५ ॥**

अन्वयः—हतमारीचः रामः अपि निवर्त्स्यन् खरनादिनः क्रूरान् अशुभशंसिनः रसतः क्रोष्टून् समश्रृणोत् ।

प्रयोगप०—हतमारीचेन रामेण निवर्त्स्यता खरनादिनः क्रूरा अशुभशंसिनः रसन्तः क्रोष्टारः समश्रूयन्त ।

व्याख्या—हतमारीचः=व्यापादितमारीचः, रामोऽपि=रामचन्द्रोऽपि, निवर्त्स्यन्=निवर्तिष्यमाणः, खरनादिनः=गर्दभनादिनः ( परुषाराविण इत्यर्थः ), क्रूरान्=भीषणान्, अशुभशंसिनः=अनिष्टसूचकान्, रसतः=शब्दायमानान्, क्रोष्टून्=शृगालान्, समश्रृणोत्=आकर्णयत् ( वीणाऽऽकर्ण्यत इतिवत् शब्दधर्मस्तद्वति उपचरितः ) ।

व्युत्पत्तिः—हतमारीचः=हतो मारीचो येन सः ( बहु० ) । निवर्त्स्यन्= 'वृद्भ्यः स्यसनोः' इति पाक्षिकं परस्मैपदम्, 'लृटः सद्वा' इति लृटः शत्रादेशः, 'न वृद्भ्यश्चतुर्भ्यः' इतीट्प्रतिषेधः । खरनादिनः=खरा इव नदन्तीति विग्रहे 'कर्तर्युपमाने' इति णिनिः । अशुभशंसिनः=अशुभान् शंसन्तीति तच्छीलास्तान्

( ताच्छील्ये णिनि ), समश्रृणोत्=सकर्मकत्वात् 'समो गम्यृच्छिभ्याम्' इत्यधिकारे 'अर्तिश्रुदृशिभ्यश्चेति वक्तव्यम्' इत्यात्मनेपद न ।

भावार्थ —मारीच हत्वा निवर्तिष्यमाणो रामो मार्गे अशुभसूचकान् शृगालशब्दानश्रृणोत् ।

भाषार्थ —मारीचको मारकर लौटते हुए रामने भयङ्कर और अशुभ सूचना करने वाले शृगालोका शब्द सुना ॥ ५ ॥

**आशङ्कमानो वैदेहीं खादितां निहतां मृताम् ।**
**स शत्रुघ्नस्य सोदर्यं दूरादायान्तमैक्षत ॥ ६ ॥**

अन्वय —वैदेही खादिता निहता मृताम् आशङ्कमान स आरात् आयान्तं शत्रुघ्नस्य सोदर्यम् ऐक्षत ।

प्रयोगप०—आशङ्कमानेन तेन आयान् सोदर्य ऐक्ष्यत ।

व्याख्या—वैदेही=सीता, खादिता=भक्षिता ( व्याघ्रादिभिरिति शेष ), निहता=मारिता (राक्षसैरिति शेष ), मृता=गतप्राणाम् (आयु क्षयादिति शेष ) । आशङ्कमान =उत्प्रेक्षमाण ( शृगालरुतरूपात् दुर्निमित्तादिति भाव ), स =राम , आरात्=दूरात् , आयान्तम्=आगच्छन्त, शत्रुघ्नस्य=कनिष्ठदाशरथे , सोदय=सोदरम् ( ज्येष्ठसहजलक्ष्मणमित्यर्थः ), ऐक्षत्=अपश्यत् ।

व्युत्पत्तिः—आशङ्कमान =आशङ्कत इति ( शानच् ) । शत्रुघ्नस्य=शत्रून् हन्तीति शत्रुघ्नस्तस्य ( मूलविभुजादित्वात्क ) । सोदर्यं=समानोदरे शयित इति सोदर्यस्त, यादौ प्रत्यये विवक्षिते 'विभाषोदरे' इति समानस्य सभावस्तत 'सोदराद्य ' इति य. । 'समानोदर्यसोदर्यसगर्भ्यसहजा समा ।' इत्यमर । ऐक्षत=ईक्षेर्लङि 'आडजादीनाम्' इत्याडागम. ।

भावार्थः—नानाविधया सीताऽनिष्टाशङ्कया ग्रस्तो रामो दूरादागच्छन्तं लक्ष्मणमपश्यत् ।

भाषार्थः—शृगालोके शब्दसे 'सीताको व्याघ्र आदिने खाया, राक्षसोने मारा अथवा वह अपने ही कालसे मरी' ऐसी आशङ्का करते हुए रामचन्द्रजीने दूरसे आते हुए लक्ष्मणको देखा ॥ ६ ॥

**सीता सौमित्रिणा त्यक्ता सध्रीची त्रस्नुमेकिकाम् ।**
**विज्ञायाऽमस्त काकुत्स्थ —'क्षये क्षेम सुदुर्लभम्' ॥ ७ ॥**

अन्वय —काकुत्स्थ सध्रीचीं त्रस्नुम् एकिका सीता सौमित्रिणा त्यक्तां विज्ञाय क्षये क्षेम सुदुर्लभम् अमस्त ।

प्रयोगप० —[illegible]स्थेन क्षये क्षेम सुदुर्लभोऽमानि ।

व्याख्या—काकुत्स्थ=राम, सध्रीचीं=सहचरी, भीरुं=भीरुम्, एकिकाम्=एकाकिनी, सीता=जानकी, सौमित्रिणा=लक्ष्मणेन, त्यक्ता=मुक्ता, विज्ञाय=ज्ञात्वा ( तदागमनेनेति भाव ), क्षये=गृहे, क्षेम=कुशल, सुदुर्लभम्=अतिदुष्प्राप्यम्, अमस्त=ज्ञातवान् ।

व्युत्पत्ति —सध्रीची=सहाऽञ्चतीति सध्रीची, ताम्, 'ऋत्विगा'दिना क्विन् 'सहस्य सध्रिः' इति सध्र्यादेश 'अनिदिता हल उपधाया क्ङिति' इति नलोप. 'अच.' इत्यकारलोप 'चौ' इति दीर्घ 'उगितश्च' इति ङीप् । एकिकाम्=एकैव एकिका, ताम् 'एकादाकिनिच्चाऽसहाये' इत्यत्र चकारात्कन् ( पक्षान्तरे लुक् च ), 'प्रत्ययस्थात्कात्पूर्वस्याऽत इदाप्यसुप' इतीत्त्वम् । 'एकाकी त्वेक एकक' इत्यमर । क्षये=क्षीयतेऽस्मिन्निति क्षयस्तस्मिन्, 'एरच्' इत्यच् 'पुंसि सञ्ज्ञाया घ प्रायेण' इति घो वा, 'निलयाऽपचयौ क्षयौ' । इत्यमर: । सुदुर्लभम्=अत्यन्त दुर्लभ, सुदुर्लभ, तत् 'कुगतिप्रादय' इति समास । अमस्त=मन्यतेरनिटो लुङि सिच् ।

भावार्थ —राम एकाकिन लक्ष्मण दृष्ट्वा 'मत्सहचरी भीरु सीता अनेन त्यक्ता' इति ज्ञात्वा गृहे कुशल दुर्लभ ज्ञातवान् ।

भाषार्थ —रामने सहचरी, डरपोक और अकेली सीताको लक्ष्मणसे परित्यक्त जानकर घरके कुशलकी आशा छोड दी ॥ ७ ॥

अत पर दुहादि. ।

**सोऽपृच्छल्लक्ष्मण सीता याचमान शिव सुरान् ।**
**राम यथास्थित सर्व भ्राता ब्रूते स्म विह्वल ॥ ८ ॥**

अन्वय —स सुरान् शिव याचमान लक्ष्मण सीताम् अपृच्छत । भ्राता विह्वल

( ताच्छील्ये णिनि ), समशृणोत्=सकर्मकत्वात् 'समो गम्यृच्छिभ्याम्' इत्यधिकारे 'अर्तिश्रुदृशिभ्यश्चेति वक्तव्यम्' इत्यात्मनेपदं न ।

भावार्थ —मारीचं हत्वा निवर्तिष्यमाणो रामो मार्गे अशुभसूचकान् शृगालशब्दानशृणोत् ।

भाषार्थ —मारीचको मारकर लौटते हुए रामने भयङ्कर और अशुभ सूचना करने वाले शृगालोंका शब्द सुना ॥ ५ ॥

**आशङ्कमानो वैदेहीं खादितां निहतां मृताम् ।**
**स शत्रुघ्नस्य सोदर्यं दूरादायान्तमैक्षत ॥ ६ ॥**

अन्वय —वैदेहीं खादितां निहतां मृताम् आशङ्कमानः स आरात् आयान्तं शत्रुघ्नस्य सोदर्यम् ऐक्षत ।

प्रयोगप०—आशङ्कमानेन तेन आयान् सोदर्यं ऐक्ष्यत ।

व्याख्या—वैदेहीं=सीतां, खादितां=भक्षितां ( व्याघ्रादिभिरिति शेष ), निहतां=मारितां (राक्षसैरिति शेष ), मृतां=गतप्राणाम् (आयु क्षयादिति शेष ) । आशङ्कमान =उत्प्रेक्षमाण ( शृगालरुतरूपात् दुर्निमित्तादिति भाव ), स =राम , आरात्=दूरात् , आयान्तम्=आगच्छन्तं, शत्रुघ्नस्य=कनिष्ठदाशरथे , सोदर्यं=सोदरम् ( ज्येष्ठसहजलक्ष्मणमित्यर्थः ), ऐक्षत्=अपश्यत् ।

व्युत्पत्तिः—आशङ्कमान =आशङ्कत इति ( शानच् ) । शत्रुघ्नस्य=शत्रून् हन्तीति शत्रुघ्नस्तस्य ( मूलविभुजादित्वात्क ) । सोदर्यं=समानोदरे शयित इति सोदर्यस्त, यादौ प्रत्यये विवक्षिते 'विभाषोदरे' इति समानस्य सभावस्ततः 'सोदराद्य.' इति य. । 'समानोदर्यसोदर्यसगर्भ्यसहजा समा ।' इत्यमर. । ऐक्षत=ईक्षेर्लङि 'आडजादीनाम्' इत्याडागम. ।

भावार्थ.—नानाविधया सीताऽनिष्टाशङ्कया ग्रस्तो रामो दूरादागच्छन्तं लक्ष्मणमपश्यत् ।

भाषार्थः—शृगालोंके शब्दसे 'सीताको व्याघ्र आदिने खाया, राक्षसोंने मारा अथवा वह अपने ही कालसे मरी' ऐसी आशङ्का करते हुए रामचन्द्रजीने दूरसे आते हुए लक्ष्मणको देखा ॥ ६ ॥

**सीतां सौमित्रिणा त्यक्तां सध्रीचीं त्रस्नुमेकिकाम् ।**
**विज्ञायाऽमंस्त काकुत्स्थ –'क्षये क्षेमं सुदुर्लभम्' ॥ ७ ॥**

अन्वय —काकुत्स्थ सध्रीचीं त्रस्नुम् एकिकां सीतां सौमित्रिणा त्यक्तां विज्ञाय क्षये क्षेमं सुदुर्लभम् अमंस्त ।

प्रयोगप०—काकुत्स्थेन क्षये क्षेमं सुदुर्लभोऽमानि ।

व्याख्या—काकुत्स्थ=रामः, सध्रीचीं=सहचरीं, भीरुं=भीरुम्, एकिकाम्=एकाकिनीं, सीतां=जानकीं, सौमित्रिणा=लक्ष्मणेन, त्यक्तां=मुक्तां, विज्ञाय=ज्ञात्वा ( तदागमनेनेति भावः ), क्षये=गृहे, क्षेमं=कुशलं, सुदुर्लभम्=अतिदुष्प्राप्यम्, अमस्त=ज्ञातवान् ।

व्युत्पत्तिः—सध्रीचीं=सहाऽञ्चतीति सध्रीची, ताम्, 'ऋत्विगा'दिना क्विन्, 'सहस्य सध्रिः' इति सध्र्यादेशः 'अनिदितां हल उपधायाः क्ङिति' इति नलोपः, 'अचः' इत्यकारलोपः 'चौ' इति दीर्घः 'उगितश्च' इति ङीप् । एकिकाम्=एकैव एकिका, ताम् 'एकादाकिनिच्चाऽसहाये' इत्यत्र चकारात्कन् ( पक्षान्तरे लुक् च ), 'प्रत्ययस्थात्कात्पूर्वस्याऽत इदाप्यसुपः' इतीत्वम् । 'एकाकी त्वेक एककः' इत्यमरः । क्षये=क्षीयतेऽस्मिन्निति क्षयस्तस्मिन्, 'एरच्' इत्यच् 'पुंसि संज्ञायां घः प्रायेण' इति घो वा, 'निलयाऽपचयौ क्षयौ' । इत्यमरः । सुदुर्लभम्=अत्यन्तं दुर्लभं, सुदुर्लभं, तत् 'कुगतिप्रादयः' इति समासः । अमस्त=मन्यतेरनिटो लुङि सिच् ।

भावार्थः—रामः एकाकिनं लक्ष्मणं दृष्ट्वा 'मत्सहचरी भीरुः सीता अनेन त्यक्ता' इति ज्ञात्वा गृहे कुशलं दुर्लभं ज्ञातवान् ।

भाषार्थः—रामने सहचरी, डरपोक और अकेली सीताको लक्ष्मणसे परित्यक्त जानकर घरके कुशलकी आशा छोड दी ॥ ७ ॥

अत परं दुहादि ।

**सोऽपृच्छल्लक्ष्मणं सीतां याचमानः शिवं सुरान् ।**
**रामं यथास्थितं सर्वं भ्राता ब्रूते स्म विह्वलः ॥ ८ ॥**

अन्वयः—स सुरान् शिवं याचमानः लक्ष्मणं सीताम् अपृच्छत् । भ्राता विह्वलः रामं सर्वं यथास्थितं ब्रूते स्म ।

प्रयोगप०—तेन सुरान् शिवं याचमानेन लक्ष्मणः सीतामपृच्छ्यत । भ्रात्रा विह्वलेन रामः सर्वं यथास्थितमुच्यते स्म ।

व्याख्या—सः=रामः, सुरान्=देवान्, शिवं=कल्याणं, याचमानः=भिक्षमाणः, लक्ष्मणं=स्वाऽनुजं, सीतां=मैथिलीम्, अपृच्छत्=अनुयुक्तवान्, भ्राता=लक्ष्मणः, विह्वलः=विक्लवः ( सन् ), रामं=रामचन्द्रं, सर्वं=सम्पूर्णं, यथास्थितं=यथावृत्तं, ब्रूते स्म=अकथयत् ।

व्युत्पत्तिः—सुरान्, लक्ष्मणं, रामम्=त्रिष्वपि 'अकथितं च' इति कर्मसंज्ञा । याचमानः=याचत इति ( शानच् ) । अपृच्छत्='प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः । यथास्थितं=स्थितमनतिक्रम्येति अव्ययीभावः ।

भावार्थ —रामो देवेषु सीताकुशलप्रार्थना कृत्वा 'सीता कुत्राऽस्ती'ति भ्रातरमपृच्छत् । लक्ष्मणोऽपि विह्वलो भूत्वा सर्वं वृत्तान्तमकथयत् ।

भाषार्थ —रामने देवताओसे सीताके शुभ होनेकी प्रार्थना कर लक्ष्मणसे सीताका हाल पूछा । उन्होने विह्वल होकर रामको सव वात बतलाई ॥ ८ ॥

**सदृश्य शरणं शून्यं भिक्षमाणो वन प्रियाम् ।**
**प्राणान् दुहन्निवात्मान शोक चित्तमवारुधत् ॥ ९ ॥**

अन्वय —शरण शून्य सदृश्य वन प्रिया भिक्षमाण आत्मान प्राणान् दुहन् एव शोक चित्तम् अवारुधत् ।

प्रयोगप०—वन प्रियां भिक्षमाणेन दुहता एव शोक चित्तम् अवारोधि ।

व्याख्या—(राम ) शरण=गृह, शून्य=रिक्त (सीतारहितमित्यर्थ ), सदृश्य=दृष्ट्वा, वनम्=अरण्य, प्रिया=वल्लभा ( सीतामित्यर्थ ), भिक्षमाण =याचमान ( मह्य सीता देहीति याचमान इत्यर्थ ), आत्मान=देह, प्राणान्=असून्, दुहन् इव=रिक्तीकुर्वन् इव, शोक=मन्यु , चित्त=मानसम्, अवारुधत्=अरौत्सीत् ।

व्युत्पत्ति —शरण='शरण गृहरक्षित्रो.' इत्यमर । वनम् , आत्मान, चित्त=त्रिष्वपि 'अकथित च' इति सूत्रेण कर्मसज्ञा । 'आत्मा यत्नो धृतिर्बुद्धि स्वभावो ब्रह्म वर्ष्म च ।' इत्यमर । अवारुधत्=रुधेलुंडि 'इरितो वा' इति विकल्पेन च्लेरडादेश. ।

भावार्थ —रामो गृह सीताशून्य दृष्ट्वा 'मह्य सीता देही'ति वन प्रार्थ्य शरीर प्राणशून्य कुर्वन्निव शोकाऽऽकुलचित्तोऽभवत् ।

भाषार्थ —घरमे सीताको न देखकर वनसे सीताको पानेकी प्रार्थना कर शरीरको प्राणशून्य करते हुए की तरह ( विवश होते हुए ) रामचन्द्रजीने चित्तमे शोकका प्रवेश कराया ॥ ९ ॥

**गता स्यादवचिन्वाना कुसुमान्याश्रमद्रुमान् ।**
**आ यत्र तापसान्धर्म सुतीक्ष्ण शास्ति तत्र सा ॥ १० ॥**

अन्वय —'सा आश्रमद्रुमान् कुसुमानि अवचिन्वाना गता स्यात्, (अथवा) सुतीक्ष्ण यत्र तापसान् धर्मं शास्ति तत्र गता स्यात् आ ।

प्रयोगप०—तया आश्रमद्रुमान् कुसुमानि अवचिन्वानया गतया भूयेत, सुतीक्ष्णेन यत्र तापसा धर्मं शिष्यन्ते तत्र गतया भूयेत ।

व्याख्या—सा = सीता, आश्रमद्रुमान् = आश्रमवृक्षान्, कुसुमानि = पुष्पाणि, अवचिन्वाना=अवच्छिन्दन्ती, गता=याता, स्यात्=भवेत् , (अथवा) सुतीक्ष्ण =

व्याख्या—काकुत्स्थ=राम , सध्रीचीं=सहचरीं, भीरुम्=भीरुम्, एकिकाम्=एकाकिनी, सीता=जानकी, सौमित्रिणा=लक्ष्मणेन, त्यक्ता=मुक्ता, विज्ञाय=ज्ञात्वा ( तदागमनेनेति भाव ), क्षये=गृहे, क्षेम=कुशल, सुदुर्लभम्=अतिदुष्प्राप्यम्, अमस्त=ज्ञातवान् ।

व्युत्पत्ति—सध्रीची=सहाऽञ्चतीति सध्रीची, ताम् , 'ऋत्विगा'दिना क्विन् 'सहस्य सध्रिः' इति सध्र्यादेश 'अनिदिता हल उपधाया क्ङिति' इति नलोप, 'अच.' इत्यकारलोप 'चौ' इति दीर्घ 'उगितश्च' इति ङीप् । एकिकाम्=एकैव एकिका, ताम् 'एकादाकिनिच्चाऽसहाये' इत्यत्र चकारात्कन् ( पक्षान्तरे लुक् च ), 'प्रत्ययस्थात्कात्पूर्वस्याऽत इदाप्यसुप' इतीत्वम् । 'एकाकी त्वेक एकक' इत्यमर । क्षये=क्षीयतेऽस्मिन्निति क्षयस्तस्मिन् , 'एरच्' इत्यच् 'पुंसि सज्ञाया घ प्रायेण' इति घो वा, 'निलयाऽपचयौ क्षयौ' । इत्यमरः । सुदुर्लभम्=अत्यन्त दुर्लभ, सुदुर्लभ, तत् 'कुगतिप्रादय' इति समास । अमस्त=मन्यतेरनिटो लुङि सिच् ।

भावार्थ—राम एकाकिन लक्ष्मण दृष्ट्वा 'मत्सहचरी भीरु सीता अनेन त्यक्ता' इति ज्ञात्वा गृहे कुशल दुर्लभ ज्ञातवान् ।

भाषार्थ—रामने सहचरी, डरपोक और अकेली सीताको लक्ष्मणसे परित्यक्त जानकर घरके कुशलकी आशा छोड दी ॥ ७ ॥

अत पर दुहादि ।

**सोऽपृच्छल्लक्ष्मण सीता याचमान शिव सुरान् ।**
**राम यथास्थित सर्वं भ्राता ब्रूते स्म विह्वल· ॥ ८ ॥**

अन्वय—स सुरान् शिव याचमान लक्ष्मण सीताम् अपृच्छत् । भ्राता विह्वलः राम सर्वं यथास्थित ब्रूते स्म ।

प्रयोगप०—तेन सुरान् शिव याचमानेन लक्ष्मण सीतामपृच्छ्यत । भ्रात्रा विह्वलेन राम सर्वं यथास्थितमुच्यते स्म ।

व्याख्या—स =राम , सुरान्=देवान्, शिव=कल्याण, याचमान.=भिक्षमाण , लक्ष्मण=स्वाऽनुज, सीता=मैथिलीम्, अपृच्छत्=अनुयुक्तवान्, भ्राता=लक्ष्मण, विह्वल =विक्लव ( सन् ), राम=रामचन्द्र, सर्वं=सम्पूर्णं, यथास्थित=यथावृत्त , ब्रूते स्म=अकथयत् ।

व्युत्पत्ति—सुरान् , लक्ष्मण, रामम्=त्रिष्वपि 'अकथित च' इति कर्मसज्ञा । याचमान =याचत इति ( शानच् ) । अपृच्छत्='प्रश्नोऽनुयोग पृच्छा च' इत्यमर । यथास्थित=स्थितमनतिक्रम्येति अव्ययीभाव ।

'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वमिति मल्लिनाथः । 'नेयङुवङ्स्थानावस्त्री' इति नदीसंज्ञानिषेधात्सम्बुद्धिह्रस्वोऽपि न, अतः प्रमाद एवाऽयमिति बहव इति भट्टोजिदीक्षिताः । वस्तुतस्तु रामस्य शोकविवशमानसत्वात् बोधाऽभावेन च्युतसंस्कृत्यात्मको दोषोऽपि गुण एवेति सर्वं निरवद्यम् । केचित्तु 'हा पितः' इति पदद्वयस्यैकीकरणेन हापित' इति विधाय 'त्याजित' इति तस्यार्थं कुर्वन्ति ।

भवाऽर्थः—'आः कष्टं वर्तते । वत ! चित्रं वर्तते । हा मातः ! हा पितः ! हे सीते ! त्वं कुत्राऽसी'ति स एव परिदेवितवान् ।

भाषाऽर्थ—'ओ ! कष्ट है, हाय ! खेद है, आश्चर्य है, माताओ ! आपलोग कहाँ हे ? देवताओंको भी धिक्कार है । हा पिताजी ! सीते ! तुम कहाँ चली गयी' रामचन्द्रजी इस तरह बहुत विलाप करने लगे ॥ ११ ॥

**इहाऽऽसिष्टाऽशयिष्टेह सा सखेलमितोऽगमत् ।**
**अग्लासीत् संस्मरन्नित्थं मैथिल्या भरताऽग्रजः ॥ १२ ॥**

अन्वयः—'सा इह आसिष्ट, इह अशयिष्ट, इतः सखेलम् अगमत्, इत्थं मैथिल्याः संस्मरन् भरताऽग्रजः अग्लासीत् ।

प्रयोगप०—तया आसि, अशायि, अगामि संस्मरता भरताऽग्रजेन अग्लायि ।

व्याख्या—सा=सीता, इह=अस्मिन् स्थाने, आसिष्ट=उपविष्टा, इह=अत्र (स्थाने), अशयिष्ट=शयिता, इतः=अस्मात् स्थानात्, सखेलं=सलीलम्, अगमत्=गता, इत्थं=एवं प्रकारेण, मैथिल्याः=सीतायाः, संस्मरन्=संस्मरणं कुर्वन्, भरताऽग्रजः=रामः, अग्लासीत्=ग्लानिं गतः ।

व्युत्पत्तिः—इह=अस्मिन्निति, 'इदमो हः' इति हः, 'इदम् इश्' इति इश् । आसिष्ट अशयिष्ट=आसेः शीङश्च लुङि तङि सिचीट् । अमगत्=गमेर्लुङि लृदित्वाच्च्लेरङादेशः । मैथिल्याः='अधीगर्थदयेशां कर्मणि' इति कर्मणि षष्ठी । भरताऽग्रजः=भरतस्य अग्रजः (ष० त०) । अग्लासीत्='ग्लै हर्षक्षये' इति अनिटो धातोर्लुङि 'आदेच उपदेशेऽशिति' इत्यात्वे 'यमरमनमातां सक्च' इति सगिटौ ।

भावार्थः—'सीताऽस्मिन्प्रदेशे उपविष्टा, अत्र शयिता, अस्माच्च प्रदेशाद् गता' इत्थं तां चिन्तयन् रामो ग्लानवान् ।

भाषाऽर्थ—'सीता यहाँपर बैठती थी और यहाँपर सोती थी और यहाँसे लीलापूर्वक जाती थी' इस तरह सीताकी याद करते हुए रामचन्द्रजीको ग्लानि हो गयी ॥

**इदं नक्तन्तनं दाम पौष्पमेतद्दिवातनम् ।**
**शुचेवोद्बध्य शाखाया प्रग्लायति तया विना ॥ १३ ॥**

अन्वयः—इदं नक्तन्तनं पौष्पं दाम, एतत् दिवातनं दाम (च) तया विना शुचा शाखायाम् उत्बध्य इव प्रग्लायति ।

भावार्थ —ये वय प्राक् निद्राणाया सीताया वनवासदु खाऽतिशयेन मरण-माशङ्क्य पुन पुन स्पर्शनादिना परीक्षामकुर्म, ते एव वय साम्प्रत तया विनाऽपि यजीवामस्तज्जीवनमायुष क्षयाऽभावे हातुमशक्यमित्याश्चर्यम् ।

भाषाऽर्थ —हम लोग सोयी हुई सीताको मरणकी आशङ्कासे वार वार देखते थे, अभी उनके विना भी जो जीते हैं सो अकालमे प्राण नही छोडा जाता है ॥१४॥

**अक्षेम परिहासोऽय परीक्षा मा कृथा मम ।**
**मत्तो माऽन्तर्धिथा सीते ! मा रस्था जीवितेन न ॥१५॥**

अन्वय —हे सीते ! अय परिहास॰ अक्षेम , मम परीक्षा मा कृथा , मत्त॰ मा अन्तर्धिथा , न जीवितेन मा रस्था ।

प्रयोगप॰—अनेन परिहासेन अक्षेमेण ( भूयते ) । परीक्षा मा कारि, मा अन्तर्धायि, मा रमि ।

व्याख्या—हे सीते=जानकि ! अयम्=एष , परिहास =क्रीडा (अन्तर्धानक्रीडेत्यर्थ ), अक्षेम =अहित , मम=रामस्य, परीक्षा=परीक्षण ( वियोगासहत्वमित्यर्थ ), मा कृथा =मा कार्षी , मत्त =मत्सकाशात्, मा अन्तर्धिथा = अन्तर्हिता माभू , न =अस्माक, जीवितेन=प्राणै , मा रस्था =मा क्रीडी ( अन्तर्धानक्रीडया प्राणान्माऽपहरेत्यथ ) ।

व्युत्पत्ति॰—परिहास =परिहसनम् (भावे घञ्) । अक्षेम =न क्षेम (नञ्॰) । कृथा =करोतेर्लुङि तङि थासि 'उश्च' इति कित्त्वाद् गुणाऽभाव 'ह्रस्वादङ्गात्' इति सिचो लोप । मत्त =मदिति 'पञ्चम्यास्तसिल्' इति तसिल् 'प्रत्ययोत्तरपदयोश्च' इति मदादेश । अन्तर्धिथा =दधातेर्लुङि तङि थासि 'स्थाघ्वोरिच्च' इतीकारादेशे सिचो लोप । रस्था =रमेरनिटो लुङि सिचोऽकित्त्वान्नानुनासिकलोप ।

भावार्थ —हे सीते ! तवेयमन्तर्धानरूपा परीक्षाक्रीडा अहिता । 'रामो मामपश्यन्दु खितो भवति न वे'त्याकारिका मम परीक्षा मा कार्षी , मत्तो मा निलीयस्व मत्प्राणैर्मा क्रीड ।

भाषाऽर्थ —हे सीते ! तुम्हारा यह परिहास (दिल्लगी) अहितकारक है । मेरी परीक्षा मत करो, मत छिपो और मेरे प्राणो के साथ क्रीडा मत करो ॥१५॥

अत पर सिजधिकार ।

**अह न्यवधिष भीम राक्षस क्रूरविक्रमम् ।**
**मा घुक्ष पत्युरात्मान मा न श्लिक्ष प्रिय प्रिये ॥ १६ ॥**

अन्वय —हे प्रिये ! अह भीम क्रूरविक्रम राक्षस न्यवधिषम्, आत्मान पत्यु॰ मा घुक्ष , प्रिय मा न श्लिक्ष॰ ।

प्रयोगप०—अनेन नक्तन्तनेन पौष्पेण दाम्ना, एतेन दिवातनेन दाम्ना च प्रग्लायते ।

व्याख्या—इद=सन्निकृष्टस्य, नक्तन्तन=रात्रिभव, पौष्प=पुष्पमय, दाम=माल्यम्, एतत्=इद, दिवातन=दिवसभव, दाम=माल्य ( च ), तया विना=सीतया विना, शुचा=शोकेन, शाखाया=विटपे, उद्बध्य इव=उद्बन्धन कृत्वा इव ( मृत्वा इवेत्यर्थ ), प्रग्लायति=ग्लानि गच्छति ।

व्युत्पत्ति—नक्तन्तन, दिवातन=नक्त भव दिवा भव चेति विग्रहे 'सायचिरप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च' इति ट्युप्रत्ययस्तुडागमश्च ततो रूपद्वयसिद्धि । पौष्प-पुष्पाणामिदम् 'तस्येदम्' इत्यण् । तया=विनापदेन योगे 'पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्' इति तृतीया । प्रग्लायति=ग्लायतेर्लटि शप' शित्त्वेनाऽऽत्वाभावादायादेश· ।

भावार्थ—इद रात्रिभवमेतत् दिवसभव च पौष्प माल्य सीता विना शोकेन शाखायामुद्बन्धनेन मृत्वेव ग्लानि गच्छति ।

भाषाऽर्थ—यह रातमे और यह दिनमे होने वाले फूलकी माला सीताके विना शोकसे शाखा ( डाल ) मे मानो उद्बन्धन करके ग्लानियुक्त होती है ॥ १३ ॥

**ऐक्षिष्महि मुहु सुप्ता या मृताऽऽशङ्कया वयम् ।**
**अकाले दुर्मरमहो ! यज्जीवामस्तया विना ॥ १४ ॥**

अन्वय—वय सुप्ता या मृताऽऽशङ्कया मुहु ऐक्षिष्महि, ( साम्प्रतम् ) तया विना यत् जीवाम , ( तत् ) अकाले दुर्मरम, अहो ।

प्रयोगप०—अस्माभि सुप्ता या ऐक्षि, जीव्यते दुर्मरेण ( भूयते ) ।

व्याख्या—वयम्=आवामित्यर्थ । सुप्ता=निद्राणा, या=सीता, मृताऽऽशङ्कया=मरणाऽऽशङ्कया, (प्रेमाऽऽधिक्यस्य अस्थानशङ्काकरत्वादिति भाव ), मुहु=वार वारम्, ऐक्षिष्महि=अद्राक्ष्म ( पुन पुन स्पर्शनादिना परीक्षा कृतवन्त इत्यर्थ ) । ( साम्प्रतम्=अधुना ) तया विना=सीतया विना, यत्, जीवाम = प्राणधारण कुर्म , ( तत्=जीवनम् ) अकाले=आयु क्षयाऽभावे, दुर्मर=मर्तुमशक्यम् ( आत्महत्याया शास्त्रनिषिद्धत्वादिति भाव ) । अहो=आश्चर्यम् ।

व्युत्पत्ति—वयम्='अस्मदो द्वयोश्च" इति द्वित्वे विवक्षितेऽपि विकल्पेन बहुवचनम् । मृताऽऽशङ्कया=मृत मरण, 'नपु सके भावे क्त' इति क्त । मृतस्याऽऽशङ्का मृताऽऽशङ्का, तया ( ष० त० ) । अतिशयसुकुमारत्वात् वनवासकष्टेन इय मृतेत्याशङ्कयेत्यर्थ । ऐक्षिष्महि=ईक्षतेर्लुङि तङि महिङि सिचि इट् । अकाले=न कालोऽकालस्तस्मिन् ( नञ् ० ) । दुर्मर=दु खेन मर्तु शक्यम् ( खल् ) ।

ऋल्यमकिति' इत्यमागमे हलन्तलक्षणा वृद्धि 'व्रश्चे'त्यादिना षत्वे कत्व च। अतिचिक्लिश =क्लिश्यतेर्णौ चङ्युपधाह्रस्व । सर्वत्र 'न माङ्योगे' इत्यडभाव । वामा= 'प्रतीपदर्शिनी वामा वनिता महिला तथा ।' इत्यमर । अशिश्रियत्, अदुद्रवत्= श्रिद्रुभ्या 'णिश्रिद्रुस्रुभ्य कर्तरि चङ्' इति लुङि चङि द्विर्भावे इयङुवङादेशौ।

भावार्थ —हे प्रिये । मिथ्यैव दोष नो विलोकय, सेवक मा नाऽतिक्लेशय। वामा ( सीता मयि दोषसम्भावनेन प्रतिकूलवर्तिनी भूता वा ) पर्वतमाश्रिता, आहोस्वित् सरितमभिद्रुता।

भाषार्थ —हे प्रिये । व्यर्थ ही दोषदर्शिनी मत बनो, मुझ सेवकको ज्यादा तक्लीफ मत दो। सीता पहाडमे चली गयी वा नदीमे डूब गयी ॥ १७ ॥

ऐ ! वाच देहि धैर्यं नस्तव हेतोरसुस्रुवत् ।
त्व नो मतिमिवाऽधासीर्नष्टा प्राणानिवाऽदध ॥ १८ ॥

अन्वय —हे ! वाच देहि, तव हेतो न धैर्यम् असुस्रुवत्, त्व नष्टा ( सती ) न मतिम् अधासी इव, प्राणान् अदध इव।

प्रयोगप०—ऐ ! वाक् दीयता, धैर्येण अस्रावि, त्वया नष्टया मति अधायि, प्राणा अधायिषत।

व्याख्या—ऐ=हे सीते, वाच देहि=सम्भाषस्व, तव हेतो =त्वयि निमित्ते, न =अस्माक, धैर्यं=धीरत्वम् , असुस्रुवत्=स्रुत, त्व=सीता, नष्टा=अदर्शन गता ( सती ), न =अस्माक, मति=बुद्धिम्, अधासी इव=अपा इव, प्राणान्=असून्, अदध इव=पीतवती इव।

व्युत्पत्ति —ऐ=सम्बोधनार्थको निपात । देहि=ददाते प्रार्थनाया लोट्, 'घ्वसोरेद्धावभ्यासलोपश्च' इत्यभ्यासलोप एत्व च। तव=हेतुशब्दप्रयोगे 'षष्ठी हेतुप्रयोगे' इति षष्ठी। धैर्यं=धीरस्य भाव कर्म वा (ष्यञ्)। असुस्रुवत्=पूर्ववत् चङादिकार्यम्। अधासी =धेट् पाने' इति धातोर्लुङि सिपि 'विभाषा घ्राधेट्शाच्छास ' इति सिचो लुगभावपक्षे 'आदेच उपदेशेऽशिति' इत्यात्त्वे 'यमरमनमाता सक् च' इति सगिडागमौ। 'इट ईटि' इति सलोप । अदध ='विभाषा धेट्श्व्यो ' इति चङ्पक्षे द्विर्वचनम् 'आतो लोप इटि च' इत्याकारलोप ।

भावार्थ —हे सीते ! भाषण कुरु, तव हेतोर्नो धैर्यमपगत, तवादर्शनेन मत्स्मृतिरपसृता इव, प्राणाश्च प्रचलिता इव।

भाषार्थ —हे सीते ! बोलो, तुम्हारे लिए मेरा धैर्य डिगा, तुमने अदृश्य होकर मानो मेरी बुद्धि और प्राणोको पान कर लिया ॥ १८ ॥

प्रयोगप०—मया भीम । क्रूरविक्रमो राक्षसो न्यवधि, आत्मा पत्यु मा गोहि प्रियो मा न श्लेषि ।

व्याख्या—हे प्रिये=हे वल्लभे, अहं=राम , भीम=भयङ्कर, क्रूरविक्रमम्=असह्य-पराक्रम, राक्षस=मारीच, न्यवधिप=निहतवान्, आत्मान=स्व, पत्यु =स्वामिनः ( मत्त इत्यर्थ ), मा घुक्ष =मा सवृणु, प्रिय=वल्लभ ( माम् ), मा न श्लिक्ष = मा न परिरब्धा ( आलिङ्गयेत्यर्थ ) ।

व्युत्पत्ति —प्रिये=प्रीणातीति प्रिया तत्सम्बुद्धौ 'इगुपधज्ञाप्रीकिर क' इति कप्रत्यय । क्रूरविक्रम=क्रूरो विक्रमो यस्य स क्रूरविक्रमस्तम् ( बहु० ) । न्यवधिप हन्तेर्लुङि 'लुङि च' इति वधादेशेऽदन्तात्सिच इडागम । पत्यु ='अन्तर्धौ येनाऽदर्शनमिच्छति' इति पञ्चमी । मा घुक्ष ='गुहू सवरणे' इति धातोर्लुङि 'शल इगुपधादनिट क्स ' इति च्ले क्सादेश , 'हो ढ' इति हस्य ढत्वभष्भावकत्वषत्वविसर्जनीया , माङ् योगेन 'न माङ्योगे' इत्यडागमनिषेधश्च । मा न श्लिक्ष ='श्लिष आलिङ्गने' इति धातो 'श्लिष आलिङ्गने' इति च्ले क्सत्वे कत्वषत्वे च । द्वौ नञौ एक प्रकृतमर्थं द्योतयत , सम्भाव्यनिषेधनिवर्तने द्वौ प्रतिषेधौ' इति वामन ।

भावार्थ —हे प्रिये ! मया कठोरपराक्रमो राक्षसो हत , आत्मान मत्तो मा सवृणु, मामालिङ्गय ।

भाषाऽर्थ —हे प्रिये ! मैंने भयङ्कर और कठोर पराक्रमवाले राक्षसको मार डाला अपनेको मुझसे मत छिपाओ और मुझे आलिङ्गन करो ॥ १६ ॥

**मा स्म द्राक्षीर्मृषा दोष भक्त मा माऽतिचिक्लिश ।**
**शैल न्वशिश्रियद्वामा नदी नु प्रत्यदुद्रुवत् ॥ १७ ॥**

अन्वय —( हे प्रिये ! ) मृषा दोष मा स्म द्राक्षी , भक्त मा मा अतिचिक्लिश । वामा शैलम् अशिश्रियत् नु, नदी प्रत्यदुद्रुवत् नु ।

प्रयोगप०—दोषो मा स्म दर्शि, भक्तोऽहं मा अति क्लेशयिषि । वामया शैलोऽश्रायि नु, नदी प्रत्यद्रावि नु ।

व्याख्या—( हे प्रिये ! ) मृषा=मिथ्या, दोष=दूषण, मा स्म द्राक्षी =न विलोकय ( मयि दोष न पश्य, मृषा यत्सम्भावनादन्तर्हिताऽसीति भाव ), भक्त=भक्तियुक्त ( सेवकमित्यर्थ. ), मा=राम, मा अतिचिक्लिश =न अतिक्लेशय । वामा=सीता प्रतिकुलवर्तिनी वा, ( मद्दोषदर्शनादिति भाव ) शैल=पर्वतम् , अशिश्रियत् नु=श्रिता वा, नदी=सरित, प्रत्यदुद्रुवत् नु=अभिद्रुता वा ।

व्युत्पत्ति —मा स्म द्राक्षी ='स्मोत्तरे लङ् च' इति चकाराद् दृशेर्लुङि 'न दृश ' इति क्सप्रतिषेध । 'इरितो वा' इति विकल्पादङभावपक्षे सिचि 'सृजिदृशो-

व्याख्या—हे लक्ष्मण=हे भ्रात , सा=सीता, किञ्चित्=किमपि, कोपकारण=क्रोधहेतुम्, आख्यत् यदि=( तुभ्यम् ) कथितवती चेत्, आचक्ष्व=कथय । दोषे=अपराधे, अज्ञाते=अविदिते ( सति ), कथ=केन प्रकारेण, प्रतिसमाधान=प्रतीकार , क्रियता=विधीयताम् ।

व्युत्पत्ति —आख्यत्='ख्या प्रकथने' इति धातोर्लुङि पूर्ववदङ् 'आतो लोप इटि च' इति आकारलोप । आचक्ष्व='चक्षिङ् व्यक्तायां वाचि' इति धातोर्लोटि थासि रूपम् । क्रियता=कर्मणि लोट् 'रिङ् शयग्लिङ्क्षु' इति रिङ् ।

भावार्थ —हे लक्ष्मण ! सीता तुभ्य किमपि कोपकारण कथितवती यदि, कथय । तथा हि अह दोषाऽपरिज्ञाने कथ दोषनिवर्त्तन कुर्याम् ।

भाषार्थ —हे लक्ष्मण ! सीताजीने तुमको कोई कोपका कारण बतलाया है तो कहो, क्योकि दोषका ज्ञान हुए बिना वह कैसे हटाया जा सकता है ? ॥२०॥

**इह सा व्यलिपद् गन्धै स्नान्तीहाऽभ्यषिचज्जलै ।**
**इहाऽह द्रष्टुमाह्व तां स्मरन्नेव मुमोह स. ॥ २१ ॥**

अन्वय —'सा इह गन्धै. व्यलिपत् , इह स्नान्ती (सती) जलै. अभ्यषिचत् । इह अह ता द्रष्टुम् आह्वम्' एव स्मरन् स मुमोह ।

प्रयोगप०—'तया व्यलेपि, स्नान्त्या । ( अहम् ) अभ्यषेचिषि । मया (सा) आह्वायि' एव स्मरता तेन मुमुहे ।

व्याख्या—सा=सीता, इह=अस्मिन् प्रदेशे, गन्धै =चन्दनादिद्रव्यै , व्यलिपत्=विलिप्तवती, इह=अत्र, ( प्रदेशे ), स्नान्ती=स्नान कुर्वती ( सती ) 'जलै =अम्बुभि ' अभ्यषिचत्=अभिषिक्तवती ( मामिति शेष ) । इह=अत्र, अह = राम , ता= सीता, द्रष्टु = विलोकयितुम्, आह्वम् = आकारयम्, एवम् = इत्थ, स्मरन् = स्मरण कुर्वन् , स = राम , मुमोह = मुमूर्च्छ ।

व्युत्पत्ति —गन्धै = द्रव्यवाचकत्वेन बहुवचनम् । व्यलिपत् = 'लिप उपदेहे' इति धातोर्लुङि 'लिपिसिचिह्वश्च' इति च्लेरङ् । स्नान्ती = स्नातीति विग्रहे शतरि ङीप् 'आच्छीनद्योर्नुम्' इति विकल्पान्नुम् । अभ्यषिचत् = 'षिच क्षरणे' इति धातोर्लुङि पूर्ववदङ् 'प्राक्सितादड्व्यवायेऽपि' इति षत्वम् । आह्वम् = 'ह्वेञ् स्पर्धायां शब्दे च' इति धातोर्लुङि पूर्ववदङ् 'आतो लोप इटि' च इत्याकारलोप ।

भावार्थ —'सीता अस्मिन्प्रदेशे चन्दनादिद्रव्यैरात्मान विलिप्तवती, अत्र स्नान्ती सती जलैर्मामभिषिक्तवती । इहाऽह तां द्रष्टुमाहूतवान्' इत्थ स्मरन् रामो मुमूर्च्छ ।

भाषार्थ —सीताजी इस जगहपर चन्दन आदि द्रव्योसे अपने शरीरमे लेपन

**रुदतोऽशिश्वियच्चक्षुरास्यं हेतोस्तवाऽश्वयीत् ।**
**म्रियेऽहं मां निरास्थश्चेन्मा न वोचश्चिकीर्षितम् ॥ १९ ॥**

अन्वय —तव हेतो रुदत ( मे ) चक्षु अशिश्वियत्, आस्य च अश्वयीत् । मा निरास्थ. चेत् अह म्रिये, चिकीर्षित मा न वोच ?

प्रयोगप०—चक्षुषा अश्वायि । आस्येन च अश्वायि । ( त्वया ) अह निरासिषि चेत् मया म्रियते । ( त्वया ) चिकीर्षित मा न वाचि ।

व्याख्या—तव हेतो =त्वत्कृते, रुदत =अश्रुमोचन कुर्वत , ( मे=मम ) चक्षु =नेत्रम्, अशिश्वियत्=उच्छूनसभूत्, आस्य च=मुख च, अश्वयीत्=उच्छूनमभूत् । मा=राम, निरास्थश्चेत्=निरस्तवती चेत्, अह=राम:, म्रिये=मरिष्यामि, चिकीर्षित=कर्तुमिष्ट, मा न वोच =मा न भाषिष्ठा ( किन्तु ब्रूह्येवेत्यर्थ , उक्ते तत्करिष्यामीति भाव ) ।

व्युत्पत्ति —तव='षष्ठी हेतुप्रयोगे' इति षष्ठी । अशिश्वियत्='टुओश्वि गतिवृद्ध्यो.' इति धातोर्लुङि 'विभाषा धेट्श्व्यो.' इति पक्षे चङि द्विर्वचने इयडादेश । अश्वयीत्=चडियडोर्वैकल्पिकत्वादुभयाऽभावपक्षे सिचि इडागमे 'ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्' इति वृद्धिप्रतिषेध 'इट ईटि' इति सलोपे गुणाऽयादेशौ च । निरास्थ =अस्यतेर्लुङि पुषादित्वादङि 'अस्यतेस्थुक्' इति थुगागम , 'अस्यतिवक्तिख्यातिभ्योऽङ्' इति वचन तु तङर्थम् । म्रिये='मृङ् प्राणत्यागे' इति धातोर्वर्तमानसामीप्ये सामान्ये लटि 'म्रियतेर्लुङ्लिङोश्च' इति चकाराच्छित्यात्मनेपद 'रिङ् शयग्लिङ्क्षु' इति रिङादेश । मा न वोच.=वक्तेर्लुङि ब्रूञादेशाद्वा 'अस्यती'-त्यादिनाऽङ् 'वच उम्' इत्युमागमश्च । 'मा न श्लिक्ष' इतिवन्निषेधद्वय व्याख्येयम् ।

भावार्थ —त्वत्कृते रुदतो मे नेत्रद्वय मुख च उच्छूनम् । हे सीते ! त्व मा निरस्तवती चेत् अह मरिष्यामि, अधुनाऽपि कर्तुमिष्ट मा न भाषिष्ठा. ? (किंतु ब्रूह्येव)।

भाषार्थ —हे सीते ! तुम्हारे लिए रोते रोते मेरी आखे और मुँह सूज गये हैं । मुझे छोड दोगी तो मै मर जाऊँगा, क्या करना चाहती हो ? अब तो बताओगी ॥

**लक्ष्मणाऽचक्ष्व यद्याख्यत्सा किञ्चित्कोपकारणम् ।**
**दोषे प्रतिसमाधानमज्ञाते क्रियतां कथम् ॥ २० ॥**

अन्वय —हे लक्ष्मण ! सा किञ्चित् कोपकारणम् आख्यत् यदि, आचक्ष्व ! दोषे अज्ञाते कथ प्रतिसमाधान क्रियताम् ?

प्रयोगप०—हे लक्ष्मण ! तया कोपकारणम् आख्यायि यदि, आख्यायताम् ( अहम् ) कथ प्रतिसमाधान करवाणि ।

मन्युमूढ , असौ=राम., रुदन्=अश्रु विमुञ्चन् , स्नान्=स्नान कुर्वन् , अम्भ = जल, अभ्यषिचत=क्षिप्तवान् , तथा=तेन प्रकारेण, पितृभ्य =अग्निष्वात्तादिभ्य , वारीणि=जलानि, अभ्यषिक्त=क्षरितवान् ( दत्तवानित्यर्थ )।

व्युत्पत्ति —शोकमूर्च्छित =शोकेन मूर्च्छित ( तृ० त० )। स्नान्=स्नानीति स्नान् 'ष्णा शौचे' इति धातोर्लट शत्रादेश । अभ्यषिचत=अभिपूर्वकात् 'षिच-क्षरणे' इति धातोरात्मनेपदे लुङ् । 'आत्मनेपदेष्वन्यतरस्याम्' इति विकल्पेनाङ् । अभ्यषिक्त=अङभावपक्षे 'झलो झलि' इति सिज्लोप । षिचिरत्रोत्सर्गे वतते, अतो जलस्य कर्मत्वम॰ज्ञुक्षणे तु करणत्वम् ।

भावार्थ —सीताविरहेण शोकमूढो रामो रुदन्स्नानसमये शिरस्यञ्जलिना जल क्षिप्तवान्, तथा पितृभ्यो जलानि दत्तवान् ।

भाषार्थ —सीताके विना शोकमूर्च्छित होकर रामचन्द्रने रोते हुए स्नानके समयमे शिरमे अञ्जलिसे जल डाला और उसी तरह पितरोको जलदान किया ॥

**तथाऽऽर्तोऽपि क्रिया धर्म्या स काले नाऽमुचत्क्वचित् ।**
**महता हि क्रिया नित्या छिद्रे नैवाऽवसीदति ॥ २४॥**

अन्वय —तथा आर्तः अपि स धर्म्यां क्रिया क्वचित् काले न अमुचत्, हि महतां छिद्रे ( अपि ) नित्या क्रिया न अवसीदति एव ।

प्रयोगप०—आर्तेन अपि तेन धर्म्या क्रिया न अमोचि, नित्यया, क्रियया न अवसद्यते ।

व्याख्या—तथा=तेन प्रकारेण, आर्तोऽपि=आकुलोऽपि, स.=राम , धर्म्या= धर्मादनपेता ( विहितामित्यर्थ ), क्रियाम्=अनुष्ठान, क्वचित्=कुत्रचित् ( अपि ), काले=समये, न अमुचत्=न त्यक्तवान् , हि=यत , महता=सता, छिद्रे=व्यसने ( अपि ), नित्या क्रिया=नियताऽनुष्ठान, न अवसीदति एव=न लुप्यत एव ।

व्युत्पत्ति —धर्म्यां=धर्मादनपेता धर्म्या, ताम् 'धर्मपथ्यर्थन्यायादनपेते' इति यत् । अमुचत्='मुच्लृ मोक्षणे' इति धातोर्लुङ् लृदित्त्वादङ् । सामान्येन विशेष-समर्थनरूपोऽर्थान्तरन्यास. ।

भावार्थ.—सीतावियोगेन अत्यर्थमाकुलोऽपि रामो जातुचिदपि धर्मकार्यं न तत्याज, यतो विपद्यपि सता नित्यकर्मानुष्ठान न लुप्यत एव ।

भाषार्थ —उस तरह आकुल होकर श्रीरामचन्द्रजीने धमकार्यको किसी समय-मे भी नही छोडा, क्योकि विपत्तिमे भी सज्जनोका नित्य कर्म लुप्त नही होता ॥

**आह्वास्त स मुहु. शूरान् मुहुराह्वत राक्षसान् ।**
**[illegible] ह ! सख्ये प्रत्यर्ययत रा [illegible] ॥ २५ ॥**

करती थी, यहा पर स्नान करती हुई मुझपर जल छिडकती थी। यहाँ मैं उनको देखनेके लिए बुलाता था, ऐसा स्मरण करते हुए रामचन्द्रजी मूच्छित हुए ॥२१॥

**तस्याऽलिपत शोकाऽग्नि स्वान्त काष्ठमिव ज्वलन् ।**
**अलिप्तैवाऽनिल शीतो वने त न त्वजिह्लदत् ॥२२॥**

अन्वय —ज्वलन् शोकाग्नि तस्य स्वान्त काष्ठम् इव अलिपत। शीत वने अनिल तम् अलिप्त एव, तु न अजिह्लदत्।

प्रयोगप०—ज्वलता शोकाग्निना स्वान्त काष्ठमिव अलेपि। शीतेन अनिलेन सोऽलेपि एव, न अह्लादि।

व्याख्या—ज्वलन्=दीप्यमान, शोकाऽग्नि=शोकाऽनल, तस्य=रामस्य, स्वान्त=चित्त, काष्ठम् इव=इन्धनम् इव, अलिपत्=अदहत्। शीत=शीतल, वने=अरण्ये, (विद्यमान) अनिल=वायु, त=रामम्, अलिप्त एव=ददाह एव, तु=किन्तु, न अजिह्लदत्=न आनन्दयत् ( प्रत्युत सोऽपि ददाहैवेत्यर्थ )।

व्युत्पत्ति —शोकाऽग्नि=शोक एवाग्नि ( रूपक० )। स्वान्त=क्षुब्धस्वान्त-ध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तम सक्ताऽविस्पष्टस्वराऽनायासभृशेषु' इति मनसि निपातितम्। 'चित्त तु चेतो हृदय स्वान्त हृन्मानस मन।' इत्यमर। अलिपत='लिप उपदेहे' इति धातो 'स्वरितञित कर्त्रभिप्राये क्रियाफले' इति क्रियाफलविवक्षायामात्मनेपदे लुङि रूपम्। 'लिपिसिचिह्वश्च' इत्यनुवृत्तौ 'आत्मनेपदेष्वन्यतरस्याम्' इति विकल्पेन च्लेरङ्। अलिप्त=अङभावपक्षे पूर्वधातोरेव 'झलो झलि' इति सिचो लोप। अजिह्लदत्='ह्लादी सुखे च' इति धातोर्णौ लुङि चङ्युपधाह्रस्व।

भावाऽर्थ —यथाग्नि काष्ठ दहति तथा शोकाऽग्निस्तस्य चित्त ददाह। शीतो वनवातोऽपि त दग्धवानेव, सुखप्रदो नाऽभूत्।

भाषाऽर्थ —जिस तरह आग लकडीको जलाती है उसी तरह शोकाऽग्निने रामके चित्तको जलाया। शीतल वनके वायुने भी उन्हे जलाया, सुख नही दिया॥

**स्नानभ्यषिचताऽम्भोऽसौ रुदन्दयितया विना।**
**तथाऽभ्यषिक्त वारीणि पितृभ्य शोकमूर्च्छित ॥ २३ ॥**

अन्वय —दयितया विना शोकमूर्च्छित असौ रुदन् स्नान् अम्भ अभ्यषिचत, तथा पितृभ्य वारीणि अभ्यषिक्त।

प्रयोगप०—शोकमूर्च्छितेन अमुना रुदता स्नाता अम्भ अभ्यषेचि, वारीणि अभ्यषिचत्।

व्याख्या—दयितया विना=प्रियया ( सीतयेत्यर्थ ) विना,

प्रयोगप०—'मन्युना अस्तम्भि इति ( मया ) मन्यते। विषादेन उद्यति अस्तम्भि, प्रज्ञया च अजारि इव, बलेन अजारि।

व्याख्या—( हे लक्ष्मण ! ) मम=रामस्य, मन्यु =शोक , अस्तम्भीत्=स्तब्धोऽभूत् ( अतिदु खो निदु ख इति न्यायादिति भाव ), ( इति=इत्थ ) मन्ये=जाने (जयमङ्गलभरतमल्लिकयोर्मते तु–मन्यु =शोक , मम, मन्ये=ग्रीवाया पश्चाद्भागे स्थितसिरे, अस्तम्भीत्=स्तब्धवान् इत्यर्थ )। विषाद =मनोभङ्ग उद्यतिम्=उद्यमम्, अस्तभत्=तस्तम्भ, प्रज्ञा च=बुद्धिश्च, अजारीत् इव=जीर्णा ऽव, तथा–तेन प्रकारेण ( प्रज्ञावदेवेत्यर्थ ), बल=शक्ति , शोकात्=मन्यो , अजरत्=जीर्णम्।

व्युत्पत्ति —अस्तम्भीत्='स्तम्भु रोधनस्तम्भनयो' इति सौत्रधातोर्लुङि 'जृस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च' इति विकल्पादङभावे सिचि 'इट ईटि' इति सलोप । अस्तभत्=पूर्वोक्तादेव धातोर्विकल्पादङ्पक्षेऽनुनासिकलोप । अजारीत्='जॄष् वयोहानौ' इति धातोर्लुङि पूर्वसूत्रेण विकल्पादङभावे सिचि वृद्धि सलोपश्च। अजरत्=पूर्वधातोरेव विकल्पादङि 'ऋदृशोऽङि गुण ' इति गुण ।

भावाऽर्थ —हे लक्ष्मण ! मम शोक स्तब्धोऽभूदिति मन्ये, मनोभङ्ग उद्यम स्तब्धवान्, प्रज्ञा बल च शोकात् जीर्णे।

भाषार्थ —हे लक्ष्मण ! मेरा शोक स्थिर हुआ है ऐसा मानता हूँ। विषादने उद्यमको रोक दिया ! बुद्धि जैसे जीर्ण हो गई है, उसी तरह बल भी शोकसे जीर्ण हो गया है ॥ ३० ॥

**गृध्रस्येहाऽश्वता पक्षौ कृत्तौ वीक्षस्व लक्ष्मण।**
**जिघत्सोर्नूनमापादि ध्वसोऽयं तां निशाचरात् ॥ ३१ ॥**

अन्वय —हे लक्ष्मण ! इह कृत्तौ गृध्रस्य पक्षौ अश्वताम्। वीक्षस्व। नून तां जिघत्सो अय ध्वस निशाचरात् आपादि।

प्रयोग०—कृत्ताभ्यां पक्षाभ्यामाश्वायि, वीक्ष्यताम्। अनेन ध्वसेन आपादि।

व्याख्या—हे लक्ष्मण=हे सौमित्रे, इह=अस्मिन् (प्रदेशे), कृत्तौ=छिन्नौ, गृध्रस्य=दाक्षाय्यस्य, पक्षौ=पतत्रे, अश्वता=शूनौ। वीक्षस्व=पश्य। नूनम्=अवश्य, तां=सीता, जिघत्सो–अत्तुमिच्छो (भक्षणेच्छोरित्यर्थ, गृध्रस्येति शेष ), अय=पुरोविलोकित , ध्वस =नाश (पक्षच्छेद इत्यर्थ ), निशाचरात्=राक्षसात्, आपादि=आपन्न ( आगत इत्यर्थ )।

व्युत्पत्ति —अश्वता='टुओश्वि गतिवृद्ध्यो' इति धातोर्लुङि 'जृस्तम्भु०'इत्यादिना अङि ... कारे 'अतो गुणे' इति पररूपत्वम्। जिघत्सो=

अन्वय —स मुहुः शूरान् आह्वास्त, राक्षसान् ( अपि ) मुहुः आह्वत-'हे सीताद्रुहः ! एत, सङ्ख्ये राघवं प्रत्यर्थयत' ।

प्रयोगप०—तेन शूरा राक्षसा अपि आह्वायिषत, युष्माभिरीयताम्, राघवः प्रत्यर्थ्यताम् ।

व्याख्या—सः=रामः, मुहुः=वारं वारं, शूरान्=शूराऽभिमानिनः, आह्वास्त=स्पर्धया आहूतवान्, राक्षसान्=रक्षांसि (अपि), मुहुः=वारं वारम्, आह्वत=स्पर्धया आहूतवान्, हे सीताद्रुहः=हे सीताद्रोहिणः, एत=आगच्छत, सङ्ख्ये=युद्धे, राघवं=रामं, प्रत्यर्थयत=प्रत्यर्थिनं कुरुत ( योधयध्वमित्यर्थः ) ।

व्युत्पत्तिः—आह्वास्त='स्पर्धायामाङः' इत्यात्मनेपदे लुङ् । आह्वत='आत्मनेपदेष्वन्यतरस्याम्' इति विकल्पेनाङ् । एत=आङ्पूर्वात् 'इण् गतौ' इति धातोः कर्तरि लोटि थस्य तादेशः । सङ्ख्ये='मृधमास्कन्दनं सङ्ख्यं समीकं साम्परायिकम् ।' इत्यमरः । प्रत्यर्थयत=प्रत्यर्थिन्शब्दात् 'तत्करोति तदाचष्टे' इति ण्यन्तात् लोटि थस्य तादेशः, णाविष्ठवद्भावाट्टिलोपः । अर्थयतेस्तु ('अर्थ उपयाच्ञायाम्' इत्यस्य तु) नित्यात्मनेपदित्वम् ।

भावार्थः—रामो मुहुः शूरान् राक्षसानपि स्पर्धयाऽऽहूतवान्—'हे सीताद्रोहिणः ! आगच्छत, युद्धे मां प्रत्यर्थिनं कुरुत' इति ।

भाषार्थ —रामने बार बार शूरोंको और राक्षसोंको भी लड़नेके लिए ललकारा—'हे सीताद्रोहियो ! आओ, संग्राममें रामका मुकाबला करो' ।। २५ ।।

**स्वपोषमपुषद्युष्मान्या पक्षिमृगशावकाः ।**
**अद्युतच्चेन्दुना सार्धं तां प्रब्रूत गता यतः ।। २६ ।।**

अन्वय —हे पक्षिमृगशावकाः ! या युष्मान् स्वपोषम् अपुषत्, इन्दुना सार्धम् अद्युतच्च, तां प्रब्रूत यतो गता ।

प्रयोगप०—यया यूयम् अपुक्षध्वम्, अद्योति, सा प्रोच्यताम्, गतया (भूयते) ।

व्याख्या—हे पक्षिमृगशावकाः=हे विहगहरिणशिशवः, या=सीता, युष्मान्=भवतः, स्वपोषम् अपुषत्=स्वेन ( धनेन आत्मना वा ) पुष्टवती, इन्दुना=चन्द्रेण, सार्धं=समम्, अद्युतत्=द्योतते स्म ( इन्दुसाम्येन व्यद्योतिष्टेत्यर्थः ), तां=सीतां प्रब्रूत=कथयत, यतः=यत्र, गता=याता ( तत् स्थानं ब्रूतेत्यर्थः ) ।

व्युत्पत्तिः—पक्षिमृगशावकाः=पक्षिणश्च मृगाश्च पक्षिमृगाः ( द्वन्द्वः ) । तेषां शावकास्तत्सम्बोधने ( ष० त० ) । 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः ।' इत्यमरः । स्वपोषं=स्वेन पुष्ट्वा स्वपोषं, 'स्वे पुषः' इति णमुल् । अपुषत्=कषादित्वादनुप्रयोगः, पुष्पादित्वादङ् च । अद्युतत्='द्युद्भ्यो लुङि' इति विकल्पात्परस्मैपदं द्युतादित्वादङ् च । यतः=यस्मिन्निति यतः, आद्यादित्वात्तसिः ।

अन्वय —कृतकृत्यवत् अस्य उत्तम सत्त्वम् अतायि, अप्यायि। सरम्भिणः तस्य सामर्थ्यं महत् उपाचायिष्ट।

प्रयोगप०—उत्तमेन सत्त्वेन अतायि, अप्यायि। सामर्थ्येन महत् उपाचायि।

व्याख्या—कृतकृत्यवत्=कृतकर्तव्यस्य इव (सव कृतप्राय मन्यमानस्येत्यर्थ), अस्य=रामस्य, उत्तमम्=उत्कृष्ट, सत्त्व=बलम्, अतायि=सन्ततम् (अविच्छिन्नम्) अभूत्, अप्यायि=अवर्धिष्ट, सरम्भिण =सम्भ्रान्तस्य कुपितस्य वा, तस्य=रामस्य, सामर्थ्यम्=अन्त शक्ति, महत्=अधिकम्, उपाचायिष्ट=स्वयमेवोपाचायि (ववृध इत्यर्थ)।

व्युत्पत्ति —कृतकृत्यवत्=कृत कृत्य येन स कृतकृत्य (बहु०), तस्येव इति विग्रहे 'तत्र तस्येव' इति वतिप्रत्यय। अतायि, अप्यायि='तायृ सन्तानपालनयो 'ओप्यायी वृद्धौ' इति धातुभ्या कर्तरि लुङि 'दीपजन'त्यादिना च्लेश्चिणादेश। सरम्भिण =सरम्भ अस्याऽस्तीति सरम्भी, तस्य (इनि प्रत्य), 'सरम्भः सम्भ्रमे कोपे' इति विश्व। उपाचायिष्ट='चिञ् चयने' इति धातोर्लुङि 'अचः कर्मकर्तरि' इति कर्मकर्तरि च्लेश्चिणभावपक्षे सिचि चिण्वदिटि वृद्धि।

भावाऽर्थ —कृतकृत्यस्येव रामस्य बलमविच्छिन्नमभूत् अवर्धिष्ट च। कुपितस्य तस्य अन्त शक्तिरपि अधिक ववृधे।

भाषाऽर्थ —कृतकृत्य पुरुषकी तरह रामचन्द्रजीका बल अविच्छिन्न हुआ तथा बढा भी। क्रोधपूर्ण होनेसे उनकी अन्त शक्ति भी अधिक बढ गई ॥ ३३ ॥

**अदोहीव विषादोऽस्य समरुद्धेव विक्रम।**
**समभावि च कोपेन न्यश्वसीच्चायत मुहु ॥ ३४ ॥**

अन्वय —अस्य विषाद अदोहि इव, विक्रम समरुद्ध इव, कोपेन समभावि आयत न्यश्वसीच्च।

प्रयोगप०—विषादेन अदोहि, विक्रमेण समरोधि, कोप समभूच्च। (तेन) आयत न्यश्वासि च।

व्याख्या—अस्य रामस्य, विषाद =मन खेद, अदोहि इव=स्वयमेव दुग्ध इव (क्षरित इव), विक्रम =पराक्रम, समरुद्ध इव=स्वयमेवाऽवरुद्ध इव, कोपेन=क्रोधेन, समभावि च=सम्भूत च ('समतप्त च' इति मल्लिनाथसमत पाठस्तत्र अन्वतप्त च इत्यर्थ)। मुहु =वार वारम्, आयत=दीर्घं, न्यश्वसीच्च=निश्वसित-वाश्च (एतेन रौद्रस्थायिना क्रोधेन शोकस्तिरस्कृत)।

व्युत्पत्ति —अदोहि=दुह कर्मकर्तरि लुङि तङि 'दुहश्च' इति विकल्पात् च्लेश्चि-

घसेरद्देर्वा सन्नन्ताद्रुप्रत्ययः । अदेस्तु 'लुङ्सनोर्घस्लृ' इति सनि घस्लादेशः । आपादि='पद गतौ' इति धातोः कर्तरि लुङि 'चिण् ते पदः' इति च्लेश्चिणादेशे 'चिणो लुक्' इति तशब्दस्य लुक् ।

भावार्थ —हे लक्ष्मण ! अस्मिन् स्थाने छिन्नौ गृध्रपक्षौ पतितौ, विलोकय । अवश्यं निशाचरः सीताभक्षणेच्छोर्गृध्रस्येमं पक्षच्छेदं कृतवान् ।

भाषाऽर्थ—हे लक्ष्मण ! यहाँपर गृध्रके काट गये डैने फैले हुए हैं, देखो निश्चय ही सीताको खानेकी इच्छा करनेवाले गृध्रका यह पक्षच्छेद राक्षसका किया हुआ है ॥

**क्रुद्धोऽदीपि रघुव्याघ्रो रक्तनेत्रोऽजनि क्षणात् ।**
**अबोधि दुःस्थं त्रैलोक्यं दीप्तैरापूरि भानुवत् ॥ ३२ ॥**

अन्वय —रघुव्याघ्रः क्रुद्धः (सन्) अदीपि, क्षणात् रक्तनेत्रः अजनि, त्रैलोक्यं दुःस्थम् अबोधि, भानुवत् दीप्तैः आपूरि ।

प्रयोगप०—रघुव्याघ्रेण क्रुद्धेन अदीपि, रक्तनेत्रेण अजनि, त्रैलोक्यं दुःस्थम् अबोधि, आपूरि ।

व्याख्या—रघुव्याघ्रः = रघुश्रेष्ठः (रामः इत्यर्थः), क्रुद्धः = कुपितः (सन्), अदीपि=दिदीपे (क्रोधादग्निरिव जज्वालेत्यर्थः), क्षणात् = अल्पकालादेव, रक्तनेत्रः = अरुणनयनः, अजनि=जातः, त्रैलोक्यं = लोकत्रयं, दुःस्थं=दुरवस्थम्, अबोधि = बुद्धवान् (सर्वं संहनिष्यामीत्यमन्यतेत्यर्थः), भानुवत् = सूर्यवत्, दीप्तैः = दीप्तिभिः, आपूरि = आपूर्णः (स सूर्यवद् दुर्दर्शोऽभूदित्यर्थः)

व्युत्पत्ति —रक्तनेत्रः=रक्ते नेत्रे यस्य सः (बहु०) । अजनि='जनिवध्योश्च' इति चिणि वृद्धिप्रतिषेधः । त्रैलोक्यं=त्रयो लोकास्त्रैलोक्यं, चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ् । दुःस्थं=दुःखेन तिष्ठतीति 'आतश्चोपसर्गे' इति कर्तरि कप्रत्ययः । भानुवत्—भानुना तुल्यं, 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिः । दीप्तैः=भावे क्तः । सर्वत्र कर्तरि लुङि 'दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम्' इति च्लेश्चिणादेशे 'चिणो लुक्' इति तशब्दस्य लुक् ।

भावार्थ —रामः कोपेनाऽग्निरिव जज्वाल, रक्तनेत्रः सञ्जातः, त्रैलोक्यं दुःस्थं बुद्धवान्, एवं सूर्यवद् दुर्दर्शश्चाऽभूत् ।

भाषाऽर्थ —रामचन्द्रजी क्रुद्ध होकर अग्निकी तरह प्रज्वलित हुए, क्षणमात्रमें उनके नेत्र लाल हो गये । उन्होंने त्रैलोक्यका नाश करनेका विचार किया और वे सूर्यकी तरह तेज से पूर्ण हुए ॥ ३२ ॥

**अताप्यस्योत्तमं सत्त्वमध्यायि कृतकृत्यवत् ।**
**उपाचायिष्ट सामर्थ्यं तस्य संरम्भिणो महत् ॥ ३३ ॥**

**रिणच्मि जलधेस्तोय विविनच्मि दिव सुरान् ।**
**क्षुणद्मि सर्पान् पाताले छिनद्मि क्षणदाचरान् ॥ ३६ ॥**

अन्वय —जलधे तोय रिणच्मि, सुरान् दिव विविनच्मि, पाताले सर्पान् क्षुणद्मि, क्षणदाचरान् छिनद्मि ।

प्रयोगप०—( मया ) तोय रिच्यते, सुरा विविच्यन्ते, सर्पा क्षुद्यन्ते, क्षणदाचराश्छिद्यन्ते ।

व्याख्या—जलधे = समुद्रस्य, तोय = जल, रिणच्मि = रिक्तीकरोमि, सुरान् = देवान्, दिव = स्वर्गात्, विविनच्मि = पृथक्करोमि, पाताले = रसातले, सर्पान् = भुजङ्गान्, क्षुणद्मि = चूर्णयामि, क्षणदाचरान्=राक्षसान्, छिनद्मि=द्विधा करोमि ।

व्युत्पत्ति —रिणच्मि='रिचिर् विरेचने' इति धातोर्लट् । विविनच्मि='विचिर् पृथग्भावे' । क्षुणद्मि='क्षुदिर् सम्पेषणे' । छिनद्मि='छिदिर् द्वैधीकरणे' । सर्वत्र सामीप्ये वर्तमानप्रत्यय ।

भावार्थ —अह समुद्रस्य जल रिक्तीकरिष्यामि, देवान् स्वर्गादपनेष्यामि, पाताले सर्पान् चूर्णयिष्यामि, राक्षसान् छेत्स्यामि च ।

भाषाऽर्थ —मैं समुद्रको जलशून्य करूँगा, देवताओको स्वर्गसे हटाऊँगा, पातालमे सर्पोको चूर्ण-चूर्ण कर दूँगा और राक्षसोका छेदन करूँगा ॥ ३६ ॥

**यम युनज्मि कालेन समिन्धानोऽस्त्रकौशलम् ।**
**शुष्कपेष पिनष्म्युर्वीमखिन्दान स्वतेजसा ॥ ३७ ॥**

अन्वय —अस्त्रकौशल समिन्धानो यम कालेन युनज्मि, अखिन्दान स्वतेजसा उर्वी शुष्कपेष पिनष्मि ।

प्रयोगप०—समिन्धानेन ( मया ) यम युज्यते । अखिन्दानेन (मया) उर्वी शुष्कपेष पिष्यते ।

व्याख्या—अस्त्रकौशलम्=आयुधनैपुण्य, समिन्धान =दीपयन् ( सवर्धयन्नित्यर्थ ), यमम्=अन्तक, कालेन=मृत्युना, युनज्मि=सम्बध्नामि, अखिन्दान = अश्राम्यन् , स्वतेजसा=आत्मप्रतापेन, उर्वी=पृथ्वी, शुष्कपेष पिनष्मि=शुष्का कृत्वा चूर्णयामि ।

व्युत्पत्ति —अस्त्रकौशलम्=अस्त्रेषु कौशलमस्त्रकौशल, तत् ( स० त० ) । समिन्धान ='जिइन्धी दीप्तौ' इति धातोर्लट शानच् 'श्नान्नलोप' इति धातुनकारलोप 'श्नसोरल्लोप' इति प्रत्ययाऽकारलोप । अखिन्दान ='खिद दैन्ये' इति धातो. पूर्ववच्छानचि 'श्नसोरल्लोप' । स्वतेजसा=स्वस्य तेज स्वतेजस्तेन

णादेश । समरुद्ध=रुध कर्मकर्तरि लुङि तङि 'कर्मवत्कर्मणा तुल्यक्रिय' इति कर्म-वद्भावेन प्राप्तस्य चिल 'न रुध' इति प्रतिषेधे सिच् । सकारस्य 'झलो झलि' इति लोपे तङि स्थानिवद्भावान्न लघूपधगुण., 'झषस्तथोर्धोऽध' इति धत्वे 'झलां जश् झशि' इति जश्त्व च । समभावि='चिण् भावकर्मणो' इति भावे चिण । 'समतप्त' इति मल्लिनाथपाठे तपे कर्मकर्तरि 'तपोऽनुतापे च' इति चिण प्रति-षेध । 'झलो झलि' इति सलोप । न्यश्वसीत्='श्वस प्राणने' इति धातोर्लुङ् । 'ह्यचन्तक्षणश्वसजागृणिश्व्येदिताम्' इति वृद्धिनिषेध । 'तेन न्यश्वासि चायतम्' इति मल्लिनाथसमत पाठस्तत्र तेन=रामेण, आयत=दीर्घं, न्यश्वासि च=नि श्वसित चेत्यर्थ । श्वसेर्भावे लुङि 'चिण् भावकर्मणो.' इति च्लेश्चिणादेश ।

भावाऽर्थ —रामस्य मन खेद स्वयमेव प्रपूर्यते स्मेव, पराक्रम स्वय सरुध्यते स्मेव, क्रोध सञ्जात । स भूयो दीर्घं नि श्वसितवाश्च ।

भाषाऽर्थ —रामका विषाद जैसे स्वयम् ही पूर्ण हो गया, पराक्रम स्वयम् ही सरुद्ध हो गया, क्रोध समुत्पन्न हुआ और वे बार-बार लम्बी उसासे लेने लगे ॥३४॥

अथ श्नमधिकार ।

**अथाऽऽलम्ब्य धनू रामो जगर्ज गजविक्रम ।**
**रुणध्मि सवितुर्मार्गं भिनद्मि कुलपर्वतान् ॥ ३५ ॥**

अन्वय —अथ गजविक्रम राम धनु आलम्ब्य जगर्ज 'सवितु. मार्गं रुणध्मि कुलपर्वतान् भिनद्मि' ।

प्रयोगप०—गजविक्रमेण रामेण जगर्जे-'मार्गो रुध्यते, कुलपर्वता भिद्यन्ते' ।

व्याख्या—अथ=कोपोत्पत्त्यनन्तर, गजविक्रम =हस्तिविक्रम । राम =राम-चन्द्र , धनु =चापम्, आलम्ब्य=गृहीत्वा, जगर्ज=गर्जितवान् ( उच्चैर्बहु भीषणञ्च बभाषे इत्यर्थ ) । सवितु =सूर्यस्य, मार्ग=पन्थान, रुणध्मि=आवृणोमि, कुलपर्व-तान्=कुलाऽचलान् , भिनद्मि=विदारयामि ।

व्युत्पत्ति —गजविक्रम =गजस्येव विक्रमो यस्य स ( बहु० ) । रुणध्मि= 'रुधिर् आवरणे' इति धातोर्लटि मिपि 'रुधादिभ्य श्नम्' इति श्नम् । 'वर्तमान-सामीप्ये वर्तमानवद्वा' इति वर्तमानप्रत्यय । 'धनू राम' इत्यत्र 'रो रि' इति रेफलोपे 'ढ्रलोपे पूर्वस्य दीर्घोऽण' इति दीर्घत्वम् ।

भावाऽर्थ —ततो रामश्चाप गृहीत्वा जगर्ज—'अह सूर्यमार्गमावरिष्यामि महे-न्द्रादीन् कुलपर्वताश्च विदारयिष्यामि' इति ।

भाषाऽर्थ —तब हाथीकी तरह पराक्रमवाले रामचद्रजीने धनुप लेकर गर्जन किया 'मैं सूर्यका मार्ग रोक लूँगा और महेद्र आदि कुलपर्वतोका विदारण करूँगा' ॥३५॥

जन. ( एते जना इत्यर्थ , जातावेकवचनम् ), मा=राम, निष्पराक्रम=विक्रम-रहित, विन्ते=विचारयति, दाशरथि=राम , एवम्=इत्थम् , वदन्=गजन् , धनुषा=चापेन, शर=वाणम्, अपृणक्=अयुनक् ।

व्युत्पत्ति —तृणेह्नि='तृह हिंसायाम्' इति धातोलटि मिपि श्नमि 'तृणह इम्' इति इम् गुणश्च । लोक ='लोकस्तु भुवने जने ।' इत्यमर । निष्पराक्रम=निर्गन-पराक्रमो यस्मात् स निष्पराक्रमस्तम् ( बहु० ) । विन्ते='विद विचारणे' इति धातोर्लटि तङ् 'श्नसोरल्लोप' इत्यल्लोपष्टरेत्व च । अपृणक्='पृची सम्पर्के' इति धातोर्लङि तिपि श्नम् हल्ङ्याब्यादिलोपश्च ।

भावार्थ —'अह न मारयामि इति हेतोरय लोको मा पराक्रमशून्य विचार-यति' राम इत्थ गर्जन् कार्मुकेण शरसयोगमकरोत् ।

भाषार्थ—मै नही मारता हूँ, इस कारणसे लोग मुझको पराक्रमशून्य विचार करते है । इस तरह गर्जन करते हुए रामचन्द्रजीने धनुषबाणकी योजना की ॥३९॥

अथ पुन प्रकीर्णका ।

**न्यवर्तयत्सुमित्राभूस्त चिकीर्षु जगत्क्षयम् ।**
**तेज क्षात्र विवृण्वन्त दिधक्षन्तमिवाऽनलम् ॥ ४० ॥**

अन्वय —सुमित्राभू क्षात्र तेज विवृण्वन्त दिधक्षन्तम् अनलम् इव (स्थितम्) जगत्क्षय चिकीर्षु त न्यवर्तयत् (जयमङ्गलमते उत्तरार्द्धे 'ऐक्षेतामाश्रमादारादि्गरि-कल्प पतत्रिणम् ।' इत्थ पाठभेद । तत्र—तौ आश्रमात् आरात् गिरिकल्प पत-त्रिणम् ऐक्षेताम् इत्यन्वय ) ।

प्रयोगप०—सुमित्राभुवा विवृण्वन् दिधक्षन् अनल इव (स्थित ) चिकीर्षु स न्यवर्त्यत ।

व्याख्या—सुमित्राभू =लक्ष्मण , क्षात्र=क्षात्रस्य, तेज =प्रताप, विवृण्वन्त=पूर्वोक्तगर्जनेन प्रकटयन्त, दिधक्षन्त=दग्धुमिच्छन्तम्, अनलम् इव=अग्निम् इव ( स्थितम् ), जगत्क्षय=लोकसहार, चिकीर्षु=कर्तुमिच्छुम्, त=राम, न्यवर्तयत्=न्यवारयत् ।

व्युत्पत्ति —सुमित्राभू =सुमित्राया भवतीति, 'क्विप् च' इति क्विप् । क्षात्र=क्षत्रस्येद क्षात्रम्, तत् ( अण् ), दिधक्षन्त=दहे सन्नन्ताल्लट शत्रादेशो षत्वादि-कार्य च । जगत्क्षय=जगत क्षयो जगत्क्षयस्तम् ( ष० त० ) ।

भावार्थ —लक्ष्मण पूर्वगर्जनेन क्षत्रपराक्रम प्रकटयन्तमत एव दाहेच्छुक-मग्निमिव स्थित लोकसहार कर्तुमिच्छन्त राम निवारितवान् ।

भाषार्थ —लक्ष्मणने क्षत्रियप्रतापको प्रकट करनेवाले, अत एव दाह करने-के

( प० त० ) । शुष्कपेषं=शुष्कं पिष्ट्वा, 'पिष्लृ सञ्चूर्णने' इति धातो 'शुष्कचूर्ण-रूक्षेषु पिषः' इति कर्मण्युपपदे णमुल् कषादित्वादनुप्रयोगश्च ।

भावार्थः—अहमायुधनैपुण्यं मन्वयन्नन्तकमपि मृत्युपरवशं करिष्यामि । किमुताऽन्यम् । अश्रान्त्यन्नात्मप्रतापेन पृथ्वीमपि शुष्कां कृत्वा सञ्चूर्णयामि ।

भाषार्थ—मैं अस्त्रकौशलको बढ़ाता हुआ यमराजको भी मृत्युके अधीन कर दूँगा, श्रान्त होकर अपने प्रतापसे पृथ्वीको भी शुष्क करके चूर्ण कर दूँगा ॥३७॥

**भूतिं तृणेद्मि यक्षाणां हिनस्मीन्द्रस्य विक्रमम् ।**
**भनज्मि सर्वमर्यादास्तनच्मि व्योम विस्तृतम् ॥ ३८ ॥**

अन्वयः—यक्षाणां भूतिं तृणेद्मि, इन्द्रस्य विक्रमं हिनस्मि, सर्वमर्यादा भनज्मि, विस्तृतं व्योम तनच्मि ।

प्रयोगप०—( मया ) भूतिस्तृद्यते, विक्रमो हिंस्यते, सर्वमर्यादा भज्यन्ते, विस्तृतं व्योम तच्यते ।

व्याख्या—यक्षाणां=देवयोनिविशेषाणां, भूतिं=सम्पत्तिं ( कुबेरसम्पद-मित्यर्थः ), तृणेद्मि=हिनस्मि । इन्द्रस्य=शक्रस्य, विक्रमं=पराक्रमं, हिनस्मि=नाशयामि । सर्वमर्यादाः=सकलव्यवस्थाः, भनज्मि=मर्दयामि । विस्तृतं=विततं, व्योम=आकाशं, ('व्योमविस्तृतिम्' इति मल्लिनाथसम्मतः पाठस्तत्र आकाशमहत्ता-मित्यर्थः ), तनच्मि=सङ्कोचयामि ।

व्युत्पत्तिः—तृणेद्मि='उतृदिर् हिंसाऽनादरयोः' । हिनस्मि='हिसि हिंसा-याम्' । सर्वमर्यादाः=सर्वाश्च ता मर्यादाः सर्वमर्यादास्ताः (क० धा०) । भनज्मि='भञ्जो आमर्दने' तनच्मि='तञ्चू सङ्कोचने' । सर्वत्र वर्तमानसामीप्ये प्रत्ययः ।

भावार्थः—अहं कुबेरसम्पदमुत्सादयिष्यामि, इन्द्रपराक्रमं नाशयिष्यामि, व्यवस्था भङ्क्ष्यामि, आकाशं सङ्कोचयिष्यामि च ।

भाषार्थ—मैं कुबेरकी सम्पत्तिका और इन्द्रके पराक्रमका नाश करूँगा । सकल व्यवस्थाओंको भङ्ग करूँगा एवं विस्तृत आकाशको भी सङ्कुचित बनाऊँगा ॥ ३८ ॥

**न तृणेह्मीति लोकोऽयं मा विन्ते निष्पराक्रमम् ।**
**एवं वदन्दाशरथिरपृणग्धनुषा शरम् ॥ ३९ ॥**

अन्वयः—'न तृणेह्मि' इति 'अयं लोकः मां निष्पराक्रमं विन्ते' दाशरथिः एवं वदन् धनुषा शरम् अपृणक् ।

प्रयोगप०—( मया ) न तृह्यते, अनेन लोकेन अहं निष्पराक्रमो विद्ये, दाश-रथिना एवं वदता शरः अपचि ।

व्याख्या—न तृणेह्मि=न हन्मि, इति=अस्माद्धेतोः, अयम्=एषः, लोकः=

व्याख्या—हे राम=हे रामचन्द्र, मा आवधिष्ठा =मा वधी , मा=पुर स्थित, स्थिन, जटायु =जटायुनामक (त्वत्पितृसखमित्यर्थं विद्धीति शेष )। अह=जटायु, सीता=मैथिलीम्, ऐक्षिषि-अद्राक्षम्, एवम्=इत्थम्, ( तेन=जटायुना ) उक्ते= कथिते, राघव -राम , पितु =तातस्य ( दशरथस्येत्यर्थ ), सखाय=मित्र, त= जटायुन, उपास्थित=सगत ।

व्युत्पत्ति —मा आवधिष्ठा =आङ्पूर्वाद्धन्तेरकर्मकात् 'आङो यमहन ' इत्यात्मनेपदम् 'आत्मनेपदेष्वन्यतरस्याम्' इति वधादेश । 'हिसार्थो वधिरय प्रकृत्यन्तरमि'ति पक्षेऽप्यात्मनेपद चिन्त्यम् ( तादृशधात्वनुपलब्धे )। 'मा बाधिष्ठा' इति पाठान्तरकल्पन च साहसमेव । 'मा बन्धिष्ठा' इति जयमङ्गलाकारकल्पितपाठस्तु पापिष्ठ , बध्नाते ( 'बन्ध बन्धने' इति धातो ) अनात्मनेपदित्वादर्थविरोधाच्चेति महोपाध्यायो मल्लिनाथ । ऐक्षिषि=ईक्षते कर्तरि लुङि तङि सिच इट् । उपास्थित= 'उपाद् देवपूजासगतिकरणमित्रकरणपथिष्विति वाच्यम्' इति सगतिकरण आत्मनेपदम् । 'स्थाघ्वोरिच्च' इतीत्व 'ह्रस्वादङ्गात्' सिचो लोप ।

भावार्थ —'हे राम ! मा जहि, मा स्वपितृसख जटायुष जानीहि, अह सीतामपश्यम्' इति तेन पक्षिणोक्ते सति राम स्वपितु सखाय त जटायुष सगत ।

भाषार्थ —'हे राम ! मत मारो, मुझे अपने पिताका मित्र जटायु जानो।' उक्त पक्षीके ऐसा कहनेपर रामचन्द्रजी अपने पिताके मित्र जटायुसे मिले ॥ ४२ ॥

**ततो रावणमारयाय द्विषन्त पतता वर ।**
**व्रणवेदनया ग्लायन्ममार गिरिकन्दरे ॥ ४३ ॥**

अन्वय —तत पतता वर रावण द्विषन्तम् आख्याय व्रणवेदनया ग्लायन् गिरिकन्दरे ममार ( जयमङ्गले तु उत्तरार्द्धस्य पूर्वार्द्धे पाठ उत्तरार्द्धे तु 'तस्याऽन्त्यम्बुक्रिया कृत्वा प्रतस्थाते पुनर्वनम् ।' एतादृश पाठ )।

प्रयोगप०—पतता वरेण ग्लायता मम्रे ।

व्याख्या—तत =रामसमागमाऽनन्तर, पतता=पक्षिणा, वर =श्रेष्ठ ( जटायुरित्यर्थ ), रावण=दशानन, द्विषन्त=द्रोहिणम् ( सीताहर्तारमित्यर्थ ), आख्याय= कथयित्वा, व्रणवेदनया=प्रहारव्यथया, ग्लायन्=म्लायन्, गिरिकन्दरे=दर्यां, ममार=मृत ।

व्युत्पत्ति —द्विषन्त=द्वेष्टीति द्विषन्, त 'द्विषोऽमित्रे' इति शतृप्रत्यय । व्रणवेदनया=व्रणस्य वेदना व्रणवेदना, तया (प० त०)। ग्लायन्=ग्लायतीति, 'ग्लै हर्षक्षये' इति धातो शतरि शपि 'आदेश उपदेशेऽशिति' इत्यात्त्वाऽभावात्

इच्छा करनेवाले अग्निकी तरह स्थित और लोकत्रय कन्नेको इच्छुक रामने दृष्टी-को रोका ॥ ८० ॥

**ऐक्षेतामाश्रमादाराद् गिरिकल्पं पतत्रिणम् ।**
**तं सीताघातिनं मत्वा हन्तुं रामोऽभ्यधावत ॥ ४१ ॥**

अन्वयः—( तौ ) आश्रमात् आरात् गिरिकल्पं पतत्रिणम् ऐक्षेताम्, रामः तं सीताघातिनं मत्वा हन्तुम् अभ्यधावत । ( जयमङ्गलमते उत्तरार्द्धस्य पूर्वार्द्धे पाठः, उत्तरार्द्धे तु 'मा वधिष्ठा जटायुं मा सीता रामाऽहमैक्षिषि' एतादृशः पाठः )।

प्रयोगः—( ताभ्याम् ) गिरिकल्पः पतत्री ऐक्ष्यत । रामेण अभ्यधाव्यत ।

व्याख्या—( तौ=रामलक्ष्मणौ ) आश्रमात् आरात्=आश्रमस्य समीपे, गिरि-कल्पं=पर्वतसदृशं, पतत्रिणं=पक्षिणम् ( जटायुषमित्यर्थः ), ऐक्षेताम्=अपश्यताम् । रामः=रामचन्द्रः, तं=जटायुषं, सीताघातिनं=मैथिलीघातकं, मत्वा=विचार्य, हन्तुं=मारयितुम्, अभ्यधावत=वेगेन अभिमुखं गतवान् ।

व्युत्पत्तिः—आश्रमात्='आरात्' इति पदेन योगे पञ्चमी । गिरिकल्पम्=ईषद-समाप्तो गिरिर्गिरिकल्पस्तम्, 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' इति कल्पप्प्रत्ययः । सीताघातिनं=सीतां हतवानिति सीताघाती तं 'कर्मणि हनः' इति हन्तेः कुत्सि-तार्थे भूते णिनिः । स्त्रीवधस्य निन्दितत्वादिति । हन्तुं='तुमुण्ण्वुलौ क्रियायां क्रिया-र्थायाम्' इति तुमुन् । अभ्यधावत=अभिपूर्वात् 'धावु गतिशुद्ध्योः' इति धातोर्लङि स्वरितेत्त्वादात्मनेपदम् ।

भावार्थः—राघवौ आश्रमसमीपे पर्वतसमं पक्षिराजं जटायुषमपश्यताम् । रामः 'अनेन सीता हता' इति मत्वा तं हन्तुं वेगेनाऽभिमुखं गतवान् ।

भाषार्थ—राम और लक्ष्मणने आश्रमके समीपमें पक्षिराज जटायुको देखा । राम उन्हें सीताका हत्यारा समझकर मारनेके लिए वेगपूर्वक सम्मुख गये ॥ ४१ ॥

**माऽऽवधिष्ठा जटायुं मां सीतां रामाऽहमैक्षिषि ।**
**उपास्थितैवमुक्ते तं सखायं राघवः पितुः ॥ ४२ ॥**

अन्वयः—'हे राम ! मा आवधिष्ठाः, मां जटायुं ( विद्धि ), अहं सीताम् ऐक्षिषि' एवम् उक्ते राघवः पितुः सखायं तम् उपास्थित ( जयमङ्गलमते तु उत्तरार्द्धस्य पूर्वार्द्धे पाठः । उत्तरार्द्धे तु 'प्रपच्छ जानकीवार्तां सग्रामं च पतत्रिणम् । ततो रावणमाख्याय द्विपन्तं पततां वरः ॥' एतादृशः पाठः ) ।

प्रयोगः—मा अवधि, अहं जटायुः ( विद्यै ), मया सीता ऐक्षि, राघवेण सखा स उपास्थायि ।

बाहुना=आयतभुजेन (योजनबाहुनेत्यर्थः), रक्षसा=राक्षसेन ( कबन्धनामकेनेत्यर्थ ) तौ=रामलक्ष्मणा, जगृहाते=गृहीता ( युगपद् गृहीतावित्यर्थ )।

व्युत्पत्ति —'सत्त्वान्=सत्त्वमस्त्री तु जन्तुषु' इत्यमर । वनाकर्ष–'अपादाने परीप्सायाम्' इति णमुल् । परीप्सा त्वरा । 'बलाऽपकर्षमश्नता' इति जयमगलसमत पाठस्तत्र बलादाकृष्येव=पाकादिकमनपेक्ष्येत्यर्थ । दीर्घबाहुना–दीर्घौ बाहू यस्य तत् दीर्घबाहु तेन ( बहु० )।

भावार्थ —बुभुक्षमाणेन नित्य जन्तून् त्वरया आकृष्य भक्षयता भयकरेण योजनबाहुना कबन्धनामकेन राक्षसेन रामलक्ष्मणा युगपद् गृहीतो ।

भाषार्थ —भूखे, नित्य जन्तुओको वनसे त्वरापूर्वक खीचकर खानेवाले भयकर और दीर्घ बाहुवाले कबन्धनामक राक्षसने उन दोनोको एक ही बार पकड़ लिया ॥ ४५ ॥

**भुजौ चकृततुस्तस्य निस्त्रिशाभ्या रघूत्तमौ ।**
**स च्छिन्नबाहुरपतद्विह्वलो ह्वलयन् भुवम् ॥ ४६ ॥**

अन्वय —रघूत्तमौ तस्य भुजौ निस्त्रिशाभ्या चकृततु , छिन्नबाहु. स विह्वळ ( सन् ) भुव ह्वलयन् अपतत् ।

प्रयोगप०—रघूत्तमाभ्या भुजौ चकृताते, छिन्नबाहुना तेन विह्वलेन ( सता ) ह्वलयता अपत्यत ।

व्याख्या—रघूत्तमौ=रामलक्ष्मणौ, तस्य=कबन्धस्य, भुजो=बाहू, निस्त्रिशाभ्या=खड्गाभ्या, चकृततु =छिन्नवन्तौ । छिन्नबाहु =कृत्तभुज , स =कबन्ध , विह्वल = विक्लव ( सन् ), भुव=भूमिं, ह्वलयन्=कम्पयन् , अपतत्=पतित ।

व्युत्पत्ति —रघूत्तमौ–रघुषु ( लक्षणया रघुवश्येषु ) उत्तमौ ( स० त० )। निस्त्रिशाभ्या–त्रिशत ( अगुलिभ्य ) निष्क्रान्तौ निस्त्रिशौ, ताभ्या, 'निरादय क्रान्ताद्यर्थे पञ्चम्या' इति समास । 'सख्यायास्तत्पुरुषस्य वाच्य' इति डच् । त्रिशदगुल्यधिकस्यैव खड्गत्व, ततो न्यूनत्वे छुरिका स्यात् । चकृततु ='कृती छेदने' इति धातोर्लिटि तसोऽतुसादेश । छिन्नबाहु =छिन्नौ बाहू यस्य स (बहु०) । ह्वलयन्=ह्वलयतीति, 'ह्वल चलने' इति चौरादिकाद्धातोर्लट शत्रादेश । घटादित्वेन मित्त्वात् ह्रस्व ।

भावार्थ —रामलक्ष्मणौ कबन्धस्य बाहू खड्गाभ्या छिन्नवन्ता । सोऽपि कृत्तबाहु. सन् विह्वलो भूत्वा पृथिवी कम्पयन् पतित ।

भाषार्थ —राम और लक्ष्मणने कबन्धके बाहुओको खड्गसे काट डाला । वह भी छिन्नबाहु होनेसे विह्वल होकर पृथ्वीको कम्पित करता हुआ गिर पडा ॥४६॥

आयादेश । ममार='मृङ् प्राणत्यागे' इति धातोर्लिटि 'म्रियतेर्लुङ्लिङोश्च' इति नियमान्न तङ् ।

भावार्थ —ततो जटायुः 'हे राम ! रावणः सीतापहारकोऽस्ति' इति कथयित्वा प्रहारव्यथया ग्लानः सन् पञ्चत्वं गतः ।

भाषार्थ —तब पक्षिश्रेष्ठ जटायुने 'हे राम ! रावण ही सीताजीका अपहरण करनेवाला है' ऐसा कहकर प्रहारकी वेदनासे ग्लानियुक्त होकर पर्वतकी गुफामे शरीरत्याग किया ॥ ४३ ॥

**तस्याऽग्न्यम्बुक्रिया कृत्वा प्रतस्थाते पुनर्वनम् ।**
**विषादमीयिवासौ तौ विचिन्वानावितस्ततः ॥ ४४ ॥**

अन्वय —तौ तस्य अग्न्यम्बुक्रिया कृत्वा विषादम् ईयिवासौ पुनः इतस्ततः विचिन्वानौ वनं ( प्रति ) प्रतस्थाते ।

प्रयोगप०—ताभ्याम् ईयिवद्भ्यां विचिन्वानाभ्यां वनं ( प्रति ) प्रतस्थे ।

व्याख्या—तौ=रामलक्ष्मणौ, तस्य=जटायुषः, अग्न्यम्बुक्रिया कृत्वा=अग्निदाहमुदकदानं च कृत्वा, विषाद=खेदम्, ईयिवासौ=प्राप्तौ, पुनः=भूयः, इतस्ततः= यत्र तत्र, विचिन्वानौ=अन्विष्यन्तौ ( सीतामिति शेषः ), वनं=काननं ( प्रति ), प्रतस्थाते=प्रस्थितौ ।

व्युत्पत्ति —अग्न्यम्बुक्रियाम्=अग्निश्च अम्बु च अग्न्यम्बुनी ( द्वन्द्वः ), तयोः क्रिया अग्न्यम्बुक्रिया, ताम् ( ष० त० )। ईयिवासौ='उपेयिवाननाश्वाननूचानश्च' इति क्वसुप्रत्ययान्तो निपातः । प्रतस्थाते=प्रपूर्वात्तिष्ठतेर्लिट्, 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् ।

भावार्थ —रामलक्ष्मणौ जटायुषोऽग्निदाहमुदकदानं च कृत्वा विषण्णौ भूत्वा भूयो यत्र तत्र सीतां गवेषयन्तौ ( सन्तौ ) वनं प्रति प्रस्थितौ ।

भाषार्थ —राम और लक्ष्मण दाहपूर्वक जटायुको जलदानकर खिन्न होकर यत्र तत्र सीताको ढूँढते हुए वनमे चले ॥ ४४ ॥

**सत्त्वानजस्रं घोरेण वनाकर्षं समश्नता ।**
**क्षुध्यता जगृहाते तौ रक्षसा दीर्घबाहुना ॥ ४५ ॥**

अन्वय —क्षुध्यता अजस्रं सत्त्वान् वनाकर्षं समश्नता घोरेण दीर्घबाहुना रक्षसा तौ जगृहाते ।

प्रयोगप०—क्षुध्यत् समश्नत् घोरः दीर्घबाहुः रक्षः तौ जग्राह ।

व्याख्या—क्षुध्यता=बुभुक्षमाणेन, अजस्रं=नित्यं, सत्त्वान्=जन्तून्, वनाकर्षं=वनात् त्वरया आकृष्य, समश्नता=भुञ्जानेन, घोरेण=भयंकरेण, दीर्घ-

प्रकारेण, सह्य =सोढव्य ? एतम्=सर्वं, त्वया=भवता, मम=रामस्य, गद्य= वाच्यम् ( कस्त्व ? किमर्थं च ते राक्षसत्व ? कथ च तद्विमोक्ष इत्यादि प्रश्नान्तरमप्युत्तरानुसाराद्दूह्यम् ) ।

व्युत्पत्ति —लभ्या=लब्धु योग्या, 'डुलभष् प्राप्ता' इति धातो 'पोरदुपधात्' इति यत्प्रत्यय । शक्य , सह्य ='शकिसहोश्च' इति यत्प्रत्यय । गद्य='गदमदचरयमश्चाऽनुपसर्गे' इति यत् ।

भावार्थ —'सीता मया कथ प्राप्तव्या ? रावण कथ द्रष्टु शक्नुयाम् ? सीताविरहश्च कथ सोढव्य ? एतत् सव त्व कथये'ति रामस्त पप्रच्छ ।

भाषार्थ.—'मुझे सीता कैसे मिलेगी ? शत्रु रावणको कैसे देखूँगा ? सीताका विरह कैसे सहूँगा ? यह सब आप मुझे बताइये' रामने उससे ऐसा पूछा ॥४८॥

**'अह राम ! श्रिय पुत्रो मद्यपीत इव भ्रमन् ।**
**पापचर्यो मुने शापाज्जात' इत्यवदत्स तम् ॥ ४९ ॥**

अन्वय —'हे राम ! अह श्रिय पुत्र , मद्यपीत इव भ्रमन् मुने शापात् पापचर्य जात ' इति स तम् अवदत् ।

प्रयोगप०—'मया पुत्रेण मद्यपीतेन इव भ्रमता पापचर्येण जातम्' तेन स औद्यत ।

व्याख्या—हे राम=हे राघव, अह, श्रिय =श्रीनाम्नो दानवस्य, पुत्र = आत्मज , मद्यपीत इव=पीतमदिर इव, भ्रमन्=पर्यटन् ( ऐश्वर्यमदात् भ्रान्त सन्नित्यर्थ ), मुने =ऋषे ( स्थूलशिरोनामकस्येत्यर्थ ), शापात्=दुरेषणाया , पापचर्य =क्रूरकर्मा, जात =सवृत्त , इति=इत्थ, स =कबन्ध , त रामम्, अवदत्=अकथयत् ।

व्युत्पत्ति —मद्यपीत =माद्यन्ति अनेनेति मद्य, 'कृत्यल्युटो बहुलम्' इति करणार्थे यत्प्रत्यय । पीत मद्य येन स ( बहु० ), 'वाहिताग्न्यादिषु' इति निष्ठान्तस्य परनिपात । शापात्='शापाक्रोशौ दुरेषणा' इत्यमर । पापचर्य = चरितु योग्य चर्यं 'गदमदे'त्यादिना यत् । पापं चर्यं यस्य स ( बहु० ) ।

भावार्थ –'हे राम ! अह श्रीनामकस्य दानवस्य पुत्र ऐश्वर्यमदादन्यायवर्ती सन् स्थूलशिरोनामकस्य मुने शापात् क्रूरकर्मा जात' इति स कबधो राम प्रत्यब्रवीत् ।

भाषार्थ —'हे राम ! मै श्रीनामक दानवका पुत्र, ऐश्वर्यके मदसे मद्यपान किये हुए पुरुषकी तरह घूमता हुआ स्थूलशिरा नामके मुनिके शापसे क्रूरकर्म करनेवाला हो गया' कबन्धने रामको ऐसा कहा ॥ ४९ ॥

**तव प्रयातो यम्यत्व शस्त्रपूतो ब्रवीमि ते ।**
**सीता लङ्का नीता सुराऽरिणा ॥५० ॥**

अथ कृत्याऽधिकारः ।

**प्रष्टव्यं पृच्छतस्तस्य कथनीयमवीवचत ।**
**आत्मानं वनवासं च जेयं चार्ऽरिं रघूत्तमः ॥ ४७ ॥**

अन्वयः—रघूत्तमः प्रष्टव्यं पृच्छतः तस्य कथनीयम् आत्मानं वनवासं जेयम् अरिं च अवीवचत् ।

प्रयोगप०—रघूत्तमेन कथनीय आत्मा वनवासो जेयोऽरिश्च अवाचि ।

व्याख्या—रघूत्तमः=रामः, प्रष्टव्यं=प्रश्नाऽर्हं ( कस्त्वं, किं वृत्तं, किं कार्यं चेत्याकारकम् ), पृच्छतः=अनुयुञ्जानस्य तस्य=देवभूयं गतस्य, कबन्धस्य, कथनीयं=वक्तव्यम्, आत्मानं=स्वं ( रामं, दाशरथिमित्यर्थः ), वनवासम्=अरण्यवासं ( पित्रादेशादिति भावः ), जेयं=जेतव्यम्, अरिं च=शत्रुं च, अवीवचत्=अवोचत् ।

व्युत्पत्तिः—अथ कृत्याऽधिकारः । कृत्याश्च प्राङ्ण्वुलीयास्तव्यादयः । प्रष्टव्यं=प्रष्टुं योग्यं प्रष्टव्यं, तत् 'तव्यत्तव्याऽनीयरः' इति तव्यत् तव्यो वा । स्वरे भेदः । 'व्रश्चे'त्यादिना षत्वे ष्टुत्वम् । कथनीयं=कथयितुं योग्यं कथनीयं, तत् ( पूर्वसूत्रेणैव अनीयर् ) । जेयं=जेतुं योग्यो जेयस्तम्, 'अचो यत्' इति यत्प्रत्ययः । अवीवचत्='वच परिभाषणे' इति चौरादिकाद्धातोः स्वार्थण्यन्ताण्णौ चङ्युपधाह्रस्वः ।

भावार्थः—रामचन्द्रः परिचयादिकं पृच्छतो देवत्वं गतस्य तस्य कबन्धस्य स्वस्य नाम, पितुरादेशाद्वनवासं, जेतव्यं रावणं च सर्वं कथनीयमकथयत् ।

भाषार्थः—रामचन्द्रजीने परिचय आदि पूछनेवाले और देवभावको पानेवाले उस कबन्धसे अपना नाम, पिताकी आज्ञासे वनवास और जेतव्य शत्रुका वृत्तान्त आदि बहुत कुछ कहा ॥ ४७ ॥

**'लभ्या कथं नु वैदेही शक्यो द्रष्टुं कथं रिपुः ।**
**सह्यः कथं वियोगश्च गद्यमेतत्त्वया मम' ॥ ४८ ॥**

अन्वयः—'वैदेही कथं नु लभ्या ? रिपुः कथं द्रष्टुं शक्यः ? वियोगश्च कथं सह्यः ? एतत् त्वया मम गद्यम्' ।

प्रयोगप०—वैदेहीं कथं लभेय, रिपुं द्रष्टुं शक्नुयाम्, वियोगं सहेय, एतत् त्वं मम गदेः' ।

व्याख्या—वैदेही=सीता, कथं नु=केन प्रकारेण नु, लभ्या=प्राप्या ? रिपुः=शत्रुः ( हरिरिति मल्लिनाथसम्मतः पाठस्तत्र सुग्रीव इत्यर्थः ), कथं=केन प्रकारेण, द्रष्टुं=विलोकयितुं, शक्यः=शकनीयः ? । वियोगश्च=सीताविरहश्च, कथं=केन

नञ्पूर्वात् 'वद सुपि क्यप् च' इति यत्क्यपो प्राप्तयोर्यदेव, सोऽपि गर्ह्यायामेवेति उभयाऽर्थम् 'अवद्यपण्यवर्या गर्ह्यपणितव्याऽनिरोधेषु' इति सूत्रेण निपातनम्। अविद्यमानमवद्यं यस्य स (नञ्बहु०)। पण्यभ्रातृवध ='पण्य' इत्यत्र 'पण व्यवहारे' इति धातो, पूर्वसूत्रेण पणितव्याऽर्थे यत्प्रत्ययान्तो निपात । भ्रातु (स्वदारहरस्याऽऽततायिनो) वधो भ्रातृवध (ष० त०), पण्य (त्वया प्रत्युपकारेण विनिमेतव्य ) भ्रातृवधो यस्य स ( बहु० ), 'नाऽऽततायिवधे दोषो हन्तुर्भवति कश्चन।' इति स्मरणादिति भाव । चारुविक्रम =चारुर्विक्रमो यस्य स ( बहु० )। वर्य ='वृङ सम्भक्तौ' इति धातो पूर्वसूत्रेणैव अनिरोधेऽर्थे ण्यदपवादी यत्प्रत्ययान्तो निपात । किन्तु स्त्रियामस्य निपातनात्पुंसि प्रयोग कवे स्वातन्त्र्यात् इति मल्लिनाथ ।

भावाऽर्थ —ऋष्यमूकपर्वते निष्पापो व्यवहार्यवालिवध सुग्रीवाऽऽख्यो वानरोऽस्ति, अमुना सह भवता मैत्री कार्या।

भाषाऽर्थ —ऋष्यमूक पर्वतसे निष्पाप, सीताके अन्वेषणके लिए बालिवधसे व्यवहारके योग्य, सुग्रीव नामके वानर हे, आपको प्रशसनीय पराक्रमवाले उनके साथ मैत्री करनी चाहिए ॥ ५१ ॥

**तेन वह्येन हन्तासि त्वमर्यं पुरुषाशिनाम्।**
**राक्षस क्रूरकर्माण शक्रारिं दूरवासिनम्॥ ५२॥**

अन्वय —(हे राम!) त्व वह्येन तेन पुरुषाऽशिनाम् अर्यं क्रूरकर्माण शक्रारिं दूरवासिन राक्षस हन्तासि।

प्रयोगप०—त्वया अर्य क्रूरकर्मा शक्रारिर्दूरवासी राक्षसो हन्ता।

व्याख्या—( हे राम ! ) त्व=भवान्, वह्येन=सहायभूतेन, तेन=सुग्रीवेण, पुरुषाऽशिना=मनुष्यभक्षकाणाम् ( राक्षसानामित्यर्थ ), अर्यं=स्वामिन ( बेलाऽधिकमित्यर्थ ), क्रूरकर्माण=भयङ्करक्रिय ( निष्करुणमित्यर्थ ), शक्राऽरिम्=इन्द्रशत्रु ( अप्रतिद्वन्द्विनमित्यर्थ ), दूरवासिन=विप्रकृष्टदेशवासिन ( समुद्रवर्तितया दुरासदमित्यर्थ ), राक्षस=रक्ष , हन्तासि=हनिष्यसि ( दुर्धर्षमपि राक्षसराज सुग्रीवसाहाय्येन हनिष्यसीत्यर्थ )।

व्युत्पत्ति —वह्येन=वहन्त्यनेनेति वह्य, 'वह्य करणम्' इति ण्यदपवादेन यत्प्रत्ययान्तो निपात । पुरुषाऽशिना=पुरुषानश्नन्तीति तच्छीला पुरुषाऽशिनस्तेषा, ताच्छील्ये णिनिरुपपदसमासश्च । अर्यम्='ऋ गतौ' इत्यस्माद्धातो 'अर्य स्वामिवैश्ययो' इति यत्प्रत्ययाऽन्तो निपात । क्रूरकर्माण=क्रूर कर्म यस्य स क्रूरकर्मा, तम् (बहु०)। हन्तासि=हन्तेर्लुटि सिपि 'स्यतासी लृलुटो' इति तास्प्रत्यय ।

भावाऽर्थ —हे राम ! भवान् सुग्रीवसाहाय्येन नरभक्षकाऽधिप दारुणाऽऽचार देवेन्द्रशत्रु दूरवासिन रावण हनिष्यति।

अन्वय --( सम्प्रति ) तव यम्यत्व प्रयात शस्त्रपूत ते ब्रवीमि--सुरारिणा रावणेन सीता हृता लङ्का नीता ( च ) ।

प्रयोगप०---प्रयातेन शस्त्रपूतेन उच्यते, सुरारी रावण सीता हृतवान्, लङ्का नीतवान् ( च ) ।

व्याख्या---( सम्प्रति=अधुना ) तव=भवत , यम्यत्व=दण्डनीयत्व, प्रयात = प्राप्त , शस्त्रपूत =त्वदस्त्रप्रयत ( सन् ), ते=तुभ्य, ब्रवीमि=कथयामि ( सर्वं स्पष्ट कथयामीत्यर्थ. ) । सुराऽरिणा=देवशत्रुणा, रावणेन=दशकण्ठेन, सीता=मैथिली, हृता=अपहृता, लङ्का=स्वनगरी, नीता=प्रापिता ( च ) ।

व्युत्पत्ति ---यम्यत्व=यन्तु योग्यो यम्य , 'गदमदे'त्यादिना यत् । यम्यस्य भावो यम्यत्व, तत् ( त्वप्रत्यय ), शस्त्रपूत =शस्त्रेण पूत ( तृ० त० ), निष्पाप. सन्नित्यर्थ । 'राजभि कृतदण्डास्तु कृत्वा पापानि मानवा । निर्मला स्वर्गमायान्ति सन्त सुकृतिनो यथा ॥' इति मनुस्मरणादिति भाव । ते=युष्मच्छब्दस्य चतुर्थ्येकवचनस्य 'तेमयावेकवचनस्य' इति तयादेश । क्रियायोगे चतुर्थी । नीता= 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् ।' इति तत्रैव क्त ।

भावाऽर्थ ---अधुना तव दण्डनीयत्वेन शस्त्रप्रयतो भूत्वा सर्वं स्पष्ट कथयामि-रावण सीता हृत्वा लङ्का नीतवान् ।

भाषाऽर्थ ---अभी आपके दण्डनीय होनेसे शस्त्रप्रहारसे पापशून्य होकर सब कुछ स्पष्ट कहता हूँ---देवताओंका शत्रु रावण सीताको अपहरणकर लङ्कामे ले गया ॥ ५० ॥

**ऋष्यमूकेऽनवद्योऽस्ति पण्यभ्रातृवध कपि ।**
**सुग्रीवो नाम वर्योऽसौ भवता चारुविक्रम ॥ ५१ ॥**

अन्वय ---ऋष्यमूके अनवद्य पण्यभ्रातृवध सुग्रीव नाम कपि अस्ति । चारुविक्रम असौ भवता वर्य ।

प्रयोगप०---अनवद्येन पण्यभ्रातृवधेन सुग्रीवेण कपिना भूयते । चारुविक्रमम् अमुम् भवान् वृणुयात् ।

व्याख्या---ऋष्यमूके=ऋष्यमूकपर्वते, अनवद्य =अगर्ह्य ( निष्पाप इत्यर्थः ) पण्यभ्रातृवध =विनिमेतव्यवालिवध , सुग्रीवो नाम=सुग्रीवनाम्ना प्रसिद्ध , कपि = वानर , अस्ति=वर्तते । चारुविक्रम =श्लाघ्यपराक्रम (प्रत्युपकारसमर्थ इति भाव ) असौ=सुग्रीव , भवता=त्वया, वर्य =मित्रत्वेनाऽप्रतिबन्ध वरणीय. ।

व्युत्पत्ति ---सीतावृत्तान्तमुक्त्वा सुग्रीवसमागमोपाय ब्रुवन् 'अवद्यपण्ये'-त्यादिनिपातत्रय क्रमेणोदाहरति । अनवद्य=वदितुमनर्हमवद्यम् । ( पापम् ) वदे-

'अजर्यं सङ्गतम्' इति सङ्गतविषये जीर्यतेनञ्पूर्वात्कर्तरि यत्प्रत्ययान्तो निपात । सङ्गत=भावे क्त । 'अजर्यं नोऽस्तु सङ्गतम्' । 'अजरिता कम्बल' इति वृत्तौ उदाहरणप्रत्युदाहरणयोर्विशेषणविशेष्यभावाऽवगमात् अजर्यं सङ्गतमिति तथैव प्रत्युक्तम् । कालिदासेन तु पर्यायित्वदृष्ट्या 'मृगैरजर्यं जरसोपदिष्टमदेहबन्धाय पुनर्वबन्ध' इति वैकल्प्येन प्रयुक्तम् । अथवा तत्राऽपि सङ्गतमिति विशेष्यमध्याहार्यम् । पाप='नृशसो घातुक क्रूर पाप' इत्यमर । दशग्रीव=दश ग्रीवा यस्य स दशग्रीवस्तम् (बहु०) । हनिष्यसि='ऋद्धनो स्ये' इति लट् ।

भावार्थ —हे राम ! सङ्गत्यर्हेण सुग्रीवेण स्थिरतर सख्य कुरु, तत्सङ्गत्या लकामासाद्य क्रूर रावण व्यापादयिष्यसि ।

भाषार्थ —सङ्गति करनेके लायक सुग्रीवके साथ स्थिरतर मैत्री कीजिए, उसीसे आप लङ्कामे पहुँच कर रावणको मारेगे ॥ ५४ ॥

**अनृतोद्य न तत्राऽस्ति, सत्यवद्य ब्रवीम्यहम् ।**
**मित्रभूय गतस्तस्य रिपुहत्या करिष्यसि ॥ ५५ ॥**

अन्वय —तत्र अनृतोद्य न अस्ति, अह सत्यवद्य ब्रवीमि, तस्य मित्रभूय गत ( सन् ) रिपुहत्या करिष्यसि ।

प्रयोगप०—अनृतोद्येन न भूयते, मया सत्यवद्यमुच्यते, गतेन ( त्वया ) रिपुहत्या करिष्यते ।

व्याख्या—तत्र=सुग्रीवे, अनृतोद्यम्=अनृतवचन, न अस्ति=न वर्तते, अह, सत्यवद्य=सत्यवचन, ब्रवीमि=कथयामि । तस्य=सुग्रीवस्य, मित्रभूय=मित्रत्व, गत=प्राप्त ( सन् ), रिपुहत्या=शत्रुवध ( रावणवधमित्यर्थ ), करिष्यसि=विधास्यसि ।

व्युत्पत्ति —अनृतोद्यम्=अनृतवचनम्, 'वद सुपि क्यप् च' इति भावे क्यपि यजादित्वात्सम्प्रसारणम् । सत्यवद्य=सत्यस्य वदन, पूर्वसूत्रेणैव चकाराद्यत् । मित्रभूय=मित्रस्य भावो मित्रभूय, तत् 'भुवो भावे' इति क्यप् । रिपुहत्या=रिपोर्हनन रिपुहत्या, ता 'हनस्त च' इति हन्तेर्भावे क्यप् तकारश्चाऽन्ताऽऽदेश । स्त्रीत्व लोकात् ।

भावार्थ —सुग्रीवे मिथ्यावचन न विद्यते, अह सत्यवचन वदामि । तस्य मैत्र्या भवान् शत्रु हनिष्यति ।

भाषार्थ —सुग्रीवमे मिथ्यावचन नही है, मै सत्यवचन कहता हूँ । आप उनके मित्र होकर शत्रुको मारेगे ॥ ५५ ॥

**आदृत्यस्तेन वृत्येन स्तुत्यो जुष्येण सङ्गत ।**
**इत्य शिष्येण गुरुवद् गृह्यमर्थमवाप्स्यसि ॥ ५६ ॥**

भाषार्थ—हे राम ! आप सुग्रीवकी सहायतासे मनुष्यभक्षकोंके स्वामी, भयंकर कर्म करनेवाले, इन्द्रके शत्रु तथा दूर देशवासी रावणको मारेंगे ॥५२॥

**आस्ते स्मरन् स कान्ताया हृताया वालिना कपिः ।**
**वृषो यथोपसर्यायाः गोष्ठे गोर्दण्डताडितः ॥ ५३ ॥**

अन्वयः—सः कपिः गोष्ठे दण्डताडितः वृषः उपसर्यायाः गोः यथा वालिना हृतायाः कान्तायाः स्मरन् आस्ते ।

प्रयोगप०—तेन कपिना दण्डताडितेन वृषेण यथा स्मरता आस्यते ।

व्याख्या—सः=पूर्वोक्तः, कपिः=वानरः, गोष्ठे=व्रजे, दण्डताडितः=लगुडप्रहृतः, वृषः=वृषभः, उपसर्यायाः=उपसङ्क्रमणीयायाः ( गर्भग्रहणे प्राप्तकालाया इत्यर्थः ), गोः=सुरभेः, यथा=इव, वालिना=स्वभ्रात्रा, हृतायाः=गृहीतायाः, कान्तायाः=भार्यायाः ( भार्यामित्यर्थः ), स्मरन्=स्मरणं कुर्वन्, आस्ते=तिष्ठति ।

व्युत्पत्तिः—दण्डताडितः=दण्डेन ताडितः ( तृ० त० ) । उपसर्यायाः='उपसर्या काल्या प्रजने' इति उपपूर्वात्सतर्यत्प्रत्ययान्तो निपातः । 'काल्योपसर्या प्रजने' इत्यमरः । कान्तायाः='अधीगर्थदयेशां कर्मणि' इति कर्मणि शेषे षष्ठी ।

भावार्थः—गोष्ठे दण्डताडितो वृषभो यथा प्राप्तगर्भग्रहणकालायाः गोः स्मरणं करोति, सुग्रीवोऽपि तथा वालिना बलादपहृतायाः स्वभार्यायाः स्मरणं कुर्वंस्तिष्ठति ।

भाषार्थ—गोष्ठमें दण्डसे ताडित साँड जैसे गर्भग्रहणके योग्य गायका स्मरण करता है, सुग्रीव भी उसी तरह वालीसे अपहृत अपनी पत्नी का स्मरण करते हुए रहते है ॥ ५३ ॥

**तेन सङ्गतमार्येण रामोऽजर्यं कुरु द्रुतम् ।**
**लङ्कां प्राप्य ततः पापं दशग्रीवं हनिष्यसि ॥ ५४ ॥**

अन्वयः—हे राम ! आर्येण तेन अजर्यं सङ्गतं द्रुतं कुरु, ततो लङ्कां प्राप्य पापं दशग्रीवं हनिष्यसि ।

प्रयोगप०—( त्वया ) अजर्यं सङ्गतं क्रियताम्, पापो दशग्रीवो हनिष्यते ।

व्याख्या—हे राम=हे रामचन्द्र ! आर्येण=सङ्गतियोग्येन, तेन=सुग्रीवेण, अजर्यम्=अनपायं ( नाशरहितमित्यर्थः ), सङ्गतं=सङ्गतिं (सख्यमित्यर्थः), द्रुतं=शीघ्रम्, कुरु=विधेहि । ततः=सुग्रीवसङ्गत्या, लङ्कां=रावणनगरीं, प्राप्य=आसाद्य, पापं=क्रूरं, दशग्रीवं=रावणं, हनिष्यसि=मारयिष्यसि ।

व्युत्पत्तिः—आर्येण=अर्तुं योग्य आर्यस्तेन 'ऋ गतौ' इति धातोः 'ऋहलोर्ण्यत्' इति ण्यत् । अर्यस्येदं प्रत्युदाहरणम् । अजर्यं=न जीर्यतीति अजर्यं, तत्

त्वया=भवता, मार्ग्यः=मार्जनीयः, तेन च=सुग्रीवेण च, ते=तव, शोकः=मन्युः, मृज्यः=मार्ष्टव्यः (परस्परोपकाराद्‌भाभ्यामपि कृतार्थाभ्यां भवितव्यमिति भावः)।

व्युत्पत्तिः—सद्भृत्यशालिनः=सन्तश्च ते भृत्याः सद्भृत्याः (क० धा०), तैः शाडते (डलयोरभेदात् शालते) सद्भृत्यशाली, तस्य 'कृत्यानां कर्तरि वा' इति षष्ठी। अपि=सम्भावनार्थकोऽयं शब्दः। अखेयः=खनितुं शक्यः खेयः, 'खनु अवदारणे' इति धातोः 'ई च खनः' इति क्यपि इकारश्चान्तादेशः। प्रश्लिष्टदीर्घनिर्देशात् 'ये विभाषा' इत्यात्त्वाऽभावः। न खेयः (नञ्०)। मार्ग्यः='मृजू शुद्धौ' इति धातोः 'ऋहलोर्ण्यत्' इति ण्यत् 'चजोः कु घिण्ण्यतोः' इति कुत्वं 'मृजेर्वृद्धिः' इति वृद्धिः। मृज्यः='मृजेर्विभाषा' इति विकल्पेन क्यप्।

भावार्थः—हनूमदादिभिः कार्यक्षमैर्भृत्यैः शोभमानस्य सुग्रीवस्य द्वितीयः समुद्रोऽपि खनितुं शक्यः, किन्तु प्राक् तस्य शोकस्त्वयाऽपनेयोऽनन्तरं स भवदीयं सीताविरहरूपं दुःखमपनेष्यति।

भाषार्थ—कार्यक्षम अनुचरोंसे शोभित सुग्रीवके लिए दूसरा समुद्र भी खुदवाना असम्भव नहीं, परन्तु पहले आपको उनका शोक हटाना चाहिए, अनन्तर वे सीताविरहसे उत्पन्न शोकको हटायेंगे ॥ ५७ ॥

**स राजसूययाजीव तेजसा सूर्यसन्निभः।**
**अमृषोद्यं वदन् रुच्यो जगाहे द्यां निशाचरः ॥ ५८ ॥**

अन्वयः—सः निशाचरः राजसूययाजी इव तेजसा सूर्यसन्निभः अमृषोद्यं वदन् रुच्यः (सन्) द्यां जगाहे।

प्रयोगप०—तेन निशाचरेण राजसूययाजिना इव सूर्यसन्निभेन वदता रुच्येन (सता) द्यौर्जगाहे।

व्याख्या—सः=पूर्वोक्तः, निशाचरः=राक्षसः (कबन्धाख्य इत्यर्थः), राजसूययाजी इव=कृतराजसूयः इव, तेजसा=दीप्त्या, सूर्यसन्निभः=भास्करसदृशः, अमृषोद्यं=सत्यवादं, वदन्=कथयन्, रुच्यः=रोचमानः (सन्), द्याम्=आकाशं स्वर्गं वा, जगाहे=जगाम।

व्युत्पत्तिः—राजसूययाजी=राज्ञा सोतव्यः (अभिषवद्वारा निष्पादयितव्यः) इति, यद्वा लतात्मकः सोमो राजा, स सूयते (कण्ड्यते) अत्र इति राजसूयः-राजसूयं वा। अर्धर्चादिः। राजसूयो नाम क्षत्रियाऽधिकारः क्रतुविशेषः। 'राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याऽव्यथ्याः' इति क्यप् निपातनाद्दीर्घश्च। राजसूयेन इष्टवान् इति राजसूययाजी, 'करणे यजः' इति भूताऽर्थे णिनिः। सूर्यसन्निभः=

अन्वय —वृत्येन जुप्येण तेन सङ्गत (त्वम्) आदृत्य स्तुत्य शिष्येण गुरुवत् इत्य (सन्) गृध्यम् अर्थम् अवाप्स्यसि।

प्रयोगप०—सङ्गतेन (त्वया) आदृत्येन स्तुत्येन इत्येन (सता) गृध्य. अर्थ. अवाप्स्यते।

व्याख्या—वृत्येन=वरणीयेन (त्वया मित्रत्वेनेति शेष), जुष्येण=सेव्येन (हनूमदादिनेत्यर्थ, परिवारवतेति भाव), तेन=सुग्रीवेण, सङ्गत=मिलित मित्रभाव गत इत्यर्थ), (त्व=भवान्), आदृत्य=आदरणीय (सुग्रीवादीनामिति भाव), स्तुत्य=स्तोतव्य, शिष्येण=शासनीयेन (अन्तेवासिनेत्यर्थ), गुरुवत्=गुरुरिव, इत्य=एतव्य (अनुगम्यश्च सन्), गृध्यम्=अभिकाङ्क्ष्यम्, अर्थम्=ईप्सितार्थम् (रावणवशसीताप्राप्तिरूपमित्यर्थ), अवाप्स्यसि।

व्युत्पत्ति—वृत्येन='वृञ् वरणे' इति धातो 'एतिस्तुशास्वृदृजुष क्यप्' इति क्यप् 'ह्रस्वस्य पिति कृति तुक्' इति तुगागमश्च। जुष्येण='जुषी प्रीतिसेवनयो.' इति धातो पूर्वसूत्रेण क्यप्। आदृत्य=पूर्ववत् क्यप्। स्तुत्य=स्तोतुमर्ह (क्यप्)। शिष्येण=पूर्ववत्क्यप् 'शास इदङ्हलो' इतीकार 'शासिवसिघसीना च' इति षत्वम्। इत्य=क्यप्, तुगागम। सर्वत्र कित्त्वाद् गुणप्रतिषेधश्च। गृध्य='ऋदुपधाच्चाऽक्लृपिचृते' इति क्यप्।

भावाऽर्थ—मित्रत्वेन वरणयोग्येन हनूमदादिना सेव्येन सुग्रीवेण सङ्गतो भवान् आदरपूर्वकमीप्सितार्थं प्राप्स्यति।

भाषाऽर्थ—मित्रतासे स्वीकार करनेके योग्य, हनूमान् आदिसे सेवनीय सुग्रीवसे मिलकर आप आदरणीय ओर स्तुत्य बनकर, शिष्यसे गुरुकी तरह अनुगमन करने योग्य हो अभीष्ट विषय पा लेंगे॥ ५६॥

नाऽखेय सागरोऽप्यन्यस्तस्य सद्भृत्यशालिन।
मन्युस्तस्य त्वयामार्ग्यो मृज्य शोकश्च तेन ते॥ ५७॥

अन्वय—सद्भृत्यशालिन तस्य अन्य सागर अपि अखेयो न, तस्य मन्यु त्वया मार्ग्य, तेन च ते शोक मृज्य।

प्रयोगप०—अन्येन सागरेण अखेयेन न (भूयते)। मन्यु त्व मृज्या., स च शोक मृज्यात्।

व्याख्या—सद्भृत्यशालिन=समर्थाऽनुचरशोभमानस्य, तस्य=सुग्रीवस्य, अन्य=अपर (द्वितीय इत्यर्थ), सागरोऽपि=समुद्रोऽपि, अखेयो न=खनितुमशक्यो न (अयं तु किमुतास्येति भाव)। तस्य=सुग्रीवस्य, मन्यु=शोक

अन्वय —अव्यथौ भिद्योद्ध्यसन्निभान् नदान् समुत्तरन्तौ सिध्यताराम् इव ख्याता शबरी वने आपतु ।

प्रयोगप०—अव्यथाभ्या समुत्तरद्भ्या सिध्यतारा इव ख्याता शबरी आपे।

व्याख्या—अव्यथौ=अव्यथमानौ ( अश्रान्तावित्यर्थ ), भिद्योद्ध्यसन्निभान्=भिद्योद्ध्यसदृशान्, नदान्=पुप्रवाहान्, समुत्तरन्तौ=समुत्तरण कुर्वन्तौ, सिध्यताराम् इव=पुष्यतारकाम् इव, ख्याता=प्रसिद्धा, शबरी=शबरीनामिका काञ्चित्तापसीम्, वने=अरण्ये ( क्वचिदाश्रमे इत्यर्थ ), आपतु =प्राप्तवन्तौ ।

व्युत्पत्ति —अव्यथौ=न व्यथेते इति 'राजसूये'त्यादिना निपातनात्कर्तरि-क्यप् । भिद्योद्ध्यसन्निभान्=भिनत्ति कूल भिद्य , उज्झति उदकमुद्ध्य 'भिद्योद्ध्यौ नदे' इति सूत्रेण भिदेरुज्झेश्च क्यप्, उज्झेर्धत्व चेति विशेष । भिद्यश्च उद्ध्यश्च भिद्योद्ध्यौ नदविशेषौ (द्वन्द्व ), ताभ्या सदृशा भिद्योद्ध्यसन्निभास्तान् (तृ० त०)। सिध्यतारा=सिद्ध्यन्ति अर्था अस्मिन्निति सिध्य 'पुष्यसिध्यौ नक्षत्रे' अधिकरणे निपातनात्क्यप्, 'पुष्ये तु सिध्यतिष्यौ' इत्यमर । सिध्य एव तारा सिध्यतारा, ताम् ( रूपक० ) ।

भावार्थः—अश्रान्तौ रामलक्ष्मणौ भिद्योद्ध्यसदृशेषु नदेषु समुत्तरण कुर्वन्तौ सिध्यनक्षत्रसदृशी विख्याता शबरीनाम्नी काञ्चन तापसी कुत्रचिदाश्रमे प्रापतु ।

भाषार्थ —अश्रान्त राम और लक्ष्मण भिद्य और उद्ध्यके सदृश कई नदोमे सन्तरण करते हुए किसी आश्रममे सिध्यनक्षत्रकी तुल्य विख्यात शबरी नामकी किसी तपस्विनीके पास आये ॥ ६० ॥

अथ श्लोकत्रयेण तानेव विशिषन्नाह—

**वसाना वल्कले शुद्धे विपूर्यै कृतमेखलाम् ।**
**क्षामामञ्जनखण्डाभा दण्डिनीमजिनास्तराम् ॥ ६१ ॥**
**प्रगृह्यपदवत्साध्वी स्पष्टरूपामविक्रियाम् ।**
**अगृह्या वीतकामत्वाद् देवगृह्यामनिन्दिताम् ॥ ६२ ॥**
**धर्मकृत्यरता नित्यमवृष्यफलभोजनाम् ।**
**दृष्ट्वा तामसुचद्रामो युग्यायात इव श्रमम् ॥ ६३ ॥**

अन्वय —शुद्धे वल्कले वसाना, विपूर्यै कृतमेखला, क्षामाम् अञ्जनखण्डाभा, दण्डिनीम्, अजिनास्तराम् । प्रगृह्यपदवत् साध्वी स्पष्टरूपाम् अविक्रियाम् वीतकामत्वात् अगृह्या, देवगृह्याम्, अनिन्दिताम्, नित्य धर्मकृत्यरताम्, अवृष्यफलभोजना ता दृष्ट्वा राम युग्यायात इव श्रमम् अमुचत् ।

सरति आकाशे इति सूर्य 'राजसूये'त्यादिना कर्तरि क्यप्, निपातनादुत्वं च। यद्वा 'षू प्रेरणे' इति तौदादिकाद्धातो सुवति=कर्मणि लोकं प्रेरयतीति विग्रहे क्यपो रुट्। सूर्येण सदृश सूर्यसन्निभ (तृ० त०)। अमृषोद्य=मृषा वदनं न भवतीति अमृषोद्य, तद्यथा तथा, 'वद सुपि क्यप् च' इति पक्षे यति प्राप्ते पूर्वसूत्रेण मृषोपपदाद्वदे कर्मणि नित्यं क्यप्। रुच्य=रोचते इति रुच्य, पूर्वसूत्रेणैव कर्तरि क्यबन्तो निपात।

भावार्थ —स कबन्धोऽनुष्ठितराजसूय इव दीप्त्या सूर्यसदृश सत्यवादी रोचमानश्च सन् स्वर्गं जगाम।

भाषार्थ —वह राक्षस (कबन्ध) राजसूय यज्ञ किये हुए पुरुषकी तरह तेजसे सूर्यके तुल्य ही सत्यभाषणकर शोभित होता हुआ स्वर्गमे चला॥ ५८॥

**अकृष्टपच्या पश्यन्तौ ततो दाशरथी लता।**
**रत्नाऽन्नपानकुप्यानामाटतुर्नष्टसस्मृती ॥ ५९॥**

अन्वय —तत दाशरथी अकृष्टपच्या लता पश्यन्तौ रत्नाऽन्नपानकुप्याना नष्टसस्मृती (सन्तौ) आटतु।

प्रयोगप०—दाशरथिभ्या पश्यद्भ्या नष्टसस्मृतिभ्याम् (सद्भ्याम्) आटे।

व्याख्या—तत =कबन्धगमनाऽनन्तर, दाशरथी=रामलक्ष्मणौ, अकृष्टपच्या = अकृष्टप्रदेशोत्पन्ना, लता.=वल्ली, पश्यन्तौ=अवलोकयन्तौ, रत्नाऽन्नपानकुप्याना= मण्यन्नपानताम्रादीना, नष्टसस्मृती=अपगतसस्मरणौ (नष्टरत्नादिसस्मरणौ, विस्मृतराजभोगौ सन्ताविर्यर्थ), आटतु=चेरतु।

व्युत्पत्ति —अकृष्टपच्या=कृष्टे (प्रदेशे) स्वयमेव पच्यन्ते इति कृष्टपच्या, 'राजसूये'त्यादिना कर्मकर्तरि निपातनात्क्यप्। न कृष्टपच्या (नञ्०)। रत्नाऽन्नपानकुप्याना=गुप्यते इति कुप्या (सुवर्णरजतभिन्न धनम्), 'गुपू रक्षणे' इति धातो पूर्वसूत्रेणैव क्यपि गुपेरादे कत्वं च सञ्ज्ञायाम्। रत्नानि च अन्नानि च पानानि कुप्यानि च रत्नाऽन्नपानकुप्यानि, तेषाम् (द्वन्द्व)। नष्टसस्मृती=नष्टा सस्मृतिर्ययोस्तौ (बहु०)। साऽपेक्षत्वेऽपि गमकत्वात्समास, वृत्तिविग्रहयो समानप्रकारोपस्थितिजनकत्व गमकत्वम्।

भावार्थ —कबन्धप्रयाणाऽनन्तर रामलक्ष्मणौ अकृष्टप्रदेशोत्पन्ना लता विलोकयन्तौ विस्मृतराजभोगौ (सन्तौ) चेरतु।

भाषार्थ —कबन्धके जानेके बाद राम और लक्ष्मण अकृष्ट प्रदेशमे स्वयम् फल लगनेवाली लताओको देखते हुए और रत्न, अन्न आदि राजभोग्य पदार्थोको भूलते हुए विचरण करने लगे॥ ५९॥

**समुत्तरन्तावव्यथौ नदान्भिद्योद्ध्यसन्निभान्।**
**सिध्यतारामिव ख्याता शबरीमापतुर्वने॥ ६०॥**

युज्यतेऽनेनेति युग्यं, 'युजिर् योगे' इति धातोः 'युग्यं च पत्रे' इति क्यबन्तो निपातः । 'सर्वं स्याद्वाहनं यानं युग्यं पत्रं च धोरणम् ।' इत्यमरः । युग्येन आयातो युग्यायातः (तृ० त०) । अमुचत्=मुचेर्लुङि लृदित्त्वादङ् । श्लेषाऽलङ्कारः ।

भावार्थ—पवित्रे उत्तरीयाऽधरीये आच्छादयन्तीं धृतमुञ्जमेखलां तपःकृशां कृष्णवर्णां गृहीतदण्डां चर्मतल्पां, यथा प्रगृह्यसंज्ञकं पदं प्रयोगाऽर्हम्, प्रकृतिभावात् पदान्तराऽपेक्षया विलक्षणरूपं सन्धिमूलकवर्णविकाररहितं च भवति एवं सच्चरित्रां स्वच्छमूर्तिं विरुद्धचेष्टारहितां निःस्पृहत्वात् स्वतन्त्रां देवपक्षाश्रितामनिन्दितां नित्यं धर्माऽनुष्ठानपरां, सात्त्विकफलाहारां शवरीं दृष्ट्वा रामो वाहनाऽऽगत इव श्रान्तिरहितोऽभूत् ।

भाषार्थ—पवित्र उत्तरीय और अधरीयको धारण करती हुई, मुञ्जमयी मेखलाको पहननेवाली, तपस्यासे कृश, कृष्णवर्णवाली, दण्डधारण करनेवाली, चर्मरूप-तल्पवाली, जिस तरह व्याकरणमें प्रगृह्यसंज्ञक पद प्रयोगयोग्य, प्रकृतिभाव होनेके कारण दूसरे पदोंसे स्पष्ट रूपवाला, और सन्धिप्रयुक्त वर्णविकारसे रहित होता है उसी तरह सच्चरित्र, स्वच्छमूर्ति और विरुद्ध चेष्टासे रहित, निःस्पृह होनेसे स्वच्छन्द देवताओंकी पक्षपातिनी, अनिन्दिता, नित्य धर्मकार्यमें तत्पर और सात्त्विक फलोंका आहार करनेवाली शबरी नामकी तपस्विनीको देखकर रामचन्द्रजी सवारीसे आये हुए पुरुषकी तरह परिश्रमरहित हो गये ॥ ६१–६३ ॥

**स तामूचेऽथ कच्चित्त्वममावास्यासमन्वये ।**
**पितॄणां कुरुषे कार्यमपाक्यैः स्वादुभिः फलैः ॥ ६४ ॥**

अन्वय—अथ स ताम् ऊचे—'(हे भद्रे), त्वम् अमावास्यासमन्वये अपाक्यैः स्वादुभिः फलैः पितॄणां कार्यं कुरुषे कच्चित् ?'

प्रयोगप०—तेन सा ऊचे—'त्वया कार्यं क्रियते कच्चित् ?

व्याख्या—अथ=शवरीदर्शनाऽनन्तरं, सः=रामः, ताम्=शबरीम्, ऊचे=जगाद (हे भद्रे=हे कल्याणि !) त्वम्=भवती, अमावास्यासमन्वये=दर्शसमागमे, अपाक्यैः=अपचनीयैः, (अनग्निपक्वैरित्यर्थः), स्वादुभिः=रम्यैः, फलैः=सस्यैः, पितॄणाम्=अग्निष्वात्तादीनां, कार्यं=कर्म (श्राद्धमित्यर्थः), कुरुषे कच्चित्=करोषि किम् ।

व्युत्पत्ति—अमावास्यासमन्वये=अमा (सह) वसतोऽस्यां चन्द्रार्कौ इति अमावास्या अमावस्या वा, 'अमावस्यदन्यतरस्याम्' इति सूत्रेण अमोपपदाद्वसेरधिकरणे ण्यत् । वृद्धौ सत्यां पाक्षिको ह्रस्वश्च निपात्यते । अमावास्याया समन्वय अमावास्यासमन्वयस्तस्मिन् (ष० त०) । अपाक्यैः=पाक्यमित्यत्र 'ऋहलोर्ण्यत्' इति

प्रयोगप०—रामेण युग्यायातेन इव श्रमोऽमोचि ।

व्याख्या—शुद्धे=पवित्रे, वल्कले-तरुत्वचौ, वसानाम्=आच्छादयन्तीं, विपूयैं मुञ्जै, कृतमेखला=कृतमाञ्जीका, क्षामा=नप कृशाम्, अञ्जनखण्डाऽऽभा=श्यामवर्णा, दण्डिनी=धृतदण्डाम्, अजिनास्तराम्=चर्मतल्पा, प्रगृह्यपदवत्=प्रगृह्यमज्ञकशब्दवत्, साध्वी=सच्चरित्रा ( प्रगृह्यपदपक्षे सौशब्द्यात् प्रयोगार्हम् ), स्पष्टरूपा=स्वच्छ-मूर्त्तिम् ( प्रगृह्यपक्षे संहिताया प्रकृतिभावात् पदान्तराऽसङ्कीर्णरूपम् ), अविक्रिया=विरुद्धचेष्टारहिता ( प्रगृह्यपदपक्षे सन्धिप्रयुक्तवर्णविकाररहिताम् ), वीतकामत्वात्=निस्पृहत्वात्, अगृह्या=स्वतन्त्रा, देवगृह्या=देवपक्ष्याम्, अनिन्दिताम्=अगर्हिता ( प्रत्युत प्रशसनीयामित्यर्थ ), नित्यम्=अजस्र , धर्मकृत्यरता=धर्मकार्याऽऽसक्ताम्, अवृष्यफलभोजनाम्=अनिन्द्रियवर्धनफलाहारा, ता=शवरी, दृष्ट्वा=विलोक्य, राम =रामचन्द्र , युग्यायात इव=वाहनाऽऽगत इव, श्रम=परिश्रमम्, अमुचत्=मुक्तवान् । ( तद्दर्शनादाह्लाद गत इत्यर्थ ) ।

व्युत्पत्ति—विपूयैं =विपूयन्ते इति विपूया मुञ्जा (रज्ज्वादिकरणाय शोध-यितव्या इत्यर्थ ) 'विपूयविनीयजित्या मुञ्जकल्कहलिषु' इति विपूर्वात्पवतेर्मुञ्जार्थे कर्मणि क्यबन्तो निपात । कृतमेखला=कृता मेखला यया सा कृतमेखला, ताम् ( बहु० ) । अञ्जनखण्डाभाम्=अञ्जनस्य खण्डमञ्जनखण्ड ( ष० त० ), तस्य इव आभा यस्या सा अञ्जनखण्डाभा, ताम् ( व्यधि० बहु० ) । अजिनास्तराम्=अजि-नमास्तरो यस्या सा अजिनास्तरा, ताम् ( बहु० ) । प्रगृह्यपदवत्=प्रगृह्यमित्यत्र 'पदाऽस्वैरी'त्यादिना पदार्थे क्यप् । प्रगृह्यसज्ञ पद प्रगृह्यपदम् (मध्यमपदलोपी समास ), 'ईदूदेद्द्विवचन प्रगृह्यम्' इत्यादिसूत्रै कृतसज्ञमित्यर्थ । प्रगृह्यपदेन तुल्य प्रगृह्यपदवत् ( वतिप्रत्यय ) । स्पष्टरूपा=स्पष्ट रूप यस्या सा स्पष्टरूपा, ताम् ( बहु० ) । अविक्रियाम्=अविद्यमाना विक्रिया यस्या सा अविक्रिया, ताम् ( नञ्बहु० ) । वीतकामत्वात्=वीत कामो यस्या सा वीतकामा (बहु०), तस्या भावो वीतकामत्व, तस्मात् (त्वप्रत्यय ) । अगृह्याम्=गृह्यते इति गृह्या (परतन्त्रा), 'पदाऽस्वैरिवाह्यापक्ष्येषु च' इति अस्वैर्यर्थे क्यप् । न गृह्या अगृह्या, ताम् (नञ्०) । देवगृह्या=देवैर्गृह्यते इति देवगृह्या, ता ( देवपक्षाऽऽश्रितामित्यर्थ ), पूर्वसूत्रेणैव पक्ष्यार्थे क्यप् । अनिन्दिता=न निन्दिता, अनिन्दिता, ताम् (नञ्०) । धर्मकृत्यर-ता=कर्तु योग्य कृत्य, 'विभाषाकृवृषो ' इति क्यप् । धर्मस्य कृत्य धर्मकृत्य (ष०त०), तस्मिन् रता धर्मकृत्यरता, ताम् (स० त०) । अवृष्यफलभोजनाम्=वृषधातो पूर्वसू-त्रेणैव क्यपि वृष्यपदसिद्धि । न वृष्याणि अवृष्याणि ( नञ्० ) । तानि फलानि भोजनम् (आहार ) यस्या सा अवृष्यफलभोजना, ताम् (बहु०) । युग्याऽऽयात =

ण्यत्। 'चजो कु घिण्ण्यतो' इति कुत्वम्। न पाक्यानि अपाक्यानि, तैः (नञ्०)। कार्यम्=कर्तुं योग्यं कार्यं, तत् (पूर्वसूत्रेण ण्यत्)।

भावार्थ:—अनन्तरं रामः शबरीमुवाच—'हे भद्रे! अमावास्यायामनग्निपक्वैः स्वादुभिः फलैः श्राद्धं करोषि किम्?'।

भाषार्थ—तब रामने शबरीको कहा—'हे भद्रे! अमावास्यामें अग्निमें नहीं पकाये गये स्वादिष्ठ फलोंसे श्राद्ध करती हो क्या?' ॥ ६४ ॥

**'अवश्यपाव्यं पवसे कच्चित्त्वं देवभाग्घविः।**
**आसाव्यमध्वरे सोमं द्विजैः कच्चिन्नमस्यसि' ॥ ६५ ॥**

अन्वयः—'(हे पुण्ये!) त्वम् अवश्यपाव्यं देवभाक् हविः पवसे कच्चित्? अध्वरे द्विजैः आसाव्यं सोमं नमस्यसि कच्चित्?'

प्रयोगप०—त्वया अवश्यपाव्यं देवभाक् हविः पूयते कच्चित्? आसाव्यः सोमो नमस्यते कच्चित्।

व्याख्या—(हे पुण्ये!) त्वं=शबरी, अवश्यपाव्यम्=अवश्यशोध्यम्, देवभाक्=देवताऽर्हं, हविः=आज्यादिकं, पवसे कच्चित्=पुनासि किम्? अध्वरे=यज्ञे, द्विजैः=ब्राह्मणैः, आसाव्यम्=अभिषोतव्यं, सोमं=लताविशेषं, नमस्यसि कच्चित्=नमस्करोषि किम्?

व्युत्पत्ति—अवश्यपाव्यम्='पूञ् पवने' इति भौवादिकाद्धातोः 'ओरावश्यके' इति ण्यत्, मयूरव्यंसकादित्वात्समासः 'लुम्पेदवश्यमः कृत्ये' इति मकारलोपः। देवभाक्=देवान्भजते इति 'भजो ण्विः' इति ण्विः। पवसे=तस्मादेव धातोर्लटि 'थासः से' इति थासः सयादेशः। आसाव्यम्=आङ्पूर्वात्सुनोतेः 'आसुयुवपिरपिलपित्रपिचमश्च' इति ण्यत्। नमस्यसि='नमोवरिवश्चित्रङः क्यच्' इति क्यच्, ततो लटि सिप्।

भावार्थ:—'हे पुण्ये! त्वं देवताऽर्हं हविः पुनासि किम्! यज्ञे ब्राह्मणैः सह अभिषवाऽर्हां सोमलतां प्रणमसि कच्चित्?'

भाषार्थ—'हे पुण्ये! आप अवश्य शोधनीय देवताके योग्य आज्य आदि हविको पवित्र करती हे क्या? और यज्ञमें ब्राह्मणोंके साथ अभिषव करनेके योग्य सोमलताको नमस्कार करती है क्या?' ॥ ६५ ॥

**आचाम्य सन्ध्ययोः कच्चित्सम्यक्ते न प्रहीयते।**
**कच्चिदग्निमिवाऽऽनाय्यं काले सम्मन्यसेऽतिथिम् ॥ ६६ ॥**

अन्वयः—(हे कल्याणि!) सन्ध्ययोः ते सम्यक् आचाम्यं न प्रहीयते कच्चित्? काले (प्राप्तम्) अतिथिम् आनाय्यम् अग्निम् इव सम्मन्यसे कच्चित्?

प्रयोगप०—समीचा आचाम्येन न प्रहीयते कच्चित् ? अतिथिरानाय्योऽग्निरिव समन्यसे कच्चित् ?

व्याख्या—(हे कल्याणि !) सन्ध्ययो=सायप्रात कालयो, ते=तव, सम्यक्=विधिप्रयुक्तम्, आचाम्यम्=आचमनकम, न प्रहीयते कच्चित्=न लुप्यति किम् ? काले=समये, ( प्राप्तम् ) अतिथिम्=आगन्तुकम्, आनाय्यम् अग्निम् इव=दक्षिणाऽग्निम् इव, समन्यसे कच्चित्=मानयसि किम् ?

व्युत्पत्ति—आचाम्यम्='आसुयुवपिरि'त्यादिना ण्यत्, आनाय्यम्=आनीयत इति आनाय्यस्तम्, आङ्पूर्वान्नयते 'आनाय्योऽनित्ये' इति ण्यत्, आयादेशश्च निपात्यते। आनाय्यो दक्षिणाऽग्निविशेष, स हि गार्हपत्यात् (नित्यात्) आनीयते अनित्यश्च सततमप्रज्वलनात्। 'यो गार्हपत्यादानीय दक्षिणाग्नि प्रणीयते। तस्मिन्नानाय्य' इत्यमर।

भावार्थ—हे कल्याणि ! उभयो सन्ध्ययोस्ते वैधमाचमनकर्म न लुप्यति कच्चित् ? अवसरप्राप्तमतिथिं दक्षिणाऽग्निमिव सभावयसि किम् ?

भाषार्थ—हे कल्याणि ! दोनो सन्ध्याओमे आपका विधिप्रयुक्त आचमनकर्म लुप्त नही होता है क्या ? और आप नियत समयमे आये हुए अतिथिको दक्षिणाग्निकी तरह मानती तो है ? ॥ ६६ ॥

**न प्रणाय्यो जन कच्चिन्निकाय्य तेऽधितिष्ठति।**
**देवकार्यविघाताय धर्मद्रोही महोदये ! ॥ ६७ ॥**

अन्वय—हे महोदये ! धर्मद्रोही प्रणाय्यो जनो देवकार्यविघाताय 'ते निकाय्या न अधितिष्ठति कच्चित् ?

प्रयोगप०—धर्मद्रोहिणा प्रणाय्येन जनेन ते निकाय्यो नाऽधिष्ठीयते कच्चित् ?

व्याख्या—हे महोदये=हे पुण्याचारे !, धर्मद्रोही=धमविघातक, प्रणाय्य=असम्मत, जन=मनुष्य, देवकार्यविघाताय=सुरकृत्यनाशाय, ते=तव, निकाय्या=निवासस्थान, न अधितिष्ठति कच्चित्=न अधिवसति किम् ?

व्युत्पत्ति—महोदये=महानुदय (भोगाऽपवर्गाऽन्यतर) यस्या सा महोदया, तत्सम्बुद्धौ (बहु०)। धर्मद्रोही=धर्माय द्रुह्यतीति (णिनि)। प्रणाय्य='प्रणाय्योऽसम्मतौ' इति निपात। देवकार्यविघाताय=देवाना कार्यं=देवकार्यं (ष० त०), तस्य विघातस्तस्मै ( ष० त० )। निकाय्या=निचीयतेऽस्मिन्धान्यादिक निकाय्य, 'पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु' इति निपूर्वात् चिनोतेरधिकरणे ण्यत्, आय्, धात्वादे कुत्व च निपात्यते, तम् 'अधिशीङ्स्थाऽऽसा कर्म' इति कर्मसज्ञा। 'निकाय्यनिलयाऽऽलया।' इत्यमर।

भावार्थ —हे पुण्याचारे ! धर्मनाशक कश्चिज्जनो यज्ञादिसुरकार्यनाशाय तवाऽऽश्रम नाऽधिवसति कच्चित् ?

भाषार्थ.—महोदये ! धर्मद्रोही और अरुम्मन कोई पुरुष यज्ञ याग आदि देवकार्योंके नाशके लिए आपके आश्रममे रहता तो नही है ? ॥ ९७ ॥

**कुण्डपाय्यवता कच्चिदग्निचित्यावता तथा ।**
**कथाभी रमसे नित्यमुपचाय्यवता शुभे ! ॥ ९८ ॥**

अन्वय —हे शुभे ! कुण्डपाय्यवताम् अग्निचित्यावता तथा उपचाय्यवता कथाभि नित्य रमसे कच्चित् ?

प्रयोगप०—हे शुभे ! ( त्वया ) रम्यते कच्चित् ?

व्याख्या—हे शुभे=हे कल्याणि ! कुण्डपाय्यवता=कुण्डपाय्याऽऽख्यक्रतुयाजिनाम्, अग्निचित्यावताम्=अग्निचिताम् ( आहिताऽग्नीनाम् ), तथा=तेन प्रकारेण, उपचाय्यवता=चित्याऽग्निविशेषयुक्ताना, कथाभि =पुण्यकथाभि , नित्यम्=अजस्र , रमसे कच्चित्=सन्तुष्यसि किम् ।

व्युत्पत्ति —कुण्डपाय्यवता=कुण्डे पीयते सोमोऽस्मिन्निति कुण्डपाय्य क्रतुविशेष , 'क्रतौ कुण्डपाय्यसञ्चाय्यौ' इति यत्प्रत्ययाऽन्तो निपात. । कुण्डपाय्योऽस्ति येषा ते कुण्डपाय्यवन्तस्तेषाम् ( मतुप्प्रत्यय ) । अग्निचित्यावताम्=अग्नेश्चयनमग्निचित्या, 'चित्याऽग्निचित्ये च' इति चिनोतेर्भावे यकारस्तुक् च निपातितौ । अग्निचित्याऽस्ति येषा ते अग्निचित्यावन्तस्तेषाम् ( मतुप् ) । उपचाय्यवताम्=उपचीयते इति उपचाय्य ( चित्याऽग्निविशेष. ) 'अग्नौ परिचाय्योपचाय्यसमूह्या ' इति उपपूर्वाच्चिनोतेर्ण्यदायादेशनिपातश्च । उपचाय्योऽस्ति येषा ते उपचाय्यवन्तस्तेषाम् ( मतुप् ) ।

भावार्थ.—हे कल्याणि ! कुण्डपाय्यक्रतुयाजिनाम् आहिताऽग्नीना तथा उपचाय्याग्नियुक्ताना जनाना पुण्यकथाभिर्नित्य सन्तुष्यसि किम् ?

भाषार्थ.—हे कल्याणि ! कुण्डपाय्यनामक यज्ञ करनेवाले, आहिताऽग्नि और उपचाय्य अग्निसे युक्त पुरुषोकी पुण्यकथाओसे आप नित्य सन्तुष्ट होती है क्या ? ॥

अथ प्रकीर्णका.

**वर्द्धते ते तपो भीरु ! व्यजेष्ठा विघ्ननायकान् ।**
**अजैषी कामसम्मोहौ सप्राप्था विनयेन वा ॥ ९९ ॥**

अन्वय —हे भीरु ! ते तपो वर्द्धते ? विघ्ननायकान् व्यजेष्ठा ? कामसम्मोहौ अजैषी. ? वा विनयेन सप्राप्था. ?

प्रयोगप०—तपसा वृद्धयते ? विघ्ननायका व्यजेषत ? कामसम्मोहौ अजेषाता वा विनय ( त्वाम् ) सप्रापत् ?

व्याख्या—हे भीरु=हे भयशीले ! ते=तव, तप =तपस्या, वर्द्धते=एधते ? ( 'कच्चिदिति सर्वत्राऽनुषङ्ग' इति मल्लिनाथभरतमल्लिकादीना मत हेय, 'भिन्नकण्ठध्वनिर्धीरै काकुरित्यभिधीयते ।' इति लक्षणलक्षितकाक्वैव लाघवात्तदर्थाऽवगते )। विघ्ननायकान्=तप प्रत्यूहकारिण ( इन्द्रियदोषानित्यथ ), व्यजेष्ठा = विजितवत्यसि किम् ? कामसमोहो=अरिषड्वर्गम् (अत्र कामसमोहयोररिषड्वर्गस्य उपलक्षण त्वादयमर्थ ), अजैषी =जितवत्यसि किं ? वा=तथा, विनयेन=अनुद्धततया, सप्राप्था =प्राप्ताऽसि किम् ?

व्युत्पत्ति —भीरु='सज्ञापूर्वकस्य विधेरनित्यत्वान्न गुण' इति मल्लिनाथ । विघ्ननायकान्=विघ्नाना नायका विघ्ननायकास्तान् (ष० त०)। व्यजेष्ठा =विपूर्वाज्जेर्लुङि 'विपराभ्या जे.' इत्यात्मनेपदम् । कामसम्मोहो=कामश्च सम्मोहश्च कामसम्मोहो, ता (द्वन्द्व )। अजेषी =जेर्लुङि 'सिचि वृद्धि परस्मैपदेषु' इति वृद्धि.। सप्राप्था =आप्नोते॰ कर्मणि लुङि थासि 'झलो झलि' इति सलोप ।

भावार्थ —हे भयशीले ! तव तपो वर्द्धते किम् ? तपोविघ्नकारिण. इन्द्रियदोषास्तथा कामादिक शत्रुषड्वर्गं च जितवत्यसि ? तथा विनयस्त्वा सम्प्राप्तः किम् ?

भाषार्थ —हे भयशीले ! आपका तप बढ रहा है ? तपमे विघ्न करनेवाले इन्द्रियदोषोको तथा काम, क्रोध आदि छ शत्रुओको आपने जीत लिया है क्या ? तथा विनयको तो आपने प्राप्त किया ? ॥६९॥

**नाऽऽयस्यसि तपस्यन्ती गुरून् सम्यगतूतुष ।**
**यमान्नोदविजिष्ठास्त्व निजाय तपसेऽतुष ॥७०॥**

अन्वय —( हे पुण्ये !) तपस्यन्ती ( त्वम् ) न आयस्यसि ? गुरून् सम्यक् अतूतुष ? त्व यमात् न उदविजिष्ठा ? निजाय तपसे अतुष ?

प्रयोगप०—तपस्यन्त्या (त्वया) न आयस्यते ? गुरव अतोषयिषत ? त्वया यमात् न उदवेजि ? अतोषि ?

व्याख्या—(हे पुण्ये ! ) तपस्यन्ती=पतश्चरन्ती, ( त्व=शबरी) न आयस्यसि=न क्लिश्यसि किम् ? गुरून्=आचार्यादीन्, सम्यक्=समीचीनम्, अतूतुष =शुश्रूषया तोषितवत्यसि ? त्व=शबरी, यमात्—अन्तकात्, न उदविजिष्ठा = न उद्विग्नाऽसि ? ( न अभैषी किमित्यथ )। निजाय=नित्याय, तपसे=तपश्चरणाय, अतुष =तुष्टाऽसि ? ( नित्य तपसि त्वमुत्सुकाऽसि किमित्यर्थ )।

भावार्थ —हे पुण्याचारे ! धर्मनाशक कश्चिज्जनो यज्ञादिसुकार्यनाशाय तवाऽऽश्रमं नाऽधिवसति कच्चित् ?

भाषार्थ —महोदये ! धर्मद्रोही और असम्मत कोई पुरुष यज्ञ याग आदि देवकार्योंके नाशके लिए आपके आश्रममें रहता तो नहीं है ? ॥ ६७ ॥

**कुण्डपाय्यवतां कच्चिदग्निचित्यावतां तथा ।**
**कथाभी रमसे नित्यमुपचाय्यवतां शुभे ! ॥ ६८ ॥**

अन्वय —हे शुभे ! कुण्डपाय्यवताम् अग्निचित्यावतां तथा उपचाय्यवतां कथाभिः नित्यं रमसे कच्चित् ?

प्रयोगप० —हे शुभे ! ( त्वया ) रम्यते कच्चित् ?

व्याख्या —हे शुभे=हे कल्याणि ! कुण्डपाय्यवताम्=कुण्डपाय्याख्यक्रतुयाजिनाम्, अग्निचित्यावताम्=अग्निचिताम् ( आहिताऽग्नीनाम् ), तथा=तेन प्रकारेण, उपचाय्यवताम्=चित्याऽग्निविशेषयुक्तानाम्, कथाभिः=पुण्यकथाभिः, नित्यम्=अजस्रं, रमसे कच्चित्=सन्तुष्यसि किम् ।

व्युत्पत्ति —कुण्डपाय्यवताम्=कुण्डैः पीयते सोमोऽस्मिन्निति कुण्डपाय्यः क्रतुविशेषः, 'क्रतौ कुण्डपाय्यसञ्चाय्यौ' इति यत्प्रत्ययान्तो निपातः । कुण्डपाय्योऽस्ति येषां ते कुण्डपाय्यवन्तस्तेषाम् ( मतुप्प्रत्ययः ) । अग्निचित्यावताम्=अग्नेश्चयनमग्निचित्या, 'चित्याऽग्निचित्ये च' इति चिनोतेर्भावे यकारस्तुक् च निपातितौ । अग्निचित्याऽस्ति येषां ते अग्निचित्यावन्तस्तेषाम् ( मतुप् ) । उपचाय्यवताम्=उपचीयते इति उपचाय्यः ( चित्याऽग्निविशेषः ) 'अग्नौ परिचाय्योपचाय्यसमूह्याः' इति उपपूर्वाच्चिनोतेर्ण्यदायादेशनिपातश्च । उपचाय्योऽस्ति येषां ते उपचाय्यवन्तस्तेषाम् ( मतुप् ) ।

भावार्थ —हे कल्याणि ! कुण्डपाय्यक्रतुयाजिनाम् आहिताऽग्नीनां तथा उपचाय्याग्नियुक्तानां जनानां पुण्यकथाभिर्नित्यं सन्तुष्यसि किम् ?

भाषार्थ —हे कल्याणि ! कुण्डपाय्यनामक यज्ञ करनेवाले, आहिताऽग्नि और उपचाय्य अग्निसे युक्त पुरुषोंकी पुण्यकथाओंसे आप नित्य सन्तुष्ट होती हैं क्या ? ॥

अथ प्रकीर्णकाः

**वर्द्धते ते तपो भीरु ! व्यजेष्ठा विघ्ननायकान् ।**
**अजैषी कामसम्मोहौ सप्राप्था विनयेन वा ॥ ६९ ॥**

अन्वय —हे भीरु ! ते तपो वर्द्धते ? विघ्ननायकान् व्यजेष्ठाः ? कामसम्मोहौ अजैषीः ? वा विनयेन सप्राप्थाः ?

प्रयोगप०—परिभाविभि मन्थिभि उद्भासिभि जलेजैरदयितो जनो द्यते, दृश्यताम् ।

व्याख्या—( हे लक्ष्मण ! ) ताराणा=नक्षत्राणा, परिभावीणि=तिरस्कारीणि ( शोभाऽतिशयादित्यर्थ ), चेतसा=विरहिचित्ताना, मन्थीनि=प्रमाथीनि, उद्भासीनि=विकासीनि, जलेजानि=कमलानि, अदयित=प्रियाविरहिण, जन=पुरुष, दुन्वन्ति=तपन्ति ( पीडयन्तीत्यर्थ ) । पश्य=विलोकय ( वाक्याऽर्थ कर्म ) ।

व्युत्पत्ति—परिभावीणि=परिभवन्तीति, 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यच' इति ग्रहादित्वाण्णिनि, एवमन्यत्राऽपि । 'प्रातिपदिकाऽन्तनुम्विभक्तिषु च' इति विकल्पेन णत्वम् । 'अनादर परिभव परीभावस्तिरस्क्रिया ।' इत्यमर । मन्थीनि=मन्थन्तीति, 'मथि हिंसासक्लेशयो' इति धातो पूर्ववण्णिनिरिदित्वान्नुमागमश्च । उद्भासीनि=णिनि । जलेजानि=जले जातानि, 'सप्तम्या जनेर्ड' इति ड, 'तत्पुरुषे कृति बहुलम्' इति विकल्पेन सप्तम्या अलुक् । अदयितम्=अविद्यमाना दयिता यस्य सोऽदयितस्तम् ( नञ्बहु० ) दुन्वन्ति='टुदु उपतापे' इति धातोर्लट्, 'स्वादिभ्य श्नु' इति श्नु ।

भावार्थ—हे लक्ष्मण ! नक्षत्रेभ्योऽपि रमणीयानि विरहिमानसाना प्रमाथीनि विकसितानि कमलानि उद्दीपकत्वात् प्रियाविरहिण जन पीडयन्ति, पश्य ।

भाषार्थ—हे लक्ष्मण ! ताराओको तिरस्कार करनेवाले, वियोगियोके चित्तको मथन करनेवाले तथा विकास युक्त ( खिले हुए ) कमल, प्रियारहित पुरुषको पीडित करते है, देखो ॥ ७५ ॥

**सर्वत्र दायताऽधीन सुव्यक्त रामणीयकम् ।**
**येन जात प्रियाऽपाये कद्वद हसकोकिलम् ॥ ७६ ॥**

अन्वय—सवत्र रामणीयक दयिताऽधीन सुव्यक्त, येन प्रियाऽपाये हसकोकिल कद्वद जातम् ।

प्रयोगप०—रामणीयकेन दयिताऽधीनेन सुव्यक्तेन ( भूयते ), हसकोकिलेन कद्वदेन जातम् ।

व्याख्या—सर्वत्र=सर्वेष्वपि वस्तुषु, रामणीयक=रामणीयत्व, दयिताऽधीन=प्रियाऽऽयत्त, सुव्यक्त-सस्पष्टम् । येन=कारणेन, प्रियाऽपाये=दयिताविरहे हसकोकिल=चक्राङ्गपिकसमूह, कद्वद=कुत्सितवादि, जात=सवृत्तम् ( सीतासन्निधौ यत्पूर्व मे आनन्दप्रदमभूत, तत्सर्वमपि साम्प्रतमसह्य जातमिति तात्पर्यम् ) ।

व्युत्पत्ति—रामणीयक=रमणीयस्य भावो रामणीयक, 'योपधाद् गुरूपोत्तमाद् वुञ्' इति वुञ् । दयिताऽधीन=दयिताया अधीनम् ( ष० त० ) । प्रियाऽपाये=

व्युत्पत्तिः—तपस्यन्ती='कर्मणो रोमन्थतपोभ्यां वर्तिचरोः' इति क्यङ्, 'तपसः परस्मैपदं च' इति परस्मैपदम्। तस्माल्लटः शतरि ङीप्। आयस्यसि= 'यसु प्रयत्ने' इति धातोर्लटि सिपि श्यन्। अतूतुपः=तुपेर्ण्यन्तस्य लुङ्, चङ्युपधाह्रस्वः, अभ्यासदीर्घश्च। उदविजिष्ठाः='ओविजी भयचलनयोः' इति धातोर्लुङि तङि थासि इट्। 'विज' इट्' इति ङित्वे ङित्त्वान्न गुणः। निजाय=निजमात्मीयनित्ययोः इति विश्वः। अतुपः=पुषादित्वादङ्।

भावार्थः—हे पुण्ये! तपसा न क्लिश्यसि किम्? आचार्यान् शुश्रूषया तोषितवत्यसि? त्वमन्तकान्न भैषी किं? त्वं नित्यं तपसि उत्सुकाऽसि कच्चित्?

भाषार्थः—हे पुण्याऽऽचरणशीले! आप तपस्यासे पीडित तो नहीं होती हैं? आपने गुरुजनोंको शुश्रूषासे अच्छी तरह सन्तुष्ट किया है? आप यमराजसे डरती नहीं हैं? और नित्य तपस्या में उत्कण्ठित होती हैं क्या? ॥ ७० ॥

**अथाऽर्घ्यं मधुपर्काद्यमुपनीयाऽऽदरादसौ।**
**अर्चयित्वा फलैरर्च्यौ सर्वत्राऽऽख्यदनामयम् ॥ ७१ ॥**

अन्वयः—अथ असौ अर्घ्यं मधुपर्काद्यम् उपनीय अर्च्यौ (तौ) आदरात् फलैः अर्चयित्वा सर्वत्र अनामयम् आख्यत्।

प्रयोगप०—अमुया सर्वत्र अनामयं आख्यायि।

व्याख्या—अथ=कुशलप्रश्नाऽनन्तरम्, असौ=शबरी, अर्घ्यं=पूजार्थं जलं, मधुपर्काद्यं=दध्यादिकम् (पूजासाधनमित्यर्थः), उपनीय=उपादाय, अर्च्यौ=पूजनीयौ (तौ=रामलक्ष्मणौ), आदरात्=सम्मानात्, फलैः=सस्यैः, अर्चयित्वा=पूजयित्वा, सर्वत्र=सर्वेषु पृष्टाऽर्थेषु, अनामयं=क्षेमम्, आख्यत्=अवोचत्।

व्युत्पत्तिः—अर्घ्यम्=अर्घाऽर्थं जलमर्घ्यं, तत् 'पादाऽर्घाभ्यां च' इति यत्। मधुपर्काद्यं=मधुपर्क आद्यं यस्य तत् मधुपर्काद्यं, तत् (बहु०)। आख्यत्='अस्यतिवक्तिख्यातिभ्योऽङ्' इत्यङ्।

भावार्थः—कुशलप्रश्नानन्तरं शबरी पूजाऽर्थं जलं मधुपर्कादिकं पूजासाधनं च उपनीय रामलक्ष्मणौ सम्मानपूर्वकं फलैरर्चयित्वा सर्वेषु पृष्टाऽर्थेषु कुशलमकथयत्।

भाषार्थः—रामचन्द्रजीके कुशलप्रश्न करनेके अनन्तर शबरीने पूजार्थक जल और मधुपर्क आदि पूजासामग्रीको भी समीप रखकर पूजनीय राम और लक्ष्मणको आदरपूर्वक फलोंसे पूजाकर सभी विषयोंमें अपना कुशल बतलाया ॥ ७१ ॥

### अथ कृदधिकारः।

(तत्रादौ निरुपपदकृदधिकारः)

**सख्यस्य तव सुग्रीव कारकः कपिनन्दनः।**
**द्रुतं द्रष्टाऽसि मैथिल्याः सैवमुक्त्वा तिरोऽभवत् ॥ ७२ ॥**

**ध्वनीनामुद्धमैरेभिर्मधूनामुद्धयैर्भृशम् ।**
**आजिघ्रैः पुष्पगन्धानां पतङ्गैर्ग्लपिता वयम् ॥ ७८ ॥**

अन्वय —ध्वनीनाम् उद्धमैः मधूनाम् उद्धयैः पुष्पगन्धानाम् आजिघ्रैः एभिः पतङ्गैः वयं भृशं ग्लपिता ।

प्रयोगप०—उद्धमा उद्धया आजिघ्रा इमे पतङ्गा अस्मान् भृशं ग्लपितवन्त ।

व्याख्या—( हे लक्ष्मण ! ) ध्वनीनां=शब्दानाम्, उद्धमैः =उत्पादकैः ( ध्वनद्भिरित्यर्थ ), मधूनां=पुष्परसानाम्, उद्धयैः -पातृभि , पुष्पगन्धानां=कुसुमगन्धानाम्, आजिघ्रैः =आघ्रातृभि , एभि.=निकटस्थैः , पतङ्गैः =पक्षिविशेषैः ( भृङ्गैरित्यर्थ ) वयम्=वियोगिन , ग्लपिता =पीडिता ।

व्युत्पत्ति —ध्वनीनां=कर्मणि षष्ठी । उद्धमैः =उद्धमन्तीति उद्धमास्तैः , उत्पूर्वात् 'ध्मा शब्दाऽग्निसयोगयो ' इति धातो 'पाघ्राध्माधेड्दृश श ' इति श., 'पाघ्राध्मास्थाम्ने' त्यादिना धातोर्धमादेशश्च । मधूनां पुष्पगन्धानाम्=उभयत्राऽपि कर्मणि षष्ठी । उद्धयैः =उद्धयन्तीति उद्धयास्तैः , उत्पूर्वात् 'धेट् पाने' इति धातोः पूर्वसूत्रेण श । आजिघ्रैः =आजिघ्रन्तीति आजिघ्रास्तैः , आङ्पूर्वकात् 'घ्रा गन्धोपादाने' इति धातो श , 'पाघ्राध्मास्थे' त्यादिना धातोर्जिघ्रादेशश्च । पतङ्गैः = विशेषणैस्तद्धर्माऽभिधानात्सामान्य ( पतङ्ग ) शब्देन विशेषे ( भ्रमरे ) लक्षणा । ग्लपिता ग्लायतेर्ण्यन्तात्करणे 'अर्तिह्री'त्यादिना पुगागम 'ग्लास्नावनुवमां च' इति मित्त्वाद्ध्रस्वत्वम् ।

भावार्थ —गुञ्जद्भि पुष्परसं पिबद्भि पुष्पगन्धानामाघ्रातृभिर्भ्रमरैरहमत्यर्थं पीडित ।

भाषाऽर्थ —शब्द करनेवाले, पुष्परसोको पीनेवाले और पुष्पोको सूँघनेवाले इन भ्रमरो से मैं अत्यन्त पीडित हुआ हूँ ॥ ७८ ॥

**धारयैः कुसुमोर्मीणां पारयैर्बाधितुं जनान् ।**
**शाखिभिर्हा ! हता भूयो हृदयानामुदेजयैः ॥ ७९ ॥**

अन्वय —कुसुमोर्मीणां धारयैः जनान् बाधितुं पारयैः हृदयानाम् उदेजयैः शाखिभि भूयः हता., हा !

प्रयोगप०—धारया पारया उदेजया शाखिन (अस्मान्) हतवन्त , हा !

व्याख्या—कुसुमोर्मीणां=पुष्पपरम्पराणां धारयैः =धारकैः , जनान्=विरहिजनान्, बाधितुं=पीडयितुं, पारयैः =समर्थैः , हृदयानां=विरहिचेतसाम्, उदेजयैः = उत्कम्पनैः , शाखिभि =वृक्षैः , भूय =अत्यर्थं, हता.=पीडिता , हा=खेद ।

प्रियाया अपायः प्रियाऽपायस्तस्मिन् (ष० त०)। हंसकोकिलैः=हंसाश्च कोकिलाश्च, 'विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वाऽपराऽधरोत्तराणाम्' इति शकुनिद्वन्द्वः। कद्वदः=कुत्सितं वदन्तीति कद्वदैः 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इति पचादित्वादच्, 'रथवदयोश्च' इति कोः कदादेशः।

भावार्थः—प्रियासन्निधान एव सर्वमपि वस्तु रमणीयं भवतीति स्फुटं प्रतीयते, येन श्रुतिमधुरमपि हंसकोकिलवाशितं प्रियाविरहे असह्यं जातम्।

भाषाऽर्थ—'सभी वस्तुओंमें रमणीयत्व प्रियाके अधीन है' यह बात साफ तौरसे मालूम होती है। अतएव प्रियाके विरहमें हंस और कोकिल भी कटुशब्द करनेवाले हो रहे हैं ॥ ७६ ॥

**पक्षिभिर्वितृदैर्यूनां शाखिभिः कुसुमोत्किरैः।**
**अज्ञो यो यस्य वा नाऽस्ति प्रियः प्रग्लो भवेन्न सः ॥ ७७ ॥**

अन्वयः—यः अज्ञः, वा यस्य प्रियः न अस्ति, सः (एव) यूनां वितृदैः पक्षिभिः कुसुमोत्किरैः शाखिभिश्च प्रग्लो न भवेत्।

प्रयोगप०—येन अज्ञेन (भूयते), प्रियेण न भूयते, तेन प्रग्लेन न भूयेत।

व्याख्या—यः=जनः, अज्ञः=विषयरसाऽनभिज्ञः, वा=अथवा, यस्य=जनस्य, प्रियः=प्रीतिकरः, न अस्ति=न वर्तते, सः=जनः (एव), यूनां=तरुणानां, वितृदैः=हिंसकैः, पक्षिभिः=हंसकोकिलादिभिः, कुसुमोत्किरैः=पुष्पवर्षिभिः, शाखिभिश्च=वृक्षैश्च, प्रग्लः=क्षीणहर्षः, न भवेत्=न स्यात्।

व्युत्पत्तिः—अज्ञः=न जानातीति अज्ञः, अञ्पूर्वकाज्ज्ञाधातोः 'इगुपधज्ञाप्रीकिरः कः' इति कप्रत्ययः। प्रियः=प्रीणातीति, पूर्वसूत्रेण 'प्रीञ् तर्पणे' इति धातोः कः। यूनां=कर्मणि षष्ठी। वितृदैः=वितृदन्तीति वितृदास्तैः, 'उतृदिर् हिंसाऽनादरयोः' इति धातोः पूर्ववत्कः। कुसुमोत्किरैः=उत्किरन्तीति उत्किराः, उत्पूर्वात् 'कॄ विक्षेपे' इति धातोः कः। कुसुमानामुत्किराः कुसुमोत्किरास्तैः, कर्मणि षष्ठीसमासः। शाखिभिः=शाखाः सन्ति येषां ते शाखिनस्तैः, 'व्रीह्यादिभ्यश्च' इतीनिः। प्रग्लः=प्रकर्षेण ग्लायतीति, प्रपूर्वात् 'ग्लै हर्षक्षये' इति धातोः 'आतश्चोपसर्गे' इति कप्रत्ययः।

भावार्थः—येन विषयरसो नाऽनुभूतः, यस्य वा प्रियो नाऽस्ति, स एव प्रियावियुक्तानां तरुणानां हिंसकैः हंसकोकिलाऽऽदिपक्षिभिः पुष्पवर्षिभिर्वृक्षैश्च क्षीणहर्षो न स्यात् (विषयरसास्वादी प्रियजनवांश्च वियोगे एभिर्ग्लायत्येव)।

भाषाऽर्थ—जो पुरुष विषयोंके रसमें अनभिज्ञ है, अथवा जिसका कोई प्रिय नहीं है वही पुरुष, प्रिया-विरही तरुणोंकी हिंसा करनेवाले कोकिल आदि पक्षियों से और पुष्पवर्षी वृक्षों से ग्लानियुक्त नहीं होगा ॥ ७७ ॥

भावार्थ —मेरे ऐसे वियोगियोंको दुःख देनेवाले, उत्कृष्ट सौरभ (खुश्बू) को धारण करनेवाले और शरीरको लिप्त करनेवाले जैसे वायुओंसे कौन प्राणी जलते हुए अग्निके सदृश न होगा ? ॥ ८० ॥

**अवश्यायकणास्रावाश्चारुमुक्ताफलत्विषः ।**
**कुर्वन्ति चित्तसंस्रावं चलत्पर्णाऽग्रसम्भृताः ॥ ८१ ॥**

अन्वय —चलत्पर्णाऽग्रसम्भृताः चारुमुक्ताफलत्विषः अवश्यायकणास्रावाः चित्तसंस्रावं कुर्वन्ति ।

प्रयोगप०—चलत्पर्णाऽग्रसम्भृतैः चारुमुक्ताफलत्विड्भिः अवश्यायकणाऽऽस्रावैः चित्तसंस्रावः क्रियते ।

व्याख्या—चलत्पर्णाऽग्रसम्भृताः =चलत्पत्राऽग्रसञ्चिताः, चारुमुक्ताफलत्विषः = सुन्दरमौक्तिकफलकान्तयः, अवश्यायकणास्रावाः =हिमलेशनिष्यन्दाः ( निष्यन्दमानहिमबिन्दवः ), चित्तसंस्रावं=चेतोद्रवं, कुर्वन्ति=विदधति (चित्तं द्रावयन्तीत्यर्थः) ।

व्युत्पत्ति —चलत्पर्णाऽग्रसम्भृताः =पर्णानामग्राणि पर्णाऽग्राणि ( ष० त० ), चलन्ति च तानि पर्णाऽग्राणि चलत्पर्णाग्राणि ( क० धा० ), तेषु सम्भृताः ( स० त० ) । चारुमुक्ताफलत्विषः =मुक्ताः फलानीव ( स्थूलत्वात् ) मुक्ताफलानि, 'उपमितं व्याघ्रादिभिः सामान्याऽप्रयोगे' इति समासः । चारूणि च तानि मुक्ताफलानि चारुमुक्ताफलानि (क० धा०), तेषामिव त्विषो येषां ते (व्यधिकरणबहु०) । अवश्यायकणास्रावाः =अवश्यायते इति अवश्यायः, 'श्यैङ् गतौ' इति धातोः 'श्याद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च' इति णः, 'अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम् ।' इत्यमरः । अवश्यायस्य कणाः अवश्यायकणाः (ष०त०), आस्रवन्तीति आस्रावाः 'स्रु गतौ' इति धातोः पूर्वसूत्रेणैव णः । अवश्यायकणा एव आस्रावाः (रूपक०) । चित्तसंस्रावं=संस्रवतीति संस्रावः, तत एव धातोः तेनैव सूत्रेण णः । चित्तस्य संस्रावः चित्तसंस्रावस्तम् (ष०त०) । 'चित्तम्' इति मल्लिनाथसमतः पाठः ।

भावार्थ —चलत्पत्राऽग्रेषु सञ्चिताः सुन्दरमौक्तिकसदृशाः क्षरत्तुषारबिन्दवश्चित्तं द्रावयन्ति ।

भाषार्थ —हिलते हुए पत्तोंके अग्रभागोंमें सञ्चित और सुन्दर मोतियोंकी तरह कान्तिवाली क्षरित होनेवाली ओसकी बूंदें चित्तको पिघला देती हैं ॥ ८१ ॥

**अवसायो भविष्यामि दुःखस्याऽस्य कदान्वहम् ।**
**न जीवस्याऽवहारो मां करोति सुखिनं यमः ॥ ८२ ॥**

अन्वय —अहं कदा नु अस्य दुःखस्य अवसायः भविष्यामि ? यमः ( अपि ) [जी]वस्य अवहारः ( सन् ) मां सुखिनं न करोति ।

व्युत्पत्ति —कुसुमोर्मीणाम्=कुसुमानामूर्मयः कुसुमोर्मयः ( ष० त० ), तेषाम् ( कर्मणि षष्ठी )। धारयैः=धारयन्तीति धारयास्तैः, णिजन्तात् 'धृञ् धारणे' इति धातोः 'अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसाहिभ्यश्च' इति शः। पारयैः= पारयन्तीति पारयास्तैः, णिजन्तात् 'पॄ पालनपूरणयोः' इति धातोः पूर्ववत् शः। उदेजयैः=उदेजयन्तीति उदेजयास्तैः, उत्पूर्वकात् णिजन्तात् 'एजृ कम्पने' इति धातोः पूर्ववत्प्रत्ययः।

भावार्थः—पुष्पपरिपूर्णैः विरहिणः पीडयितुं समर्थैः वियुक्तचेतसामुत्कम्पनैर्वृक्षैरत्यर्थं हता वयम् हा!

भाषार्थ —पुष्पसमूहोंको धारण करनेवाले विरहियोंको पीडित करनेमें समर्थ और वियोगिचित्तोंको उत्कम्पित करनेवाले इन वृक्षोंसे हम अत्यन्त पीडित हो गये हैं। हाय! ॥ ७९ ॥

**ददैर्दुःखस्य मादृग्भ्यो धायैरामोदमुत्तमम्।**
**लिम्पैरिव तनोर्वातैश्चेतयः स्याज्ज्वलो न कः ॥ ८० ॥**

अन्वयः—मादृग्भ्यः दुःखस्य ददैः, उत्तमम् आमोदं धायैः, तनोः लिम्पैः इव वातैः कः चेतयः ज्वलः न स्यात्?

प्रयोगप०—केन चेतयेन न भूयेत?

व्याख्या—मादृग्भ्यः=मादृशेभ्यः ( वियोगिभ्य इत्यर्थः ) दुःखस्य=पीडायाः, ददैः=दायकैः, उत्तमम्=उत्कृष्टम्, आमोदम्=सौरभम्, धायैः=दधानैः, तनोः=देहस्य, लिम्पैः इव=लिम्पद्भिः इव ( स्थितैः ), वातैः=वायुभिः, कः, चेतयः=प्राणी, ज्वलः=प्रज्वलनात्मकः, न स्यात्=न भवेत् ( सर्वोऽपि स्यादेवेत्यर्थः )।

व्युत्पत्ति —मादृग्भ्यः=अहमिव इमे पश्यन्ति मादृशः, तेभ्यः 'त्यदादिषु दृशोऽनालोचने कञ्च' इति सूत्रे चकाराद् दृशेः क्विन् 'प्रत्ययोत्तरपदयोश्च' इत्यस्मच्छब्दस्य मदादेशः 'आ सर्वनाम्नः' इति आकारोऽन्तादेशश्च। ददैः=ददतीति ददास्तैः, 'ददातिदधात्योर्विभाषा' इति विकल्पात्कर्तरि शः। आमोदम्='कर्तृकर्मणोः कृति' इति षष्ठ्या अनित्यत्वाद् द्वितीया। धायैः=दधतीति धायास्तैः, पूर्वसूत्रेण शाऽभावपक्षे आकारान्तत्वम् 'श्याद्व्यधास्रुसंस्रवतीणवसावहृलिहश्लिषश्वसश्च' इति णप्रत्यये युगागमः। लिम्पैः=लिम्पन्तीति लिम्पास्तैः, 'अनुपसर्गाल्लिम्प' इत्यादिना शः। चेतयः=चेतयतीति चेतयः, पूर्वसूत्रेणैव चेतयतेः शः। ज्वलः=ज्वलयतीति, 'ज्वलितिकसन्तेभ्यो णः' इति णस्य विकल्पत्वात्पचाद्यच्।

भावार्थः—मादृशानां वियोगिनां दुःखप्रदैः, उत्कृष्टं सौरभं दधानैः, शरीरं लिम्पद्भिरिव स्थितैः वायुभिः कः प्राणी ज्वलन्नग्निरिव न स्यात्?।

भावार्थ —भयङ्कर दावाऽनलोसे पर्वतकी तरह मैं भी भ्रमरोसे दग्ध हो रहा हूँ। जिससे मैं सन्ताप-रहित हो जाऊँ, वह कौन-सा उपाय है ? हाय ? ॥ ८३ ॥

**समाविष्ट ग्रहेणेव ग्राहेणेवात्तमर्णवे ।**
**दृष्ट्वा गृहान्स्मरस्येव वनान्तान्मम मानसम् ॥ ८४ ॥**

अन्वय —मम मानस वनाऽन्तान् स्मरस्य गृहान् इव दृष्ट्वा ग्रहेण समाविष्टम् इव अर्णवे ग्राहेण आत्तम् इव ( भवति ) ।

प्रयोगप०—मानसेन समाविष्टेनेव आत्तेनेव ( भूयते ) ।

व्याख्या—मम-रामस्य, मानस=चित्त, वनाऽन्तान्=अरण्यप्रदेशान्, स्मरस्य= कामस्य, गृहान् इव=गेहानि इव, दृष्ट्वा=विलोक्य, ग्रहेण=मङ्गलादिना क्रूरखेटेन, समाविष्टम् इव=आक्रान्तम् इव, अर्णवे=समुद्रे, ग्राहेण=नक्रेण, आत्तम् इव=गृहीतम् इव ( भवतीति शेष ) ।

व्युत्पत्ति —गृहान्=गृह्णन्तीति गृहास्तान्, 'गेहे क' इति 'ग्रह उपादाने' इति धातो क, 'अर्धर्चा पुसि च' इति पाठात्पुल्लिङ्गत्व, 'गृहा पुसि च भूम्न्येव' इत्यमर । ग्रहेण=गृह्णातीति ग्रहस्तेन, 'विभाषा ग्रह' इति व्यवस्थितविभाषया जलचरे कर्तरि ण । ज्योतिषि पचाद्यच् । ग्राहेण= 'विभाषा ग्रह' इति ण ।

भावार्थ —उद्दीपकत्वात् कामाऽऽयतनैरिव वनप्रदेशैर्मम चित्त मङ्गलादिकेन क्रूरग्रहेण आक्रान्तमिव समुद्रे ग्राहेण गृहीतमिव भवति ।

भाषार्थ —उद्दीपक होनेसे कामभवनके सदृश वनप्रदेशोको देखकर मेरा चित्त मङ्गल आदि क्रूरग्रहसे आक्रान्तकी तरह और समुद्रमे ग्राहसे ग्रहण किये हुयेके तुल्य होता है ॥ ८४ ॥

**वाताऽऽहतिचलच्छाखा नर्तका इव शाखिन ।**
**दु सहा हा ! परिक्षिप्ता क्वणद्भिरलिगाथकै ॥ ८५ ॥**

अन्वय —वाताऽऽहतिचलच्छाखा क्वणद्भि अलिगाथकै परिक्षिप्ता शाखिन नर्तका इव दु सहा, हा ।

प्रयोगप०—वाताऽऽहतिचलच्छाखै परिक्षिप्तै शाखिभि नर्तकैरिव दु सहै ( भूयते ) ।

व्याख्या—वाताऽऽहतिचलच्छाखा =वाय्वाघातचलद्विटपा, क्वणद्भि =गुञ्जद्भि, अलिगाथकै =भ्रमरगायकै, परिक्षिप्ता =परिवृता, शाखिन =वृक्षा, नर्तका इव= लासका इव, दु सहा =असह्या ( भवन्तीति शेष ) हा=कष्टम् ।

व्युत्पत्ति —वाताऽऽहतिचलच्छाखा =वातस्य आहतिर्वाताऽऽहति (ष० त०)

प्रयोगप०—मया अवसायेन भविष्यते । यमेन ( अपि ) अवहारेण ( सता ) अहं सुखी न क्रियं ।

व्याख्या—अह-राम, कदा नु=कस्मिन्समये नु, अस्य=अनुभूयमानस्य, दु खस्य=सीतावियोगस्य, अवसाय =समापक, भविष्यामि=भवितास्मि ? यम = अन्तक ( अपि ), जीवस्य=प्राणस्य, अवहार =हर्त्ता ( सन् ), मा=राम, सुखिन= दु खरहित, न करोति=न विदधाति ( अस्मज्जीवनान्मरणमेव वरमिति भाव )।

व्युत्पत्ति —अवसाय =अवस्यतीति, अवपूर्वात् 'षोऽन्तकर्मणि' इति धातो 'श्याद्व्यधे' त्यादिना ण । अवहार =अवहरतीति, पूर्वसूत्रेणैव ण ।

भावाऽर्थ —सीताविरहरूपस्य दु खस्य कदा समाप्तिर्भविष्यति ? यमोऽपि प्राणहरणेन मद्दु ख नाऽपनयति ।

भाषाऽर्थ —कब मेरे इस दु ख का अवसान होगा ? यमराज भी प्राणका अपहरण करते हुए मुझको सुखी नही बनाते है ॥ ८४ ॥

**दह्येऽह मधुनो लेहैर्दावैरुग्रैर्यथा गिरि ।**
**नाय कोऽत्र स येन स्या बताऽह विगतज्वर ॥ ८३ ॥**

अन्वय —अह मधुन लेहै उग्रै दाव गिरि यथा दह्ये, येन अह विगतज्वर स्याम्, अत्र स नाय क नु ? बत ।

प्रयोगप०—मा मधुनो लेहा उग्रा दावा गिरिं यथा दहन्ति, मया विगतज्वरेण भूयेत, तेन नायेन केन नु ( भूयते ) ।

व्याख्या—अह=राम, मधुन =पुष्परसस्य, लेहै =आस्वादकै (मधुलिड्भिर्भ्रमरैरित्यर्थ ), उग्रै =करै, दावै =दावाऽनलै गिरिर्यथा=पर्वत इव, दह्ये= तप्ये । येन=उपायेन, अह=राम, विगतज्वर =अपगतसन्ताप, स्या=भवेयम्, अत्र=अवसरे, स =तादृश, नाय =उपाय, क नु=न कोऽपीत्यर्थ । बत= खेदोऽस्ति ।

व्युत्पत्ति —लेहै =लिहन्तीति लेहास्तै, 'लिह आस्वादने' इति धातो 'श्याद्व्यधे' त्यादिना ण । दावै =दुन्वन्तीति दावास्तै, 'टुदु उपतापे' इति धातो 'दुन्योरनुपसर्गे' इति ण । दह्ये='दह भस्मीकरणे' इति धातो कर्मणि लटि मिप् । विगतज्वर =विगतो ज्वरो यस्य स ( बहु० ) । नाय =नयतीति, पूर्वसूत्रेणैव ण ।

भावाऽर्थ —यथा भयङ्करा दावाऽनला पर्वत दहन्ति, तथैव उद्दीपकत्वात् भ्रमरा अपि मा दहन्ति । येन मम सन्तापो नश्येत्स क उपायो नु ? बत ।

**तौ वालिप्रणिधी मत्वा सुग्रीवोऽचिन्तयत्कपि ।**
**बन्धुना विगृहीतोऽह भूयास जीवक कथम् ॥ ८७ ॥**

अन्वय —( अथ ) सुग्रीव कपि तौ वालिप्रणिधी मत्वा 'बन्धुना विगृहीतः अह कथ जीवक भूयासम्' इति अचिन्तयत् ।

प्रयोगप०—सुग्रीवेण कपिना= 'विगृहीतेन मया कथ जीवकेन भाविषीष्ट' इति अचिन्त्यत ।

व्याख्या—(अथ=अनन्तरम्) सुग्रीव =सुग्रीवनामक , कपि =वानर , तौ= रामलक्ष्मणो, वालिप्रणिधी=वालिचरौ, मत्वा= विचार्य, बन्धुना=भ्रात्रा (वालिनेत्यर्थ ), विगृहीत =विरोधित , अह =सुग्रीव , कथ=केन प्रकारेण, जीवको भूयास=जीव्यासम्, इति=इत्थम्, अचिन्तयत्= चिन्तितवान् ।

व्युत्पत्ति —वालिप्रणिधी=प्रकर्षेण निधीयते ज्ञेयमत्र प्रणिधि 'उपसर्गे घो कि' इति कि । वालिन प्रणिधी, वालिप्रणिधी तौ, ( ष० त० ) 'यथाऽर्हवर्णप्रणिधिरपसर्पश्चर स्पर्श ।' इत्यमर । जीवक =जीवतात् इति, 'जीव प्राणधारणे' इति धातो 'आशिषि च इति आशीरर्थे वुन्, तदन्तपदसाहचर्यात् 'भूयासम्' इत्यस्य 'भवेयम्' इति सामान्यार्थपरत्वम् ।

भावाऽर्थ —रामलक्ष्मणो ऋष्यमूके दृष्ट्वा वानरराज सुग्रीवस्ता वालिचरौ विचार्य'बलवत्तरेण बन्धुना वालिना विरोधितोऽह कथ जीव्यासम्'इति चिन्तितवान्।

भाषाऽर्थ —तब वानरराज सुग्रीवने ऋष्यमूक पर्वतपर आये हुए राम और लक्ष्मणको वालीका गुप्तचर विचार कर बलवान् भाई वालीसे विरोध कर मै कैसे जीऊँगा ऐसी चिन्ता की ॥ ८७ ॥

अथ सोपपदाऽधिकार ।

**स शत्रुलावौ मन्वानो राघवौ मलय गिरिम् ।**
**जगाम सपरीवारो व्योममायमिवोत्थितम् ॥ ८८ ॥**

अन्वय —स राघवौ शत्रुलावौ मन्वान सपरीवार ( सन् ) व्योममायम् इव उत्थित मलय गिरि जगाम ।

प्रयोगप०—तेन मन्वानेन सपरीवारेण ( सता ) व्योममाय इव उत्थितो मलयो गिरिर्जग्मे ।

व्याख्या—स =सुग्रीव , राघवौ= रामलक्ष्मणौ, शत्रुलावो= वैरिघातिनो, मन्वान =निश्चिन्वन्, सपरीवार =हनूमदादिसहित (सन्), व्योममायम् इव= आकाशपरिमाण कुर्वाणम् इव, उत्थितम्=उन्नत, मलय=मलयनामक, गिरि=पर्वत, म=ययो ( मलयप्रत्यन्तपर्वतमृष्यमूक विहाय मलयमेवाऽऽरूढ इत्यर्थ ) ।

चलन्त्य शाखा. ( नर्तकपक्षे भुजलता ) येषा ते चलच्छाखा ( बहु० ) 'शाखा वेदप्रभेदेषु बाहुपार्श्वद्रुमाऽङ्गयो ।' इति यादव । वाताऽऽहत्या चलच्छाखा (तृ० त० )। अलिगायकै =गायन्तीति गाथका, गायते शिल्पिनि 'गस्थकन्' इति थकन्प्रत्यय । अलिन एव गाथका अलिगायकास्तै ( रूपक० )। नर्तका =नृत्यन्तीति, 'नृती गात्रविक्षेपे' इति धातो 'शिल्पिनि ष्वुन्' । दु सहा =दु खेन सोढु शक्या ( खल्प्रत्यय )।

भावार्थ —वायुना चलद्भुजलता गुञ्जद्भिरलिगायकै परिवृता वृक्षा नर्तका प्रतीयन्ते, अत एव उद्दीपकत्वाद् दु सहा भवन्ति, हा ।

भाषार्थ —वायुके आघातसे बाहुतुल्य जिनकी शाखाएं हिल रही हैं, शब्द करनेवाले भ्रमररूप गवैयोसे घिरे हुए ऐसे वृक्ष नर्तककी तरह प्रतीत हो रहे हैं, अत एव उद्दीपक होनेसे ये दु सह हैं, हाय ! ॥ ८५ ॥

**एकहायनसारङ्गगती रघुकुलोत्तमौ ।**
**लवकौ शत्रुशक्तीनामृष्यमूकमगच्छताम् ॥ ८६ ॥**

अन्वय —एकहायनसारङ्गगती शत्रुशक्तीना लवकौ रघुकुलोत्तमौ ऋष्यमूकम् अगच्छताम् ।

प्रयोगप०—एकहायनसारङ्गगतिभ्या लवकाभ्या रघुकुलोत्तमाभ्यामृष्यमूकोऽगम्यत ।

व्याख्या—एकहायनसारङ्गगती=एकवर्षगजगमनौ, शत्रुशक्तीना=वैरिबलाना, लवकौ=साधुच्छेदनौ, रघुकुलोत्तमौ=रामलक्ष्मणौ, ऋष्यमूकम्=ऋष्यमूकपर्वतम्, अगच्छता=प्राप्तौ ।

व्युत्पत्ति —एकहायनसारङ्गगती=जहाति भावानिति, जिहीते (प्राप्नोति) भावानिति वा हायन ( वर्षम् ), जहातेर्जिहीतेश्च 'हश्च व्रीहिकालयो ' इति ण्युट्, 'सवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समा ।' इत्यमर. । एको हायनो यस्य स एकहायन (बहु०), स चाऽसौ सारङ्ग एकहायनसारङ्ग ( क० धा० ), 'सारङ्गश्चातके भृङ्गे कुरङ्गे च मतङ्गजे ।' इति विश्व । एकहायनसारङ्गस्येव गतिर्ययोस्तौ (व्यधि० बहु०) । शत्रुशक्तीना=शत्रूणा शक्तय शत्रुशक्तयस्तासाम् (ष० त०) । लवकौ=लुनीत इति 'लूञ् छेदने' इति धातो 'प्रुसृल्व समभिहारे वुन्' इति वुन् । समभिहारग्रहणेन साधुकारित्व लक्ष्यते ।

भावार्थ —एकवर्षकरिशावकगमनौ शत्रुशक्तिसाधुच्छेदकौ रामलक्ष्मणौ ऋष्यमूकमगच्छताम् ।

भाषार्थ —तब एक वर्षके हाथीकी तरह गतिवाले, शत्रुशक्तिका अच्छी तरह छेदन करनेवाले राम और लक्ष्मण ऋष्यमूक पर्वतको गये ॥ ८६ ॥

**तौ वालिप्रणिधी मत्वा सुग्रीवोऽचिन्तयत्कपि ।**
**बन्धुना विगृहीतोऽह भूयास जीवक कथम् ॥ ८७ ॥**

अन्वय —( अथ ) सुग्रीव कपि तौ वालिप्रणिधी मत्वा 'बन्धुना विगृहीतः अह कथ जीवक भूयासम्' इति अचिन्तयत् ।

प्रयोगप०—सुग्रीवेण कपिना = 'विगृहीतेन मया कथ जीवकेन भाविषीष्ट' इति अचिन्त्यत ।

व्याख्या—(अथ = अनन्तरम्) सुग्रीव = सुग्रीवनामक , कपि = वानर , तौ = रामलक्ष्मणौ, वालिप्रणिधी = वालिचरौ, मत्वा = विचार्य, बन्धुना = भ्रात्रा (वालिनेत्यर्थ ), विगृहीत = विरोधित , अह = सुग्रीव , कथ = केन प्रकारेण, जीवको भूयास = जीव्यासम्, इति = इत्थम्, अचिन्तयत् = चिन्तितवान् ।

व्युत्पत्ति —वालिप्रणिधी = प्रकर्षेण निधीयते ज्ञेयमत्र प्रणिधि 'उपसर्गे घो कि' इति कि । वालिन प्रणिधी, वालिप्रणिधी तौ, ( ष० त० ) 'यथाऽर्हवर्णप्रणिधिरपसर्पश्चर स्पर्श ।' इत्यमर । जीवक = जीवतात् इति, 'जीव प्राणधारणे' इति धातो 'आशिषि च इति आशीरर्थे वुन्, तदन्तपदसाहचर्यात् 'भूयासम्' इत्यस्य 'भवेयम्' इति सामान्याऽर्थपरत्वम् ।

भावाऽर्थ —रामलक्ष्मणौ ऋष्यमूके दृष्ट्वा वानरराज सुग्रीवस्तौ वालिचरौ विचार्य 'बलवत्तरेण बन्धुना वालिना विरोधितोऽह कथ जीव्यासम्' इति चिंतितवान्।

भाषाऽर्थ —तब वानरराज सुग्रीवने ऋष्यमूक पर्वतपर आये हुए राम और लक्ष्मणको वालीका गुप्तचर विचार कर बलवान् भाई वालीसे विरोध कर मैं कैसे जीऊँगा ऐसी चिन्ता की ॥ ८७ ॥

अथ सोपपदाऽधिकार ।

**स शत्रुलावौ मन्वानो राघवौ मलय गिरिम् ।**
**जगाम सपरीवारो व्योममायमिवोत्थितम् ॥ ८८ ॥**

अन्वय —स राघवौ शत्रुलावौ मन्वान सपरीवार ( सन् ) व्योममायम् इव उत्थित मलय गिरिं जगाम ।

प्रयोगप०—तेन मन्वानेन सपरीवारेण ( सता ) व्योममाय इव उत्थितो मलयो गिरिर्जग्मे ।

व्याख्या—स = सुग्रीव , राघवौ = रामलक्ष्मणौ, शत्रुलावौ = वैरिघातिनौ, मन्वान = निश्चिन्वन्, सपरीवार = हनूमदादिसहित (सन्), व्योममायम् इव = आकाशपरिमाण कुर्वाणम् इव, उत्थितम् = उन्नत, मलय = मलयनामक, गिरिं = पर्वत, ——— = ययौ ( मलयप्रत्यन्तपर्वतमृष्यमूक विहाय मलयमेवाऽऽरूढ इत्यर्थ ) ।

व्युत्पत्ति —शत्रुलावौ=शत्रून् लुनीत इति शत्रुलावौ, तौ 'तत्रोपपदं सप्तमीस्थम्' इति सूत्रेण शत्रुपदस्य उपपदसंज्ञाया 'कर्मण्यण्' इत्यण् 'उपपदमतिङ्' इत्युपपदसमास, एवमन्यत्राऽपि। सपरीवार='परीवार' इत्यत्र कपीनाममनुष्यत्वात् 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति दीर्घत्वम्। परीवारै सहित (बहु०)। व्योममायम्=व्योम मिमीते इति व्योममायस्त 'ह्वावामश्च' इति माङ कर्मण्यणि 'आतो युक् चिण्कृतो' इति युगागम।

भावार्थ —सुग्रीवो रामलक्ष्मणौ वैरिघातकौ निश्चिन्वन् हनूमदादिभि सह आकाश परिच्छेत्तुमिवोन्नत मलयपर्वत जगाम।

भाषार्थ —सुग्रीव राम और लक्ष्मणको 'ये शत्रुके नाश करनेवाले हैं' ऐसा निश्चय कर, जैसे आकाशका परिमाण करनेके लिए ऊँचा हुआ हो ऐसे मलय पर्वतपर हनूमान् आदि सहचरोंके साथ चढ़े ॥ ८८ ॥

**शर्मद मारुति दूत विषमस्थ कपिद्विपम्।**
**शोकाऽपनुदमव्यग्र प्रायुङ्क्त कपिकुञ्जर ॥ ८९ ॥**

अन्वय —विषमस्थ कपिकुञ्जर शर्मद शोकाऽपनुदम् अव्यग्र कपिद्विप मारुति दूत प्रायुङ्क्त।

प्रयोगप०—विषमस्थेन कपिकुञ्जरेण शर्मद शोकाऽपनुदोऽव्यग्र कपिद्विपो मारुतिर्दूत प्रायुज्यत।

व्याख्या—विषमस्थ =आपन्न ( प्राप्तापत्तिरित्यर्थ ), कपिकुञ्जर =वानरश्रेष्ठ ( सुग्रीव इत्यर्थ ), शर्मद=हितकारिणम् ( अन्यथा शोकाऽपनुदपदेन पौनरुक्त्यापत्ते ), शोकाऽपनुद=सुखाऽऽहर्तारम्, अव्यग्र=कार्यान्तराऽनाकुलमानस, कपिद्विप=वानरोत्तम ( गम्भीरस्वभावमित्यर्थ ), मारुति=वायुपुत्र ( हनूमन्तमित्यर्थ ), दूत=सन्देशहर, प्रायुङ्क्त=प्रयुक्तवान् ( प्रेषितवानित्यर्थ )।

व्युत्पत्ति —विषमस्थ =विषमे तिष्ठतीति, 'सुपि स्थ' इति कप्रत्यय । विषमे= दुर्गपदत्ते इति जयमङ्गला। कपिकुञ्जर =कपि कुञ्जर इव, 'वृन्दारकनागकुञ्जरै पूज्यमानम्' इति उपमितसमास, 'स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जरा । सिंहशार्दूलनागाद्या पुंसि श्रेष्ठार्थगोचरा' इत्यमर। शर्मद=शर्म ददातीति शर्मदस्तम्, 'आतोऽनुपसर्गे क' इति कप्रत्यय। शोकाऽपनुद=शोकमपनुदतीति शोकाऽपनुदस्त, 'तुन्दशोकयो परिमृजाऽपनुदो' इति 'आलस्यसुखाऽऽहरणयोरिति वक्तव्यम्' इत्यर्थविशेषे क। कपिद्विप=द्वाभ्या ( शुण्डामुखाभ्याम् ) पिबतीति द्विप, 'सुपि इति योगविभागात्क। कपि द्विप इव कपिद्विपस्तम्, 'उपमित व्याघ्रादिभि सामान्याऽप्रयोगे' इति उपमितसमास। मारुति=मरुदेव मारुत ( स्वार्थेऽण् ),

तस्याऽपत्य पुमान् मारुतिस्तम्, 'अत इञ्' इति इञ् । प्रायुङ्क्त='प्रोपाभ्यां युजेरयज्ञपात्रेषु' इत्यात्मनेपदम् ।

भावार्थ —आपद्ग्रस्त सुग्रीवो हितकारिण सुखाहर्तार कार्यान्तरेण अनासक्तचित्त वानरश्रेष्ठ वायुपुत्र हनूमन्त दूतत्वेन राघवसमीपे प्रेषितवान् ।

भाषार्थ —आपद्ग्रस्त सुग्रीवने हितकारी, सुख करनेवाले, अव्यग्र और वानरश्रेष्ठ वायुपुत्र हनूमान्को दूत बनाकर राम और लक्ष्मणके पास भेजा ॥८९॥

**विश्वासप्रदवेषोऽसौ पथिप्रज्ञ समाहित ।**
**चित्तसख्यो जिगीषूणामुत्पपात नभस्तलम् ॥ ९० ॥**

अन्वय —विश्वासप्रदवेष पथिप्रज्ञ समाहित जिगीषूणा चित्तसख्य असौ नभस्तलम् उत्पपात ।

प्रयोगप०—विश्वासप्रदवेषेण पथिप्रज्ञेन समाहितेन चित्तसख्येन अमुना नभस्तलम् उत्पेते ।

व्याख्या—विश्वासप्रदवेष =विस्रम्भोत्पादकवेष (भिक्षुवेषधारीत्यर्थ , रामायणे तथैवोक्त ), पथिप्रज्ञ =पथि कुशल , समाहित =अप्रमत्त , जिगीषूणा=जयाभिलाषिणा, चित्तसख्य =चित्तज्ञ , असौ=हनूमान्, नभस्तलम्=आकाशतलम्, उत्पपात=उत्पतितवान् ।

व्युत्पत्ति —विश्वासप्रदवेष =विश्वास प्रददातीति विश्वासप्रद 'प्रे दाज्ञ' इति ददाते प्रोपसर्गपूर्वकात्कर्मोपपदात् अणोऽपवाद क । विश्वासप्रदो वेषो यस्य स ( बहु० )। पथिप्रज्ञ =पन्थान प्रजानातीति, पूर्वसूत्रेणैव क । चित्तसख्य =चित्तानि सञ्चष्टे सख्यातीति वा, 'समि ख्य' इति सम्पूर्वात् ख्यातेश्चक्षिङादेशाच्च कर्मोपपदात्क ।

भावार्थ —भिक्षुवेषधारी पथि कुशलोऽप्रमत्तचित्तो जयाऽभिलाषिणामभिप्रायज्ञो हनूमानाकाशतलमुत्पतितवान् ।

भाषार्थ —विश्वासोत्पादक वेषवाले, मार्गकुशल, अप्रमत्त और जयाऽभिलाषियोंके अभिप्रायको जाननेवाले हनूमान्जीने आकाशमें उत्पतन किया ॥ ९० ॥

**सुरापैरिव घूर्णद्भि शाखिभि पवनाहतै ।**
**ऋष्यमूकमगाद् भृङ्गै प्रगीत सामगैरिव ॥ ९१ ॥**

अन्वय —पवनाऽऽहतै सुरापै इव घूर्णद्भि शाखिभि ( उपलक्षितम् ) भृङ्गै सामगै इव प्रगीतम् ऋष्यमूकम् अगात् ।

प्रयोगप०—( तेन ) प्रगीत ऋष्यमूकोऽगायि ।

व्युत्पत्ति—शत्रुलावौ=शत्रून् लुनीत इति शत्रुलावौ, तौ 'नत्रापदस्य तत्र्मो-स्यम्' इति सूत्रेण शत्रुपदस्य उपपदसंज्ञाया 'कर्मण्यण्' इत्यण् 'उपपदमतिङ्' इत्युपपदसमास, एवमन्यत्रापि। सपरीवार=परीवार' इत्यत्र मनुष्यानाममनुष्य-त्वात् 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति दीर्घत्वम्। परीवारं परिजन (वा०)। व्योममायम्=व्योम मिमीते इति व्योममायम्त 'ह्वावामश्च' इति माड तमण्यणि 'आतो युक् चिण्कृतो' इति युगागम।

भावार्थ—सुग्रीवो रामलक्ष्मणौ वैरिघातको निश्चिन्वन् हनुमदादिभि सह आकाश परिच्छेत्तुमिवोन्नत मलयपर्वत जगाम।

भाषार्थ—सुग्रीव राम और लक्ष्मणको 'ये शत्रुके नाश करनेवाले हैं' ऐसा निश्चय कर, जैसे आकाशका परिमाण करनेके लिए ऊँचा हुआ हो ऐसे मलय पर्वतपर हनूमान् आदि सहचरोंके साथ चढे ॥ ८८ ॥

**शर्मदं मारुतिं दूतं विषमस्थः कपिद्विपम्।**
**शोकाऽपनुदमव्यग्रं प्रायुङ्क्त कपिकुञ्जरः ॥ ८९ ॥**

अन्वय—विषमस्थः कपिकुञ्जरः शर्मदं शोकाऽपनुदम् अव्यग्रं कपिद्विपं मारुतिं दूतं प्रायुङ्क्त।

प्रयोगप०—विषमस्थेन कपिकुञ्जरेण शर्मदः शोकाऽपनुदोऽव्यग्रः कपिद्विपो मारुतिर्दूतः प्रायुज्यत।

व्याख्या—विषमस्थः=आपन्न (पाशापत्तिरित्यर्थः), कपिकुञ्जरः=वानर-श्रेष्ठ (सुग्रीव इत्यर्थः), शर्मदं=हितकारिणम् (अन्यथा शोकाऽपनुदपदेन पौन-रुक्त्यापत्तेः), शोकाऽपनुदं=दुःखाऽऽहर्तारम्, अव्यग्रं=कार्यान्तराऽनाकुलमानसं, कपिद्विपं=वानरोत्तमं (गम्भीरस्वभावमित्यर्थः), मारुतिं=वायुपुत्रं (हनूमन्तमि-त्यर्थः), दूतं=सन्देशहरं, प्रायुङ्क्त=प्रयुक्तवान् (प्रेषितवानित्यर्थः)।

व्युत्पत्ति—विषमस्थः=विषमे तिष्ठतीति, 'सुपि स्थः' इति कप्रत्यय। विषमे= दुर्गपदे इति जयमङ्गला। कपिकुञ्जरः=कपिः कुञ्जर इव, 'वृन्दारकनागकुञ्जरैः पूज्यमानम्' इति उपमितसमास, 'स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः। सिंहशा-र्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः' इत्यमर। शर्मदं=शर्म ददातीति शर्मदस्तम्, 'आतोऽनुपसर्गे कः' इति कप्रत्यय। शोकाऽपनुदं=शोकमपनुदतीति शोकाऽपनुद-स्तं, 'तुन्दशोकयोः परिमृजाऽपनुदोः' इति 'आलस्यसुखाऽऽहरणयोरिति वक्तव्यम्' इत्यर्थविशेषे कः। कपिद्विपं=द्वाभ्यां (शुण्डामुखाभ्याम्) पिबतीति द्विपः, 'सुपि' इति योगविभागात्कः। कपिः द्विप इव कपिद्विपस्तम्, 'उपमितं व्याघ्रादिभिः सामान्याऽप्रयोगे' इति उपमितसमास। मारुतिं=मरुदेव मारुत (स्वार्थेऽण्),

भावार्थ —हनूमान्जी भिक्षुवेष धारण कर सुन्दर ऋष्यमूक पर्वतपर आकर तरुण और वीर राम और लक्ष्मणको आनन्दप्रद होते हुए कहने लगे ॥ ९२ ॥

**बलिनावमुमद्रीन्द्र युवा स्तम्बेरमाविव ।**
**आचक्षाथामिथ कस्माच्छङ्करेणाऽपि दुर्गमम् ॥ ९३ ॥**

अन्वय —( हे वीरा ! ) स्तम्बेरमो इव वलिना युवा शङ्करेण अपि दुर्गमम् अमुम् अद्रीन्द्र कस्मात् इथ आचक्षाथाम् ।

प्रयोगप०—स्तम्बेरमाभ्यामिव बलिभ्या युवाभ्या दुर्गमोऽसा अद्रीन्द्र कस्मात् ईयते ? आख्यायताम् ।

व्याख्या—( हे वीरौ=हे शूरो ) स्तम्बेरमो इव=हस्तिनो इव, बलिनौ= बलवन्ता, युवा, शङ्करेण अपि=ईश्वरेण अपि, दुर्गम=दुष्प्राप्यम्, अमुम्=एतम्, अद्रीन्द्र=पर्वतश्रेष्ठम् ( ऋष्यमूकमित्यर्थ ), कस्मात्=कारणात्, इथ =प्राप्नुथ , आचक्षाथा=कथयतम् ।

व्युत्पत्ति —स्तम्बेरमौ=स्तम्बे रमेते इति, 'स्तम्बकणयो रमिजपो' इति 'हस्तिसूनकयोरिति वक्तव्यम्' इति हस्तिनि अच्प्रत्यय , 'इभ स्तम्बेरम पद्मी' इत्यमर । शङ्करेण=श करोतीति शङ्करस्तेन, 'शमि धातो सज्ञायाम्' इत्यच् । इथ ='इण् गतो' इति धातो. वर्तमानसामीप्ये भूते लटि थस् । आचक्षाथाम्= आङ्पूर्वात् 'चक्षिङ् व्यक्ताया वाचि' इति धातोर्लट् ।

भावार्थ —हे वीरौ ! हस्तिसमौ बलवन्तौ युवा शङ्करेणाऽपि दुर्गममेतमृष्यमूक कस्माद्धेतो प्राप्नुथ , कथयतम् ।

भाषार्थ —हे वीरो ! हाथीके समान बलवान् आप दोनो, शङ्करसे भी दुगम इस ऋष्यमूक पर्वतपर किस कारणसे आये है, बतलाइये ॥ ९३ ॥

**व्याप्त गुहाशयै क्रूरै क्रव्यादिभ सनिशाचरै ।**
**तुङ्गशृङ्गतरुच्छन्न मानुषाणामगोचरम् ॥ ९४ ॥**

अन्वय —गुहाशयै क्रूरै सनिशाचरै क्रव्याद्भि व्याप्त तुङ्गशृङ्गतरुच्छन्न मानुषाणाम् अगोचरम् ( अमुम् अद्रीन्द्र कस्मात् इथ ) ।

प्रयोगप०—व्याप्तस्तुङ्गशृङ्गतरुच्छन्नोऽगोचर (असौ अद्रीन्द्र कस्मादीयते) ।

व्याख्या—गुहाशयै =गह्वरस्थै , क्रूरै =हिंस्रै , सनिशाचरै =राक्षससहितै क्रव्याद्भि =आममासभक्षकै ( सिहव्याघ्रादिभिरित्यर्थ ), व्याप्त=तत, तुङ्गशृङ्गतरुच्छन्नम्=उन्नतशिखरवृक्षव्याप्त, मानुषाणा=मनुष्याणाम्, अगोचरम्=अगम्यम्, ( 'अमुम् अद्रीन्द्र कस्मात् इथ ' इति पूर्वेण सम्बन्ध ) ।

व्याख्या—पवनाऽऽहतैः=वाताऽऽकम्पितैः, सुरापैः=मद्यपैः इव, घूर्णद्भिः=भ्रमद्भिः, शाखिभिः=वृक्षैः, (उपलक्षितम्) भृङ्गैः=भ्रमरैः, साम... =सामगान-पाठकैः इव, प्रगीतम्=उपगीतम्, ऋष्यमूकम्=ऋष्यमूकपर्वतम्, अगात्=गतः।

व्युत्पत्तिः—पवनाऽऽहतैः=पवनेन आहताः पवनाऽऽहताः (तृ० त०)। सुरापैः=सुरां पिबन्तीति सुरापास्तैः, 'पा पाने' इति धातोः 'गापोष्टक्' इति टक्, 'पिबतेः सुराशीध्वोरिति वाच्यम्' इति वार्त्तिकमुपपदनियमार्थः। सामगैः=साम गायन्तीति सामगास्तैः, पूर्वसूत्रेणैव टक्। प्रगीतम्=प्रगीयते स्मेति अधिकरणे क्तः।

भावार्थः—हनूमान् वायुना ईषत्कम्पितैर्मद्यपैरिव भ्रमद्भिर्वृक्षैरुपलक्षितं भ्रमरैः सामपाठकैरिवोपगीतमृष्यमूकपर्वतमगच्छत्।

भाषार्थ—हनूमानजी वायुसे कुछ कम्पित अतएव मद्यपान करनेवाले की तरह हिलते हुए वृक्षोंसे युक्त और सामगान करनेवाले की तरह भ्रमरोंसे उपगीत ऋष्यमूक पर्वतपर गये॥ ९१॥

तं मनोहरमागम्य गिरिं वर्महरौ कपिः।
वीरौ सुखाहरोऽवोचद्भिक्षुर्भिक्षाऽर्हविग्रहः॥ ९२॥

अन्वयः—भिक्षुः भिक्षाऽर्हविग्रहः कपिः मनोहरं तं गिरिम् आगम्य वर्महरौ वीरौ सुखाऽऽहरः (सन्) अवोचत्।

प्रयोगप०—भिक्षुणा भिक्षाऽर्हविग्रहेण कपिना वर्महरौ वीरौ सुखाऽऽहरेण (सता) अवोचाताम्।

व्याख्या—भिक्षुः=परिव्राड्वेषधारी, भिक्षाऽर्हविग्रहः=भिक्षायोग्यशरीरः (कृशत्वादित्यर्थः), कपिः=हनूमान्, मनोहरम्=सुन्दरम्, तम्=पूर्वोक्तम्, गिरिम्=पर्वतम् (ऋष्यमूकमित्यर्थः), आगम्य=प्राप्य, वर्महरौ=कवचधारणवयस्कौ (तरुणावित्यर्थः), वीरौ=पराक्रमिणौ (रामलक्ष्मणावित्यर्थः), सुखाऽऽहरः=आनन्दकरः (सन्), अवोचत्=उक्तवान्।

व्युत्पत्तिः—भिक्षुः=भिक्ष्यते इति, 'सनाशंसभिक्ष उः' इति उः। 'भिक्षुः परिव्राट् कर्मन्दी' इत्यमरः। भिक्षाऽर्हविग्रहः=भिक्षामर्हतीति भिक्षाऽर्हः, 'अर्हः' इत्यर्हतेः कर्मोपपदादच्प्रत्ययः। भिक्षाऽर्हो विग्रहो यस्य सः (बहु०)। मनोहरम्=मनो हरतीति मनोहरस्तम्, 'हरतेरनुद्यमनेऽच्' इत्यच्। वर्महरौ=वर्म हरत इति वर्महरौ, तौ 'वयसि च' इत्यच्। सुखाऽऽहरः=सुखमाहरति तच्छीलः, 'आङि ताच्छील्ये' इत्यच्।

भावार्थः—परिव्राड्वेषधारी भिक्षाकालोचितवेषो हनूमान् रुचिरमृष्यमूक-पर्वतमागम्य तरुणौ रामलक्ष्मणौ आनन्दकरः सन्नुक्तवान्।

श्वासे उपतापयन्ति ) इति नाडिन्धमास्तान्, 'नाडीमुष्ट्योश्च' इति खश्प्रत्यये मुमागम 'खित्यनव्ययस्य' इति ह्रस्वत्वम्, 'नाडी तु धमनि सिरा ।' इत्यमर । स्तनन्धयसमत्विषो=स्तन धयतीति स्तनन्धय, 'नासिकास्तनयोर्ध्माधेटो' इति 'धेट् पाने' इति धातो खशि अयादेश । समा त्विड् ययोस्तौ समत्विषौ (बहु०) । स्तनन्धयेन समत्विषा ( तृ० त० ) ।

भावाऽर्थः—सर्वप्राणिभीषणै सिंहैर्व्याप्तान् निम्नोन्नतपाषाणान् उपलोत्पीडनात् सिरोपतापकान् पथ बालोपमकान्ती युवा कथमागतौ ?

भाषाऽर्थ —प्राणियोको कम्पित करनेवाले सिंहोसे व्याप्त, उन्नत और अवनत पत्थरोसे युक्त, अत एव चढाव और उतरावके कारण होनेवाले बारबार नि श्वासोसे नसोको उत्पीडित करनेवाले मार्गोंमे बालककी तरह कान्तिवाले आप दोनो कैसे आये हुए हे ? ॥ ९५ ॥

**उत्तीर्णौ वा कथ भीमा सरित कूलमुद्वहा ।**
**आसादितौ कथ ब्रूत न गजै कूलमुद्रुजै ॥ ९६ ॥**

अन्वय —( किञ्च ) कूलमुद्वहा भीमा सरित कथम् उत्तीर्णौ ? कूलमुद्रुजै गजै कथ न आसादितौ ? ब्रूतम् ।

प्रयोगप०—(युवाभ्याम्) कूलमुद्वहा सरित कथम् उत्तीर्णा ? कूलमुद्रुजा गजा ( युवाम् ) कथ न आसादितवन्त ? उच्यताम् ।

व्याख्या—कूलमुद्वहा =तटोत्क्रमणेन वहन्तो, भीमा =भीषणा, सरित = नदी, कथ=केन प्रकारेण, उत्तीर्णौ=तीर्णवन्तौ ( युवामिति शेष ), कूलमुद्रुजै = तटभञ्जकै, गजै =हस्तिभि, कथ=केन प्रकारेण, न आसादितौ=न प्राप्तौ, ब्रूत= कथयतम् ।

व्युत्पत्ति —कूलमुद्वहा =कूलानि उद्वहन्ति ( उत्क्रम्य वहन्ति ) इति कूलमुद्वहास्ता, 'उदि कूले रुजिवहो' इति खशि मुमागम । उत्तीर्णौ=उत्पूर्वात् 'तॄ प्लवनसतरणयो' इति धातोस्तरणस्याऽपि गतित्वात् 'गत्यर्थाऽकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च' इति कर्तरि क्त । कूलमुद्रुजै =कूलानि उद्रुजन्तीति कूलमुद्रुजास्तै, पूर्वसूत्रेणैव खश् । आसादितौ=कर्मणि क्त ।

भावार्थ —हे वीरौ । युवा तटान्युत्क्रम्य वहन्तीर्भीषणा नदी कथ तीर्णवन्तौ ? मत्ता गजाश्च युवा कथ न व्यापादितवन्त ? कथयतम् ।

भाषार्थ —हे वीरो । तटोको उल्लङ्घन कर बहनेवाली भयङ्कर नदियोको आप लोगोने कैसे पार किया ? नदी तटोको भङ्ग करनेवाले मत्त हाथियोसे आप लोगोका कैसे सामना नही हुआ ? बतलाइये ॥ ९६ ॥

व्युत्पत्ति —गुहाशयै=गुहासु शेरते इति गुहाशयास्तै, 'अधिकरणे शेते' इत्यच्प्रत्ययः । सनिशाचरैः=निशासु चरन्तीति निशाचराः 'चरेष्टः' इति टः । निशाचरैः सहितैः सनिशाचरैः ( बहु० ), क्रव्याद्भिः=क्रव्यम् ( आममांसम् ) अदन्तीति क्रव्यादः, तैः 'क्रव्ये च' इति 'अद भक्षणे' इति धातोः अण्वाधेन विट्प्रत्ययः । तुङ्गशृङ्गतरुच्छन्नः=तुङ्गानि शृङ्गाणि यस्य स तुङ्गशृङ्गः ( बहु० ) । तरुभिश्छन्नस्तरुच्छन्नः ( तृ० त० ) । तुङ्गशृङ्गश्चासौ तरुच्छन्नस्तुङ्गशृङ्गतरुच्छन्नस्तम् ( क० धा० ), 'तुङ्गशैलतरुच्छन्नम्' इति जयमङ्गलभरतमल्लिनाथसम्मतः पाठान्तरः शिलाया भवाः शैलाः ( अण् ), तुङ्गाश्च ते शैलास्तुङ्गशैलाः ( क० धा० ), ते च ते तरवस्तैश्छन्नमिति विग्रहः कार्यः ।

भावार्थ —हे वीरौ ! गह्वरस्थैर्हिस्रैः राक्षससहितैः सिंहव्याघ्रादिभिरुन्नतशिखरैस्तरुभिश्च व्याप्तमत एव मनुष्याणां दुर्गममेतमृष्यमूकाख्यं पर्वतं कस्मात्कारणात् प्राप्नुथः ? कथयतम् ।

भाषाऽर्थ — हे वीरो ! गुफामें रहनेवाले, हिंस्र, राक्षसोंसे युक्त सिंह, व्याघ्र आदियोंसे तथा ऊँची चोटियोंसे और वृक्षोंसे व्याप्त अतएव मनुष्योंको दुर्गम इस ऋष्यमूक पर्वतपर आपलोग किस कारणसे आ गये हैं ? बतलाइये ॥ ९४ ॥

अथ खशादिप्रत्ययाधिकारः ।

**सत्त्वमेजयसिंहाढ्यान् स्तनन्धयसमत्विषौ ।**
**कथं नाडिन्धमान् मार्गानागतौ विषमोपलान् ॥ ९५ ॥**

अन्वय —सत्त्वमेजयसिंहाऽऽढ्यान् विषमोपलान् नाडिन्धमान् मार्गान् स्तनन्धयसमत्विषौ ( युवाम् ) कथम् आगतौ ?

प्रयोगप०—सत्त्वमेजयसिंहाढ्या विषमोपला नाडिन्धमा मार्गाः स्तनन्धयसमत्विड्भ्यां ( युवाभ्याम् ) कथमागताः ?

व्याख्या—सत्त्वमेजयसिंहाऽऽढ्यान्=प्राणिकम्पककेसरिव्याप्तान्, विषमोपलान्=निम्नोन्नतपाषाणान्, नाडिन्धमान्=सिरोपतापकान्, मार्गान्=पथः, स्तनन्धयसमत्विषौ=बालसदृशकान्ती ( बालवत्कोमलाऽङ्गावित्यर्थः ), ( युवाम् ) कथं=केन प्रकारेण, आगतौ=आयातौ ।

व्युत्पत्ति —सत्त्वमेजयसिंहाऽऽढ्यान्=सत्त्वान्, एजयन्ति इति सत्त्वमेजयाः, णिजन्तात् 'एजृ कम्पने' इति धातोः 'एजेः खश्' इति खश् 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमः । सत्त्वमेजयाश्च ते सिंहाः सत्त्वमेजयसिंहाः (क० धा०), तैराढ्याः सत्त्वमेजयसिंहाऽऽढ्यास्तान् (तृ० त०), विषमोपलान्=विषमा उपला येषु ते विषमोपलास्तान् ( बहु० ) । नाडिन्धमान्=नाडीः ( सिराः ) धमन्ति ( मुहुर्मुहुर्नि-

भाषार्थ —तब रामने हनूमान्को कहा —हे विद्वन् ! हम दोनो पिताकी इच्छासे थोडेसे भी सन्तुष्ट होनेवाले ऋषियोकी रक्षा करते हुए इस अत्यन्त उन्नत पर्वतपर आये हुए है ॥ ९७ ॥

**अमितम्पचमीशान सर्वभोगीणमुत्तमम् ।**
**आवयो पितर विद्धि ख्यात दशरथ भुवि ॥ ९८ ॥**

अन्वय —अमितम्पचम् ईशान सर्वभोगीणम् उत्तम भुवि ख्यात दशरथम् आवयो पितर विद्धि ।

प्रयोगप०—( त्वया ) अमितम्पच ईशान सर्वभोगीण उत्तम ख्यातो दशरथ आवयो पिता विद्यताम् ।

व्याख्या—अमितम्पच=प्रचुराऽन्नभक्षकम्, ईशानम्=ऐश्वर्ययुक्त, सर्वभोगीण=महाभोगिनम्, उत्तमम्=श्रेष्ठ, भुवि=पृथिव्या, ख्यात=प्रसिद्ध, दशरथ=तदाख्य पुरुषम्, आवयो =रामलक्ष्मणयो , पितर=जनक, विद्धि=जानीहि ।

व्युत्पत्ति —अमितम्पच=मित पचतीति मितम्पच 'मितनखे च' इति खश् । न मितम्पच अमितम्पचस्तम् (नञ्) । ईशानम्=ईष्टे तच्छील इति ईशानस्तम्, 'ईश ऐश्वर्ये' इति धातो 'ताच्छील्यवयोवचनशक्तिषु चानश्' इति चानश् । सर्वभोगीण=सर्वभोगाय हित सर्वभोगीणस्तम्, 'आत्मन्विश्वजनभोगोत्तरपदात्ख ' इति खप्रत्यय । विद्धि='विद ज्ञाने' इति धातोर्लोटि 'हुझल्भ्यो हेर्धि ' इति धि ।

भवाऽर्थ —बहुविधाऽन्नभक्षमैश्वर्ययुक्त महाभोगिन श्रेष्ठ लोकविश्रुत दशरथमावयो पितर जानीहि ।

भाषाऽर्थ —अनेक प्रकारके अन्नोको खानेवाले, ऐश्वर्ययुक्त, सब तरहके सुखो का उपभोग करनेवाले, श्रेष्ठ और पृथ्वीमे सुप्रसिद्ध महाराज दशरथ हमारे पिता हे, यह बात आप जानिए ॥ ९८ ॥

**छलेन दयिताऽरण्याद्रक्षसाऽरुन्तुदेन न ।**
**असूर्यम्पश्यया मूर्त्या हृता, ता मृगयावहे ॥ ९९ ॥**

अन्वय —अरुन्तुदेन रक्षसा असूर्यम्पश्यया मूर्त्या ( उपलक्षिता ) न दयिता छलेन अरण्यात् हृता, ता मृगयावहे ।

प्रयोगप०—अरुन्तुद रक्ष न दयिता हृतवान्, सा मृग्यते ।

व्याख्या—अरुन्तुदेन=मर्मभेदिना, रक्षसा=राक्षसेन (रावणेनेत्यर्थ ) । असूर्यम्पश्यया=अतिगोप्यया, मूर्त्या=शरीरेण ( उपलक्षिता ), न =मम, दयिता=प्रिया ( सीतेत्यर्थ ), छलेन=छद्मना ( मृगच्छद्मनेत्यर्थ ), अरण्यात्=वनात्, हृता=अपहृता, ता=सीता, मृगयावहे=अन्विष्यावहे ।

रामोऽवोचद्धनूमन्तमावामभ्रलिहं गिरिम् ।
ऐव विद्वन् ! पितुः कामात्पान्तावल्पम्पचान्मुनीन् ॥९७॥

अन्वयः—( अथ ) रामः हनूमन्तम् अवोचत्—हे विद्वन् ! आवां पितुः कामात् अल्पम्पचान् मुनीन् पान्तौ ( सन्तौ ) अभ्रलिहं गिरिम् ऐव ।

प्रयोगप०—रामेण हनूमान् अवाचि, आवाभ्यां पान्द्भ्याम् (सन्द्भ्याम्) अभ्रलिहो गिरिरैयत ।

व्याख्या—रामः=रामचन्द्रः, हनूमन्तं=मारुतिम्, अवोचत्=अवदत्, हे विद्वन्=हे पण्डित, आवां=रामलक्ष्मणौ, पितुः=जनकस्य (दशरथस्येत्यर्थः), कामात्=अभिप्रायमनुसृत्य, अल्पम्पचान्=मितम्पचान् ( अल्पमन्तुष्ठानित्यर्थः ), मुनीन्=ऋषीन्, पान्तौ=रक्षन्तौ (सन्तौ), अभ्रलिहम्=अत्युन्नतं, गिरिं=पर्वतम्, ऐव=आगतौ ।

व्युत्पत्तिः—हनूमन्तं=निन्दितौ ( भग्नत्वादिति भावः ) हनू स्तः यस्य स हनूमान्, तं, निन्दार्थे मतुप् । 'शरादीनां च' इति सञ्ज्ञायां दीर्घत्वम्, यद्येवं तर्हि 'हनूमान् हनुमानपि' इति विश्वकोशस्य प्रायेण ह्रस्वव्यवहारिणो लोकस्यापि का गतिरिति चेत् ? तर्हि योगार्थोऽनुसरणेनाऽसञ्ज्ञायां विशेषणरूपेणैव तन्निर्वाह इति अदृष्टया साधीयान् पन्थाः । एवं च 'अन्येषामपि दृश्यते' इति सूत्रेण दीर्घ इति वदन्तौ जयमङ्गलमल्लिनाथावुपेक्षणीयौ तत्प्रयुक्तदीर्घस्य उभयत्र ( सञ्ज्ञायामसञ्ज्ञायां च ) प्राप्तेर्नित्यत्वाच्च । 'गण्डौ कपोलौ, तत्परो हनुः' इत्यमरः । जातमात्रस्य आदित्यरथं गृह्णतो हनूमतो हनुद्वयं भग्नमिति प्रसिद्धं तथा च—

अभ्युत्थितं ततः सूर्यं बालो दृष्ट्वा महावने ।
फलं चेति जिघृक्षुस्त्वमुत्प्लुत्याऽभ्युत्थितो दिवम् ॥
शतानि त्रीणि गत्वाऽथ योजनानां महाकपे । तेजसा तस्य निर्धूतो न विषादं गतस्ततः ॥
त्वामभ्युपगतं तूर्णमन्तरिक्षं महाकपे । क्षिप्तमिन्द्रेण ते वज्रं कोपाऽऽविष्टेन तेजसा ॥
तदा शैलाऽग्रशिखरे वामो हनुरभज्यत । ततोऽभिनामधेयं ते 'हनुमानि'ति कीर्तितम् ॥

इति रामायणकिष्किन्धाकाण्डे दृश्यते । कामात्='ल्यब्लोपे कर्मण्यधिकरणे च' इति ल्यब्लोपे पञ्चमी । अल्पम्पचान्=अल्पं पचन्तीति अल्पम्पचास्तान्, 'मितनखे च' इति मितशब्दस्य अर्थपरत्वादनुक्तसमुच्चयार्थाच्चकाराद्वा अल्पशब्दोपपदात्पचेः खशित्याहुः । पान्तौ=पातः इति 'पा रक्षणे' इति धातोर्लटः शत्रादेशः । अभ्रलिहम्=अभ्रं लेढीति अभ्रंलिहस्तम्, 'वहाऽभ्रे लिहः' इति खशि मुम् । ऐव=आङ् पूर्वादिणो लङि वसि, 'नित्यं ङितः' इति सलोपः आड्वृद्धिश्च ।

भावार्थः—ततो रामो हनूमन्तं प्रत्यब्रवीत्—हे विद्वन् ! आवां पितुरभिप्रायमनुसृत्य अल्पेनाऽपि सन्तुष्टानृषीन् रक्षन्तौ अत्युन्नतमिमं पर्वतमागतौ ।

अन्वय —उग्रम्पश्येन भ्रात्रा तेन सुग्रीव निराकृत । मित्रीयत तस्य वशवद दूत सम्प्राप्त अस्मि ।

प्रयोगप०—उग्रम्पश्यो भ्राता स सुग्रीव निराकृतवान् । ( मया ) वशवदेन दूतेन सम्प्राप्तेन ( भूयते ) ।

व्याख्या—उग्रम्पश्येन=पापदर्शिना, भ्राता=भ्राजेन, तेन=पूर्वोक्तेन ( वालिनेत्यर्थ ), सुग्रीव =सुग्रीवाख्यो मत्स्वामी, निराकृत =नि सारित (दाराऽपहरणपूर्वक निरस्त इत्यर्थ ), मित्रीयत =त्वया मैत्रीमिच्छत , तस्य=सुग्रीवस्य, वशवद ,=अनुकूलचारी, दूत =सन्देशहर , सम्प्राप्त =समायात , अस्मि=भवामि ।

व्युत्पत्ति —उग्रम्पश्येन=उग्र पश्यतीति उग्रम्पश्यस्तेन 'उग्रम्पश्येरम्मदपाणिन्धमाश्च' इति निपातनादण्बाधेन खशि मुम् पश्याऽऽदेशश्च । मित्रीयत =मित्रमात्मन इच्छन् मित्रीयन्, तस्य 'सुप आत्मन क्यच्' इति क्यच्, ततो लट शत्रादेश , वशवद =वश वदतीति, 'प्रियवशे वद खच्' इति खच् ।

भावार्थ —पापदर्शिना भ्रात्रा तेन वालिना पत्नीहरणपूर्वक देशान्नि सारितस्य अत साहाय्यार्थं मैत्रीमिच्छत सुग्रीवस्य अहमनुकूलचारी दूत समायातोऽस्मि ।

भाषार्थ —पापदर्शी भाई उस वालीसे सुग्रीवजी पत्नीहरणपूर्वक देशसे निकाले गये हैं । अत वे सहायताके लिए मैत्री करना चाहते है, मै उन्हीका अनुकूलचारी दूत होकर आया हूँ ॥ १०१ ॥

**प्रियवदोऽपि नैवाऽह ब्रुवे मिथ्या परन्तप ।**
**सख्या तेन दशग्रीव निहन्तासि द्विषन्तपम् ॥ १०२ ॥**

अन्वय —हे परन्तप ! अह प्रियवद अपि मिथ्या नैव ब्रुवे, सख्या तेन द्विषन्तप दशग्रीव निहन्तासि ।

प्रयोगप०—मया प्रियवदेन अपि मिथ्या नैव उच्यते । ( त्वया ) द्विषन्तपो दशग्रीवो निहन्ता ।

व्याख्या—हे परन्तप हे शत्रूणामुपतापद ! अह=हनूमान्, प्रियवद अपि=प्रियभाषी अपि, मिथ्या=मृषा, नैव ब्रुवे=निश्चय न कथयामि, सख्या=मित्रभूतेन, तेन=सुग्रीवेण, द्विषन्तप=शत्रुतापक ( महावीरमपीत्यर्थ ), दशग्रीव=रावण, निहन्तासि=हनिष्यसि ।

व्युत्पत्ति —परन्तप=परास्तापयतीति परन्तपस्तत्सम्बुद्धौ, परोपपदपूर्वकात् णिजन्तात् 'तप सन्तापे' इति धातो 'द्विषत्परयोस्तापे' इति खच्, 'खचि ह्रस्व ' इति उपधाया ह्रस्वत्व मुमागमश्च । प्रियवद =प्रिय वदतीति, 'प्रियवशे व

व्युत्पत्ति —अरुन्तुदेन=अरुस्तुदतीति अरुन्तुदस्तेन, 'विध्वरुषोस्तुद' इति खश 'अर्द्विषदजन्तस्य मुम्' इति मुमागमे सयोगान्तलोप । 'अरुन्तुद तु मर्मस्पृक्' इत्यमर । असूर्यम्पश्यया=सूर्यं न पश्यतीति असूर्यम्पश्या तया असूर्यम्पश्यया, 'असूर्यललाटयोर्दृशितपो' इति खश् मुमागमश्च । असूयमिति असमयसमास, दृशिना नञ सम्बन्धात् 'पाघ्राध्मे'त्यादिना दृशे पश्यादेश । मृगयावहे= 'मृग अन्वेषणे' इति स्वार्थिकण्यन्ताद्धातोर्लट् ।

भावार्थ —मर्मवेधी रावणोऽतिगोपनीया मम भार्या सीता मृगच्छद्मना अरण्याज्जहार, आवा तामन्विष्यावहे ।

भाषार्थ —मर्मभेदी राक्षस रावण, अतिगोपनीय मेरी पत्नी सीताको मृगके छलसे जङ्गलसे ले गया, हम दोनो उन्हीं को ढूँढते है ॥ ९९ ॥

**प्रत्यूचे मारुती राममस्ति वालीति वानर ।**
**शमयेदपि सग्रामे यो ललाटन्तप रविम् ॥ १०० ॥**

अन्वय —मारुति राम प्रत्यूचे—'वाली इति वानर अस्ति, यः सग्रामे ललाटन्तप रविम् अपि शमयेत्' ।

प्रयोगप० —मारुतिना राम प्रत्यूचे—'वालिना वानरेण भूयते, येन ललाटन्तपो रविरपि शम्येत' ।

व्याख्या—मारुति =हनूमान्, राम=रामचन्द्र, प्रत्यूचे=प्रत्युवाच, वाली इति=वालीति नाम्ना प्रसिद्ध , वानर =कपि , अस्ति=वर्तते, य =वाली, सग्रामे= युद्धे, ललाटन्तप=प्रचण्ड ( मध्याह्नकालवर्तित्वादिति भाव ), रविम् अपि=सूर्यम् अपि, शमयेत्=अवसादयेत् ( शमयितु शक्नोतीत्यर्थः ) ।

व्युत्पत्ति —वाली=वालिशब्दो नाऽन्त इदन्तश्च, तथा च 'वाली वालिश्च कथ्यते ।' इति शब्दभेद । ललाटन्तप=ललाट तपतीति ललाटन्तपस्तम्, 'असूर्यललाटयोर्दृशितपो' इति खशि मुम् । शमयेत्='शकि लिङ् च' इति शक्त्यर्थे लिङ् ।

भावार्थ —अथ हनूमान् राम प्रत्युवाच—'वालीति नाम्ना प्रसिद्धो वानरोऽस्ति, य सग्रामे प्रखरकिरण सूर्यमपि शमयितु शक्नोति' ।

भाषार्थ —तब हनूमान्ने रामसे कहा —'वाली' इस नामसे प्रसिद्ध वानर है, जो कि सग्राममे तीक्ष्ण किरणवाले सूर्यको भी परास्त कर सकता है ॥१००॥

**उग्रम्पश्येन सुग्रीवस्तेन भ्रात्रा निराकृत ।**
**तस्य मित्रीयतो दूत सम्प्राप्तोऽस्मि वशवद ॥ १०१ ॥**

अन्वय —( ततः ) कपिः सर्वङ्कषयशःशाखं रामकल्पतरुम् आदाय अभ्रङ्कषं फलशालिनं मलयं प्रायात् ।

प्रयोगप०—कपिनाऽभ्रङ्कषः फलशाली मलयः प्रायायत ।

व्याख्या—( ततः=अनन्तरम् ) कपिः=हनूमान्, सर्वङ्कषयशःशाखं=सर्वव्यापिकीर्तिविटपं, रामकल्पतरुं=रामकल्पवृक्षम्, आदाय=गृहीत्वा, (पृष्ठमारोप्येत्यर्थः)। अभ्रङ्कषम्=अत्युन्नतं, फलशालिनम्=आम्राऽऽदिशोभिनं, मलयं=मलयपर्वतं, प्रायात्=प्रयातः ( अत्र यशःशाखं रामकल्पतरुमिति साऽवयवरूपकम् ) ।

व्युत्पत्ति —सर्वङ्कषयशःशाखं=सर्वं कषन्तीति सर्वङ्कषाणि, 'सर्वकूलाभ्रकरीषेषु कषः' इति खचि मुम् । सर्वङ्कषाणि यशांसि एव शाखा यस्य स सर्वङ्कषयशःशाखस्तम् (बहु०) । रामकल्पतरुं=राम एव कल्पतरुः रामकल्पतरुस्तम् (रूपक०) । अभ्रङ्कषम्=अभ्रं कषतीति अभ्रङ्कषस्तं, पूर्वसूत्रेणैव खच् । फलशालिनं=फलेन ( आम्राऽऽदिना कार्यसिद्ध्या च ) शालत इति फलशाली, तम् ( णिनिः ) ।

भावाऽर्थ —ततो हनूमान् लोकव्यापकयशःशोभितं कल्पवृक्षवदीप्सिताऽर्थप्रदं रामं पृष्ठमारोप्य अत्युन्नतमाम्रादिफलेन कार्यसिद्ध्या च शोभितं मलयपर्वतमागच्छत् ।

भाषाऽर्थ —तब हनूमानजी लोकव्यापक शाखाके सदृश कीर्तिसे युक्त कल्पवृक्षतुल्य रामचन्द्रजीको पीठपर चढाकर अत्यन्त उन्नत और फलोंसे शोभित मलयपर्वतमें गये ॥ १०४ ॥

**मेघङ्करमिवाऽऽयान्तमृतुं रामं क्लमाऽन्वितः ।**
**दृष्ट्वा मेने न सुग्रीवो वालिभानुं भयङ्करम् ॥ १०५ ॥**

अन्वयः—क्लमाऽन्वितः सुग्रीवो मेघङ्करम् ऋतुम् इव आयान्तं रामं दृष्ट्वा वालिभानुं भयङ्करं न मेने ।

प्रयोगप०—क्लमाऽन्वितेन सुग्रीवेण वालिभानुर्भयङ्करो न मेने ।

व्याख्या—क्लमाऽन्वितः=क्लान्तः ( वालिभानुसन्तापादित्यर्थः ), सुग्रीवः=वानरराजः, मेघङ्करम् ऋतुम् इव=बलाहकप्रसारकम् ऋतुम् इव (वर्षर्तुमिवेत्यर्थः), आयान्तम्=आगच्छन्तं, रामं=रामचन्द्रं, दृष्ट्वा=विलोक्य, वालिभानुं=वालिसूर्यं भयङ्करं=भीतिप्रदं, न मेने=न अमन्यत ( वालिभयरहितोऽभूदित्यर्थः ) ।

व्युत्पत्ति —क्लमाऽन्वितः=क्लमेनाऽन्वितः ( तृ० त० ) । मेघङ्करं=मेघान्करोतीति मेघङ्करस्तं, 'मेघर्तिभयेषु कृञः' इति खचि मुम् । वालिभानुं=वाली भानुरिवेति वालिभानुस्तम् ( उपमितसमास )। भयङ्करं=भयं करोतीति भयङ्करस्तं, पूर्वसूत्रेणैव खचि मुम् ।

खच्' इति खच्। द्विषन्तप=द्विषत तापयतीति द्विषन्तपस्त, 'द्विषत्परयोस्तापे' इति खच्। दशग्रीव=दश ग्रीवा यस्य स दशग्रीवस्तम् (बहु०) 'जासिनिप्रहणनाटक्राथपिषा हिंसायाम्' इति सूत्रे सङ्घातविगृहीतविपर्यस्तग्रहणेन 'निहन्तासि' इति पदेन योगेऽपि शेषत्वविवक्षायामेव षष्ठीविधानादिह तदविवक्षाया कर्मणि द्वितीयैवेति मल्लिनाथ । निहन्तासि=निपूर्वाद्धन्तेर्लुटि सिप्।

भावार्थ —हे परन्तप ! अह प्रियवदोऽपि 'प्रिय च नाऽनृत ब्रूयात्' इति न्यायेन असत्यभाषण न करोमि, भवान् सुग्रीवस्य सख्येन महावीरमपि रावण हनिष्यति।

भाषार्थ —हे परन्तप ! मै प्रियभाषण करनेवाला होकर भी झूठ नही बोलता हू। आप सुग्रीवके साथ मित्रता करके महावीर रावणको मारेगे ॥ १०२ ॥

**वाचयमोऽहमनृते सत्यमेतद् ब्रवीमि ते।**
**एहि, सर्वसह मित्र सुग्रीव कुरु वानरम् ॥ १०३ ॥**

अन्वय —अहम् अनृते वाचयम (सन्) ते एतत् सत्य ब्रवीमि, एहि, सर्वसह सुग्रीव वानर मित्र कुरु।

प्रयोगप०—मया वाचयमेन ( सता ) एतत् सत्यमुच्यते, ईयताम्। सर्वसह सुग्रीवो वानरो मित्र क्रियताम्।

व्याख्या—अह=हनूमान्, अनृते=असत्ये ( विषये ), वाचयम =मौनव्रती ( सन् ), ते=तुभ्यम्, एतत्=इद, सत्य=तथ्य, ब्रवीमि=कथयामि, एहि=आगच्छ, सर्वसह=सकलकार्यसमर्थं, सुग्रीवम्,=सुग्रीवनामक, वानर=कपि ( अस्मत्स्वामिनमित्यर्थ ), मित्र=सखाय, कुरु=विधेहि ( यतस्ते तद्वस्तस्था कार्यसिद्धिरिति भाव )।

व्युत्पत्ति —अनृते=न ऋतमनृत, तस्मिन् (नञ्०)। वाचयम =वाच यच्छतीति, 'वाचि यमो व्रते' इति खच् 'वाचयमपुरन्दरौ च' इति निपातनान्मुमागम । सर्वसह=सर्व सहते इति सर्वसहस्त, 'पू सर्वयोर्दारिसहो' इति खचि मुम्।

भावार्थ —अहमनृत परित्यज्य त्वामेतत्सत्य ब्रवीमि आगच्छ। सर्वप्रयोजनसाधकेन सुग्रीवेण सह मैत्री कुरु।

भाषार्थ —मै मिथ्याभाषणके विषयमे मौनव्रती होकर आपको सत्य कह रहा हूँ, आइये। सम्पूर्ण कार्योमे समर्थ वानरराज सुग्रीवके साथ मैत्री कीजिये ॥१०३॥

**सर्वङ्कषयश शाख रामकल्पतरु कपि।**
**आदायाऽभ्रङ्कष प्रायान्मलय फलशालिनम् ॥ १०४ ॥**

अन्वय —( ततः ) कपिः सर्वङ्कषयशःशाखं रामकल्पतरुम् आदाय अभ्रङ्कषं फलशालिनं मलयं प्रायात् ।

प्रयोगप०—कपिनाऽभ्रङ्कषः फलशाली मलयः प्रायायत ।

व्याख्या—( ततः=अनन्तरम् ) कपिः=हनूमान्, सर्वङ्कषयशःशाखं=सर्वव्यापिकीर्तिविटप, रामकल्पतरुं=रामकल्पवृक्षम्, आदाय=गृहीत्वा, (पृष्ठमारोप्येत्यर्थः)। अभ्रङ्कषम्=अत्युन्नतं, फलशालिनम्=आम्राऽऽदिशोभिनं, मलयं=मलयपर्वतं, प्रायात्=प्रयातः ( अत्र यशःशाखं रामकल्पतरुमिति साऽवयवरूपकम् ) ।

व्युत्पत्ति —सर्वङ्कषयशःशाखं=सर्वं कषन्तीति सर्वङ्कषाणि, 'सर्वकूलाभ्रकरीषेषु कषः' इति खचि मुम् । सर्वङ्कषाणि यशांसि एव शाखा यस्य स सर्वङ्कषयशःशाखस्तम् (बहु०) । रामकल्पतरुं=राम एव कल्पतरुः रामकल्पतरुस्तम् (रूपक०)। अभ्रङ्कषम्=अभ्रं कषतीति अभ्रङ्कषस्तं, पूर्वसूत्रेणैव खच् । फलशालिनं=फलेन ( आम्राऽऽदिना कार्यसिद्ध्या च ) शालत इति फलशाली, तम् ( णिनि ) ।

भावाऽर्थः—ततो हनूमान् लोकव्यापकयशःशोभितं कल्पवृक्षवदीप्सिताऽर्थप्रदं रामं पृष्ठमारोप्य अत्युन्नतमाम्रादिफलेन कार्यसिद्ध्या च शोभितं मलयपर्वतमागच्छत् ।

भाषाऽर्थ —तब हनूमानजी लोकव्यापक शाखाके सदृश कीर्तिसे युक्त कल्पवृक्षतुल्य रामचन्द्रजीको पीठपर चढाकर अत्यन्त उन्नत और फलोंसे शोभित मलयपर्वतमें गये ॥ १०४ ॥

**मेघङ्करमिवाऽऽयान्तमृतुं रामं क्लमाऽन्वितः ।**
**दृष्ट्वा मेने न सुग्रीवो वालिभानुं भयङ्करम् ॥ १०५ ॥**

अन्वय —क्लमाऽन्वितः सुग्रीवो मेघङ्करम् ऋतुम् इव आयान्तं रामं दृष्ट्वा वालिभानुं भयङ्करं न मेने ।

प्रयोगप०—क्लमाऽन्वितेन सुग्रीवेण वालिभानुर्भयङ्करो न मेने ।

व्याख्या—क्लमाऽन्वितः=क्लान्तः ( वालिभानुसन्तापादित्यर्थः ), सुग्रीवः=वानरराजः, मेघङ्करम् ऋतुम् इव=बलाहकप्रसारकम् ऋतुम् इव (वर्षर्तुमिवेत्यर्थः), आयान्तम्=आगच्छन्तं, रामं=रामचन्द्रं, दृष्ट्वा=विलोक्य, वालिभानुं=वालिसूर्यं, भयङ्करं=भीतिप्रदं, न मेने=न अमन्यत ( वालिभयरहितोऽभूदित्यर्थः ) ।

व्युत्पत्ति —क्लमाऽन्वितः=क्लमेनाऽन्वितः ( तृ० त० ) । मेघङ्करं=मेघान्करोतीति मेघङ्करस्तं, 'मेघर्तिभयेषु कृञः' इति खचि मुम् । वालिभानुं=वाली भानुरिवेति वालिभानुस्तम् ( उपमितसमासः ) । भयङ्करं=भयं करोतीति भयङ्करस्तं, पूर्वसूत्रेणैव खचि मुम् ।

भावार्थ —वालिसूर्यसन्तापात्क्लान्त सुग्रीवो वर्षर्तुमिव तापहारक राममा-यान्त दृष्ट्वा वालिसूर्यं भयकर नामन्यत ।

भाषार्थ —सूर्यतुल्य वालीके प्रतापसे क्लान्त सुग्रीव, वर्षा ऋतुकी तरह तापहारक रामको आते हुए देखकर वालीके भयसे रहित हुए ॥ १०५ ॥

**उपाग्न्यकुरुता सख्यमन्योन्यस्य प्रियङ्करौ ।**
**क्षेमङ्कराणि कार्याणि पर्यालोचयता तत ॥ १०६ ॥**

अन्वय —(तौ) अन्योन्यस्य प्रियङ्करौ ( सन्तौ ) उपाग्नि सख्यम् अकुरुता, तत क्षेमङ्कराणि कार्याणि पर्यालोचयताम् ।

प्रयोगप०—( ताभ्याम् ) प्रियङ्कराभ्याम् ( सद्भ्याम् ) सख्यमक्रियत । तत क्षेमङ्कराणि कार्याणि पर्यालोच्यन्त ।

व्याख्या—( तौ=रामसुग्रीवौ ) अन्योन्यस्य=परस्परस्य, प्रियङ्करौ=अभीष्ट-सम्पादकौ ( परस्परोपकारकौ सन्तावित्यर्थ ), उपाग्नि=अग्ने समीपे, सख्य=मैत्रीम्, अकुरुता=कृतवन्तौ ( अग्निसाक्षिका मैत्री चक्रतुरित्यर्थ ), तत =सख्या-ऽनन्तर, क्षेमङ्कराणि=कल्याणजनकानि, कार्याणि=अनन्तरकर्तव्यानि, पर्यालोच-यता=पर्यालोचितवन्तौ ।

व्युत्पत्ति —प्रियङ्करौ=प्रिय कुरुत इति 'क्षेमप्रियमद्रेऽण् च' इति चकारात् खचि मुम्, अणि तु 'प्रियकार' इति स्यात् । उपाऽग्नि=अग्ने समीपे, सामीप्येऽ-व्ययीभाव । सख्य=सख्युर्भाव सख्य, तत् 'सख्युर्य' इति य । क्षेमङ्कराणि=क्षेम कुर्वन्तीति 'क्षेमे'त्यादिना पूर्ववत् खचि मुम् । पर्यालोचयता=परिपूर्वात् 'लोचृ भाषार्थे' इति चौरादिकाद्धातो कर्तरि लङि तसस्तामादेश ।

भावार्थ —रामसुग्रीवौ अग्नि साक्षीकृत्य मैत्री कृतवन्तौ, अनन्तर परस्पर-स्याऽभीष्टसम्पादकानि कल्याणोत्पादकानि पर्यालोचितवन्तौ ।

भाषार्थ —परस्पर अभीष्टसम्पादक होते हुए राम और सुग्रीवने अग्निको साक्षी बनाकर मैत्री की, अनन्तर कल्याणकारक कर्तव्योंका विचार किया ॥१०६॥

**आशितम्भवमुत्कृष्टं वल्गित शयित स्थितम् ।**
**बह्वमन्यत काकुत्स्थ कपीना स्वेच्छया कृतम् ॥ १०७ ॥**

अन्वय —काकुत्स्थ कपीना स्वेच्छया कृतम् आशितम्भवम् उत्कृष्ट वल्गित शयित स्थित बहु अमन्यत ।

प्रयोगप०—काकुत्स्थेन कृतम् आशितम्भवम् उत्कृष्ट व[illegible] स्थित बहु अमन्यत ।

व्याख्या—काकुत्स्थ =राम , कपीना=वानराणा, स्वेच्छया=आत्मवाञ्छया, कृत=विहितम्, आशितम्भवम्=अशनम् ( भोजनम् ), उत्क्रुष्टम्=उच्चै क्रोशन (क्ष्वेटिनमित्यर्थ ), वल्गित=वल्गन, शयित=शयन, स्थित=स्थिति, बहु अमन्यत= श्लाघितवान् (प्रसादपूर्ण स्वाभाविक च तेषा चेष्टित दृष्ट्वा सन्तुष्ट इत्यर्थ ) ।

व्युत्पत्ति —कपीना='कपिप्लवङ्गप्लवगशाखामृगवलीमुखा ।' इत्यमर । आशितम्भवम्='आशित' इत्यत्र आङ्पूर्वात् 'अश भोजने' इति धातोरविवक्षिते कर्मणि कर्तरि क्त । आशितस्य भवनमाशितम्भवम्, 'आशिते भुव करणभावयो ' इति खचि मुम् । उत्क्रुष्ट, वल्गित, शयित, स्थित=भवन भावे क्त ।

भावार्थ —रामो वानराणा, भोजन, किलकिलायित, धावन' शयन, स्थिति च श्लाघितवान् ।

भाषार्थ —अपनी इच्छासे किये गये वानरोका खाना, किलकारी मारना, दौडना, सोना और बैठना देखकर रामचन्द्रजी सन्तुष्ट हुए ॥ १०७ ॥

**ततो बलिन्दमप्रख्य कपिर्विश्वम्भराऽधिपम् ।**
**सुग्रीव प्राब्रवीद्राम वालिनो युधि विक्रमम् ॥ १०८ ॥**

अन्वय —तत कपि सुग्रीव बलिन्दमप्रख्य विश्वम्भराऽधिप राम युधि वालिन. विक्रम प्राब्रवीत् ।

प्रयोगप०—कपिना सुग्रीवेण बलिन्दमप्रख्यो विश्वम्भराऽधिपो रामो युधि प्रोच्यत ।

व्याख्या—तत =रामस्य कपिचेष्टादर्शनाऽनन्तर, कपि =वानर , सुग्रीव = वानराधिप , बलिन्दमप्रख्य=विष्णुसदृश, विश्वम्भराऽधिप=पृथ्वीश्वर, राम= रामचन्द्र, युधि=सग्रामे, वालिन =स्वज्येष्ठभ्रातु , विक्रम=पराक्रम, प्राब्रवीत्= अकथयत् ।

व्युत्पत्ति —बलिन्दमप्रख्य=बलिं दमयतीति बलिन्दम , 'सञ्ज्ञाया भृतॄवृजिधारिसहितपिदम ' इति खच् । बलिन्दम इव प्रख्याति (प्रकाशते) इति बलिन्दमप्रख्यस्तम् 'आतश्चोपसर्गे' इति क । विश्वम्भराऽधिप=विश्व बिभर्तीति विश्वम्भरा, पूर्वसूत्रेण खच् 'भूर्भूमिरचलाऽनन्ता रसा विश्वम्भरा स्थिरा ।' इत्यमर । अधिक पातीति अधिप , पूर्ववत्क । 'प्रभु परिवृढोऽधिप ' इत्यमर । विश्वम्भराया अधिपो विश्वम्भराऽधिपस्तम् ( ष० त० ) । रामम्='अकथित च' इति कर्मसञ्ज्ञा । प्राब्रवीत्=ब्रूञ् धातोर्लङि 'ब्रुव ईट्' इति ईट् ।

भावार्थ —तत सुग्रीवो विष्णुतुल्यविक्रम राम सग्रामे वालिपराक्रम कथितवान् ।

भावार्थ —ऋव वानराऽधीश्वर सुग्रीवने विष्णुतुल्य, पृथिवी के स्वामी रामचन्द्रको सग्राममे वालीका पराक्रम बतलाया ॥ १०८ ॥

**वसुन्धराया कृत्स्नाया नाऽस्ति वालिसमो बली ।**
**हृदयङ्गममेतत्त्वा ब्रवीमि न पराभवम् ॥ १०९ ॥**

अन्वय —कृत्स्नाया वसुन्धराया वालिसमो वली न अस्ति, हृदयङ्गमम् एतत् त्वा ब्रवीमि, पराभव न ब्रवीमि ।

प्रयोगप०—वालिसमेन बलिना न भूयते । हृदयङ्गमम् एतत् त्वम् उच्यसे, ( त्वम् ) पराभव न उच्यसे ।

व्याख्या—कृत्स्नाया=सपूर्णाया, वसुन्धराया=पृथिव्या, वालिसम =वालितुल्य , बली=बलसम्पन्न , न अस्ति=न वर्तते, हृदयङ्गम=हृद्गतम्, एतत्=वालिबल, त्वा=भवन्त (भवते इत्यर्थ ), ब्रवीमि=कथयामि, पराभवम्=अभिभव, न ब्रवीमि=न कथयामि ( भवतोऽपकर्षं न प्रतिपादयामि भवतो लोकोत्तरत्वात्किन्तु हृद्गत वाच्यमित्युच्यत इत्यर्थ ) ।

व्युत्पत्ति —वसुन्धराया=वसूनि धारयतीति वसुन्धरा, ता 'सज्ञाया'मित्यादिना खच् 'खचि ह्रस्व' इति ह्रस्वत्व च । वालिसम =वालिना सम , 'पूर्वसदृशसमोनाऽर्थकलहनिपुणमिश्रश्लक्ष्णै ' इति समास । हृदयङ्गम=हृदय गच्छतीति हृदयङ्गम, तत् 'गमश्च' इति सज्ञाया खच् । हृद्गतस्येय सज्ञेति मन्यते । एतत्=मुख्यकम । त्वाम्='अकथित च' इति कर्मत्वाद्गौणकर्म ।

भावार्थ —पृथिव्या वालिसमो बलसम्पन्नो नाऽस्ति । स्वाऽनुभूतमेतद्वालिबल त्वा कथयामि भवत्पराभव न प्रतिपादयामि ।

भाषार्थ —पृथिवी भरमे कोई भी वालीके समान बलवान् नही है, मै स्वाऽनुभूत वालीका बल कह रहा हू, आपकी न्यूनताका प्रकाशन करना मेरा अभिप्राय नही हे ॥ १०९ ॥

अथ डाऽधिकार ।

**दूरगैरन्तगैर्बाणैर्भवानत्यन्तग श्रिय ।**
**अपि सङ्क्रन्दनस्य स्यात्क्रुद्ध किमुत वालिन ॥ ११० ॥**

अन्वय —( हे राम ! ) क्रुद्ध भवान् दूरगै अन्तगै बाणै सङ्क्रन्दनस्य अपि श्रिय अत्यन्तग स्यात्, वालिन (श्रिय अत्यन्तग स्यात्) इति, किमुत ।

प्रयोगप०—क्रुद्धेन भवता अत्यन्तगेन भूयेत, वालिन ( अत्यन्तगेन भूयेत इति ), किमुत ।

व्याख्या—( हे राम ! ) क्रुद्ध =कुपित , भवान्=त्वम्, दूरगै =दूरगामिभि ,

अन्तगै =लक्ष्यपातिभि ( अमोघैरित्यर्थ ), बाणै =शरै ( साधनै ), सङ्क्रन्द-नस्य अपि–इन्द्रस्य अपि, श्रिय =लक्ष्म्या , अत्यन्तग =विनाशयिता, स्यात्= भवितु शक्नुयात्, वालिन =मद्भ्रातु , ( श्रिय अत्यन्तग स्यात् ) इति=एतत्, किमुत=किं पुन ( वालिन इन्द्रजत्वादिति भाव ) ।

व्युत्पत्ति.—दूरगै =दूर गच्छन्तीति दूरगास्तै , 'अन्तात्यन्ताऽध्वदूरपारस-र्वानन्तेषु ड ' इति गमेर्ड । अन्तगै =अन्त गच्छन्तीति अन्तगास्तै पूर्वसूत्रेण ड । सक्रन्दनस्य–सक्रन्दयतीति सक्रन्दनस्तस्य, सम्पूर्वकात् 'क्रदि आह्वाने रोदने च' इति धातोर्नन्द्यादित्वाल्ल्यु । 'सङ्क्रन्दनो दुश्च्यवनस्तुराषाण्मेघवाहन ।' इत्यमर । 'अत्यन्तगश्रिय' इति मल्लिनाथसमत पाठस्तत्र अतिभूमिगतलक्ष्मीकस्येत्यर्थ । तादृशस्य इन्द्रस्य, स्यात्=प्रत्यर्थीभवितु शक्नुयादित्यर्थ । अत्यन्तग =अत्यन्तं गच्छतीति, पूर्ववत् ड । स्यात्='शकि लिङ् च' इति शक्यर्थे लिङ् । भवच्छब्दस्य शेषत्वात् 'शेषे प्रथम' इति प्रथमपुरुष ।

भावार्थ —हे राम । भवान् कुपितो भूत्वा शरै दूरगैरमोघैरिन्द्रस्य लक्ष्मीमपि नाशयितु समर्थ , इन्द्रपुत्रस्य वालिन किं पुन ।

भावार्थ —हे राम ! आप कुपित होकर दूरतक जानेवाले अमोघ बाणोसे इन्द्र-की लक्ष्मीको भी नाश कर सकते है, वालीकी लक्ष्मीको तो कहना ही क्या?॥११०॥

तथाऽपि वालिबलाच्छङ्कते मे हृदयमित्याह श्लोकद्वयेन—

**वरेण तु मुनेर्वाली सञ्जातो दस्युहो रणे ।**
**अवार्यप्रसर प्रातरुद्यन्निव तमोपह ॥१११॥**

अन्वय —'वाली रणे दस्युह ' ( इति ) मुने वरेण स प्रात उद्यन् तमोपह-इव अवार्यप्रसर सञ्जात ।

प्रयोगप०—'वालिना रणे दस्युहेन ( भाविषीष्ट )' ( तेन ) उद्यता तमोपहेन इव अवार्यप्रसरेण सञ्जातम् ।

व्याख्या—वाली=सुग्रीवाऽग्रज , रणे=युद्धे, दस्युह =शत्रून् वध्यात्, ( इति= एतादृशेन ) मुने =ब्रह्मण , वरेण=अनुग्रहेण, (स =वाली) प्रात =प्रभाते, उद्यन्= उदयमान तमोपह इव=सूर्य इव, अवार्यप्रसर =दुर्वारगति , सञ्जात =सम्भूत ।

व्युत्पत्ति —दस्युह =दस्यून् वध्यादिति, 'आशिषि हन ' इत्याशीरर्थे ड. । 'दस्युशात्रवशत्रव ।' इत्यमर । उद्यन्=उत्पूर्वादिणो लट शत्रादेश । तमोपह = तमासि अपहन्तीति, 'अपे क्लेशतमसो ' इति हन्तेरपपूर्वात् डप्रत्यय । अवार्यप्र-सर =अवार्य प्रसरो यस्य ( बहु० ) ।

भावार्थ —'त्व युद्धे शत्रुघातको भूया ' इति ब्रह्मवरेण स वाली दिनादावुदय-मान सूर्य इव दुर्वारगति सञ्जात ।

भावार्थ—इव वनराजाधीश्वर सुग्रीवने विष्णुतुल्य, पृथिवी के स्वामी रामचन्द्रको संग्राममें बालीका पराक्रम बतलाया ॥ १०८ ॥

वसुन्धराया कृत्स्नाया नाऽस्ति वालिसमो बली ।
हृदयङ्गममेतत्त्वा ब्रवीमि न पराभवम् ॥ १०९ ॥

अन्वय—कृत्स्नाया वसुन्धराया वालिसमो बली न अस्ति, हृदयङ्गमम् एतत् त्वा ब्रवीमि, पराभव न ब्रवीमि ।

प्रयोगप०—वालिसमेन बलिना न भूयते । हृदयङ्गमम् एतत् त्वम् उच्यसे, ( त्वम् ) पराभव न उच्यसे ।

व्याख्या—कृत्स्नाया=सपूर्णाया, वसुन्धराया=पृथिव्या, वालिसम =वालितुल्य , बली=बलसम्पन्न , न अस्ति=न वर्तते, हृदयङ्गम=हृद्गतम्, एतत्=वालिबल, त्वा=भवन्त (भवते इत्यर्थ ), ब्रवीमि=कथयामि, पराभवम्=अभिभव, न ब्रवीमि=न कथयामि ( भवतोऽपकर्षं न प्रतिपादयामि भवतो लोकोत्तरत्वात्किन्तु हृद्गत वाच्यमित्युच्यत इत्यर्थ ) ।

व्युत्पत्ति—वसुन्धराया=वसूनि धारयतीति वसुन्धरा, ता 'सज्ञाया'मित्यादिना खच् 'खचि ह्रस्व' इति ह्रस्वत्व च । वालिसम =वालिना सम , 'पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णै ' इति समास । हृदयङ्गम=हृदय गच्छतीति हृदयङ्गम, तत् 'गमश्च' इति सज्ञाया खच् । हृद्गतस्येय सज्ञेति मन्यते । एतत्=मुख्यकर्म । त्वाम्='अकथित च' इति कर्मत्वाद्गौणकर्म ।

भावार्थ—पृथिव्या वालिसमो बलसम्पन्नो नाऽस्ति । स्वाऽनुभूतमेतद्वालिबल त्वा कथयामि भवत्पराभव न प्रतिपादयामि ।

भाषार्थ—पृथिवी भरमे कोई भी वालीके समान बलवान् नहीं है, मैं स्वाऽनुभूत वालीका बल कह रहा हू, आपकी न्यूनताका प्रकाशन करना मेरा अभिप्राय नहीं है ॥ १०९ ॥

अथ डाऽधिकार ।

दूरगैरन्तगैर्बाणैर्भवानत्यन्तग श्रिय ।
अपि सङ्क्रन्दनस्य स्यात्क्रुद्ध किमुत वालिन ॥ ११० ॥

अन्वय—( हे राम ! ) क्रुद्ध भवान् दूरगै अन्तगै बाणै सङ्क्रन्दनस्य अपि श्रिय अत्यन्तग स्यात्, वालिन (श्रिय अत्यन्तग स्यात्) इति, किमुत ।

प्रयोगप०—क्रुद्धेन भवता अत्यन्तगेन भूयेत, वालिन ( अत्यन्तगेन भूयेत इति ), किमुत ।

व्याख्या—( हे राम ! ) क्रुद्ध =कुपित , त्वाम्=त्व, दूरगै =दूरगामिभि ,

न्नेषु' इति कुत्वम् । पतिघ्न्या लक्षण (पाणिरेखादि) पतिघ्नीलक्षण ( ष० त० ), तेन उपेता पतिघ्नीलक्षणोपेता, ताम् ( तृ० त० ) ।

भावार्थ —हे राम ! अह शत्रुघातक भवन्त विलोक्य वालिन हत मन्ये ।

भाषार्थ —हे राम ! मै शत्रुओके शिरको छेदन करनेवाले आये हुए, आपको देखकर वालीकी लक्ष्मीको पतिकी नाशसूचना करनेवाली पाणिरेखासे युक्त मानता हूँ ॥ ११३ ॥

पुन श्लोकद्वयेण वालिवधमेव प्रकटयन्नाह—

**शत्रुघ्नान्युधि हस्तिघ्नो गिरीन् क्षिप्यन्नकृत्रिमान् ।**
**शिल्पिभि पाणिघै क्रुद्धस्त्वया जय्योऽभ्युपायवान् ॥११४॥**

अन्वय —युधि हस्तिघ्न शत्रुघ्नान् अकृत्रिमान् गिरीन् पाणिघै , शिल्पिभि ( सह ) क्षिप्यन् अभ्युपायवान् क्रुद्ध वाली त्वया जय्य ?

प्रयोगप०—हस्तिघ्न क्षिप्यन्तम् अभ्युपायवन्त क्रुद्ध ( वालिनम् ) त्व जेतु शक्नुया ।

व्याख्या—( हे राम ! ) युधि=युद्धे, हस्तिघ्न =हस्तिवधसमर्थ , शत्रुघ्नान्= वैरिनाशकान्, अकृत्रिमान्=स्वाभाविकान् ( अमानुषनिर्मितानित्यर्थ ), गिरीन्= पर्वतान्, पाणिघै =पाणिवादकै , शिल्पिभि =शिल्पविद ( युद्धकुशलै सह ), क्षिप्यन्=क्षिपन्, अभ्युपायवान्=बहूपायसम्पन्न , क्रुद्ध =कुपित , वाली=मद्भ्राता, त्वया=भवता, जय्य -जेतु शक्य ?

व्युत्पत्ति —हस्तिघ्न=हस्तिनो हन्तु समर्थ , 'शक्तौ हस्तिकपाटयो ' इति हस्तेष्टक्, कुत्वोपधालोपौ । शत्रुघ्नान्=शत्रून् घ्नन्तीति शत्रुघ्नास्तान्, 'अमनुष्यकर्तृके च' इति टकि शेष पूर्ववत् । पाणिघै =पाणिन् घ्नन्तीति पाणिघास्तै , 'पाणिघ-ताडघौ शिल्पिनि' इति हस्तेष्टक्टिलोपो घत्व च निपात्यते । 'वृद्धो युना' इतिवत् सहार्थे तृतीया । क्षिप्यन्=क्षिप्यतीति, क्षिपेर्दैवादिकात् लट शत्रादेश । अभ्युपायवान्=बहवोऽभ्युपाया सन्ति यस्य स ( भूम्नि=बहुत्वे मतुप् ) । जय्य ='क्षय्य-जय्यौ शक्यार्थे' इति याऽन्तादेशनिपात ।

भावार्थ —हे राम ! युद्धे गजवधसमर्थ शत्रुघ्नान् अमानुषनिर्मितान् पर्वतान् उत्साहार्थं पाणिवाद्य कुर्वद्भि युद्धकुशलै सह क्षिप्यन् बहुसाधनसम्पन्न कुपितो वाली भवता किं जेतु शक्य ?

भाषार्थ —हे राम ! युद्धमे हाथीको भी मारनेमे समर्थ, उत्साहके लिए हाथ बजानेवाले, युद्धकुशल वानरोके साथ शत्रुओको मारनेवाले अकृत्रिम पर्वतोको फेंकते हुए अनेक उपायोसे सम्पन्न क्रुद्ध वालीको क्या आप जीत सकेंगे ? ॥११४॥

**आढ्यङ्करणविक्रान्तो महिषस्य सुरद्विष ।**
**प्रियङ्करणमिन्द्रस्य दुष्कर कृतवान्वः— ॥ ११५ ॥**

भावार्थ —किञ्च स मृत त दुन्दुभि क्रोशचतुष्टयदूर क्षिपन् एव समर्थो भूत्वापि किञ्चिदपि लोकपीडनमकुर्वंश्च सवस्य प्रियो जात ।

भाषार्थ —मरे हुए उस दुन्दुभिको एक योजनकी दूरीपर फेकते हुए वाली सबके प्यारे हो गये और सामर्थ्यके रहनेपर भी लोकपीडा न करनेसे स्वगमे भी देवताओके प्यारे बन गये ॥ ११६ ॥

**जिज्ञासो शक्तिमस्त्राणा रामो न्यूनधिय कपे ।**
**अभिनत्प्रतिपत्त्यर्थं सप्त व्योमस्पृशस्तरून् ॥ ११७ ॥**

अन्वय —( अथ ) राम अस्त्राणा शक्ति जिज्ञासो न्यूनधिय कपे प्रतिपत्त्यर्थं व्योमस्पृश सप्त तरून् अभिनत् ।

प्रयोगप०—रामेण व्योमस्पृश सप्त तरव अभिद्यन्त ।

व्याख्या—( अथ=सुग्रीवभाषणाऽनन्तरम् ) राम =रामचन्द्र , अस्त्राणा= शराणा, शक्ति=सामर्थ्य, जिज्ञासो =ज्ञातुमिच्छो , (अतएव) न्यूनधिय =अल्पबुद्धे , कपे =सुग्रीवस्य, प्रतिपत्त्यर्थं=विश्वासार्थं, व्योमस्पृश =आकाशस्पर्शिन , सप्त= सप्तसख्यकान् , तरून्=वृक्षान्, अभिनत्=व्यदारयत् ।

व्युत्पत्ति —जिज्ञासो =उप्रत्यय । न्यूनधिय =न्यूना धीर्यस्य स न्यूनधीस्तस्य ( बहु० ) । प्रतिपत्त्यर्थ=प्रतिपत्तये इदम् यथा तथा (च० त०, क्रि० वि०) । व्योमस्पृश =व्योम स्पृशन्तीति व्योमस्पृशस्तान् 'स्पृशोऽनुदके क्विन्' इति क्विन् । अभिनत्=भिदेर्लङ् ।

भावार्थ —सुग्रीवभाषणाऽनन्तर राम॰ स्वायुधबलज्ञानेच्छोरत एव न्यूनबुद्धे सुग्रीवस्य विश्वासोत्पादनार्थं व्योमस्पर्शिन॰ सप्त वृक्षान् व्यदारयत् ।

भाषार्थ—तब रामचन्द्रजी अपने अस्त्रोकी शक्तिको जाननेके इच्छुक अतएव अल्पबुद्धि सुग्रीवके विश्वासके लिए एक बाणसे अत्यन्त ऊँचे सात वृक्षोका विदारण किया ॥ ११७ ॥

**ततो वालिपशौ वध्ये रामर्त्विग्जितसाध्वस ।**
**अभ्ययान्निलय भ्रातु सुग्रीवो निनदन्दधृक् ॥ ११८ ॥**

अन्वय—तत॰ वालिपशो वध्ये रामर्त्विक् जितसाध्वस दधृक् सुग्रीव निनदन् भ्रातु निलयम् अभ्ययात् ।

प्रयोगप०—रामर्त्विजा जितसाध्वसेन दधृषा सुग्रीवेण निनदता ( सता ) निलयोऽभ्ययायत ।

व्याख्या—तत =तरुभेदनाऽनन्तर, वालिपशौ=वालिनि एव पशौ, वध्ये= आलभ्ये ( सति ), रामर्त्विक्=रामयाजक , ( अत एव ) जितसाध्वस =निर्भीक ,

अन्वयः—आढ्यङ्करणविक्रान्तः ( वाली ) इन्द्रस्य प्रियङ्करणं दुष्करं महिषरूपस्य सुरद्विषः वधं कृतवान् ।

प्रयोगः—आढ्यङ्करणविक्रान्तेन ( वालिना ) प्रियङ्करणो दुष्करो महिषरूपस्य वधः कृतः ।

व्याख्या—आढ्यङ्करणविक्रान्तः=आत्यन्तिकपराक्रमः ( वाली ), इन्द्रस्य=मघवतः, प्रियङ्करणं=प्रीतिजनकं, दुष्करम्=अशक्यं, महिषरूपस्य=महिषरूपस्य, सुरद्विषः=असुरस्य ( दुन्दुभिनामकस्येत्यर्थः ), वधं=विनाशं, कृतवान्=अकरोत् ।

व्युत्पत्तिः—आढ्यङ्करणविक्रान्तः=अनाढ्यमाढ्यं कुर्वन्त्यनेनेति आढ्यङ्करणम्, 'आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन्' इति ख्युन् । आढ्यङ्करणं विक्रान्तं यस्य सः (बहु०) । प्रियङ्करणम् अप्रियं प्रियं कुर्वन्त्यनेनेति प्रियङ्करणस्तम् ( पूर्वसूत्रेण ख्युन् ) ।

भावार्थः—पराक्रमप्रसिद्धो वाली इन्द्रस्य प्रीतिसम्पादकं दुष्करं महिषरूपस्य दुन्दुभिनामकस्य असुरस्य वधमकरोत् ।

भाषार्थ—पराक्रमसे प्रसिद्ध वालीने इन्द्रकी प्रीतिके लिए महिषरूपी दुन्दुभि-नामक असुरका दुष्कर संहार किया ॥ ११५ ॥

**प्रियम्भावुकतां यातस्तं क्षिपन्योजनं मृतम् ।**
**स्वर्गे प्रियम्भविष्णुश्च कृत्स्नं शक्तोऽप्यबाधयन् ॥ ११६ ॥**

अन्वयः—( किञ्च ) मृतं तं योजनं क्षिपन् ( सः ) प्रियम्भावुकतां यातः । शक्तः अपि कृत्स्नम् अबाधयन् स्वर्गे प्रियम्भविष्णुः च ( जातः ) ।

प्रयोगः—क्षिपता ( तेन ) प्रियम्भावुकता याता । शक्तेन अपि अबाधयता प्रियम्भविष्णुना च ( जातम् ) ।

व्याख्या—मृतम्=उपरतं, तं=दुन्दुभिं, योजनं=क्रोशचतुष्टयदूरं, क्षिपन्=किरन् ( सः=वाली ), प्रियम्भावुकतां=प्रियभावं, यातः=प्राप्तः (दुष्टनिग्रहात्सर्वेषामपि प्रियोऽभूदित्यर्थः), शक्तः अपि=समर्थः अपि, कृत्स्नम् अबाधयन्=किञ्चिदपि अपीडयन्, स्वर्गे=सुरलोके, प्रियम्भविष्णुश्च=प्रियश्च, ( संवृत्त इति शेषः ) ।

व्युत्पत्तिः—प्रियम्भावुकता=अप्रियः प्रियो भवतीति प्रियम्भावुकः, 'आढ्यसुभगे'त्यादिसूत्रस्य अनुवृत्तौ 'कर्तरि भुवः खिष्णुच्खुकञौ' इति भवतेः कर्तरि खुकञ् । प्रियम्भावुकस्य भावः प्रियम्भावुकता, ताम् ( तल्प्रत्ययः ) । अबाधयन्=बाधयतीति बाधयन्, 'बध संयमे' इति चौरादिकाद्धातोर्लटः शत्रादेशः । न बाधयन् ( नञ्० ) । प्रियम्भविष्णुः=अप्रियः प्रियो भवतीति, पूर्वसूत्रेण खिष्णुच्प्रत्ययः ।

जाता है उसी तरह सुग्रीवके सम्मुख जाता हुआ सिंहनादसे दिशाओंको पूर्ण कर गुफासे निकला ॥ ११९ ॥

व्यायच्छमानयोर्मूढो भेदे सदृशयोस्तयोः ।
बाणमुद्यतमायंसीदिक्ष्वाकुकुलनन्दनः ॥ १२० ॥

अन्वय.—इक्ष्वाकुकुलनन्दनः व्यायच्छमनयोः सदृशयोः तयोः भेदे मूढः (सन्) उद्यतं बाणम् आयंसीत् ।

प्रयोगप०—इक्ष्वाकुकुलनन्दनेन मूढेन ( सता ) उद्यतो बाण आयांसि ।

व्याख्या—इक्ष्वाकुकुलनन्दनः=रामः, व्यायच्छमानयोः=व्याप्रियमाणयोः (युध्यमानयोरित्यर्थः), सदृशयोः=समानयोः (तुल्यरूपयोरित्यर्थः), भेदे=पृथक्त्वे, मूढः=मोहयुक्तः ( 'अयं वाली'ति विवेचनेऽसमर्थः सन्नित्यर्थः ), उद्यतं=तूणादुद्धृतं, बाणं=शरम्, आयंसीत्=उपसंहृतवान् ।

व्युत्पत्तिः—व्यायच्छमानयोः='आङो यमहनः' इति यमेराङ्पूर्वादकर्मकत्वादात्मनेपदम् । सदृशयोः=समानोपपदात् दृशेः 'समानान्ययोश्च' इति कञ् 'दृग्दृशवतुषु' इति समानस्य सभावः । आयंसीत्-यमेराङ्पूर्वाल्लुङि सगिडागमौ । 'नेटि' इति प्रतिषेधान्न हलन्तलक्षणा वृद्धिः । अकर्त्रभिप्रायत्वात् 'समुदाङ्भ्यो यमोऽग्रन्थे' इति नाऽऽत्मनेपदम् । सकर्मकत्वात् 'आङो यमहनः' इति न तङ् ।

भावार्थः—रामो युध्यमानयोर्वालिसुग्रीवयोः सदृशत्वात् अयं 'वाली'ति विवेक्तुमसमर्थः सन् तूणादुद्धृतमपि शरमुपसंहृतवान् ।

भाषार्थ—रामचन्द्रजी लड़ते हुए वाली और सुग्रीवके तुल्यरूप होनेसे वालीको पहचाननेमें असमर्थ होकर तरकशसे निकाले गये बाणको न छोड़ सके ॥ १२० ॥

ऋष्यमूकमगात्क्लान्तः कपिर्मृगसदृग्द्रुतम् ।
किष्किन्धाऽद्रिसदाऽत्यर्थं निष्पिष्टः कोष्णमुच्छ्वसन् ॥१२१॥

अन्वय—कपिः किष्किन्धाऽद्रिसदा अत्यर्थं निष्पिष्टः कोष्णम् उच्छ्वसन् मृगसदृक् द्रुतम् ऋष्यमूकम् अगात् ।

प्रयोगप०—कपिना निष्पिष्टेन क्लान्तेन उच्छ्वसता मृगसदृशा ऋष्यमूकोऽगायि ।

व्याख्या—कपिः=सुग्रीवः, किष्किन्धाऽद्रिसदा=किष्किन्धापर्वतवासिना (वालिनेत्यर्थः), अत्यर्थम्=अत्यन्तं, निष्पिष्टः=निष्पीडितः, क्लान्तः=श्रान्तः, ( अत एव ) कोष्णं=मन्दोष्णम्, उच्छ्वसन्=उच्छ्वासं कुर्वन्, मृगसदृक्=हरिणसदृशः, द्रुतं=शीघ्रम्, ऋष्यमूकम्=ऋष्यमूकपर्वतम्, अगात्=जगाम ।

व्युत्पत्तिः—किष्किन्धाऽद्रिसदा=किं किं दधातीति किष्किन्धा ( गुहा ),

दधृक्=धृष्ट , सुग्रीव =वानरराज ( यजमान इति भाव ), निनदन्=शब्द (सिंह-नादम्) कुर्वन्, भ्रातु =वालिन , निलयम्=आलयम्, अभ्यगात्=अभियात (पशु-मानेतुमित्यर्थ , 'अभ्यभूत्' इति पाठे अभिभूतवानित्यथ ) ।

व्युत्पत्ति —वालिपशौ=वाली एव पशुर्वालिपशुस्तस्मिन् ( रूपक० ) । राम-र्त्विक्=ऋतुमतावृतुप्रयुक्तो वा यजतीति ऋत्विक् याजक , 'ऋत्विग्दधृक्स्रग्दिगुष्णि-गञ्चुयुजिक्रुञ्चा च' इति क्विन्प्रत्ययान्तो निपात 'क्विन्प्रत्ययस्य कु' इति कुत्वम् । राम एव ऋत्विक् यस्य स (बहु०) । जितसाध्वस =जित साध्वस येन स (बहु०) । दधृक्=धृष्णोतीति, 'ञिधृषा प्रागल्भ्ये' इति धातो 'ऋत्विगि'-त्यादिना क्विन्, निपातनाद् द्विर्वचन कुत्व च ।

भावार्थ —वृक्षभेदनाऽनन्तर यज्ञियपशुतुल्ये वालिनि आलभ्ये सति रामरूपेण याजकेन युक्तोऽतो निर्भीको धृष्टश्च यजमानरूप सुग्रीवो भ्रात्रालयमभियात ।

भाषाऽर्थ —वृक्षभेदन के बाद यज्ञियपशुतुल्य वालीके आलम्भनयोग्य होनेपर रामरूप याजकसे युक्त, अत एव निर्भीक और धृष्ट यजमानरूप सुग्रीव सिंहनाद करते हुए भाईके भवनके समुख गये ॥ ११८ ॥

**गुहाया निरगाद्वाली सिंहो मृगमिव द्युवन् ।**
**भ्रातर युङ्भिय सख्ये घोषेणाऽऽपूरयन्दिश ॥ ११९ ॥**

अन्वय —सख्ये भिय युङ् वाली सिंह मृगम् इव भ्रातर द्युवन् घोषेण दिश आपूरयन् गुहाया निरगात् ।

प्रयोगप०—युजा वालिना द्युवता आपूरयता निरगायि ।

व्याख्या—सख्ये=युद्धे, भिय =भयस्य, युङ्=योक्ता, वाली=सुग्रीवभ्राता, सिंह =मृगेन्द्र , मृगम् इव=हरिणम् इव, भ्रातर=सुग्रीव, द्युवन्=अभिगमिष्यन्, घोषेण=सिंहनादेन, दिश =आशा , आपूरयन्=सपूरयन्, गुहाया =गह्वरात् निर-गात्=निर्गत ।

व्युत्पत्ति —भिय =कर्मणि षष्ठी । युङ्=युनक्तीति, 'युजिर् योगे' इति धातो 'ऋत्विगि'त्यादिना क्विन् 'युजेरसमासे' इति नुमि सयोगान्तलोप । नस्य कुत्वे-नाऽनुनासिको ङकार । द्युवन्=द्योतीति, 'द्यु अभिगमने' इति धातोर्वर्तमानसा-मीप्ये लटि शपो लुक् । लटे शतुर्यवडादेश । दिश =दिशन्तीति दिशस्ता , पूर्व-वत् क्विनि सर्वाऽपहारी लोप ।

भावार्थ —युद्धे भीतिप्रदो वाली सिंहो मृगमिव सुग्रीवमभिगमन् सिंहनाद कृत्वा गुहाया निर्जगाम ।

भाषाऽर्थ —युद्धमे भय पैदा करनेवाला वाली, जिस तरह सिंह मृगके सम्मुख

प्रयोगप०—रामेण दूरभाजा ( सता ) तनुच्छित् प्राणादो बाणोऽत्यज्यत ।

व्याख्या—वानरसेनान्यो =कपीश्वरयो , तयो =वालिसुग्रीवयो , सप्रहारे= युद्धे (सति), राम =रामचन्द्र , दूरभाक्=दूरगत (सन्), वालिन =सुग्रीवभ्रातु , तनुच्छिद=शरीरच्छेदिन, प्राणाऽद=प्राणहारिण, वाण=शरम्, अत्यजत्=मुमोच ।

व्युत्पत्ति —वानरसेनान्यो –सेना नयत इति सेनान्यौ, 'सत्सूद्विषे'त्यादिना क्विप्, 'एरनेकाचोऽसयोगपूर्वस्य' इति यणादेश वानराणा सेनान्यौ वानरसेनान्यौ, तयो (ष० त०) । सम्प्रहारे='सप्रहाराऽभिसपातकलिसस्फोटसयुगा ' । इत्यमर । दूरभाक्=दूर भजत इति, 'भजो ण्वि ' इति ण्वि । तनुच्छिद=तनु छिनत्तीति तनुच्छित्, त, पूर्ववत् क्विप् । 'छे च' इति तुक् । प्राणाद=प्राणानत्तीति प्राणादस्तम् 'अदोऽनन्ने' इति विट् ।

भावार्थ —वालिसुग्रीवयोर्युद्धे रामो दूरदेशाऽवस्थितो भूत्वा वालिघातक वाण मुमोच ।

भाषाऽर्थ —वानरोके अधीश्वर वाली और सुग्रीवके युद्धमे रामचन्द्रजीने दूर-देश मे रहकर वालीको नाश करनेवाला वाण छोडा ॥ १२३ ॥

अथ युग्मेन वालिपातमाह—

**अथ बाणेन जविना तेन विद्धो महाकपि ।**
**क्रव्यात्त्रासकर नाद कुर्वन्कामदुघोऽर्थिनाम् ॥ १२४ ॥**
**अग्रेगावा च शूराणामभिभू सर्वविद्विषाम् ।**
**शस्थरूप स्थिरप्रज्ञ पपात सहसा भुवि ॥ १२५ ॥**

अन्वय —अथ अर्थिना कामदुघ शूराणाम् अग्रेगावा सर्वविद्विषाम् अभिभू शस्थरूप स्थिरप्रज्ञ महाकपि जविना तेन बाणेन विद्ध क्रव्यात्त्रासकर नाद कुर्वन् सहसा भुवि पपात ।

प्रयोगप०—कामदुघेन अग्रेगाव्ना अभिभुवा सस्थरूपेण स्थिरप्रज्ञेन महाकपिना विद्धेन कुर्वता पेते ।

व्याख्या—अथ=बाणमोक्षाऽनन्तरम्, अर्थिना=याचकाना, कामदुघ =इच्छा-पूरक , शूराणा=वीराणाम्, अग्रेगावा=अग्रगामी, सर्वविद्विषा=सकलशत्रूणाम्, अभिभू =अभिभवित, शस्थरूप =सुखैकवृत्तिस्वरूप ( सुखपरायण इत्यर्थ ), स्थिरप्रज्ञ =स्थिरबुद्धि , महाकपि =वाली, जविना=वेगवता, तेन=राममुक्तेन, बाणेन=शरेण, विद्ध =ताडित , क्रव्यात्त्रासकर=गृध्राऽऽदिभयङ्कर, नाद=शब्द, कुर्वन्=विदधत्, सहसा=अतर्कित एव, भुवि=पृथिव्या, पपात=अपतत् ।

'आतोऽनुपसर्गे कः' इति कः, स्त्रीत्वाट्टाप् 'पारस्करप्रभृतीनि च' इति सुडादि निपातः। द्वित्वं तु वीप्सया। किष्किन्धाया अद्रिः किष्किन्धाऽद्रिः (ष० त०), तत्र सीदतीति किष्किन्धाऽद्रिसत्, तत्र 'सत्सूद्विषे'त्यादिना क्विप्। कोष्णम्=ईषदुष्णं कोष्णम् 'कुगतिप्रादयः' इति समासः, 'कवं चोष्णे' इति का कादेशः। तद् यथा तथा (क्रि० वि०)। मृगसदृक्='सदृक्' इत्यत्र 'समानाऽन्ययोश्च' इति क्विन्, शेषं सर्वं पूर्ववत्।

भावार्थः—सुग्रीवः किष्किन्धावासिना वालिना भृशं निष्पीडितोऽतः कदुष्णमुच्छ्वसन् मृगवत् द्रुतगत्या ऋष्यमूकमगच्छत्।

भाषार्थ—सुग्रीव किष्किन्धावासी वालीसे अत्यन्त निष्पीडित होनेसे क्लान्त होकर उसासे लेते हुए मृगकी तरह वेगपूर्वक ऋष्यमूक गये ॥ १२१ ॥

**कृत्वा वालिद्रुहं रामो मालया सविशेषणम्।**
**अङ्गदस्वं पुनर्हन्तुं कपिनाऽऽह्वाययद्रणे ॥ १२२ ॥**

अन्वयः—(अथ) रामः वालिद्रुहं मालया सविशेषणं कृत्वा अङ्गदस्वं रणे हन्तुं कपिना पुनः आह्वाययत्।

प्रयोगप०—रामेण अङ्गदसूः कपिना पुनः आह्वाय्यत।

व्याख्या—रामः=रामचन्द्रः, वालिद्रुहं=सुग्रीवं, मालया=स्रजा, सविशेषणं=सचिह्नं, कृत्वा=विधाय, अङ्गदस्वम्=अङ्गदजनकं (वालिनमित्यर्थः), रणे=युद्धे, हन्तुं=व्यापादयितुं, कपिना=सुग्रीवेण, पुनः=भूयः, आह्वाययत्=सस्पर्द्धमाह्वाययामास।

व्युत्पत्तिः—वालिद्रुहं=वालिने द्रुह्यतीति वालिद्रुक्, तं, 'सत्सूद्विषे'त्यादिना क्विप्। अङ्गदस्वम्=अङ्गदं सूते इति अङ्गदसूस्तं, तेनैव क्विप्। 'ओः सुपि' इति यणादेशः। यद्वा अङ्गदस्य स्वः=ज्ञातिरात्मीयो वा (पितुः ज्ञातिपरमत्वादात्मीयाऽतिशयत्वाद्वा) अथवा अङ्गद एव स्वः यस्य सोऽङ्गदस्वस्तम् (षष्ठीतत्पुरुषो बहुव्रीहिर्वा)। आह्वाययत्=ह्वयतेराङ्पूर्वात् ण्यन्ताल्लङि 'शाच्छासाह्वाव्यावेपां युक्' इति युक्। अकर्त्रभिप्रायात् 'णिचश्च' इति नाऽऽत्मनेपदम्।

भावार्थः—ततो रामः सुग्रीवं वालिव्यावृत्त्यर्थं मालयाऽलङ्कृत्य तेन पुनः सस्पर्धमाह्वाययामास।

भाषार्थ—तब रामचन्द्रजीने वाली को मारनेके लिए सुग्रीवको मालासे चिह्नित करके ललकारनेका आदेश दिया ॥ १२२ ॥

**तयोर्वानरसेनान्योः सम्प्रहारे तनुच्छिदम्।**
**वालिनो दूरभाग्रामो बाणं प्राणादमत्यजत् ॥ १२३ ॥**

अन्वयः—वानरसेनान्योः तयोः सम्प्रहारे (सति) रामः दूरभाक् (सन्) वालिनः तनुच्छिदं प्राणादं बाणम् अत्यजत्।

'धिग्दाशरथि'मित्यूचुर्मुनयो वनवर्तिनः ।
उपेयुर्मधुपायिन्यः क्रोशन्त्यस्तं कपिस्त्रियः ॥ १२७ ॥

अन्वयः—वनवर्तिनः मुनयः 'दाशरथिं धिक्' इति ऊचुः । मधुपायिन्यः कपिस्त्रियः, क्रोशन्त्यः तम् उपेयुः ।

प्रयोगप०—वनवर्तिभिर्मुनिभिः 'दाशरथिं धिक्' इत्यूचे । मधुपायिनीभिः कपिस्त्रीभिः क्रोशन्तीभिः स उपेये ।

व्याख्या—वनवर्तिनः=शास्त्रतो नियमाद्वनवासिनः, मुनयः=ऋषयः, दाशरथिं धिक्=रामं धिक्, इति=इत्थम् ऊचुः=उक्तवन्तः, मधुपायिन्यः=आभीक्ष्ण्येन मधुपानकारिण्यः, कपिस्त्रियः=वाल्यन्तःपुराङ्गनाः, क्रोशन्त्यः=विलपन्त्यः, तं=वालिनम्, उपेयुः=उपसेदुः ।

व्युत्पत्तिः—वनवर्तिनः=वने वर्तन्ते इति, 'व्रते' इति णिनिप्रत्ययः । मधुपायिन्यः=आभीक्ष्ण्येन मधु पिबन्तीति, 'बहुलमाभीक्ष्ण्ये' इति आभीक्ष्ण्ये णिनिः ।

भावार्थः—वनवासिनो मुनयो निरपराधस्य वालिनो वधात् 'राम धिक्' इति उक्तवन्तः । आभीक्ष्ण्येन मधुपायिन्यो वाल्यन्तःपुराङ्गना विलपन्त्यो वाल्यभिमुखमाजग्मुः ।

भाषार्थ—वनमे रहनेवाले मुनियोने निरपराध वालीका वध करनेसे रामचन्द्रको धिक्कारा । निरन्तर मधुपान करनेवाली वालीके अन्तःपुरकी स्त्रियाँ विलाप करती हुई बालीके समीप आ गयी ॥ १२७ ॥

राममुच्चैरुपालब्ध शूरमानी कपिप्रभुः ।
व्रणवेदनया ग्लायन्साधुम्मन्यमसाधुवत् ॥ १२८ ॥

अन्वयः—शूरमानी कपिप्रभुः व्रणवेदनया ग्लायन् साधुम्मन्यं रामम् असाधुवत् उच्चैः उपालब्ध ।

प्रयोगप०—शूरमानिना कपिप्रभुणा ग्लायता साधुम्मन्यो रामोऽसाधुवत् उच्चैरुपालम्भि ।

व्याख्या—शूरमानी=शूरम्मन्यः, कपिप्रभुः=वाली, व्रणवेदनया=प्रहारव्यथया, ग्लायन्=क्षीणः सन्, साधुम्मन्यं=साधुमानिनं, रामं=रामचन्द्रम्, असाधुवत्=असाधुतुल्यम्, उच्चैः=तारस्वरम्, उपालब्ध=उपालब्धवान् ।

व्युत्पत्तिः—शूरमानी=शूरमात्मानं मन्यते इति, 'आत्ममाने खश्च' इति चकारान्मन्यतेर्णिनिः, 'सौ च' इति सौ दीर्घत्वम् । साधुम्मन्यं=साधुमात्मानं मन्यते इति साधुम्मन्यस्तं, एवमूत्रेणैव खशि दिवादित्वाच्छ्यन् । 'महाकुलकुलीना-

व्युत्पत्ति —कामदुघ =कामान्दोग्धीति, 'दुह कब्घश्च' इति कपि घकारश्चाऽन्तादेशः। अग्रेगावा=अग्रे गच्छतीति, 'अन्येभ्योऽपि दृश्यते' इति गमेर्वनिप्। 'विड्वनोरनुनासिकस्याऽऽत्' इत्यात्त्वम्। सर्वविद्विषा=सर्वे च ते विद्विष सर्वविद्विषस्तेषाम् (क० धा०, कर्मणि षष्ठी), अभिभू =अभिभवतीति, 'क्विप् च' इति भवते क्विप्। शस्थरूप =शमिति सुखवाचकमव्ययम्। शं (सुखे) तिष्ठतीति शस्थ 'स्थ क च' इति तिष्ठत कप्रत्यय। शस्थ रूप यस्य स (बहु०)। स्थिरप्रज्ञ = स्थिरा प्रज्ञा यस्य स (बहु०)। क्रव्यात्त्रासकर=क्रव्यमदन्तीति क्रव्याद (मांसभक्षका गृध्रशृगालादाय), 'क्रव्ये च' इति विट्प्रत्यय। त्रास करोतीति त्रासकर, हेतौ ट। क्रव्यादा त्रासकर क्रव्यात्त्रासकरस्तम् (ष० त०)।

भावार्थ —ततोऽर्थिकामपूरक शूराऽग्रेसर सकलशत्रूणामभिभविता सुखपरायण स्थिरबुद्धिर्वाली रामबाणताडित सन् गृध्राऽऽदिभीत्युत्पादक शब्द कुर्वन् सहसा पृथिव्या पतित।

भाषार्थ —तब याचकोंकी इच्छाको पूर्ण करनेवाला, शूरोंमें अग्रेसर, सब शत्रुओंको परास्त करनेवाला, सुखपरायण, स्थिरबुद्धि वाली रामके वेगवान् बाणसे विद्ध होकर गृध्र आदि मांसभक्षकोंको त्रास पैदा करनेवाला शब्द करता हुआ सहसा जमीनपर गिर पड़ा ॥ १२४–१२५ ॥

**वालिन पतित दृष्ट्वा वानरा रिपुघातिनम्।**
**बान्धवक्रोशिनो भेजुरनाथा ककुभो दश ॥ १२६ ॥**

अन्वय —रिपुघातिन पतित वालिन दृष्ट्वा वानरा बान्धवक्रोशिन अनाथा (सन्त) दश ककुभ भेजु।

प्रयोगप०—वानरै बान्धवक्रोशिभि अनाथै (सद्भि) दश ककुभो भेजिरे।

व्याख्या—रिपुघातिन=शत्रुघातक, पतित = भूमिपतित, वालिन=सुग्रीवभ्रातर, दृष्ट्वा=विलोक्य, वानरा=कपय, बान्धवक्रोशिन =बन्धुवत् विलपन्त, अनाथा =स्वामिरहिता (सन्त), दश=दशसख्यका, ककुभ =दिश, भेजु = सेवितवन्त (पलायन्तेत्यर्थ)।

व्युत्पत्ति —रिपुघातिन=रिपून्हन्तीति तच्छीलो रिपुघाती, त, 'सुप्यजातौ णिनिस्ताच्छील्ये' इति ताच्छील्ये णिनि। बान्धवक्रोशिन =बान्धव एव बान्धवा पुत्रकलत्रादय (स्वार्थे अण्), ते इव क्रोशन्तीति, 'कर्तर्युपमाने' इति णिनि।

भावार्थ —शत्रुघातक वालिन भूमिपतित दृष्ट्वा वानरा विलपन्त स्वामिनाशात् पलायन्त।

भाषार्थ—शत्रुघातक वालीको जमीनपर गिरते हुए देखकर वानरलोग बान्धवोंकी तरह विलाप करते हुए अनाथ होनेसे दशों दिशाओंमें भाग गये ॥१२६॥

